

॥ श्रीः ॥

सर्वार्थसिद्धियुतः

# तत्त्वमुक्ताकलापः ।

बौधायनीयार्षसिद्धान्तानुसारी विशिष्टाद्वैत-
ब्रह्मनिरूपणपरः प्रकरणग्रन्थः ।

श्रीवेदान्ताचार्यापराभिधेन कवितार्किककेसरिणा
सर्वतन्त्रस्वतन्त्रधिषणेन श्रीवेङ्कटनाथदेशिकेन प्रणीतः ॥

सत्संप्रदायाचार्येण सर्वतन्त्रस्वतन्त्रपण्डितस्वामिराममिश्र-
शास्त्रिणा परिशोधितः क्वचिद्विषमे विशदीकृतश्च ॥

# TATTVAMUKTÁKALÁPA

WITH

## SARVÁRTHASIDDHI

BY

VENKAṬANÁTHA DEŚIKA.

EDITED BY

S. S. A. S. T S. P. S. M. M. RA'MA MIS'RA SA'STRI',

PROFESSOR SANSKRIT COLLEGE, BENARES.



काश्याम् ।

मेडिकल् हाल् नामकमुद्रालये मुद्रयित्वा प्रकाशितः ॥

१९५६ विक्रमाब्दे । १९०० ईस्वी ॥



॥ श्रीः ॥

श्रियै नमः ।

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

नमोनमो यामुनाय यामुनाय नमोनमः ।
नमोनमो यामुनाय यामुनाय नमोनमः ।



यस्मिँश्चिरन्तनगिरामिह तत्परत्व-
तत्त्वप्रलम्भनविमूर्छितधीकहानम् ।
आयत्तमस्ति भववारिधिपोतपादो
रामानुजार्यमुनिरेष जयत्यजस्त्रम् ॥

श्रीः

श्रियै नमः

श्रीधराय नमः

श्रीमते रामानुजाय नमः ॥

# भूमिका ।

अस्तीदमुपेयतमार्थनिरूपणपरं मध्यसिद्धान्तसिद्धार्थनिरूपणपरेभ्य उपेयार्थनिरूपणप्रचुरेभ्योऽपि सांख्ययोगादितन्त्रेभ्यः सारतमार्थप्रतिपादकमनन्यथासिद्धार्थविवेचनपरं वेदान्त*मीमांसाशास्त्रम् । यथाऽऽह पुराणाचार्यो भगवान् व्यासः

सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते ।
न वेदान्तात्परं शास्त्रं न देवः केशवात्परः ॥ इति,

उचितं चैतद् धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टये तमस्य मोक्षस्यैहैव फलोपायपर्यन्तस्य विंशत्या†ध्या मीमांसितत्वात् ।

सन्ति चानेकव्याख्यानानि ब्रह्मसूत्राणां तावता न तानि सूत्राक्षरार्थानुरोधीनि । न चैर्भगवतो बोधायनस्य ब्रह्मसूत्रवृत्तिकारस्य मतमनुरुन्धन्ति । प्रत्युत केचन

* अन्तः स्वरूपे निकटे नाशनिश्चययोरपीत्याभिधानिकानुस्मरणादन्तशब्दस्य निश्चयार्थकत्वेन वेदानां संहिता–ब्राह्मणोपनिषदारण्यकादिस्वरूपाणामन्तोऽर्थनिश्चयो येनासौ वेदान्त इति व्युत्पत्त्या पूर्वोत्तरभावापन्नं षोडशाध्यायी–चतुरध्यायीस्वरूपं जैमिनीय–कृष्णद्वैपायनीयं संहृत्य मीमांसा–शास्त्रम् । अत एव त्वेकशास्त्रत्वासत्या पृथक्त्वेऽपि पूर्वमीमांसोत्तरमीमांसे इति व्यवहरति । न्यरूपयाम चामुमर्थं शास्त्रदीपिकाभूमिकायामिति तत एव परीक्षन्तां विचक्षणाः ।

† जैमिनीयषोडशाध्यायीसंकलितोत्तरमीमांसाचतुरध्यायी विंशत्यध्यायीति सद्दिष्टः ।

ब्रह्मसूत्रभाष्यकाराः सूत्राक्षरविप्रतीपं स्वतात्पर्यविषयीभूतमेवार्थं स्वसंदर्भेषु बलान्निबबन्धुः । तिरश्चक्रुश्च हेत्वाभासोदाहरणभूताभिरतिदुर्बलदुर्युक्तिभिरुपाधिशताकुलाभिः परस्परव्याहताभिर्जगद्व्यामोहनपर्यवसानाभिर्भगवतो बोधायनस्य वृत्तिग्रन्थम् । अत एव तु ब्रह्माज्ञानवादं द्विषन्तोऽद्वयवादिनो भास्कराचार्यास्तत्सयूथ्याः सन्तोऽपि स्वभाष्ये आदावेव बुद्धेस्तत्त्वपक्षपातितया—

सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनाद् ।
व्याख्यातं यै*रिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥

इति स्फुटं वस्तुवृत्तमनुसरन्तः शाङ्करव्याख्यायाः सूत्राभिप्रायसंवरणहेतुतामुदक्षरतां निजनयनिरूपणपरतां च समगरिषत । स्वा†यमपि चानन्दमयाधिकरणे शेषे स्वनिरूपितार्थे असंतुष्यन्तः "सूत्राणि त्वेवं व्याख्येयानि" इत्यारभ्य अतिश्लथमर्थं निबद्धश्रद्धशिष्यबुद्धिसंग्रहाय कथं चिदुपदर्शयाञ्चक्रुः । अतएव रत्नप्रभादिशाङ्करभाष्यटीकासु "वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राण्यन्यथा‡नेतव्यानीत्याह। 'सूत्राणीति'" एवं तच्छिष्याः स्फुटमुपबवृंहिरे । किमेते मूलटीकाकृतो ब्रह्मसूत्राक्षराणां वेदविरोधमुद्भावयन्तो ब्रह्मसूत्राणां स्वप्रतिपाद्यार्थजाते प्रातिकूल्यं विश्वसन्ति? यदि तथा, तर्हि त्रैलोक्यविजयिन एते बौधायनीयवृत्तेरिव ब्रह्मसूत्राणामपि खण्डने यन्न प्रववृतिरे तच्चित्रं । दिष्ट्या सौभाग्यमेव वा पाराश-

* यैः=शङ्कराचार्यैः ।

† श्रीशङ्कराचार्याः ।

‡ सूत्राक्षरस्वरसलभ्यादर्थात्प्रच्याव्य कुश-काशावलम्बनेन शिष्यव्यामोहनाय केवलं योज्यानीत्यर्थः ।

र्यस्य कृष्णद्वैपायनस्य । किंवा पाराशर्यस्य समचिरंजीव्यन्तःपातितामुपश्रुत्यैव न ते तद्धाताय समुदयुक्षतेति मन्यामहे । अथवा ब्रह्मसूत्राणामतिसंक्षिप्ताक्षरतया यथा कथंचिदर्थनिरूपणेनाहढव्युत्पत्तेर्लोकस्य प्रतारयितुं शक्यतया न तन्निराकरणावश्यकतां मेनिरे, सूत्रवृत्तेस्त्वतिस्फुटार्थतयाऽन्यथयितुमशक्यत्वेन उद्युयुजिरे तन्निराकरणायैवेति ज्ञायते । भगवद्गीतां त्वयथाविधां निजघ्नुरेव ब्रह्माज्ञैरित्यतिस्फुटम् । अस्तु किमप्येतत्तथाऽपि ते किमज्ञासिषुर्जनाश्च तान् कथमन्वबीवृतन्, व्यश्वसिषु*र्वेति परवृत्तिनिरूपणे सर्वथा पराग्वृत्तयो वयमिति किं, कथं वा, निरूपयितुमीशीमहि । तथाऽऽध्यात्मतत्त्वं जिज्ञासमानैः प्रमाणपरायत्तचेतोवृत्तिभिरवश्यमार्षः प्रमाणसिद्ध एवार्थो ब्रह्मसूत्राणामनुसर्तव्य इत्यार्षवृत्ति-ब्रह्मसूत्राक्षरार्थानुसारिणोः श्रीभाष्य-वेदार्थसंग्रहयोर्मुद्रणे प्राक् प्रावर्तिष्महि । परं तु महाकरग्रन्थेषु सहसा जनानां नावगमसिद्धि-

* एवमेव तु ब्रह्मणो नैर्गुण्यवादो वैषम्यनैर्घृण्यादिलक्षणहेयगुणावधूननपरो ब्रह्मणः सर्वशुभगुणास्पदत्वेन गुणानामियत्तावधिराहित्यपरश्च परैस्तत्सूत्रार्थनिरूपणे कृतपरिकरैरत्यन्तनैर्गुण्ये निर्विशेषसत्स्वरूपत्वपर्यवसायिनि बलादेव नियोजितः, तथा हि ब्रह्मसूत्रं प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः । अध्या· पा· । ३ पा· २ । सू· २२ । इति विस्पष्टं ब्रह्मगुणानां भूयोऽभिधानयुक्त्या बुबोधयिषितानां तेषामानन्त्यादियत्ताराहित्यं व्यवस्थापयति । आह च तन्मात्रमिति अध्या· ३ पा· २ । सू· १६ । सूत्रं तु प्रकाशवच्चावैयर्थ्यमिति अध्या· । ३ । पा· २ । सू । १५ । पूर्वसूत्राक्षरस्वारस्यानुरोधेन सन्मात्रतामेव ब्रह्मणः श्रुतिर्ब्रूते इत्येतदर्थकं न भवति किं तु सन्मात्रतामेव निर्दिशति, न तु तद्व्यतिरिक्तं सर्वथाऽनन्यसिद्धं श्रुत्यैकसमधिगम्यं गुणजातं प्रतिपिपादयिषति ब्रह्म-तद्गुणानामप्राप्तत्वाविशेषेण बुबोधयिषितत्वात् । प्रकाशवच्चावैयर्थ्यमिति हि सूत्रं प्रकाशस्येवाप्राप्तस्य परस्यापि गुणजातस्य ब्रह्मणि सत्त्वमवगमयति इतरथा पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिब्रह्मगुणबोधकशास्त्रस्य वैयर्थ्यं प्रसज्येत न च गुणबोधकस्य शास्त्रस्य व्यावहारिकप्रमायथाभिधानादपि स्वस्त्यस्ति प्रकाशवदिति दृष्टान्तावष्टम्भेन प्रकाशस्येव परेषामपि गुणानां याथार्थ्यबोधकताया आवश्यकत्वात् । चतुर्थाध्यायस्तु सर्वोऽपि परेषामुत्सूत्रवृत्त्यादिकं सर्वमस्मदीयपद्वृत्तिग्रन्थे द्रष्टव्यमित्यभिप्रायेण जातपदम् ।

रिति जातेऽपि श्रीभाष्यादिमुद्रणे जनस्यालब्धव्युत्पत्तेर्न तत्राधिकार इत्यधिकारसिद्धये तत्त्वमुक्ताकलापः सर्वार्थसिद्धिसहितोऽञ्जसा बोधसिद्धये पर्याप्नुयादिति प्रकाश्यते।

अस्य च ग्रन्थरत्नस्य शोधनं तैलङ्गाक्षरपुस्तकमेकमपरं च देवाक्षरपुस्तकं श्रीमतामतिविसृत्वरस्वकीर्तिधवलीकृतसर्वदिङ्मण्डलानामस्मन्मत्ररत्नाचार्याणां पूज्यपादानामतिप्रकृष्टवाग्वैभवानामशेषशास्त्राचार्याणां वृन्दावनधामस्थजगद्गुरुश्री६गोवर्द्धनरङ्गाचार्याणां सुप्रसिद्धपुस्तकागाराच्छ्रीमतो लक्ष्मणाचार्यस्य साहाय्येनासाद्य निरवहम्। एतस्य ग्रन्थस्य निर्माता चावधीरितधिषणाधिषणो वेदान्ताचार्यपराभिधः सर्वतन्त्रस्वतन्त्रो वेङ्कटनाथदेशिको द्राविड़ब्राह्मणो वादिहंसाम्बुदाचार्यशिष्यः श्री६मदनन्ताचार्यपुत्रो विश्वामित्रगोत्रः श्री६पुण्डरीकाक्षाचार्यस्य विततमखविधेः पौत्रः श्री६तोतारम्मागर्भमहोदधिमहारत्नम्।

अस्य स्थितिसमयस्तु शाङ्करमतानुवर्तिनां श्रीमाधवाचार्याणां मध्वसंप्रदायानुवर्तिनामक्षोभ्यमुनीनां च समान एव। अस्ति चात्र प्रसिद्धिः कदाचिदक्षोभ्यमुनिना माधवाचार्याणां शास्त्रविचारे प्रवृत्तेऽङ्गीकृतमाध्यस्थ्याः श्रीवेदान्ताचार्याः।

असिना तत्त्वमसिना परजीवप्रभेदिना।
विद्यारण्यमरण्यानीमक्षोभ्यमुनिरच्छिनत्॥

शास्त्रार्थावसाने इति श्लोकं पेठुः। माधवाचार्या एव चतुर्थाश्रमावलम्बने विद्यारण्यपदेन प्रसिषिधुरिति तु सुप्रसिद्धमेव, ततश्च स्फुटमिदं यदेते अक्षोभ्यमुनिविद्यारण्यापरनाममाधवाचार्य–वेदान्ताचार्याः समसमयावस्थाना इति।

आशासे चामुना मुद्रणाद्यिनेन एतस्मिन् देशे सत्यवेदार्थप्रचारमनेकपुरुषायुषदुरवापमध्यात्मतत्त्वज्ञानं भक्तिमार्गसमुद्रेकं च ।

अभ्यर्थ्यते चात्र साहाय्यमनन्तकोटिब्रह्माण्डनायकस्य जगदुद्धरणे समुद्यतस्य तत एव परिगृहीतानेकैच्छिकदिव्यविग्रहस्य विचित्रानन्तशक्तिमतः शीलौदार्यगुणौघमहोदधेर्भगवतो देवतासार्वभौमस्यास्मत्कुलसमाराध्यपरमदैवतस्य विष्णोः ॥

इति काश्यामगस्त्यमुन्याश्रमाश्रमो राममिश्रशास्त्री,
वैक्रमेऽब्दे १९५६ । पौषकृष्णप्रतिपदि
रवावित्ति शम् ।







श्रीः

श्रियै नमः

श्रीधराय नमः

श्रीमते रामानुजाय नमः ॥

# सर्वार्थसिद्धिसहितस्य तत्त्वमुक्ता-कलापस्य शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ॰ | पं॰ |
| --- | --- | --- | --- |
| त्व | त्वं | ९ | ९ |
| अभेदत्नस्त्रि | अभेदस्त्रि | १० | ५ |
| लभाः स्य | लभास्य | १३ | ५ |
| बाह्य | बाह्ये | १४ | ५ |
| ततोाप | ततोऽप | ,, | १० |
| धर्मस्त | धर्मास्त | ,, | ९ |
| त्व | त्वे | १९ | ७ |
| साधर्म्या | साधर्म्यं | २५ | २ |
| प्रसिद्ध | प्रसिद्धि | ३३ | १२ |
| कत्यै | कत्वे | ३४ | १० |
| निष्ठति | निष्ठेति | ५५ | १ |
| भावे | भावो | ५६ | ११ |
| व्यवस्थिति | व्यवस्थितिः | ५८ | ४ |
| निमित्तति | निमित्तेति | ,, | ११ |
| वन्धा | वन्ध्या | ५९ | ९ |
| विशिष्ट | विशिष्टे | ६७ | ११ |
| त्रत्य | त्रत्ये | ,, | २ |
| मसत्त्वं | मसत्त्वे | ८० | ५ |
| न ह्नि | स हि | ८६ | ९ |
| छत | छतया | ,, | १० |
| दूपयति | दूषयति | ८८ | ५ |
| तैजकथा | तैजःकथा | १०७ | ४ |
| विपरा | विपरी | ११३ | ७ |
| ख | स्वं | १२५ | ८ |
| स्थिरत्त | स्थिरतर | १४ | ८ |

## द्वितीयसरः

| अशुद्धम् । | शुद्धम् । | पृ॰ | पं॰ |
| --- | --- | --- | --- |
| तद्धल | तद्धुल | १५७ | ८ |
| मैत्तत् | मैत्तत | १६६ | १ |
| परमानि | परमात्मनि | १७५ | ६ |
| निष्ठ | निष्ट | २०४ | १२ |
| स्यय | स्यस्य | २१२ | १ |
| नतया | त्वया | २१४ | १ |
| विनाश | विनाशं | ,, | ५ |
| हिंसाः | हिंसा | २२० | ६ |
| सङ्गृहीतं | सङ्गृहीतं | ,, | ११ |
| ययन् | प्रयन् | २२२ | ६ |
| प्रतिक्ति | प्रतिवक्ति | २२५ | ११ |
| तटि | तड़ि | २२६ | १ |
| आद्य | आद्ये | २३३ | ९ |
| ताति | तीति | २३७ | २ |
| भ्यत | भ्येत | २३९ | ११ |
| क्रिया | क्रिय | २४० | ३ |
| तन्मा | तन्या | २४१ | १० |

३३५

तृतीयस्य नायकसरस्यारम्भः ।

| अशुद्धम् । | शुद्धम् । | पृ० । पं० |
|---|---|---|
| व्यामा | व्यामो | २५२ । १० |
| व्याख्यात | व्याघात | २६९ । ८ |
| दृष्टिदा | दृष्टिर्दा | ३१५ । १ |
| वत्स्यति | वर्त्स्यति | ३२९ । ७ |
| स्वमन्तव्याः | स्वंमन्तव्याः | ३२९ । १ |
| दोदुष्टम | दोपदुष्टम | ३३० । १ |
| वार्जीदाविति | जीवादाविति | ३७६ । ७ |
| चचत्र | चचेत्रत्र | ३८६ । ८ |
| प्रदर्यति | प्रदर्शयति | ,, । १३ |
| भावः म | भावम | ४४७ । ११ |
| यर्णं | ग्रहणं | ४४७ । ४ |
| प्रमुष | प्रमुष्ट | ४५४ । ६ |
| त्यग | त्याग | ४५६ । ७ |
| प्युलू | प्युत्र | ४७० । २ |
| लोकांतेन | लोकितेन | ४८६ । ११ |
| स्वात्या | स्वत्या | ४९० । ११ |
| तादिभि | ताभि | ४९२ । ३ |
| पुरोनश्वरे | नपुनरीश्वरे | ५३३ । १० |
| अन्विधा | अन्विताभिधा | ५३९ । ४ |
| तद्यही | तद्गृहीतिः | ५६२ । ७ |
| काव्य | काव्या | ५६४ । २ |
| स्तद्यही | स्तद्गृही | ५६५ । २ |
| स्यत् | स्यात् | ५७६ । ४ |

श्रीः । श्रीः । श्रीः ।



शान्महत्त्वपरिमाणादधिकं वा अनधिकं तदेव वा परिमाणं सर्वथा तावन्न परित्यज्यते परमाणुरूपं वस्तुतत्त्वमिति न क्वाप्यस्माकं दोष इत्यर्थः ॥

इति परममहत्त्वनिरूपणम् ॥ ४८ ॥

अथ कश्चिदाह न द्रव्येष्वणुमहदादिप्रक्रियाभेदेन परिमाणं स्वाभाविकमस्ति अपि त्ववस्थाभेद एव तत्सर्वमिति तदेदनुवदति । द्रव्यमिति ।

मू० द्रव्यं कृत्स्नं स्वभावात् परिमितिरहितं व्यापकैकत्वयुक्तेरौपाधिकांशक्लृप्तिर्घटगगननयात्स्यादवस्था ह्युपाधिः । स्वाभावैर्वेष्टितत्वं घटत इह घटाद्याकृतौ द्रव्यधर्मे पार्श्वोक्तिस्तावता स्यादिति न सदवधेरन्यथाऽप्यत्र सिद्धेः ॥ ४९ ॥

टी० तत्र हेतुमाह । व्यापकैकत्वयुक्तेरिति । एकैव सर्वव्यापिका प्रकृतिरुच्यते अचेतना परार्था चेत्यादिभिर्वचनैः, युक्तियुक्तं चैतत् एकस्यैव नानावस्थायोगेन नानात्वे लाघवात् अंशक्लृप्तिस्तु कथमितिचेत्तत्राह । औपाधिकीति । तत्र दृष्टान्तं कथयति । घटेति । यथाऽऽकाशे घटाद्युपाधिभेदादंशक्लृप्तिरित्यर्थः, तत्र घटादिरेवोपाधिः इह पुनः कोऽयमुपाधिरिति चेत् तत्राह । अवस्था ह्युपाधिरिति । सैवावस्था तत्तत्र परिणता नानात्वव्यवहारे निदानमित्यर्थः । तर्हि परिमितद्रव्याभावे घटादिषु स्वाभाववेष्टितत्वं कथमित्याशङ्क्य परिहरति । स्वाभावैरिति । घटादीति स्वाभाववेष्टितं किमपि द्रव्यान्तरं न पश्यामः अपि तु प्रकृतौ परिणता घटाद्याकृतिरेव स्वाभाववेष्टिता

प्रतिभाति, अनेनैव न्यायेन घटादौ पार्श्वैक्तिरपि संघटत इति वदति। पार्श्वैक्तिरिति। घटाद्याकृतावेव परितः पार्श्वैक्तिव्यवहारः अतः परिमाणं नाम किमपि द्रव्ये न परिकल्प्यमिति तन्निषेधति। न छदिति। तत्र हेतुमाह। अवधेरिति। उपलब्धिरेव हि सर्वत्र प्रमाणं परिमितत्त्वरूपेण उपलभ्यमानेषु घटपटादिषु, न ह्यवधिसापेक्षं तत्तत्परिमाणमुपलभ्यते तत्सापेक्षत्वे पुनरवधेरपि निरपेक्षपरिमाणशालित्वमकामेनापि स्वीकर्तव्यमिति भावः ॥ ४९ ॥

इत्थं सामान्येन परिमाणं प्रसाध्य स्वाभाविकमात्मनोऽणुत्वं साधयितुं विशेषतोऽप्यणुपरिमाणं शोधयति। अव्यक्त इति।

मू० अव्यक्ते स्यादणुत्वप्रभृतिपरिणतिः स्तम्भकुम्भादिनीत्या नाणुत्वं पूर्वसिद्धं नरमृगरचनाद्यप्यवस्थाक्रमेण। इत्युक्तं सांख्यशैवप्रभृतिसमयिभिस्तत्तथैवास्तु मा वा नित्याणौ जीवतत्त्वे न कथमपि भवेदण्ववस्थाप्रसूतिः ॥ ५० ॥

टी० अणुत्वप्रभृतयो हि धर्माः प्रकृतिद्रव्य एव परिमाणभेदादायुज्यन्ते यथा स्तम्भत्वकुम्भत्वादयः, अतो ऽनादिसिद्धमणुत्वं नाम किञ्चिन्नास्ति यथा एकस्यैव प्रदेशभेदेन नरमृगादिविरुद्धधर्मरचना। अथवा एकस्यैव क्रमेण पूर्वं नररूपेणावस्थितस्य पश्चान्मृगरूपेणावस्थानम् एवं कालभेदेनाणुत्वेनावस्थितस्यैकस्यैव महत्त्वं महत्त्वेनावस्थितस्याणुत्वम् इत्थं सांख्यशैवप्रभृतिभिरुक्तम् एतद्युक्तमयुक्तं वास्तु उभयथाऽपि नास्माकं क्षतिर्यदि कारणावस्थायां महती प्रकृतिः कार्यावस्थायां कालभेदेन परिणतिवशादणुत्वं भजति, यदि

-या कारणावस्थायां चसरेणुसंघातरूपेणावस्थिता प्रकृतिरनुपलभ्यमान-स्वरूपभेदा कार्यावस्थायां कालभेदाधीनभागोपलम्भेन चसरेण्वादि-रूपेणोपलभ्यत इति उभयथाऽपीश्वरकारणत्वादिरूपप्रधानार्थवि-रोधाभावादुच्यमानस्य चार्थस्यानुपपत्तिविशेषस्फोटयामात्रात्तत्र न विप्रतिपद्यामहे । अयमत्र विशेषः प्राकृतपरमाणौ यथा तथा वाऽस्त्वणुपरिमाणं जीवतत्त्वे न कथमपि भवेदवस्थाया उत्पत्ति-र्जीवस्यानाद्यनन्तत्वेनैव प्रमाणसिद्धत्वादित्याह । न कथमपीति ।

इत्यवस्थामात्रपरिमाणवादभङ्गः ॥ ५० ॥

इत्थं परिमाणं संशोद्ध्य पृथक्त्वमपि शोधयति । चर्चेति ।

मू० चर्चा तुल्यैत्र भिन्नं पृथगितरदिति प्रत्यये तत्पृथक्त्वं भेदाख्यो नीलपीतप्रभृतिरभिमतः किं मुधाऽन्यस्य क्लृप्तिः । नाप्यज्ञातावधीनां पृथगिदमिति धीर्नापि भिन्नादिवाचां साकं क्वापि प्रयोगो न च पृथगिति धीर्द्रव्य एवेति सिद्धम् ॥ ५१ ॥

टी० व्यवहार एव खल्वर्थतत्त्वविभागे निदानं यद्भिन्नमिति व्यवह्रियते, तदेव पृथगिति यत्पृथगिति तदेवेतरदिति च व्यवह्रि-यते, अत एषां शब्दानां पर्यायत्वाद् भेदातिरेकेण पृथक्त्वं नाम न कश्चिद्धर्मः कल्पनीयः, किंच भेदश्च नीलपीतादिरसाधारणो धर्म एवाभिमतः तथा च पृथग्व्यवहारस्यान्यथासिद्धत्वे किं मुधा-न्यस्य पृथक्त्वस्य परिक्लृप्त्या । ननु पृथक्त्वं भावरूपं प्रतियोगिनिरपेक्षं भेदस्तु प्रतियोगिसापेक्ष इति वैषम्यमाशङ्क्य परिहरति । नापीति । न ह्यवधिपरिज्ञानाभावे सतीदमस्मात् पृथगिति व्यवहार इति यदि

पृथक्त्वमसाधारणधर्मरूपाद् भेदादन्यत् तर्हि तद्वाचकशब्दस्य भेद-वाचकशब्देन सामानाधिकरण्यं प्रसज्येत । न च तथोपलभ्यते न हि पृथगित्युक्त्वा भिन्नमिति वदन्ति भिन्नमिति चोक्त्वा पृथगिति वा तदिदमाह । नापीति । न च पृथगिति धीर्द्रव्य एव नियता गुणादीनामपि पृथक्त्वेनोपलम्भात्, अतः परस्परव्यावर्तकासाधारणधर्म एव सर्ववस्तूनां पृथक्त्वं, तदेव लक्षणं, स एव भेद इति सर्वमवदातम् ॥

इति पृथक्त्वाख्यगुणान्तरक्लृप्तिभङ्गः ५१ ॥

संयोगस्यान्तरालाभावत्ववादिनं बौद्धं निराकर्तुं तस्यानन्यथासिद्धप्रमाणप्रतिपन्नत्वेन स्वीकर्तव्यत्वमाह । तन्त्वादीनामिति ।

**तन्त्वादीनां घटादिव्यवहृतिनियता दृश्यते काप्यवस्था सा चेद् द्रव्यस्वरूपं भवति विफलता कारकव्यापृतीनाम् । तत्रासंयुक्तबुद्धिः कथमिव च भवेत् स्थैर्य्यवादस्थितानां नैरन्तर्य्येऽस्तु भावो मम तदघटितम्मध्यमेवान्तरन्तु ॥ ५२ ॥**

टी० पटादिव्यवहृतिनियता तन्त्वादीनामवस्थैव पट इति वेदान्तिनः येऽपि चावस्थाव्यतिरेकेण द्रव्यान्तरं स्वीकुर्वन्ति, तेषामप्यसमवायिकारणावस्थाविशेषत्वेन स पुनः स्वीकार्य्यः, तथा च संयोगस्सिद्धः, सावस्था द्रव्यस्वरूपमेवेति चेत्तर्हि कारकव्यापाराणां विफलता च स्यात् । किञ्चापूर्वसंयुक्तत्वरूपावस्थानङ्गीकारे विभक्तेषु तन्तुषु असंयुक्तत्वबुद्धिः कथं स्यात् स्थिरवादिनां संयुक्ततन्तुस्वरूपस्यानपायात् प्रतिक्षणं तन्तव उत्पद्यन्त इति चेत् निरस्त एव क्षणभङ्गवाद इत्यभिप्रायेणाह । स्थैर्य्यवादस्थितानामिति । ननु

नैरन्तर्यं संयोगः स चान्तरालाभावः अभावश्च शून्यमेवेति चेतन्न अभावस्यापि भाववदशून्यत्वात् निषेधकप्रमाणगोचरो ह्यभावः कथं शून्यतामनुभवति । किञ्च भावान्तराभाववादिनामस्माकं पक्षे नैरन्तर्यमपि भाव एव किन्त्वन्तरं तदपि भाव एव द्वयोरपि पदार्थयोर्मध्यमेव नन्वन्तरमित्युच्यते अतोऽन्तरालमन्तरालाभावरूपतया भवत्परिकल्पितसंयोगोऽपि भावरूप एवेति न शून्यगन्धावकाशः ॥

इति संयोगसिद्धिः ॥ ५२ ॥

एवं संयोगस्य सिद्धिमुक्त्वा तस्य संयोगस्य वस्तुन्येकदेशवर्तित्वसामर्थ्यात् सर्वस्यापि द्रव्यस्य सांशत्वं वदतो जैनस्य पक्षमनूद्य प्रमाणानुरोधेन परिहरति । सर्वमिति ।

**मू० सर्वं द्रव्यं सभागं न यदि कथमुपाध्यन्वयो भागतः स्यात् कार्त्स्न्येनोपाधियोगे कथमणुविभुनोस्सूक्ष्मतादीति जैनाः । सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावादौपाधिकांशक्लृप्तिः कथमिव न भवेद् द्विष्ठसंबन्धदृष्टेः ॥ ५३ ॥**

टी० इत्थं किल ते मन्यन्ते परमाण्वादि सर्वमपि द्रव्यं सभागमेव पदार्थान्तरसंयोगस्य पार्श्वषट्कमन्तरेणानुपपत्तेः यदि पार्श्वपरिक्लृप्तिरुपाधित इति वदन्ति तच्च न निरवयवद्रव्यस्य उपाधिसंयोगेऽप्यनधिकारात्, मध्यस्थस्य हि परमाणोः परितः स्थितषडुपाधिसंसर्गोऽपि षड्भिरेव पार्श्वैरुपपद्यते अन्यथा कथमुपाधिसंसर्गः तथ्चत्योपाधिकोऽपि पार्श्वनियमः सिद्ध्येत् तर्हि निरवयवस्य कार्त्स्न्येनोपाधिसंसर्गं वदाम इति चेत् तर्हि परमाण्वाकाशयोः परस्पर-

संसर्गे परमाणुरपि विभुः स्यात् आकाशो वा परमाणुः स्यात्तदिद-माह । कार्त्स्न्येनेति । इत्थमनूदितं पक्षं प्रमाणानुरोधेन परिहरति । सामर्थ्येति । अयमर्थः—दृश्यते तावत्संयोगः स च क्वचित्कतया उपलभ्यते स यदि संसर्गप्रदेश एव न वस्तुनीत्यभिधीयेत तथा सति तस्यापि प्रदेशस्य प्रदेशान्तरपरिक्लृप्त्या कस्मिंश्चिदपि वस्तुनि संबन्धो न स्यादेव, दृश्यमानस्य च संबन्धस्याधारतया परिदृष्टमेव वस्तु परिग्राह्यं तत्तु निरवयवञ्चेत् औपाधिकांशभेदक्लृप्त्या निर्वाह्यम् । ननु तादृशस्योपाधिसंबन्धेऽप्यनधिकार इत्युक्तमिति चेत् द्विष्ठसंबन्धदृष्टिबलादुपाधिसंबन्धस्य स्वपरनिर्वाहकत्वेन निर्वाहः कल्प्यः, तदिदमाह । औपाधिकेति । एवं च सत्यणुरपि स्वधर्मिग्राहकबलादणुत्वेनैव सिद्धः, विभुरपि विभुत्वेन, उभयमपि निरवयवम् । अथापि तत्तद्धर्मिग्राहकप्रमाणबलाद्विभुत्वाणुत्वयोः प्रतिनियतिः, द्वयोरपि निरवयवत्वम् औपाधिकांशक्लृप्तिश्चेति सङ्गतमेतत् ॥

इति निरवयवेष्वेकदेशसंयोगप्रकारः ॥ ५३ ॥

अस्तु संयोगः अथापि विभूनां परस्परसंयोगो नास्तीति काणादादयः तन्निषेधति । नैरन्तर्यमिति ।

सू० नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्ययोगोऽपि योग्यः केचित्तं हेत्वमायाज्जहति विदधति क्लृप्त्यधीकल्पने तत् । स्याद्वा तत्सिद्ध्यसिद्ध्योरनुमितिरपटुर्बाधहानेर्विपक्षे शास्त्रैरन्यद्विभुः स्यात् परभृतमपृथक्सिद्धिरेवं ततोऽस्य ॥ ५४ ॥

टी० निरन्तराणां हि पदार्थानाम् अन्योन्यसंयोग उपलभ्यते विभूनामपि नैरन्तर्य्यमस्ति अतोऽन्योन्यसंयोगयोग्यताऽस्ति तदेतदाह । तत इति । केचित्तु हेत्वभावात् संयोगं जहति अन्यतरकर्म्मोभयकर्म वा संयोगो वा संयोगस्य हेतुः त्रितयमपि विभुषु न घटत इति तत्र दूषणमाह । विहतिकृदिति । ईश्वरज्ञानादीनां कारणाभावादभाव इति परवादिभिरुक्ते कार्य्यभूतस्य ज्ञानादेः कारणापेक्षा न नित्यज्ञानादेरिति काणादादयः परिहरन्ति तुल्यमेतदजसंयोगकल्पनेऽपि अनित्यसंयोगस्यैव कारणाभावादभावो वक्तुं शक्यते नित्यस्य तु कारणसापेक्षत्वाभावेन तदभावात् अभावो वक्तुं न शक्यत इति । इमामेव प्रतिवन्दिमभिप्रेत्याह । नित्यधीति । तर्ह्यजसंयोगसाधने किम्मानम् उक्तमेव नैरन्तर्य्ये परोक्तमन्वारुह्यापि परिहरति । स्याद्वेति । अजसंयोगसाधने तावदनुमानं शक्तमशक्तं वा भवतु विपक्षे बाधकाभावात् शास्त्रं पुनस्सर्वाधारं धाम विष्णुसंज्ञमित्यादिकं परस्य ब्रह्मणः कृत्स्नप्रपञ्चाधारत्वमावेदयति तदाधारत्वञ्च तदपृथगवस्थानमेव अतो विभूनामपि परमात्मसंबन्धस्य शास्त्रप्रमितत्वाद् बाधकाभावाच्च युक्त एवायमजसंयोगः । इति ॥

इत्यजसंयोगनिरूपणम् ॥ २४ ॥

संयोगस्य सार्वत्रिकोपजीवनेन सर्वैरनपोह्यत्वं दर्शयति । संयोगादिति ।

**मू० संयोगाद्विश्वसृष्टिः प्रकृतिपुरुषयोस्ताद्वशैस्तद्विशेषैर्ब्रह्मादिस्तम्बनिष्ठा जगति विषमता यन्त्रभेदादयश्च । अक्षाणामर्थयोगाद्विविधमतिरबाद्यन्वयादङ्कुरादिश्शुद्धाशुद्धा-**

द्वियोगान्नियतमपि फलं न्यायतत्त्वेऽस्य घोषः ॥ ५५ ॥

टी० प्रकृतिपुरुषयोस्संयोगाद्विश्वसृष्टिस्तावत्तादृशैरेव संयोगविशेषैर्ब्रह्मादिस्तम्बपर्य्यन्तं जगद्वैषम्यम् आलानयन्त्रादयः सुप्रसिद्धास्संयोगरूपाः अक्षाणामर्थसंयोगाद्विविधा मतिर्दृश्यते अब्वाद्यन्वयाद् बीजादिकमङ्कुरति शुद्धाशुद्धात्मकाभ्यां कपिला--नरास्थिसंस्पर्शाभ्यां नियतमपि फलमनुशोश्रूयामहे, अतस्संयोगविशेषास्सर्वेर्वालभ्यन्ते इति न्यायतत्त्वे संयोगस्य घोष इति ॥

इति संयोगवैचित्र्यप्रदर्शनम् ॥ ५५ ॥

विभागस्य संयोगनाशादर्थान्तरत्वं प्रतिक्षिपति । संयुक्त इति ।

मू० संयुक्ते द्रव्ययुग्मे सति समुपनतो यस्तु संयोगनाशः संग्राह्योऽयं विभागव्यवहृतिविषयस्सोऽपि तद्धेतुतस्स्यात् । त्वन्निर्दिष्टे विभागे गतवति च सतोः स्याद्विभक्तप्रतीतिर्भूयस्संयोगसिद्धौ कथमिति तु यथा त्वद्विभागान्तरादौ ॥ ५६ ॥

टी० पूर्वं परस्परसंयुक्ते द्रव्यद्वये विद्यमाने सति समुपनतो यः संयोगनाशस्स एव विभागव्यवहारविषय इति संग्राह्यः तर्हि संयोगविनाशकत्वेन विभागं स्वीकुर्म इति चेत् तन्न संयोगनाशस्य विभागकारणत्वेन कल्पितत्वात् कर्म्मण एव सिद्धिः स्यात् तदिदमाह । सोऽपि तद्धेतुत इति । ननु विभागस्य संयोगनाशरूपत्वे संयोगनाशस्यानन्त्यात् भूयस्संयोगसिद्धावपि विभक्तप्रतीतिः स्यादे-

चेति चेत्तर्हि त्वन्निर्दिष्टे विभागे तस्मिन्नेव क्षणे गतवति विभागप्रध्वंसमात्रमेव सतोर्द्रव्ययोरनुवर्तते तेनैव तत्र विभक्तव्यवहारानुवृत्तौ भूयस्संयोगेऽपि तत्रापि विभक्तव्यवहारः स्यादिति प्रतिबन्दिमाह । त्वन्निर्दिष्ट इति । पृच्छति । कथमिति । उत्तरम् । यथेति । यथा विभागान्तरे सति पूर्वविभागप्रध्वंसानुवृत्त्या विभक्तप्रतीतिरेवं मध्ये संयोगकाले विभक्तप्रतीतिः स्यात् । ननु तत्र उत्तरविभागाद् विभक्तप्रतीतिर्मध्ये संयोगकाले तत्प्रागभावात् विभक्तप्रतीतिर्नास्तीति चेत् एवन्तर्हि मध्यगतसंयोगस्य विभक्तप्रतीतिपरिपन्थित्वात् तस्मिन् काले विभक्तप्रतीतिर्नास्ति भूयःसंयोगप्रध्वंसकाले तस्यैव संयोगस्य प्रध्वंसेन तस्मिन्नेव काले विभक्तप्रतीतिरस्तीति ममापि समानमिति भावः ॥

इति परोक्तविभागभङ्गः ॥ ५६ ॥

एवं संयोगनाशस्य विभागत्वं समर्थ्य संयोगनाशस्य स्वरूपं चोदनापूर्वकं शोधयति । कोऽसाविति ।

मू० कोऽसौ संयोगनाशस्तव मत इति चेत्
सोऽयमन्यत्र योगस्तस्य प्राचा विरोधात्
स तु मिषति तथा ऽऽलोचितस्तद्विनाशः ।
अज्ञातप्राच्ययोगः परमभिमनुते स्वेन रूपेण
चैनं सर्वोऽप्येवं ह्यभावः स्फुटमिह न पुनः
कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥

टी० सोऽयमन्यत्र योगः उत्तरदेशसंयोग एव पूर्वदेशसंयोगस्य विनाशः, तत्र हेतुमाह । तस्येति । अयमर्थः उत्तरदेशसंयोगस्य पूर्वदेशसंयोगेन विरोधात् स तु एवोत्तरदेशसंयोग एव

तथा ऽऽलोचितः—पूर्वदेशसंयोगविरुद्धत्वेनालोचितः तद्विनाशो भिद्यति पूर्वदेशसंयोगनाश इति परिस्फुरति । कथन्तर्ह्युत्तरदेशसंयोग इति भावरूपेण प्रतिपत्तिरित्यत आह । अज्ञातेति । द्विविधा हि उत्तरदेशसंयोगप्रतीतिः ज्ञातपूर्वदेशसंयोगस्य तद्विरुद्धत्वेन काचित्स्वरूपेण चापरा तत्र ये स्वरूपेण प्रतिपद्यन्ते ते भावरूपेणाभिमन्यन्ते ये पुनः पूर्वदेशसंयोगविरुद्धत्वेन प्रतिपद्यन्ते ते त्वभावरूपेणेति विभागः । उक्तमर्थं सार्वत्रिकत्वेनोपपादयति । सर्वं इति । भावान्तराभाववादिनां सर्वोऽप्यभावो न भावान्तरादतिरिच्यत इति भावः । एवं सर्वत्रापि भावस्यापलापे कुत्रापि भावो न स्यादित्याशङ्क्याह । स्फुटमिति । यत्र स्फुटदृष्टो भवति भावरूपः पदार्थः तत्र तथैव स्वीकार्यम्, यत्र पुनरितराभावतया निर्वोढुं शक्यते तत्र तथैव निर्वाह्यः सर्वेऽपि वादिन इत्थमेव खलु भावाभावविवेकं परिकल्पयन्तीति भावः ॥

इति संयोगनाशस्वरूपशोधनम् ॥ ५० ॥

अथ परत्वापरत्वे प्रमाणाभावाद् दूषयति । स्पन्देति ।

**मू० स्पन्दावृत्त्यादिभेदात् परमपरमिति प्रत्ययौ तत्तदर्थे कालाधिक्यादिमात्रान्न खलु समधिकं शक्नुयातां विधातुम् । दृष्टिर्नान्यस्य क्लृप्तिर्भवति गुरुतरातिप्रसङ्गोऽन्यथा स्यात् किन्न स्यातां गुणाद्यैः परतदितरते पूर्वभावादि चान्यत् ॥ ५८ ॥**

टी० न तावत् परत्वापरत्वे वस्तुनः स्वरूपकृते परापरव्यतिरेकाभावप्रसङ्गात् अतो बुद्धिकृते इत्येव हि भवद्भिस्सिद्धान्तितं वा

च बुद्धिरपेक्षा बुद्धिरित्यभिधीयते सा बुद्धिर्न निर्विषया बुद्धेर्निर्विषयत्वायोगात् । नापि सामान्येन यत्किञ्चिद्विषया सर्वासामपि बुद्धीनामपेक्षाबुद्धित्वप्रसङ्गात् परत्वापरत्वयोरन्योन्यवैषम्याभावप्रसङ्गाच्च अतो विषयविशेषविशेषितेयं बुद्धिः परत्वापरत्वहेतुरिति स्वीकर्तव्यं, तथैव च भवद्भिरपि स्वीक्रियते तथा चापेक्षाबुद्धिविषयरूपत्वमन्तरेणाधिकपरत्वापरत्वयोरदर्शनात् अनपेक्षितकल्पने गौरवाच्च अपेक्षाबुद्धिविषयभाव एव परत्वापरत्वे स्त इति तात्पर्य्यार्थः । पदार्थेस्तु स्पन्दावृत्त्यादिभेदात् कालकृतपरत्वापरत्वे सूर्य्यपरिवृत्त्यादिभेदेन कालाधिक्यादिमात्रात् परमपरमिति प्रत्ययो स्तः । दिक्कृतपरत्वापरत्वे संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वमात्रात् परत्वापरत्वबुद्धी भवतः । इत्थमन्यथासिद्धौ बुद्धिव्यवहारौ समधिकपरत्वापरत्वे विधातुं न शक्नुयातां तदिदमाह । न खल्विति । दृष्टत्वादधिकं परिगृह्णीम इति चेन्नेत्याह । दृष्टिर्नान्यस्येति । न हि किञ्चित् परत्वमपरत्वं वा पूर्वोक्तादन्यदुपलभामहे कल्पनन्तु गुरुत्वहतम् । अनपेक्षितकल्पनमतिप्रसङ्गदुःस्थञ्च गुणादिष्वपि परत्वापरत्वव्यवहारो दृश्यते यथाऽऽभिजात्येन परः विद्ययाऽपरः वृत्तेन पर इत्यादि, नैतावता तत्र परत्वादि कल्प्यते । किञ्च कालेन पूर्वं पश्चाद् भावि वर्त्तत इति देशेनापि प्राग्भावी पश्चाद्भावीत्यादिव्यवहारभेदास्सहस्रशोऽपि दृश्यन्ते । न च तत्र गुणभेदो भवद्भिरपि कल्प्यते केवलं देशकालविशेषसंबन्धमात्रेण व्यवहारविशेषाः प्रतीयन्त इति भवन्तोऽपि वदन्ति तदन्यत्रापि न दण्डवारितम् । किञ्च दिक्कालावुपाधीकृत्यापेक्षाबुद्धिः प्रवर्त्तते इति हि भवत्सिद्धान्तः, तदपि न घाघटीति दिक्कालयोः परत्वापरत्वपरिणतेः प्रागेवोपलब्धत्वे पश्चाद-

नुमानवैयर्थ्यात्, अनुपलब्धत्वे तु अपेक्षाबुद्धेरेव सुषुप्तिप्रसङ्गादि-त्येषा दिक् ॥

इति बुद्धिजन्यपरत्वापरत्वत्वाख्यगुणान्तरक्षिप्तिभङ्गः ॥ ५८ ॥

अथ बुद्धिविषयचिन्ता प्रवर्तते बुद्धेर्गुणत्ववादिनं प्रत्याह । द्रव्यमिति ।

मू० द्रव्यं प्राग् बुद्धिरुक्ता परमिह विषयैस्सङ्ग-
मादिर्निरूप्यस्संयोगं भाष्यकाराः प्रथममक-
थयन्न्यायतत्त्वानुसारात् । तत्संयोगे समेऽपि
स्फुरति न निखिलं तेन योग्यत्वमन्यद्
ग्राह्यं संबन्धसाम्ये नियतविषयता दृश्यते
हीन्द्रियेषु ॥ ५९ ॥

टी० बुद्धिसरे बुद्धेर्द्रव्यत्वमुक्तं परमिह विषयैस्संबन्ध्यादिर्निरूप्यते तत्र भाष्यकारा न्यायतत्त्वानुसारात् बुद्धेर्विषयैस्सह संबन्धं संयोगमकथयन् तर्हि सर्वैरपि संयोगात्सर्वं भासेतेति न वाच्यं बुद्धेस्संयोगे समेऽपि निखिलन्न स्फुरति तत्र हेतुमाह । योग्यत्वमन्यद्ग्राह्यमिति । संबद्धमपि योग्यमेव बुद्ध्या गृह्यत इत्यर्थः । तत्र दृष्टान्तमाह । संबन्धेति । संबन्धसाम्ये सत्यपि नियतविषयता दृश्यते तद्वदिहेति इन्द्रियार्थसन्निकर्षे तुल्येऽपि चक्षुषा रूपमेव गृह्यते न पुनः स्पर्शः, स्पर्शनेन स्पर्शः न रूपं, कुत एतद् योग्यत्वस्य नियतत्वात्, एवं सर्वेषां बुद्धिसंबन्धे सत्यपि सहकारियोग्यतादिनियमादेकमेव गृह्यते नान्यदिति नियमो नानुपपन्न इति ॥

इति विषयविषयिभावनिरूपणम् ॥ ५९ ॥

इत्थं विषयविषयिभावं निरूप्य तद्वैषम्ये निदानमाह । नित्यमिति ।

मू० नित्यं नित्यादिबुद्धिर्निखिलविषयिणी तद्व-
देव स्वभावः शास्त्रैः क्षेत्रज्ञबुद्धेरपि समधि-
गतः कर्म्मभिस्तन्निरोधः । संकोचोल्लास-
योश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदा-
न्निश्शेषोपाधिमोक्षे निखिलविषयतामश्नु-
वीत स्वभावात् ॥ ६० ॥

टी० नित्या बुद्धिर्निखिलविषयिणी तद्वदेव स्वभावो यथा न क्रियते ज्योत्स्नेत्यादिशास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः, अपि तु कर्मभिस्तन्निरोधः तेन सङ्कोचोल्लासयोः प्रतिनियतिरिहोपाधिभेदात् स्यान्निश्शेषोपाधिमोक्षे सैव बुद्धिर्निखिलविषयतामश्नुवीत । अत्रोपाधिः कर्म स च निरूपेण भगवन्निग्रह एव अतो भगवानेव निग्रहानुग्रहाभ्यां बुद्धेः संकोचविकासौ करोति ॥

इति विषयविषयिभाववैषम्यम् ॥ ६० ॥

मुक्तानां धीविकासानुपपत्तिं विकल्पाभासेन वदतां श्रुतिविरोधं वक्तुं तदुक्तिमनुवदति । मुक्तानामिति ।

मू० मुक्तानां धीक्रमाच्चेत् प्रसरति न कदाप्य-
न्तमेषाऽधिगच्छेत् संक्षिप्तायाश्च दूरान्ति-
कपरिपतने यौगपद्यं न शक्यम् । संयोगो
भूतभव्येष्वपि न हि घटते तद्धि यस्सांप्र-
तिक्या इत्याद्यैर्न वृत्तिः स्याच्च श्रुतिमुख-
विदिते योग्यतावैभवेऽस्याः ॥ ६१ ॥

टी० इत्थं किल तेषामाशयः मुक्तानां धीः क्रमाच्चेत्प्रसरति न कदापि देशस्यान्तमेषाऽधिगच्छेत् आनन्त्याद्देशस्य, नापि युगपद् गच्छेद् न हि संक्षिप्ताया धियो युगपद् दूरान्तिकपरिपतनं युक्तं वक्तुम् अयमेको दोषः, अन्योऽपि सांप्रतिक्या भूतभाविधियो भूतभाविभ्यां संयोगो न घटते संबन्धान्तरं नोपलभ्यते अतो मुक्तानां सार्वज्ञ्यं न स्यादिति तन्निराचष्टे। श्रुतीति । श्रुतिमुखविदिते योग्यताविभवे अस्या धियः तत्कर्मसु न क्षतिः स्यादित्यर्थः । अयमर्थः मुख्यासंभवे गौणग्रहस्याधारणः तथा च संयोगसम्भवे स एव ग्राह्यः तदभावेऽपि विषयविषयिभावस्तत्स्थानापन्नः स्वीकार्य्य इति धर्मभूतज्ञानस्य क्रमयौगपद्याभ्यां प्रसरणानुपपत्तिहृदयगिरिशिखरस्थदिवाकरकरप्रसरणवदुन्मीलितचक्षुषो ब्रह्माण्डोदरवर्तिसकलवस्तुग्रहणवदित्यादिभिः प्रागेव परिहृता भगवतः प्रभावातिशयेन युगपदेव धर्मभूतज्ञानस्य विश्वविषयत्वप्राप्तौ को विरोधः ॥

इति विषयविषयिसंयोगचोद्यपरिहारः ॥ ६१ ॥

किञ्च त्वदङ्गीकृतदृष्टान्तेनापि मुक्तबुद्धेर्व्याप्तिरुपपद्यते इत्याह । वेगस्येति ।

मू० वेगस्याचिन्त्यरूपो रविशशिनयनाद्यंशुवर्गेषु भूमा भागानन्त्येऽप्यमूनामतिपतनमतो ह्याहुरन्योन्यमेके । इत्थं सर्वैरबाध्यां गतिमनुवदतां मुक्तबुद्धेर्विकासे युज्यन्ते यौगपद्यप्रभृतय इति तु श्रद्धधीयं श्रुतार्थाः ॥ ६२ ॥

टी० उक्तं हि भवता रविशशिनयनाद्यंशुवर्गेषु वेगस्याचिन्त्यरूपो भूमेति, अत्र यत्र काकबाणादिः क्रमेण देशान्तरं गच्छति

र्विकरोऽन्हायैव तद्युगपदतिलङ्घनमन्तरेण नोपपद्यते इत्थमेव जैनैरप्यङ्गीकृतमित्याह । भागानन्त्य इति । परमाणवोऽनेकावयवास्त त्पक्षे अथाप्यन्योन्यमतिक्रामन्ति परमाणवः तदेतदनन्तानामंशानां युगपदतिलङ्घनमन्तरेण नोपपद्यते । इत्थं सर्वैरबाध्यां गतिमनुसरतामस्माकं मुक्तबुद्धेर्विकासे यौगपद्यप्रभृतयो युज्यन्त इति, श्रुतार्थाः—श्रुत्यर्थपर्य्यालोचनवन्तो मनीषिणः अद्राक्षीद्रुम् ।

इति मुक्तबुद्धिव्याप्त्युपपत्तिः ॥ ६२ ॥

अस्त्वेवं तथाऽपि योगिबुद्धेर्नष्टादिविषयत्वं नोपपद्यत इति वदतः पक्षं दूषयितुं तन्मतमनुवदति । यत्सूक्ष्ममिति ।

मू० यत्सूक्ष्मं विप्रकृष्टं व्यवहितमपि तद् गृह्णती योगिबुद्धिर्भूयिष्ठा दृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिद्धा । नष्टादिष्वक्षतोधीः कथमिति यदि न प्रत्यभिज्ञादिनीतेर्भिन्नास्संबन्धभेदाः करणविषययोस्तत्रतत्राभ्युपेताः ॥ ६३ ॥

टी० सूक्ष्मव्यवहितविप्रकृष्टानर्थान् गृह्णती योगिबुद्धिः भूयिष्ठा दृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिद्धातु सूक्ष्मादीनां वर्तमानत्वात्, संबन्धोऽपि यथा कथञ्चिदुपपद्यते नष्टादिष्वक्षत इन्द्रियाद् धीः कथं भवतीति चेत् तन्निराकरोति । नेति । हेतुमाह । प्रत्यभिज्ञादिनीतेरिति । यथा प्रत्यभिज्ञा नष्टामपि प्रागवस्थां गृह्णाति । ननु संस्कार एव तत्र कथञ्चित् संबन्धत्वेन कल्प्यत इति चेत् योगिनामप्यतीतादिग्रहणे अदृष्टमेव संबन्धत्वेन कल्प्यतामित्याह । भिन्ना इति । ईदृश-

संबन्धभेदास्त्वयाऽव्यङ्गीकार्य्याइत्याभिप्रायिकोऽर्थः । तदिदमाह । तत्तत्वाभ्युपेता इति ।

इति योगिबुद्धेरतीतादिविषयत्वोपपत्तिः ॥ ६३ ॥

नित्याया इति ।

मू० नित्याया एव बुद्धेस्त्वयमभिदधतः केचिद-
द्रव्यभावं संबन्धं धर्ममस्याः कृतकमकथयन्
भूषणन्यायसक्ताः। स्वाभीष्टद्रव्यलक्ष्मस्मृति-
विरहकृतं नूनमेषां तदेतत् सैत्रन्तल्लक्षणं
तैरनुमतमिह च स्याद्धि कार्य्याश्रयत्वम् ॥ ६४॥

टी० भूषणमतानुसारिणो नित्याया एव बुद्धेरद्रव्यत्वमभिदधत एव विषयविषयिभावमस्याः कृतकमकथयन् मुक्तावस्थायां नित्यानन्दाविर्भाववचनात्, आविर्भावो हि तस्मिन् काले नित्येन ज्ञानेन तस्यैवानन्दस्य संबन्धः, स च संबन्धः प्रागभावात् तस्मिन् काले सत्त्वाच्च कार्य्य एव, तथा च सति स्वाभीष्टद्रव्यलक्षणप्रस्मरणमेषामेतादृशव्यवहारनिदानं, तदिदमाह । स्वाभीष्टेति । समवायिकारणं द्रव्यमिति द्रव्यलक्षणं तैरनुमतं, समवायिकारणत्वञ्च कार्य्याश्रयत्वमिति चानुमतम्, इह च विषयविषयिभावस्य कार्य्यत्वे तदाश्रयत्वाद्विज्ञानानन्दयोर्द्रव्यत्वमेव स्यादिति भावः ॥

इत्यद्रव्यपक्षे नित्यद्रव्यविषयत्वस्य कार्यत्वानुपपत्तिः ॥ ६४ ॥

बुद्धिरूपप्रकाशातिरेकेण विषयधर्मं प्राकट्यं नाम धर्मं केचिदूचिरे तदनुवदति । प्राकट्यमिति ।

मू० प्राकट्यं नाम धर्म्मं कतिचन विषये बुद्धि-
सम्बन्धजन्यं मन्यन्ते तन्न दृष्टं व्यवहरणवि-

धायानुगुण्यन्तु भानम् । क्वापि स्वाभाविकं स्यात् क्वचन भवति धीगोचरत्वात्मकं तद् भातीत्यादिप्रयोगः स्वदत इति नयात्तत्र कर्म्मत्वगर्भः ॥ ६५ ॥

टी० तन्निराकरोति । तन्नेति । कथन्तर्हि विषयभानमित्यत आह । व्यवहरयेति । व्यवहारयोग्यत्वमेव भानमित्यर्थः । तच्च व्यवहारयोग्यत्वं क्वापि स्वयंप्रकाशे वस्तुनि स्वाभाविकं स्यात् क्वचन परप्रकाशे वस्तुनि धीगोचरत्वात्मकं तद् भवति । ननु धीरेव भानञ्चेत् कथन्तर्हि भातीत्यादिरर्थसामानाधिकरण्येन व्यवहार इत्यत्र प्रतिबन्द्या उत्तरमाह । स्वदत इति । यथा देवदत्तास्वादकर्म्मभूतस्यापि मोदकस्य देवदत्ताय स्वदते मोदक इति कर्मत्वगर्भः कर्तृत्वव्यवहारः, एवमत्रापि भातीति व्यवहारः ॥ ६५ ॥

इष्टेति ।

सू० इष्टद्विष्टप्रन*ष्टादिषु च परगतैः कथ्यतेऽन्यद्विशिष्टं ज्ञातत्वोक्तावपीत्थं व्यवहृतिनियमास्तावतैवोपपन्नाः । प्राकट्येऽस्मिन् गुणादिष्वपि कथमधिकं भूतभव्येषु च स्यात् कर्म्मत्वन्तु क्रियार्थे सति फल इति च प्रायिकं व्याप्तिहानेः ॥ ६६ ॥

टी० किञ्च इष्टद्विष्टप्रनष्टादिषु व्यवहारेषु पुरुषादिनिष्ठैरेव इच्छादिभिर्विशिष्टो विषयः कथ्यते इत्थं ज्ञातो घटः प्रकटो घट इत्युक्तावपि व्यवहारनियमास्तावतैव—आत्मनिष्ठज्ञानेनैव उपपन्नाः, अन्य-

* प्रणष्टादिष्विति त्वपपाठः नशेरिति पाणिनीयानुशासनेन णत्वस्य निषिद्धत्वात् ।

था प्राकट्ये गुणादिष्वपि भूतभव्येषु च ज्ञातत्वादिव्यवहारसिद्ध्यर्थं प्राकट्यं कल्प्यं स्यात्, न च तद्युज्यते। ननु क्रियाफलशालित्वं कर्मत्वं तत् प्राकट्याभावे कथं स्यादित्याशङ्क्य निराकरोति। कर्मत्वमिति। प्रायिकमिदं लक्षणं न तु व्याप्तं गमनक्रियायाः फलं ग्रामप्राप्तिः न च प्राप्तेरपि प्राप्त्यन्तरमुपलभ्यते ॥ ६६ ॥

तर्ह्यनुमानात् प्राकट्यं साधयाम इति वदतः पक्षमनुवदति। आधत्त इति।

सू० आधत्ते धीः क्रियात्वात् किमपि गमनवत् कर्मणीत्यप्ययु*क्तं दत्ताऽनेकोत्तरत्वान्न च फलमधिकं भाति हानादिमात्रात्। हेतुर्धात्वर्थता चेदतिचरणमथ स्पन्दता स्यादसिद्धिर्धीस्वारस्यानृशंस्यादनुमतमधिकं कैश्चिदस्मत्सयूथ्यैः ॥ ६७ ॥

टी० ज्ञानं स्वकर्मणि किञ्चित् करोति क्रियात्वाद् गमनक्रियावदित्यप्ययुक्तम्। दत्तेति—इच्छाद्वेषादिषु व्यभिचारादेरित्यर्थः। तद्विवृणोति। न चेति। हानोपादानादिबुद्धिव्यतिरेकेण विषयगतं फलं नोपलभ्यत इत्यर्थः। किञ्च क्रियात्वादिति हेतुर्धात्वर्थतामाचष्टेऽदतिचारः। न हि सर्वेषामपि धात्वर्थानामुत्तरोत्तरधात्वर्थाः फलम् अनवस्थानात्, परिस्पन्दनरूपत्वाङ्गीकारे असिद्धिरेव स्यात्, तदिदमाह। असिद्धिरिति। इत्थं प्राकट्यं स्वमतेन निराकृत्य एकदेशिमतेन तदङ्गीकारमप्यनुवदति। धीस्वारस्येति। कैश्चिदित्युक्तिस्तदनङ्गीकारं द्योतयति ॥

इति प्राकट्याख्यधर्मान्तरक्लृप्तिभङ्गः ॥ ६७ ॥

* असारमिति पा०।

इच्छाद्वेषादीनां ज्ञानादतिरिक्तत्वमाहुरन्ये तद्दूषयति । इच्छेति ।

मू० इच्छाद्वेषप्रयत्नाः सुखमितरदपि ज्ञानतो-
ऽनतिरिक्ता या धीस्तद्धेतुरिष्टा न तदधिक-
तया कल्पने कोऽपि लाभः । पर्य्यायत्वं
विशेषे न तु भवति यथा प्रत्यभिज्ञादिभेदे
नो चेदीर्ष्याऽभ्यसूयाभयधृतिकरुणादरन्यद-
न्यच्च कल्प्यम् ॥ ६८ ॥

टी० तत्र कल्पनालाघवं प्रमाणमाह । या धीरिति । इच्छादि-हेतुभूतानुकूलादिविषया बुद्धिरेव इच्छादिव्यवहारमातनोति तदति-रिक्तकल्पने न कोऽपि लाभः गौरवदोष एव लभ्यते । तर्हि ज्ञानेच्छा-दीनां पर्य्यायत्वं स्यादित्याशङ्क्य परिहरति । पर्य्यायत्वमिति । यथा ज्ञानत्वाविशेषेऽपि प्रत्यभिज्ञास्मृत्यनुमित्यनुभवादिभेदे न पर्य्यायत्वं तद्वदिहापीति नो चेत् ईर्ष्याभ्यसूयाभयधृतिकरुणाशान्तितुष्ट्यादिव्य-वहाराणामपि विषयलाभार्थमर्थान्तरं कल्प्यमित्यनियतिरेव स्यात् ॥

इतीच्छादीनां बुद्धिविशेषातिरिक्तत्वभङ्गः ॥ ६८ ॥

अत्र बौद्धास्तु चित्तचैत्तरूपेण द्वेधा विभागं वर्णयन्ति तत्र चित्तमिति विज्ञानसन्ततिरुच्यते चैत्तमिति चित्तानुबन्धिकं रागद्वेषा-दिकं तदेषां न संघटत इत्याह । चेत इति ।

मू० चेतःस्रोतस्स्रुतीनां चिदवधिकतया चैत्तस-
ङ्केतभाजां रागद्वेषादिकानामभिदधतु कथं-
भावमस्थेमभावाः । एतेषां हेतुसाध्यक्रमनि-

यतिमतां सर्वचित्साक्षिकाणां कथ्येतातथ्य-
भावे कथमिव कथकद्वन्द्वयुद्धावतारः ॥ ६९ ॥

टी० विज्ञानस्रोतोविशेषाणां चिदवधिकतया विज्ञानमात्रवर्तित्वेन चैत्तादिव्यवहारभाजां रागद्वेषादीनाम् अस्थेमभावाः—क्षणिकत्ववादिनः कथं सद्भावमभिदधतु विज्ञानस्योत्पन्नापवर्गत्वेन चैत्तरूपावस्थान्तरभाक्त्वं न संघटत इत्यर्थः । तर्हि चैत्तानां सद्भाव एव नास्तीति वदाम इति चेत् तन्न नोपपद्यत इत्याह । एतेषामिति । हेतुसाध्यक्रमनियतिमतां कार्य्यकारणभावो हि बौद्धानां सत्त्वे नियामकम् अतश्चैत्तानामपि कार्य्यकारणभावदर्शनादङ्गीकार्य्यं सत्त्वं सर्वचित्साक्षिणां प्रत्यक्षेण सर्वैरुपलभ्यमानानामित्यर्थः, न हि सर्वज्ञेनाप्युपलब्धानां चैत्तानामबाधितानां कथमपि च मिथ्यात्वं वक्तुं शक्यते तेषां रागादीनामतथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः कथ्येत वादाधिकार एव न स्यादिति स्वप्रवृत्तिविरोधः ॥

इति रागद्वेषादिमिथ्यात्वमतभङ्गः ॥ ६९ ॥

रागद्वेषयोरिच्छाभेदत्वमाह । तत्रेति ।

मू० तत्रेच्छैव द्विधोक्ता विषयनियमतो रागविद्वेषनाम्ना पूर्वस्तीव्रस्तु कामः पर इह भजते तादृशः क्रोधसंज्ञाम् । एकैवेच्छा सिसृक्षा भगवत उदिता संजिहीर्षेति चान्यैस्तद्वल्लोके न किं स्यादधिकमिह तु चेत्कल्प्यतेऽतिप्रसक्तिः ॥ ७० ॥

टी० अनुकूलविषयोपादानेच्छा रागः, प्रतिकूलविषयजिहासा द्वेषः, अतो विषयभेदेनैव नियतिसिद्धो गुणभेदो न कल्प्यः, तावेव रागद्वेषौ तीव्रभावमासाद्य कामक्रोधाविति व्यपदिश्येते अत्र प्रतिवन्दिमाह । एकेति । यथा न्यायदर्शने ज्ञानचिकीर्षाप्रयत्नवत ईश्वरस्येच्छैव चिकीर्षा संजिहीर्षा रिरक्षिषेत्यादिव्यपदेशभागिनी विषयभेदेनैव लोकेऽपीच्छाया एव विषयभेदेन व्यवहारो भवतु अन्यथाऽतिप्रसक्तिरित्याह । अधिकमिति । बुभुक्षापिपासाजिहीर्षेत्यादिकं सहस्रमपि कल्पनीयं स्यादित्यर्थः ॥

इति द्वेषस्यापीच्छाविशेषत्वम् ॥ ७० ॥

अत्र कश्चिदाह यदीच्छातिरिक्तद्वेषपरित्यागः तर्हीच्छैव प्रयत्नोऽपि भवतु किमनेन प्रयत्नेनेति तदिदमाह । इच्छात इति ।

**सू० इच्छातः कार्यसिद्धौ किमिह यतनमित्यन्तरा कल्प्यतेऽन्यत्तन्मोहत्वोपलब्धेरिति यदि यतने कल्पितेऽप्येतदेवम् । मैवं व्यावर्तमानादनुगतमधिकं वर्ण्यते मानविद्भिर्वाञ्छन्तोऽपि ह्ययत्ना वयमिह पवनस्यन्दनेन्दूदयादौ ॥ ७१ ॥**

टी० इच्छायाः कदाचिद्व्याघातोपलब्धेर्यत्नः कल्प्यत इति चेत् यत्ने कल्पितेऽपि व्याघातोपलब्धिस्तुल्या नैतावता गुणान्तरं कल्प्यत इति भावः । तदेतन्निराकरोति । मैवमिति । व्यावर्तमानादनुवर्तमानमधिकमिति हि विद्वद्भिर्वर्ण्यते न्यायः, तथा च अत्र वाञ्छन्तोऽपि केचिदयत्ना एव वर्तन्ते यथा चन्द्रोदयमभिवाञ्छन्ति

न पुनस्तत्र यतन्ते तस्मादनुवर्त्तमानाया इच्छाया व्यावर्तमानो यत्नो बुद्ध्यवस्थाभेदत्वेऽपि विजातीयावस्थान्तरमिति भावः ॥

इतीच्छामात्रातिरिक्तप्रयत्नावस्थासिद्धिः ॥ ७१ ॥

अथ केचिद्बुद्धिपूर्वकप्रयत्नातिरेकेण जीवनपूर्वकं प्रयत्नान्तरं कल्पयन्ति तन्न संघटत इत्याह । प्राणेति ।

**मू० प्राणस्पन्दस्सुषुप्तिप्रभृतिषु घटते तादृशादृष्टमात्राद् यस्त्वं यत्नं निदानं वदसि भवति तल्लाघवात् प्राणवृत्तौ । धीवृत्तिश्चैव यत्नः स्थित इति स कथं काष्ठकल्पे सुषुप्ते नोचेद् बाह्यानलादेर्ज्वलनमपि ततः कल्प्यतां न त्वदृष्टात् ॥ ७२ ॥**

टी० सुषुप्त्याद्यवस्थासु प्राणस्पन्दहेतुत्वेन स प्रयत्नः कल्प्यते स एव प्राणस्पन्दस्तावददृष्टमात्रादेव भवतु, भवताऽपि चेतन्न परिहार्य्यं प्रयत्नस्यैव निदानतया तत्रादृष्टमेव भवान् वदति तदेवादृष्टं लाघवात् प्राणप्रवृत्तौ कारणं भवेत्, ततोगौरवभिया तत्र प्रयत्नो न कल्प्यः । किञ्च प्रयत्नोऽपि बुद्धिविशेषतया निर्णीतः, तथा च काष्ठकल्पे सुषुप्ते प्रयत्नो व्याहन्यते इत्थमनङ्गीकारे तत्राग्नेरूर्ध्वज्वलनमित्यादिकमपि प्रयत्नादेव कल्प्यं स्यात्, न पुनरदृष्टादित्याह । नो चेदिति ।

इति जीवनमात्रपूर्वकप्रयत्ननिरासः ॥ ७२ ॥

अथ कश्चिच्चोदयति एवं यत्नापलापे सुखमप्यपलपितुं शक्यत इति दुःखाभावमात्रमेव सुखं स्यादिति वदन्तं प्रतिबन्द्या निराकरोति । स्यादिति ।

**मू० स्याद् दुःखाभावमात्रं सुखमभिदधतो वैप-**

रीत्यप्रसक्तिः स्वापादौ दुःखसिद्धिर्न यदि सुखमपि ह्यत्र नैवास्ति तादृक् । शीतोष्णातीतनीतेर्द्वितयसमधिकावस्थितिर्दुस्त्यजाऽतस्तत्तच्छब्दप्रयोगेष्वनियतिरुचितैस्संघटेतोपचारैः ॥ ७३ ॥

टी० दुःखाभावमात्रस्यैव सुखत्वे सुखाभावमात्रस्यापि दुःखत्वं स्यादित्यर्थः । स्वापादौ सुखाभावेऽपि दुःखसिद्धिर्नास्तीति चेत् तर्हि दुःखाभावेऽपि सुखसिद्धिर्नास्तीति तुल्यम् अतः स्वापे सुखदुःखाभावावुभावपि वर्तेते अतस्तदतिरिक्तं सुखमपि दुःखवत् कल्पनीयमिति भावः । दृष्टञ्च लोके शीतोष्णातिरिक्तानुष्णाशीतकल्पनम्, एवं सुखदुःखरूपद्वितयाऽवस्थाविरहितसुषुप्त्यवस्था दुस्त्यजेत्याह । शीतेति । तर्हि भारावतरणादिषु सुखशब्दः कथं सुखोपभोगाभावमात्रे दुःखशब्दो वा कथं प्रयुज्यत इत्यत आह । तत्तदिति । औपचारिकाः प्रयोगास्सहस्रशोऽपि सन्तु न हि शब्दप्रयोगमात्रादुपचारसहादर्थतत्त्वं निश्चाययितुं शक्यत इति भावः ॥

इति सुखदुःखोदासीनरूपावस्थात्रयसिद्धिः ॥ ७३ ॥

एवमौपाधिकानां दुःखमिश्राणामनुकूलविज्ञानानामत्यन्तहानेर्निरुपाधिकसुखरूपो मुक्त्यवस्थायां यो बुद्धिविकासस्तस्मिंस्तादृशानन्दरूपावस्थाविशेषे चतुर्मुखैश्वर्य्यपर्य्यन्तस्यैश्वर्य्यस्य जीवानुभवस्य चात्यन्ताल्पीयस्त्वमेवेति दुग्धार्णवतद्बिन्दुदृष्टान्तेनोपवर्णयति । भेद इति ।

मू० भेदस्त्रेधा मतीनां ह्युपधिनियमितैरानुकूल्यादिधर्म्मैस्तस्यैवात्यन्तहानेर्निरुपधिकसुखस्तादृशोधीविकासः । निस्सीमब्रह्मतत्त्वा-

नुभवभवमहाऽऽह्लाददुग्धार्णवेऽस्मिन् निश्शे-
षैश्वर्यजीवानुभवरसभरो विन्दुभावोपलभ्यः ॥ ७४ ॥

टी० अक्षरार्थः स्वयमेव भाव्यः ॥ ७४ ॥

इति निरुपाधिकानन्दरूपबुद्ध्यवस्थाविशेषः ॥

केचित्तु संसारेषु सुखमेव नास्तीत्याहुः तदौपचारिकमित्याह । संसार इति ।

मू० संसारे नास्ति किञ्चित् सुखमिति कतिचित्तद् घटेतोपचारान्नो चेद्व्युत्पत्तिहीनं सुखपदमधिकं तत्सुखं नाभिदध्यात् । तस्माद् दुःखोत्तरत्वप्रभृतिभिरिह तद्दुःखमित्युक्तमाप्तैः क्ष्वेडोपश्लेषदुष्टे मधुनि विषमिति व्याहृतिः किन्न दृष्टा ॥ ७५ ॥

टी० अन्यथा सुखपदव्युत्पत्तिरेव न स्यात् तथा चालौकिकमपि सुखं सुखशब्दोनाभिदद्ध्यादित्याह । नो चेदिति । कथन्तर्ह्याप्तैस्संसारस्य दुःखरूपत्वमुच्यत इत्याशङ्क्य परिहरति । तस्मादिति । दुःखोत्तरत्वाद् दुःखत्वमभिधीयत इति परिहारः, तत्र दृष्टान्तमाह । क्ष्वेडेति ।

इति सांसारिकसुखस्य दुःखत्वोक्तिनिर्वाहः ॥ ७५ ॥

अथ धर्माधर्मलक्षणं तत्साध्यादृष्टस्वरूपं च विभज्य दर्शयति । धर्म इति ।

मू० धर्मोऽधर्मश्च तत्तत्फलकरणतया शास्त्रसिद्धं क्रियादिद्वारं त्वेतस्य कालान्तरनिय-

तत्फले स्यादिहादृष्टमन्यत् । आहुस्तत् केचिदन्तःकरणपरिणतिं वासनां चेतसो-ऽन्ये पुंधर्मं केचिदेके विभु किमपि परे पुद्गलाँस्तात्त्सयूथ्याः ॥ ७६ ॥

टी० चोदनालक्षणोऽर्थो धर्म इति शास्त्रैकसमधिगम्यं श्रेयस्साधनं धर्म इत्युच्यते स तु क्रियादिरेव द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते इत्याद्यभिधानात् चिरध्वस्तस्यापि कर्मणः कालान्तरभाविफलानुगुणं किमपि द्वारमन्यददृष्टमुपादेयं, तच्चान्तःकरणपरिणतिरिति साङ्ख्याःप्राहुः । चेतसो वासनेति सैागताः । पुंधर्म इति न्यायवादिनः, विभुरूपं किमपि तत्त्वान्तरमिति जैनैकदेशिनः । पुद्गलरूपमिति तत्सयूथ्याः । एतस्य सर्वस्य कल्पनामात्रसिद्धत्वात् तत्तत्कर्माचरणपरिणतेश्वरबुद्धिविशेष एवादृष्टमिति तत्त्वविदां संप्रदाय इति हृदयम् ॥

इति धर्माधर्मलक्षणतत्साध्यादृष्टस्वरूपमतभेदः ॥ १६ ॥

अस्त्वदृष्टं यत् किञ्चिदेव तत् सेवाध्ययनतुल्यत्वे दृष्टा हि फलभिन्नतेत्युक्तप्रकारेण फलभेदात्परिकल्प्यते न पुनरागमैकसमधिगम्यमिति केचिदाहुः तदिदमनुवदति । तुल्य इति ।

सू० तुल्ये सेवादिहेतैा फलभिदुरतया साध्यते चेददृष्टं हेतोस्सूक्ष्मोऽस्तु भेदो न खलु समुचिता धर्मिणोऽन्यस्य क्लृप्तिः । व्याख्यातं यत्तु बाह्यैर्विषयसमफलप्रापकत्वं क्रियाणां तत्सूतेऽतिप्रसक्तिं तदिह न निगमादन्यतोऽदृष्टसिद्धिः ॥ ७७ ॥

टी० तत्रान्यथासिद्धिमाह । हेतोरिति । दृष्टेष्वपि कारणेषु यत्किञ्चिद्वैषम्यात् फलभेदोऽस्तु किमनेनादृष्टेन, अन्यथा कल्पनागौरवादनौचित्यमेवेत्याह । न खल्विति । अतिरिक्तादृष्टकल्पनायामदृष्टं कल्प्यं तस्य च भेदः कल्प्यः, तथा च गौरवम् । अस्माकन्तु दृष्टेष्वेव कारणेषु भेद एव कल्प्यः अतो लाघवमिति भावः । तस्मादागमैकसमधिगम्यमदृष्टमित्याकूतम् । अत्र केचिद्यादृशो विषयस्सुखरूपो दुःखरूपो वा तादृशमेव फलं क्रियाया जायत इति वदन्ति तदिदमतिप्रसक्तिमेव सूते विषयस्य सुखात्मकत्वे सुखात्मकं फलमिति न नियमः पापरूपसुखेन दुःखरूपफलस्य प्राप्तेः, एवं दुःखात्मकत्वे दुःखं फलमिति न नियमः दुःखरूपपुत्रशिष्यादिशिक्षणादिना सुखस्यैव सिद्धेः, अतश्शास्त्रादेवादृष्टसिद्धिः, न पुनस्स्वकपोलकल्पितादनुमानादित्याह । तदिहेति ।

इत्यदृष्टस्यागमैकसिद्धत्वम् ॥ ७७ ॥

एवमदृष्टस्यागमैकसमधिगम्यत्वे सिद्धे विधिनिषेधव्यापारपरिशोधनेन श्येनाग्नीषोमीयवैषम्यमाह । निस्सङ्कोचादिति ।

**मू० निस्संकोचान्निषेधात् क्वचन फलतयाऽनूदितांहस्तु हिंसा रुन्धे सामान्यमङ्गे विधिरनुमितिरप्यत्र बाधादिदुःस्था । स्वल्पो दोषो विमृष्टेस्सुपरिहर इह क्रत्वनुग्राहके स्यादित्युक्तं सांख्यसक्तैः पशुहितवचनान्नेति शारीरकोक्तम् ॥ ७८ ॥**

टी० अयमर्थः श्येनेऽपि हिंसा दृश्यत्वे अग्नीषोमीयपश्वालम्भनेऽपि प्राणवियोजनफलो व्यापारो हिंसाशब्देनाभिधीयते तद्

भयत्रापि समानम्, अथापि श्येने हिंसा न विहिता अपि तु रागप्राप्ता यदि हिंस्याच्छ्येनेन हिंस्यादिति हि तत्र विधिक्रमः, न पुनः हिंस्यादेवेति तथा च तत्र हिंसाया रागप्राप्तत्वान्न हिंस्यादिति निषेधवचनं तत्र निस्सङ्कोचं, तेन फलतयाऽनूदिता हिंसा तत्र निषेध्यते न पुनः श्येनः, श्येननस्तत्रासिवत् पृथगिति पृथङ्निर्देशात् विहितत्वाच्च तदिदमाह । अंहस्तु हिंसेति । सा रागप्राप्ता हिंसा शास्त्रनिषिद्धत्वात् पापमित्यर्थः, अग्नीषोमीयपश्वालम्भने तु प्राणवियोजनफलव्यापाररूपत्वेन हिंसात्वे सत्यपि न हिंस्यादिति सामान्यम् आलभेतेति विशेषविधिरुपरुन्धे, विशेषविधिप्राप्ते सामान्यनिषेधस्य रागप्राप्तमात्रविषयतया सावकाशस्य दुर्बलत्वात् । अथापि अग्नीषोमीयहिंसा अधर्म्या हिंसात्वाद् ब्राह्मणहिंसावदित्यनुमितिरागमबाधसोपाधिकत्वाभ्यां दुःस्थेत्याह । अनुमितिरिति । अत्र साङ्ख्या एवं मन्यन्ते अग्नीषोमीयपश्वालम्भनविधिरालम्भनस्य क्रतूपकारमाह न हिंस्यादिति तु वाक्यं हिंसाशब्दस्यासङ्कुचितविषयत्वेन अग्नीषोमीयहिंसामपि गृह्णाति, तथा च अस्या अपि हिंसायाः किञ्चित्पापहेतुत्वमस्ति, तच्च वैदिकत्वात् सुपरिहरमिति, तत्रैवं शारीरकशास्त्रे परिहार उक्तः अग्नीषोमीयपश्वालम्भनस्य परदुःखोत्पादनात्मकत्वे सत्यपि हिंसाशब्दवाच्यत्वं नास्तीति, न हि व्रणादिशान्त्यर्थे दाहच्छेदादिकारिषु वैद्याम्बष्ठादिषु हिंसकत्वमस्ति, न च पुत्रशिक्षादिकारिषु पित्रादिषु तर्ज्जनादिभिर्हिंसकत्वमुच्यते अशास्त्रीयकर्मणा परदुःखाधानकारिणामेव हिंसकत्वम् अत्र पुनश्शास्त्रीयकर्मानुरोधेन प्राणवियोजनेऽपि न हिंसकत्वम् अपि तु रक्षकत्वमेव पापफलपरिशान्तिरूपपशुशरीरविच्छेदेन पशोरेव निरतिशयसुखभोगानुरूपविशिष्टशरीरग्रहणहेतुत्वात् तदिदं सर्वमभिप्रेत्याह । पशुहितवचनादिति ।

न वा उ वे तन्म्रियसे नरिष्यसि देवां इदेषि पथिभिस्सुगेभिरिति मन्त्रवर्णेन पशोर्विशिष्टदेशप्राप्तिरुच्यते अयमत्र विभागः अग्नीषोमीय-पश्वालम्भनस्य हिंसात्वमभ्युपगम्य आलभेतेति विधिबलान्न हिंस्या-दिति निषेधस्य सङ्कोचमाहुः केचित् । अपरे पुनः श्रुतिस्मृतिबला-द्धिंसात्वमेव नाभ्युपगच्छन्ति अल्पीयसा दुःखेन अधिकसुखप्राप्तिहे-तोरहिंसात्वात् न म्रियसे नरिष्यसीति तथैव श्रुतत्वाच्चेति ॥

इति श्येनाग्नीषोमीयवैषम्यम् ॥ ७८ ॥

इत्थं श्रुतिरेवादृष्टनियमे शरणमिति निर्णीतम् । अन्वारुह्या-प्याह । सिध्येदिति ।

मू० सिध्येद्वा विश्ववृत्तेरनितरफलता स्थापनाद्यै-रदृष्टं तत्सत्तामात्रात्तदुचितनियतानु-ष्ठितिर्नैव सिध्येत् । तस्माद्भूयोविशेषैः श्रुति-रिह शरणं स्वर्गमोक्षादिहेतौ सैवादृष्टस्वरूपं प्रथयतु बहुधा तत्तदुक्ताद्विविक्तम् ॥ ७९ ॥

टी० विफलाविश्ववृत्तिर्नैत्यादिना हेतुकलापेन अदृष्टसामान्यं सिद्ध्यतु तथाऽपि तत्सद्भावज्ञानमात्रान्नियतानुष्ठानं न सिद्ध्येत् तदिद-माह । तत्सत्तेति । स्वर्गस्वराज्याद्यनन्तफलविशेषहेतुकर्मानुष्ठानविशे-षसिद्धिर्नानुमानात् सिद्ध्येदिति तस्मादनुष्ठानविशेषे स्वर्गमोक्षादिहेतौ तदङ्गकलापप्रकारविशेषे च श्रुतिरेव शरणं सैव श्रुतिरदृष्टस्वरूपमपि प्रथयतु तत्तदुक्ताद्विविक्तम् अन्तःकरणवृत्तिर्वेत्याद्युक्ताद्विविक्तमीश्व-रत्यसङ्कल्परूपमदृष्टं श्रुतिरेव प्रथयत्वित्यर्थः ॥ ७९ ॥

इत्यदृष्टमात्रस्यान्यतस्सिद्धावपि श्रुत्या तद्विवेकनिष्कर्षः ।

अथान्तःकरणवृत्तिर्वेत्यादिभिः परमतमनूद्य फले प्रवृत्तयोगशक्तिः स्वोत्पत्तौ प्रवृत्तफलशक्तिर्वा अदृष्टपदवाच्यमिति ह्युक्तं कौमारिलैः, तदयुक्तमित्याह । शक्तिरित्यादिना वागित्यन्तेन पूर्वार्द्धेन ।

मू० शक्तिर्य्यागादिकस्य स्वफलवितरणे सम्भवे
वा फलस्य स्याप्या मध्ये तयोरित्यबहुमत-
पदं सन्तु तौ*ताततौ वाक् । शक्ताभावे
हि शक्तिर्न भवति शमितो धर्मधर्म्यैक्यज-
ल्पस्तद्द्वारे शक्तिशब्दो यदि भवतु परं
क्लृप्तिमस्य क्षिपामः ॥ ८० ॥

टी० तस्मिन् पक्षे व्याघातमाह । शक्ताभाव इति । यागो नष्टस्तस्य शक्तिरनुवर्तत इति व्याहतं, फलं भावि तस्यापि शक्तिः प्रागेवास्तीति च व्याहतम् । ननु धर्मधर्मिणोरैक्यात् शक्तिसद्भावे शक्तस्याऽपि सद्भावोऽस्तीति अतो न व्याघात इत्याशङ्क्य परिहरति । शमित इति । धर्मधर्मिणोरैक्यं भेदाभेदनिराकरणादेव निरस्तम् । तर्हि द्वारमात्रे शक्तिशब्दं प्रयुञ्ज्महे इति चेत् भवत्वयमौपचारिकः प्रयोगः नैतावताऽस्माकं कश्चिद्विरोधः । अपि तु भाट्टोक्तामदृष्टक्लृप्तिं प्राभाकरोक्तामदृष्टवाच्यत्वक्लृप्तिञ्च प्रतिक्षिपामः तदिदमाह । परमिति ॥

इति क्रियादिशक्तिमात्ररूपादृष्टक्लृप्तिनिरासः ॥ ८० ॥

अदृष्टस्य देवताप्रीत्यादिरूपत्वं पूर्वोपक्षिप्तं समर्थयते । द्वारमिति ॥

मू० द्वारं तत्तत्फलाप्तेः श्रुतिभिरवधृतौ देवता-
प्रीतिकोपौ व्याचक्रे देवपूजायजनमिति न

* तौताततिकौति पाठोयुक्त इति मन्ये तु-तातपदेन यथा कुमारिलभट्टा उच्यन्ते तथा निरूपितमस्माभिरन्यत्र तेषां वाक् तौतातिकीत्यर्थः ।

तन्न श्रुतं वाक्यविद्भिः । आम्नातेऽपेक्षितेऽर्थे न च नयनिपुणैरश्रुतं कल्पनीयं नो चेत्स्याद्दत्ततोयाञ्जलिरिह भवतां रात्रिसत्रादिनीतिः ॥ ८१ ॥

टी० स एवैनं भूतिं गमयति स एनं प्रीतः प्रीणाति एष एव साधु कर्म कारयति तं विपाप्यजस्रमशुभानित्यादिभिः प्रमाणशतैः ईश्वरप्रीतिकोपाभ्यां धर्माधर्मफलप्राप्तिरवगम्यते । किञ्च यज देवपूजायामिति यजतेर्देवतापूजनवाचित्वं विद्वद्भिरवगम्यते पूजनञ्च प्रीतिहेतुभूतसेवाविशेष इति सुप्रसिद्धम्, अतो यज्ञाद्याराधितो भगवान् फलं ददातीति वैदिकसिद्धान्तः । न चात्रापेक्षितेऽर्थे साक्षादीश्वरसङ्कल्पात्मनि द्वारे श्रुत्यैव प्रतिपन्ने निरर्थकमेवादृष्टरूपं किञ्चित् कल्पनीयं विध्यपेक्षितार्थस्यार्थवादादिप्रतिपन्नार्थस्य स्वीकार एव हि न्याय्य इति मीमांसकमर्य्यादा तदिदमाह । आम्नात इति । एवमनङ्गीकारे दोषमाह । नो चेदिति । रात्रिसत्रन्याये हि प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्तीत्यर्थवादप्रतिपन्ना प्रतिष्ठा फलतयाऽङ्गीक्रियते स्वर्गकामोयजेतेत्यादौ स्वर्गरूपे विधिवाक्यप्रतिपन्नेऽपि स्वरूपविशेषपरिशोधनं यन्न दुःखेन संभिन्नमिति अर्थवादवाक्येन क्रियते तच्च विध्यपेक्षितत्वादनुमन्यते विधिनाऽपि, एवं तेषुतेष्वधिकरणेषु विध्यपेक्षितार्थप्रतिपत्तिरर्थवादादिभिरिति मीमांसकनिर्णयः, अतः श्रुता देवताप्रीतिरेव द्वारभूतमदृष्टमिति शिष्टालापः ॥

इत्यदृष्टस्य देवताप्रीत्यादिरूपत्वम् ॥ ८१ ॥

मन्त्रार्थवादयोराराध्यादिप्रकाशपरत्वेऽपि न वाक्यभेद इत्याह । आराध्यादीति ।

मू० आराध्यादिप्रकाशः स्फुटमुपकुरुते मन्त्रसाध्यो विधीनां प्राशस्त्यादिप्रतीतिर्न च भवति मृषा वर्णनैरर्थवादैः । सत्येऽप्याकाङ्क्षितेऽर्थे तदुभयगमिते वाक्यभेदादि न स्याल्लोकेऽप्येवं हि दृष्टं तदनुगतिमुचां सर्वशास्त्रप्रकोपः ॥ ८२ ॥

टी० आराध्यादिप्रकाशो मन्त्रसाध्यो विधीनामुपकुरुते तेन विध्युपकारकत्वान्नैकवाक्यताभङ्गः, एवमर्थवादसाध्या प्राशस्त्यादिप्रतीतिरप्यर्थस्य मिथ्यात्वे विध्युपकाराय न कल्पते अतोऽर्थवादप्रतिपन्नार्थस्य तथात्वं प्राशस्त्यमेव दृढीकरोति तदिदमाह । प्राशस्त्यादीति । न ह्यसौ चतुर्वेदाभिज्ञः मयोच्यमानं मिथ्येत्युक्तो प्राशस्त्यं प्रतीयते, अतो विध्यपेक्षितार्थद्वये मन्त्रार्थवादाभ्यां याथातथ्येन प्रतिपन्ने न वाक्यभेदशङ्का स्यात्, तदेतदाह । सत्येऽपीति । न चैतद्वेदमात्रनियतं लोकेऽपीयमेव गतिरित्याह । लोकेऽपीति । सप्तद्वीपाधिपतिर्महीपतिश्चतुर्दशविद्यास्थानविद् ब्राह्मण इत्यादिलोकव्यवहारः स्वार्थप्रामाण्यमेव पुरस्कुरुते अन्यथा तत्तदाधिक्यप्रतिपादकानां श्रुतिस्मृतीतिहासपुराणानां साकल्येनाप्रामाण्यप्रसङ्ग इत्याह । तदनुगतिमुचामिति ॥

इति मन्त्रादेर्विवक्षितार्थत्वविरोधपरिहारः ॥ ८२ ॥

इत्थं प्रमाणप्रतिपन्ने देवतास्वरूपे सति किमिति तत्तच्छब्दमात्रात्मिका देवताऽभिधीयते किम्प्रचानैरित्याह । बुद्धिरिति ।

मू० बुद्धिर्मन्त्रार्थवादैर्भवति दृढतरा देवतातद्गुणादौ बाधश्चातीन्द्रियेऽस्मिन्नैर्न हि भवति धियां

मानता च स्वतो नः । दुःखा*संभिन्नदेशादिकमिव फलदा देवता तत्रतत्र प्राप्या च श्रूयतेऽतः कथय कथमियं शब्दमात्रादिरूपा ॥ ८३ ॥

टी० अयमत्र विकल्पः किं मन्त्रादिभिः प्रतीतिरेव नोत्पद्यते उत सा संशयात्मिका किं वा अवधारणात्मिकाऽपि बाध्यते अबाधिताऽपि बाद्धवत्† स्वतोऽप्रमाणरूपिणीति स्वीक्रियते तत्राद्यं परिहरति । बुद्धिर्मन्त्रार्थवादैर्भवतीति । द्वितीयमप्यपाकरोति । दृढतरा देवता तद्गुणादाविति । तृतीयञ्च निराचष्टे । बाधस्त्वातीन्द्रियेऽर्थैर्न हि भवति धियामिति । अयं विकल्पः मन्त्रार्थवादप्रतिपन्नानामलौकिकानामर्थानां किमिन्द्रियैर्बाधः किं वा अनुमानेन न तावदिन्द्रियेण अलौकिकेऽर्थे खल्विन्द्रियाणां विधिनिषेधयोस्सामर्थ्यमेव नास्ति नाप्यनुमानेन आगमविरुद्धस्यानुमानस्य‡ दुष्टत्वात् अबाधितस्यापि स्वत एवाप्रामाण्यमिति चतुर्थः पक्षोऽवशिष्यते, स तु बौद्धानामेव तदिदमाह । धियां मानता च स्वतोन इति । तर्हि देवताप्रीत्यादौ श्रुतिरेव नास्तीति पञ्चमं पक्षं परिकल्पयाम इति चेत् तद्दृष्टापलापरूपत्वादनुपपन्नमित्याह । दुःखेति । यथा स्वर्गादिश्रुतिः प्रत्यक्षा एवं देवतादिश्रुतिरपि प्रत्यक्षा अतः कथमियं शब्दमात्रात्मिका देवतेति कथयसि त्वमिति परपक्षवादिनमाक्षिपति । कथयेति ।

इति देवतानां तत्तच्छब्दमात्रादिव्यतिरेकः ॥ ८३ ॥

ननु कर्मणां देवताराधनरूपत्वे कल्पान्तरे पूर्वकल्पाराधिता देवता भ्रष्टाधिकाराः कल्पान्तरे पुनरन्ये तत्तत्पदस्था देवताविशेषाः

* दुःखावच्छेदकशरीरानवच्छिन्नत्वमेव दुःखासंभिन्नत्वम् ।
† बौद्धवदिति द्राविडपुस्तकपाठः ।
‡ आगमविरुद्धस्यानुमानस्यादृष्टत्वादिति द्राविडपुस्तकपाठः ।

पूर्वकल्पेऽनाराधितत्वात् पूर्वकल्पकृतकर्मफलजनका न भवन्ति अतः कथमुत्तरकल्पे पूर्वकल्पकृतकर्मफलप्राप्तिरिति चोदयति । प्राचीनेति ।

मू० प्राचीनेन्द्राद्यपाये दिशतु क्रतुफलं कोऽनु-
कल्पान्तरादावन्ये तत्तत्पदस्था न तदुपज-
नकाः प्रागनाराधितत्वात् । मैवं यस्य श्रुति-
श्च स्मृतिरपि नियताऽऽदेशरूपे स एकस्स-
र्वाराध्यान्तरात्मा न हि गलितपदो नापि
सुप्तस्तदाऽपि ॥ ८४ ॥

टी० उक्तमिदं निराकरोति । मैवमिति । श्रुतिः स्मृतिर्ममैवाज्ञे इति यस्य श्रुतिश्च स्मृतिश्च नियताऽऽदेशरूपे प्रमाणसिद्धे स एकस्सर्वकर्मसमाराध्यः पूर्वोत्तरकल्पवर्तिसकलदेवतान्तर्यामी न हि गलितपदो भवति, नापि सुप्तवत् किमपि न जानाति, तेन पूर्वोत्तरकालवर्तिनोरधिकारिणोरधिपतिरन्तर्यामी च भगवानेव सर्वं फलं प्रदापयति यथा पूर्वोत्तराधिकारिणोरधिपतिर्महाराजस्तत्तद्देशवर्तिनां तत्तत्फलप्रदानेन परिपोषक इति लोकदृष्टमेतत् ॥

इति कर्मणां कल्पान्तरेष्वपि फलसिद्धिद्वारविशेषः ॥ ८४ ॥

तर्हि सर्वाधिपतिस्स एव भगवान् सकलफलप्रदो भवतु हव्यकव्यैकभोक्तृत्वान्मध्ये तन्निघ्नैस्तैः किमन्तर्गडुभिरित्येतत्स्वोक्तिबाधदुःस्थमित्याशङ्क्याह । अस्त्वेवमिति ।

मू० अस्त्वेवं कर्मवर्गे स्वयमिह फलदो हव्यक-
व्यैकभोक्ता तन्निघ्नैस्तैः किमन्तर्गडुभिरिति
च न स्वोक्तिबाधप्रसक्तेः । कर्माराध्यत्व-
मेषां दिशति फलमसौ पूर्वमाराधितस्तैः

**श्रद्धेयाः श्राद्धभोक्तृद्विजवदत इमे निर्जरा-स्तस्य देहाः ॥ ८५ ॥**

टी० देवतामुखेन भगवत्समाराधनं हव्यभोक्तृत्वं तदेव पितृमुखेन चेत् कव्यभोक्तृत्वमिति शास्त्रप्रसिद्धिः, अतो देवपितृप्रहाणवचनमसङ्गतम् । किञ्च कर्मभिराराधितो भगवान् सकलमपि फलं ददातीति शास्त्रनिर्णयः तथा च पूर्वस्मिन् कल्पे तैस्तैरधिकारिभिः कर्मविशेषसमाराधितो भगवान् उत्तरस्मिन् कल्पे तेषामेव कर्माराध्यत्वेन देवतात्वं पितृत्वञ्च ददातीति । तथा च तत्तद्देवतामुखेन भगवत एवाराधनीयत्वं तेषामपि च भगवद्विशेषणभूतानां कर्माराध्यत्वमिति न विरोधः, तदिदमाह । कर्माराध्यत्वमिति । ननु देवतानामाराध्यत्वे कथं भगवदाराधनत्वं तदाराधने वा कथं देवताराधनत्वं तदेतद् दृष्टान्तेनोपपादयति । श्रद्धेया इति । यथा श्राद्धे निमन्त्रितब्राह्मणभोजने पितृदेवतयोः प्रीतिः सैव प्रीतिः फलदायिनी एवमाराध्यदेवतान्तर्यामी भगवान् प्रीतः फलं प्रयच्छति त इमे निर्जरास्तस्य देहा इति श्रुतिसिद्धमित्यर्थः ॥

इति देवतान्तरप्रीतिरपि भगवत्प्रीत्यर्थत्वम् ॥ ८५ ॥

एवं प्रधानकर्मसु द्वारभूतां देवताप्रीतिं प्रसाध्य संस्कारकर्मस्वपि स एव देवतासंकल्पविशेषो द्वारत्वेन स्वीकार्य्य इति वदति । विश्वेशेति ।

**मू० विश्वेशाकूतभेदव्यवहितफलदे वैधघण्टापथेऽस्मिन् संस्काराणां गतार्था सरणिरपि तथा मन्त्रणप्रोक्षणाद्यैः । राजेच्छोपात्तभोग्यप्रभृतिनियमवत्तत्र कार्य्यान्तरादिस-**

**स्त्वादीनां गुणानां विपरिणतिभिदां तत्फलं केचिदूचुः ॥ ८६ ॥**

टी० यथा यज्ञाद्याराधितः स्वसङ्कल्पेनैव फलं प्रयच्छति भगवान् एवं मन्त्रप्रोक्षणादिभिरपि संस्कारकर्मभिराराधितस्तत्तत्संस्कार्य्यानुबन्धिफलकरणेन तानितानि कर्माणि सगुणयतीति, कथन्तर्हि तत्तत्संस्कार्यवस्तुनि नियमेनोत्तरकर्मानुष्ठानं स्यात्, न ह्यप्रोक्षितात्प्रोक्षिते कश्चिदतिशयविशेषो भवत्पक्षेऽस्ति ईश्वरबुद्धिविशेषमन्तरेण व्रीह्यादिषु विशेषास्वीकारादित्याशङ्क्याह । राजेति । यथा राजेच्छया अस्येदं वाहनमायुधं वस्त्रमाभरणमित्यादिनियमकारिण्या परिगृहीतानां तेषां पदार्थानां तन्नियमानुरोधेनैव उत्तरोत्तरमारोहणादिकर्मसूपयोगनियमः, एवन्तत्तत्प्रोक्षणादिकर्मविषयीकृतानामेव तेषामुपयोगो भगवदायत्त इति न विरोधः सहकारिवशादेव सर्वं संपत्स्यत इति हि न्यायवित्संप्रदायः । इत्थं स्वपक्षमभिधाय सयूथ्यानां पक्षमप्याह । सत्वादीनामिति । प्रोक्षणादिकर्मभिर्व्रीह्यादिषु सत्वादिगुणपरिणतिभेदं केचिदूचुरिति गुणपरिणतिभेदातिरेकेण प्रोक्षणादिना आधेयशक्तिर्न कल्प्येत्यर्थः । वैभवादयं पक्ष उक्तः प्राक्तन एव पक्षः प्रामाणिक इति भावः ॥

इति शास्त्रीयसंस्काराणां देवताप्रीत्यर्थत्वम् ॥ ८६ ॥

ननु कृष्यादौ मर्दनादौ च परप्रीत्या फलावाप्तिर्न दृश्यते तद्वच्छास्त्रसिद्धेष्वपि स्वशक्त्यैव फलप्राप्तिरुचितेत्याशङ्क्य निराकरोति । कृष्यादावित्यादिना न सदित्यन्तेन ।

**मू० कृष्यादौ मर्द्दनादावपि च न हि परप्रीतिमूला फलाप्तिस्तद्वत् स्याच्छास्त्रसिद्धेष्विति**

न सदफलं ह्यत्र दृष्टान्तमात्रम्। दृष्टौ चाज्ञानुवृत्तिप्रभृतिषु फलदौ शासितुः प्रीतिकोपौ शिष्टौ चातस्समीची तदुपगतिरिह त्यक्तिरिष्टेऽपि वांशे ॥ ८७ ॥

टी० केवलं हि दृष्टान्तमात्रं प्रामाणिकार्थप्रतिक्षेपकं न भवति अन्यथाऽतिप्रसङ्गादित्याह। अफलमिति। अत्र प्रतिदृष्टान्तोऽप्यस्तीत्याह। दृष्टाविति। लोके च राज्ञामाज्ञानुवृत्तिप्रभृतिषु प्रीतिकोपौ दृष्टौ दृष्टौ च तौ फलदाविति सर्वेषामेवं शास्त्रदृष्टत्वात्तावेव प्रीतिकोपौ फलदौ भवतः, अतस्तदुपगतिरेव भवतोऽपि समीची एवं प्रमाणदृष्टान्ताभ्यां प्रतिपन्नस्यार्थस्य परित्यागे सर्वस्यापि प्रामाणिकत्वेनेष्टस्यार्थस्य परित्यागः स्यादित्याह। त्यक्तिरिति।

इति कर्मणां स्वयंफलप्रदत्वौचित्यभङ्गः ॥ ८७ ॥

एवं कल्प्यापूर्वपक्षं निराकृत्य वाच्यापूर्वपक्षेऽपि प्राभाकरोक्तं दूषणं तुल्यमित्यतिदिशति। प्रध्वस्तमिति।

मू० प्रध्वस्तं कर्म कालान्तरभवितृफलासाधकं तल्लिङादेर्वाच्योऽर्थः स्थायि कार्यं न यदि कथमिवान्वेतु कामी नियोज्यः। तच्चापूर्वं प्रधानं फलजनकमपि स्यान्नियोज्यप्रसिद्धौ नित्ये नैष्फल्यमस्येत्यभिदधुरपरे तेऽपि निर्धूतकल्पाः ॥ ८८ ॥

टी० इत्थं किल वाच्यापूर्ववादिनामाशयः चिरध्वस्तं किल कर्म कालान्तरभावि फलसाधनं न भवति तल्लिङादेर्वाच्योऽर्थः कालान्तरभाविफलसाधकः स्थायिकार्य्यमपूर्वं भवितुमर्हति इत्थं न

यदि स्वर्गकामो नियोज्यः कथमस्मिन्वाक्येऽन्वयमर्हति अन्विताभिधानं हि वाक्यकृत्यं न खल्वनन्वितमर्थं कदाचिदपि वाक्यमभिधत्ते तच्चापूर्वं स्वप्रधानं न पुनः कौमारिलकल्पनायामिव द्वारमात्रं तच्च भृत्यपोषणन्यायेन नियोज्यप्रसिद्धौ फलजनकमपि स्यात् राजा हि स्वकार्यनिर्वाहाय भृत्यान् पोषयति, एवमपूर्वमपि स्वप्रसिद्धौ स्वर्गादिकं नियोज्यफलं प्रयच्छति न च वाच्यं कामाधिकारे अपूर्वमस्तु नित्ये फलाभावात् अपूर्वम्मा भूदिति एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्राप्यविशेषात् कामाधिकारे लिङ्वाच्यतया स्वप्राधान्येनापूर्वे निर्णीते नित्ये फलाभावेऽपि तदेवापूर्वं लिङ्वाच्यं स्यात् अन्यथा लिङो वैयर्थ्यं स्यात् अर्थान्तरकल्पनेनानुवृत्तार्थाभावेन वैरूप्यं स्यादिति अस्मिन्मते विशेषेण दूष्याभावादेतेऽपि पूर्वोक्तकल्पनेन निर्धूता इत्याह । त इति । तुल्यं खल्वेतेषां श्रुतदेवताप्रीत्यादिहा*नं कल्पनागौरवञ्चेति भावः ॥

इति वाच्यार्थापूर्वपक्षेऽपि कल्प्यापूर्वपक्षोक्तदूषणातिदेशः ॥ ८८ ॥

एवं परोक्तं वाच्यापूर्वं निरस्य तत्प्राधान्यवचनमपि निराचष्टे । कृत्युद्देश्यमिति ।

मू० कृत्युद्देश्यं सुखादि स्वत इह न परं स्यादनन्यार्थवेद्यं क्लृप्तिश्चान्यस्य हेतोरपि च परिहृतं तत्परत्वं श्रुतीनाम् । नित्ये चापूर्वतोऽन्यत् फलमनघगिरस्तस्मरद्दुस्त्यजं तन्नोचेत् स्वस्मिन्नियोगायुतमपि निपुणान्नैव शक्तं नियोक्तुम् ॥ ८९ ॥

* भानमिति पु॰ पा॰ ।

टी० कृतिसाध्यं प्रधानं यत् तत्कार्य्यमभिधीयत इति यत्प्राधान्यमुच्यते प्रभाकरमतानुवर्त्तिभिस्तत्सुखादेरिति दर्शयति । सुखादिष्वत इति । अतोऽपूर्वस्यानन्यार्थवेद्यत्वं न स्यादित्याह । न परं स्यादनन्यार्थवेद्यमिति । तदेवोपपादयति । क्लृप्तिश्चेति । कालान्तरभाविस्वर्गानुकूलतयैव ह्यपूर्वं परिकल्प्यते वाच्यापूर्ववादिभिरपि । ननु कार्य्ये एव वाक्यानां प्रामाण्यमुक्तम् अस्माभिरपि तत्परिहृतमित्याह । अपि चेति । किञ्च नित्ये कर्म्मणि निष्फलत्वं त्वयाऽभिधीयते तच्चायुक्तमपूर्वव्यतिरेकेण अकरणे प्रत्यवायपरिहारोत्तरकर्माधिकारादिकं फलमनघगिरो मुनयः खलु सस्मरुः तच्च भवताऽपि दुस्त्यजमित्याह । दुस्त्यजं तदिति । एवमनङ्गीकारे नित्ये कर्मणि नियोगस्य नियोगत्वमेव बम्भज्येत, स्वयं प्रवर्त्तकत्वाभावादिति दर्शयति । नो चेदिति । स्वयमसुखात्मकस्य नियोगस्य सुखादिहेतुभावेनैव प्रवर्त्तकत्वं संघटते तद्धेतुत्वाभावे सहस्रमपि नियोगाः प्रवर्त्तयितुं न शक्नुवन्तीत्यर्थः ॥

इत्यपूर्वप्राधान्यभङ्गः ॥ ८९ ॥

एवं प्राधान्यं निरस्यापूर्वे लिङादेर्व्युत्पत्तिमपि निराकरोति । व्युत्पत्तिरिति ।

**मू० व्युत्पत्तिश्चेल्लिङादेः स्वयमनवगते स्यान्मिथस्संश्रयादिर्नान्यैरत्रानुभूतिः स्मृतिरपि न च वस्तद्द्वयान्योविमर्शः । अर्थापत्त्यामिते चेन्न गुरुमतमिदं मन्यसे तत्तथा चेत् कल्प्येत द्वारमात्रं तदिति न खलु तद्वाच्यभावादिकल्प्यम् ॥ ९० ॥**

टी० अयमत्र विकल्पः किमज्ञातेऽपूर्वे लिङादेर्व्युत्पत्तिः उत ज्ञाते न तावदज्ञाते व्याघातात्, ज्ञाते चेत् किं लिङैव ज्ञाते उतान्यज्ञाते, नाद्यः अन्योन्याश्रयात् तदिदमाह । मिथस्संश्रयादिरिति । ज्ञाते च व्युत्पत्तिः व्युत्पन्ने चाभिधानम् अभिधानाच्च ज्ञानमिति चक्रकमादिपदार्थः, अन्यैर्ज्ञातत्वे किमन्यदनुभूतिः स्मृतिर्वा न तावदनुभूतिः प्रमाणान्तरागोचरत्वादपूर्वस्येत्याह । नान्यैरत्रानुभूतिरिति । अनुभूतिपरतन्त्रत्वात् स्मृतिरपि नास्तीत्याह । स्मृतिरपीति । तर्हि विमर्शज्ञानेन सिध्यतीति चेतन्न नेत्याह । न चेति । अनुभूतिस्मृतिव्यतिरेकेण विमर्शस्य उपपादयितुमशक्यत्वादित्यर्थः । तर्हि अर्थापत्त्या प्रमितमिति पक्षान्तरमनुवदति । अर्थापत्त्येति । तन्निराकरोति । न गुरुमतमिदमिति । कल्प्यापूर्ववादिनः कौमारिला एव तर्हि तन्मतमेवानुसराम इति पराभिप्रायमनुवदति । मन्यस इति । निराचष्टे । कल्प्येतेति । कुमारिलमतानुसारे कल्प्यापूर्वमेव स्वीकृतं स्यात्, तथा च वाच्यापूर्वसमर्थनाहङ्कारवादो भज्येतेति भावः ॥

इत्यपूर्वविषयलिङादिव्युत्पत्त्यनुपपत्तिः ॥ ६० ॥

यागादिगतं कार्यत्वमेव लिङ्वाच्यं तच्चेष्टस्य कृत्यधीनात्मलाभत्वमित्यादिकं वेदार्थसंग्रहादौ विस्तरेण व्याख्यातं, तदतिरिक्तार्थवाच्यत्वकल्पनायामपि देवताप्रीत्यादिव्यतिरेकेण नान्यस्य कस्यचिदप्रामाणिकस्यापूर्वादिपदवाच्यस्य लिङ्वाच्यत्वं कल्पनीयमित्याह । देवेति ।

**मू० देवप्रीत्यादिकं वा विदितमिह विधिप्रत्ययस्यास्तु वाच्यं नात्रान्योन्याश्रयो न श्रुतपरिहरणं नापि क्लृप्तिर्गरिष्ठा । प्राधान्यं**

स्यान्न किञ्चिन्नृपभजननयात् सिद्धमेतच्च शास्त्रैरित्थं त्वर्थाविरोधेऽप्यतिगरिमभया-न्नेष्यते शब्दशक्तिः ॥ ९१ ॥

टी० अस्त्वित्यन्वारुह्यवादत्वं द्योतयति अतिरिक्तार्थवाच्यत्वेऽपि देवताप्रीत्यादिकमेव वाच्यमस्त्वित्यर्थः, अस्मिन् पक्षे प्रागुक्ता दोषा न सन्तीत्याह । नाके ति । तान् गणयति । अन्योन्याश्रयः श्रुतहानमश्रुतकल्पनेति । किञ्च राजसेवान्यायेन राजप्रीतिप्राधान्यवदीश्वरप्रीतिप्राधान्यं चास्मिन् पक्षे वक्तुं शक्यत इत्याह । प्राधान्यमिति । न चैतत् केवलयुक्तिसिद्धं शास्त्रेणापि सिद्धमिति नियमयति । सिद्धमेतच्च शास्त्रैरिति । अत आप्तस्य हितकामस्य नियोगं केचिदूचिरे इत्युक्तप्रकारेण ईश्वरनियोगादिकस्य विधित्वे तस्य च लिङ्वाच्यत्वेऽपि नास्माकं कश्चिद्विरोधः । अथापि लिङ्वाच्यत्वे गौरवभयादिष्टस्य कृत्यधीनात्मलाभातिरेकेणार्थान्तरे शब्दशक्तिर्नेष्यत इति निगमयति । इत्थमिति ।

इत्यपूर्वस्य लिङादिवाच्यत्वेऽपि देवताप्रीत्याद्यनतिरेकः ॥ ९१ ॥

उक्तार्थस्थेम्ने कौमारिलोक्तां शब्दभावनाया लिङ्वाच्यतामुन्मूलयति । स्वव्यापार इति ।

मू० स्वव्यापारं विशेष्ये स्वयमभिदधते नैव शब्दाः कदाचिच्छ्रुत्वा लिङ्व्यापृतिं वा कुत इह यतनं स्वोपयोगाद्यबोधे । तस्मादास्माकतत्तद्यतनकृदभिधा स्वस्य वाच्या लिङादेरित्युक्तिं बहुवद्यामममनिषत बुधास्तत्तरीमात्ररूपाम् ॥ ९२ ॥

टी० लिङ्व्यापारः शब्दभावना तामेवाभिदधाति लिङ्प्रत्ययः लिङ्व्यापारप्रतिपत्तिरेव पुरुषं प्रवर्त्तयतीति भावनावाक्यार्थवादिनः। अत्रोभयमपि न संघटते, न खलु शब्दाः कदाचिदपि स्वव्यापारं स्वयमेवाभिदधते अभिधेयानुबन्धिनी खल्वभिधा अभिधेयाश्च घटादयः, एवं लिङभिधानमप्यभिधेयार्थानुबन्धित्वान्न स्वात्मानं विषयीकरोति इत्थं लिङ्व्यापारस्वरूपप्रतीतिः प्रवृत्तिं न करोति न हि लिङ्व्यापार इति बुद्ध्वा कश्चित् प्रयतते स्वोपयोगादिबोध एव हि सर्वत्र प्रवर्त्तकः, इत्यमर्थतत्त्वं निष्कृष्य परोक्तप्रक्रिया परिहासमास्पदमित्याह । तस्मादिति । अस्माकमत्तद्यतनकृत्–अस्मदीयतत्तद्यागादिप्रयत्नरूपार्थभावनामुत्पादयति केवलं लिङभिधाशब्दभावना शब्दाभिधेया स्वस्य लिङादेर्वाच्येत्युक्तिं बहुवदां–श्रुतहानाश्रुतकल्पनानैरर्थक्यादिबहुदोषदुष्टां बुधास्त्रस्तरीरूपामनिषत, त्रस्तरी–परिहासः ॥

इति शब्दभावनाया लिङादिवाच्यत्वभङ्गः ॥ ६२ ॥

तर्हि माभूच्छब्दभावना लिङर्थं इष्टसाधनत्वमेवास्त्विति मण्डनः, तत्पक्षमपि प्रतिक्षिपति । न स्यादिति ।

**मू० न स्यात् पुंसः प्रवृत्त्यै विदितमपि गिरा स्वेष्टहेतुत्वमात्रं दुस्साधादावयोगादथ सह-कुरुते साध्यतैकार्थयोगः । इत्थं शक्तिद्वये स्याद्गरिमहतमिदं किञ्चिदत्रार्थतश्चेदिष्टोपायत्वमर्यादुचितमिह ततः खण्डिता मण्डनोक्तिः ॥ ६३ ॥**

टी० गिरा विदितमपि हीष्टसाधनत्वं पुरुषाणां प्रवृत्त्यै न भवत्येव, तत्र हेतुमाह । दुस्साधादावयोगादिति । न हि दुस्साधादाविष्टसाधनत्वं प्रतिपन्नमपि पुरुषं प्रवर्तयति, तर्हि न केवलमिष्टसाधनत्वमस्तु प्रवृत्तिकारणं तस्य सह कुरुतां साध्यत्वमित्याशङ्कते । अथेति । अथोत्तरम् । इष्टमिति । इष्टसाधनत्वं साध्यत्वञ्चोभयमपि शब्दार्थं इति परिकल्पने गौरवं स्यादित्यर्थः । अत्र शङ्कते । किञ्चिदिति । गौरवपरिहारार्थमिष्टसाधनत्वसाध्यत्वयोरन्यतरस्यार्थत्वं स्यादिति भावः । तर्हीष्टसाधनत्वमेवार्थं कार्यत्वं पुनरशाब्दमेव स्यादिति नेष्टसाधनत्वस्य शाब्दत्वसिद्धिरित्याह । इष्टोपायत्वमिति । अन्तरङ्गं खलु प्रवृत्तेरिष्टोपायत्वात् कार्य्यत्वम् । अयमिष्टोपायः अतः कार्यमिति कार्यबुद्ध्यैव प्रवर्त्तन्ते पुरुषा इति लोकसिद्धमेतत्, अतः खण्डिता मण्डनोक्तिः ॥

इति लिङादेरिष्टसाधनतार्थत्वभङ्गः ॥ ६३ ॥

स्वपक्षे लिङाद्यर्थं निष्कृष्याचष्टे । धात्वर्थस्येति ।

**मू० धात्वर्थस्यैव रूपं किमपि हि कथयन्त्यत्र सर्वे लकाराः कर्त्तृव्यापारसाध्यं त्वभिदधति विधिप्रत्ययास्तल्लिङाद्याः । वैघट्यं व्हार-सिद्धिः प्रशमयति तथा सन्ति लोकोक्ति-भेदास्सिद्धं शब्दानुशिष्ट्या त्विदमुचितमिति स्थापितं भाष्यकारैः ॥ ६४ ॥**

टी० द्वयं खलु शब्दार्थनिर्णयकारणं विशिष्टप्रयोगो व्याकरणं चेति उभयमप्यस्मत्पक्षानुकूलं लडादयो लकारास्सर्वेऽपि धात्वर्थस्यैव वर्त्तमानत्वभूतत्वादिकं किमपि रूपमभिदधति एवं लिङाद-

योऽपि धात्वर्थस्यैव यागादेः कर्तृव्यापारसाध्यत्वमभिदधतीति समुचितमेतत् । ननु कथं कालान्तरभाविस्वर्गकामस्य चिरध्वस्तो यागः काम्यफलसाधनमिति शङ्काऽवशिष्यते तदपि देवताप्रीत्यादिद्वारसिद्धिः प्रशमयतीत्याह । वैघट्यमिति । अयज्ञार्थो राजसेवादौ लोकोक्तिसंवादवानित्याह । तथेति । अयमर्थो न लोकप्रसिद्धिमात्रपरिग्राह्यो व्याकरणानुकूलत्वाद्विशेषेण परिग्राह्य इति भाष्यसम्मतिमाचष्टे । सिद्धमिति ॥ ६४ ॥

ननु स्वर्गकामस्य यागादिस्साध्यतया विधीयत इति हि भवतोच्यते यागादेरिष्टसाधनत्वं साक्षान्नोच्यते कथन्तर्हि यागादेरिष्टसाधनत्वसिद्धिः कथं वा पुनरवगोरणादेरनिष्टसाधनत्वसिद्धिरित्याशङ्क्य परिहरति । इष्टेति ।

**मू० इष्टस्वर्गादिकस्य त्वितरदपि यदा साक्षमुक्तं तदार्थात् सिद्धं तत्साधनत्वं सुगममिह तदाऽनर्थकत्वं निषेध्ये । नित्यत्वेनोपदिष्टेष्वकरणमपि तत्तुल्यमेवार्थलब्धं सामान्यात् प्राप्तमेतत् फलनियतिरपि व्यज्यते तत्तदुक्त्या ॥ ६५ ॥**

टी० अर्थात् सिद्धं तत्साधनत्वं शाब्दं कार्य्यत्वमार्थमिष्टसाधनत्वम् एवमवगोरणादावपि शाब्दं कार्य्यत्वमार्थं निषिध्यमानस्यानिष्टसाधनत्वमिति विभाग. । एवमकृत्यकरणेऽनर्थकृत्त्वमुक्तं, तथा कृत्याकरणेऽप्यनर्थकृत्त्वप्रतिपत्तिरार्थतुल्येत्याह । नित्यत्वेति । नित्यस्य कर्तव्यत्वं शाब्दं नित्याकरणस्यानर्थकृत्त्वमार्थमित्यत्रापि विभागः, एतत्सर्वं सामान्येनार्थतत्त्ववर्णनम् । इदमेतत्फलं ददाति

एतस्य चानुष्ठाने सति अयमर्थ इत्यादिर्विशेषस्तत्तच्छाब्दोऽन्याऽव-गन्तव्य इति दर्शयति । फलनियतिरिति ॥

इति लिङाद्यर्थनिष्कर्षः ॥ ६५ ॥

इष्टस्य कृत्यधीनात्मलाभत्वमिति स्वपक्षे लिङ्वाच्यत्वं दर्शयित्वा स्वपक्षनिष्ठानामेव केषाञ्चिदीश्वरनियोगरूपविधिपक्षं विविच्य दर्शयति । सन्ति ह्येति ।

**मू० सन्ति ह्यन्ये लिङर्थाः कथयितृपुरुषाकूत-भेदास्तथात्राप्याप्तस्याहुर्नियोगं हितमभि-लषितं केऽपि भाष्याशयस्थम् । शास्त्राज्ञाचो-दनात्वं श्रुतिषु विधिपदैरन्वितत्वं नञोऽपि स्वादेशे चावधूते भवति समुचितः प्रत्यवायः स्वतन्त्रात् ॥ ६६ ॥**

टी० विधिनिमन्त्रणेत्यादौ विधिः प्रेषणमित्यादयः कथयि-तृपुरुषाभिप्रायभेदा लिङर्थत्वेन प्रतिपादितास्तथाऽत्राप्याप्तस्य हित-कामस्य नियोग एव विधिरिति भाष्यकाराभिप्राय इति केचिन्मन्य-न्ते तच्च वयं न प्रतिक्षिपामः श्रुतिस्मृती ममैवाज्ञे इति, शास्ता विष्णुरशेषस्येति भगवदाज्ञारूपत्वं चोदनाया युज्यते, अतः श्रुतिषु विधिपदैरन्वितत्वं शासितुराज्ञाचोदनारूपत्वमेव नञोऽपि नञ्प्रयो-गाच्च भगवदाज्ञायामवधूतायां स्वतन्त्राद् भगवतस्समुचितः प्रत्य-वायो भवतीत्युच्यते, तदिदमाह । न ञोऽपीति ।

इति वक्तृनियोगस्य लिङादिवाच्यत्वपक्षः ॥ ६६ ॥

एवं विश्वनियन्तुरीश्वरस्य । तवानन्तगुणस्यापि षडेव प्रथमे

गुणाः । येस्त्वयैव जगत् कुत्राप्यन्ये ऽप्यन्तर्निवेशिताः ॥ इत्युक्तक्रमेण षाड्गुण्यस्यैवावान्तरभेदास्सर्वे गुणा इत्याह । षाड्गुण्यस्येति ।

मू० षाड्गुण्यस्यैव कुक्षौ गुणगण इतरः श्रीसख-
स्यैव विश्वं षट्स्वन्ये ज्ञानशक्त्योर्विततय
इति च व्यक्तमुक्तं हि तज्ज्ञैः । निस्सीमाऽ-
ऽनन्दभावस्थिरचरचिदचिच्छासनप्रेरणाद्या
ऐशानज्ञानधर्माः कतिचन नियताः केचि-
दागन्तवश्च ॥ ९७ ॥

टी० तस्य चेश्वरस्य केचिद् गुणा निस्सीमानन्दादयो ज्ञानावस्थाभेदा नियता नित्यसिद्धाः केचिन्तदानदा संकल्पविशेषादयस्त्वागन्त*व इति विभागोऽस्तीत्याह । निस्सीमेति ।

इति षाड्गुण्यनिरूपणम् ॥ ९० ॥

एवं गुणानां विभागमुक्त्वा शक्तेः स्वरूपं शोधयति । हेतोरिति ।

मू० हेतोः कार्य्योपयुक्तं यदिह भवति तच्छक्ति-
शब्दाभिलप्यं तच्चामुष्य स्वधर्मस्तदितर-
दपि वाऽपेक्षितत्वाविशेषात् । विश्वन्त-
द्विष्णुशक्तिर्मुनिभिरभिदधे तत्रतत्रोपयोगा-
दन्या सर्वाद्भुतैकोदधिरगणि न सा तत्स्वरू-
पादिमात्रम् ॥ ९८ ॥

टी० कारणस्य कार्योपयोगी सहकारिकलापः शक्तिरित्युच्यते, तच्च स्वधर्मो वा भवतु अन्यद्वा यत्किञ्चित् अपेक्षितत्वाविशेषात् शक्तिरित्यभिधीयते, तदिदमाह । हेतोरिति । इत्थं सामान्येन

* इतरैरागन्तुकत्वेनावधृताः ।

शक्तिशब्दार्थं प्रसाध्य विष्णुशक्तिः परा प्रोक्तेत्यादिभिर्मुनिवचनैरभिहितामपि शक्तिमेव तल्लक्षणानुरोधेन व्याचष्टे । विश्वन्तादिति ।

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूप वैरूप्यं रूपमन्यद्धरेर्महदिति ॥

या मूर्तिस्सर्वाद्भुतैकोदधिरगणि सापि स्वरूपविशेषणत्वात् शक्तिशब्दवाच्यतामर्हति न पुनस्सा स्वरूपमात्रं तस्मिन्नेव विग्रहे अस्त्रभूषणादिरूपेण समस्ताः शक्तयस्समाश्रिताः तद्विग्रहविशिष्टो भगवान् सर्वाधार इत्यर्थः ।

इति शक्तिशब्दार्थनिष्कर्षः ॥ ६८ ॥

स्वरूपसहकारिव्यतिरिक्तशक्तेर्यद्घोषितं दूषणं न्यायवादिभिस्तदाऽऽनुमानिकशक्तिकल्पने भवतु शक्तयस्सर्वभावानामित्याद्यागमसिद्धे शक्तितत्त्वे न दूषणमित्याह । यद्भ्रंशादिति ।

**मू० यद्भ्रंशान्मन्त्ररुद्धो न दहति दहनश्शक्तिरेषाऽस्तु सोऽयं हेतुर्मन्त्राद्यभावस्स च गत इति तद्धेत्वभावाददाहः । शक्तेर्नाशे किमस्याः पुनरिह जनकं वृत्तिरोधस्तु युक्तो वन्हेरित्यादिघोषो विरमति विदिते शब्दतश्शक्तितत्त्वे ॥ ६९ ॥**

टी० इत्थं किल शक्तिदूषणप्रक्रिया यस्य प्रतिबन्धाभावस्य भ्रंशान्मन्त्ररुद्धो दहनो न दहति स एव प्रतिबन्धाभावः शक्तिरस्तु स च प्रतिबन्धाभावो हेतुरेव प्रतिबन्धाभावविशिष्टस्य वन्हेर्दाहकत्वात् तथा च मणिमन्त्रादिप्रतिबन्धे सति सामग्रीवैकल्यात् कार्याभावः न तु तदतिरिक्तशक्त्युपरोधात् तत्कल्पनायां गौरवात् तदिदमाह ।

तद्धेत्वभावाददाह इति । किञ्चातिरिक्तशक्तिकल्पनायां प्रतिबन्धकेन तन्नाशे पुनरुत्तम्भकावस्थायां किन्तस्या जनकमिति वाच्यम्, उत्तम्भकमिति चेत् अनियतहेतुकत्वप्रसङ्गः, उत्तम्भकसत्त्वेऽपि शक्तिर्न जन्यते चेत् पुनर्दहनकार्य्यं न स्यात्, तदिदं सर्वमभिप्रेत्याह । शक्तेर्नाश इति । तर्हि प्रतिबन्धकेन शक्तिर्न नश्यति किन्तूपरुद्ध्यत इति चेत् तर्हि वन्हिरेवोपरुध्यतां किमनेन शक्तिकल्पनेन गुरुतरेणेत्याह । वृत्तिरोधस्तु युक्तोवन्हे रिति । अयं शक्तिदूषणवादः शब्देतरप्रमाणगम्यायां शक्तौ युक्तः शक्तितत्त्वे शब्दगम्ये सति न युक्त इत्याह इत्यादिघोष इति ।

इति शक्तिदूषणपरिहारः ॥ ९९ ॥

अथ शक्तिमद्द्रव्येषु स्वरूपरूपामुपपादयति शब्दादिष्विति ।

सू० शब्दादिष्वस्ति शक्तिर्यदि कथमिव न द्रव्य-
तैषां गुणित्वे सा चेन्नास्त्येषु कार्य्यं किमपि
कथमितः स्यादितीदं न युक्तम् । शक्तिश्श-
क्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे
निस्तारश्चेत्स्वभावात् फणिमरणमिह प्र-
स्तुते किम्प्रवृत्तम् ॥ १०० ॥

टी० इयमत्र पूर्वपक्षप्रक्रिया शब्दादिषु शक्तिर्यद्यस्ति कथमिव तेषामद्रव्यता शक्त्याश्रयत्वेन तेषां गुणित्वात् यदि शब्दादीनां शक्त्याश्रयता नास्ति तर्हि शब्दादिभिः कार्यं किमपि कथं स्यादिति तदयुक्तमित्याह । इदं नेति । तदेतद्विवृणोति । शक्तिरिति । अयमत्र विकल्पः किं शक्तितत्त्वमेव द्रव्येष्वप्यपलपसि अथवा शब्दादीनामद्रव्याणां शक्तिर्नास्तीति, पूर्वत्र क्वचिदपि कार्यसिद्धिर्न स्यादिति व्याघातः

तथा च भवताऽप्यङ्गीकार्य्या शक्तिः तथा च सा शक्तिर्यया शक्त्यन्तरमन्तरेणापि कार्योपयोगिनी एवं शब्दादयोऽपि स्वगतशक्तिमन्तरेणापि स्वरूपसहकारिभ्यामेव कार्य्यं कुर्वते अन्यथाऽनवस्थाप्रसङ्गादिति फणिमरणमिहेत्यादि यथा शक्तेश्शब्दान्तराभावस्स तु शब्दादावपि तुल्य इत्यर्थः ॥

इत्यद्रव्याणां स्वरूपशक्तिमत्त्वम् ॥ १०० ॥

इत्यमद्रव्येषु स्वरूपातिरिक्तां शक्तिं निराकृत्य स्मृतिहेतुसंस्कारं स्वरूपाद्यतिरिक्तं साधयितुमुपक्रमते । बाह्येति ।

**मू० बाह्याक्षादेरवृत्तौ चिरविदितमपि स्मर्य्यते येन सोऽयं संस्कारस्तुल्यदृष्टिप्रभृतिसहकृतश्चेतसस्साह्यकारी । नासौ पूर्वानुभूतिः कथमुपकुरुतां सा पुरैव प्रनष्टा तुल्यादेर्नापि दृष्टिः कथमनवगते सा स्मृतिं नैव कुर्य्यात् ॥ १०१ ॥**

टी० स्मृतिज्ञानस्य तावदिन्द्रियार्थसन्निकर्षादिकं न साधनं तदभावेऽपि चिरविदितमपि येन स्मर्य्यते स एव हि संस्कार इत्युच्यते । स च तुल्यदर्शनादिसहकृतश्चित्तस्य सहकारी भवति । यथाऽऽहुस्सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः । इति । अयं चागन्तुकधर्मः पूर्वानुभूतिरेवेति न वक्तुं शक्यते, तस्याः पुरैव नष्टत्वेनोत्तरकालानुपकारकत्वात् । तदिदमाह । कथमुपकुरुतामिति । तर्हि तुल्यदर्शनादिकमेवाधुनिकसंस्कारोऽस्त्विति च वक्तुं न शक्यते । अनवगतेऽप्यर्थे स्मृतिप्रसङ्गात् । न हि पूर्वानुभवजनितसंस्कारमन्तरेण सदृशदर्शनादिकं कदाचिदपि स्मृतिं कुरुते ॥ १०१ ॥

तर्हि यज्जन्या संस्क्रिया युष्मत्पक्षे येन सदृशदर्शनादिना नियमेनानुबोध्यते तदेव सदृशदर्शनादिकं तद्विद्यालम्बनीमेव स्मृतिमुपजनयेदित्याह । यज्जन्यामिति ।

मू० यज्जन्यां संस्क्रियां यत् किमपि नियमतो बोधयिष्यत्यदृष्टं तत्तद्विद्यावलम्बिस्मृतिमुपजनयेत् सम्मतञ्च द्वयोस्तत् । न ह्यन्यद् दृश्यते ऽत्र क्वचन तदधिके कल्पिते गौरवं स्यादित्युत्प्रेक्षा न युक्ता न हि परजनिते क्वापि तत्संस्क्रियोक्तिः ॥ १०२ ॥

टी० तथा चाननुभूते स्मृतिप्रसङ्गो नास्ति सम्मतञ्च द्वयोरपि वादिनोस्सदृशदर्शनादि, तदिदमाह । सम्मतञ्च द्वयोस्तदिति । न च दृष्टत्वादधिकसंस्कारोऽङ्गीक्रियत इत्याह । न हीति । अधिककल्पनायां गौरवमपि प्रसज्जयति । तदधिक इति । तदेतद् दूषयति । उत्प्रेक्षा न युक्तेति । तदुपपादयति । न हीति । लोक एव हि व्यवहारे निदानं लोके हि तत्तत्क्रियाजन्यातिशयविशेष एव संस्कारव्यवहार: प्रवर्तते न पुनर्यस्मिन् कस्मिंश्चित् सहकारिमात्रे । तेन सदृशदर्शनादिमात्रं संस्कार इत्ययं लोकव्यवहारविरुद्ध इत्यर्थः । न च पूर्वानुभवप्रध्वंसमात्रमेव संस्कार इति वाच्यम् । तस्य परपक्षे नित्यत्वेन संस्कारप्रमोषाभावप्रसङ्गात् अस्मत्पक्षे ध्वंसस्य भावरूपत्वेन पर्य्यायेण भावस्यैवाभिधानाच्चेति ॥

इति स्मृतिहेतुसंस्कारनिरूपणम् ॥ १०२ ॥

इत्थं संस्कारसद्भावमुपपाद्य तस्य बुद्धिनिष्ठत्वमुपपादयति । बुद्धेरिति ।

मू० बुद्धेरर्थेषु पूर्वप्रसरणजनितस्तेषु भूयोऽवगाहे संस्कारः कारणं तन्मतिगत उचितस्सोऽत्र धीद्रव्यपक्षे । आत्माधारस्य तद्धीप्रसरजनकताक्लृप्तिरौचित्यहीना धीनिष्ठेनैव तेन ह्युचितमविकृतेरात्मनः कुण्ठतादिः ॥ १०३ ॥

टी० द्रव्यं हि बुद्धिस्स्वाऽर्थेषु प्रसरतीत्यस्मत्सिद्धान्तः । तेन बुद्धेः पूर्वप्रसरणजनितो भूयोग्रहणकारणं संस्कार इति सिद्धम् । तथा च तस्य बुद्धिनिष्ठत्वमेव समुचितं तदिदमाह । मतिगत उचितस्सोऽत्र धीद्रव्यपक्ष इति । आत्माधारत्वं संस्कारस्य किन्न स्यादिति परिचोद्यात्मनिष्ठस्य संस्कारस्य धीविकासहेतुत्वेऽनौचित्यमाह । आत्मेति । धीनिष्ठेनैव तेन संस्कारेणैवात्मनः कुण्ठत्वमकुण्ठत्वञ्च वक्तुमुचितम् अविकारत्वादात्मन इत्याह । धीनिष्ठेनेवेति । अयमर्थः—आत्मा निर्विकारः सविकारञ्च धर्मभूतज्ञानम् । तच्चात्मनो नित्यासाधारणधर्मः । तेन धर्मभूतज्ञानगतास्सर्वे विकाराः ज्ञानद्वारा ज्ञानाश्रयात्मपर्यन्तं व्यवह्रियन्त इति ॥

इत्यनुभवजन्यसंस्कारस्य बुद्धिनिष्ठत्वम् ॥ १०३ ॥

ये तु वेगस्य कर्मातिरिक्तत्वं साधयन्ति तन्मतं प्रतिक्षिपति । शीघ्रमिति ।

मू० शीघ्रं यातीति कर्मातिशयसमधिको दृश्यते कुत्र वेगस्तद्भेदैर्वेगभेदं कथयसि च समस्तीव्रमन्दक्रमादिः । तत्कर्मत्वाद्विगीते प्रथमवदुचिता तद्गुणोत्पन्नता चेद् बाधो

**नास्मिन्विपक्षे गुणपरिषदि वा कर्मसन्त-
त्यतः स्यात् ॥ १०४ ॥**

टी० शीघ्रं यातीति कर्मातिशयविशेषादितरो वेगः कुत्रापि न दृश्यते। भवानपि कर्मभेदैर्वेगभेदं कथयति। तथा च यादृशकर्मभेदाद् वेगभेदः परिकल्प्यते स एव कर्मभेदो वेग इत्युच्यतां तीव्रमन्दादिभेदस्य कर्मण्यपि समानत्वादित्याह। समस्तीव्रमन्दक्रमादिरिति। तर्ह्यधिकं वेगमनुमानेन साधयामः—शरादिगतं द्वितीयादिकर्म शरगुणोत्पन्नं तत्कर्मत्वात् तन्निष्ठप्रथमकर्मवदिति कर्म हि प्राथमिकं यथा संयोगादुत्पद्यते एवं द्वितीयादिकर्मणां शरगुणोत्पन्नत्वे तद्गुणो वेगस्सिद्ध्यतीति चेत् तदिदं निराकरोति। बाधो नास्मिन्विपक्ष इति। कर्मणः कारणमात्रमेवापेक्षितम् तत्तु कारणं गुण एवेति न निर्बन्धे कारणमस्ति शब्दाच्छब्दान्तरवत् पूर्वकर्मणाऽप्युत्तरकर्मोत्पत्तौ विरोधाभावात् कल्पनालाघवमत्रानुग्राहकम्। अथ वा द्रव्यान्यत्वेन कर्मापि गुणपरिषदि निक्षिप्यताम्। तथा च कर्म तद्गुणोत्पन्नमिति साध्यनिर्देशे सिद्धसाध्यता च वक्तुं शक्येतेत्याह। गुणपरिषदि वेति।

इति कर्मातिशयातिरिक्तवेगक्लृप्तिभङ्गः ॥ १०४ ॥

वेगातिरिक्तं स्थितस्थापकाभिधानं संस्कारमपि कल्पयन्त्यल्पबुद्धयः। तन्नेति वक्तुमनुवदति। शाखेति।

**मू० शाखाकोदण्डचर्म्मप्रभृतिषु सति चाकर्षणादौ कुतश्चिद् भूयःस्थाना*य यानं भवति स तु गुणः स्यात् स्थितस्थापकश्चेत्। मैवं**

* भूयः स्वस्थानयानमिति पा०।

संस्थानभेदस्स भवतु नियतो यद्विशिष्टे तदा-
सौ तेन द्रौत्यं विलम्बो विरतिरपि परावर्तने
जाघटीति ॥ १०५ ॥

टी० शाखाकोदण्डचर्मप्रभृतिष्वाकर्षणादौ सति कुतश्चित् कारणविशेषाद् भूयः स्वस्थानावस्थानं भवति स तु कारणविशेषः स्थितस्थापक इति चेन्मैवं नियतसंस्थानविशेष एव स भवतु—स्थितस्थापको भवतु यत्संस्थानविशिष्टवस्तुन्यसौ स्थितस्थापको भवद्भिः कल्प्यते स्थितस्थापकविशेषाभावे परावर्तने द्रौत्यविलम्बादिकं कथमिति चेत्तत्तत्स्थितस्थापकविशेषनियामकेन तत्तत्संस्थानविशेषेणैव तज्जाघटीतीत्याह । तेनेति ।

इति संस्थानविशेषातिरिक्तस्थितस्थापकभङ्गः ॥ १०५ ॥

मू० प्राग्देशप्रापकोऽसौ किमिति नियमितो मेदिनीमात्रनिष्ठस्तोयाग्न्यादावदृष्टेरिति यदि न पृथिव्येकदेशे ऽप्यदृष्टेः । भूम्यंशे दृश्यते तत्फलमिति यदि नावादिभेदेऽपि साम्याद् भूवष्टम्भादिभेदादिदमिति च विपर्यासकल्पेप्यपायात् ॥ १०६ ॥

अथ कर्मस्वरूपं निरूप्यते । केचिदिति ।

मू० केचिद्देशान्तराप्तेर्जनिमभिदधते कर्म या कर्मजेष्टा नेत्येकेऽम्भःप्रवाहस्थिरवपुषि झषे तत्प्रतीतेरभावात् । खादौ स्रोतःप्रदेशान्तरयुतिरुदके खादिदेशान्तराप्तिस्तुल्या

तल्लौल्यदृष्टिः पयसि तदधिकं कर्म नाल-
म्बते चेत् ॥ १०७ ॥

टी० केचिद्देशान्तरप्राप्तेरुत्पत्तिमेव कर्माभिदधते न पुनस्त-द्व्यतिरिक्तं कर्म या खलु देशान्तरप्राप्तिः कर्मजन्येति परेषामिष्टा न पुनस्तद्व्यतिरिक्तं कर्मोपलभ्यत इति भावः । लाघवञ्चात्र कारणम् । एके तदेतन्नेत्याहुः । तत्र हेतुमप्याहुः—अम्भ इति । न हि जलप्रवाहस्थिरवपुषि मत्स्ये सन्ततं समागच्छत्प्रवाहसंबन्धेऽपि कर्म-प्रतीत्यभावात् तेन जल एव कर्म प्रत्यक्षमुपलभ्यत इति भावः । किञ्च आगच्छति प्रवाहे गगनप्रवाहयोः परस्परसंबन्धाविशेषेण देशान्तरप्राप्तिस्तुल्या । अथापि लौल्यदृष्टिः पयसि न पुनर्गगने चलत्वदृष्टिः । तस्मादुभयसंबन्धाधिकं कर्मावलम्बते लौल्यदृष्टिः तेन देशान्तरप्राप्तेरधिकं कर्मेति भावः ॥

इति कर्मनिरूपणम् ॥ १०७ ॥

कर्मेति ।

मू० कर्मत्वान्नाक्षयोग्यं विमतमिति यदि व्याप्ति-
शून्यं तदेतद्योग्यत्वेऽपि ह्यदृष्टिस्सहकृदप-
गमादप्यमादिक्रियाणाम् । नो चेत्कर्मैव न
स्यात् फलमपि हि भवेत्कर्महेतोस्त्वदि-
ष्टाद् द्विष्ठत्वादौ फलस्य द्वितयमपि भवे-
त्कर्मवत्सर्वदा वः ॥ १०८ ॥

टी० अत्र केचिदाहुः सर्वेषामपि कर्मणां नित्यानुमेयत्वं देशान्तरप्राप्त्या ह्यनुमीयते कर्मेति—प्रयुञ्जते चैतदनुमानं विप्रतिपन्नं

कर्माप्रत्यक्षं कर्मत्वात् परमाणुकर्मवदिति । तत्रोत्तरं व्याप्तिशून्यमिति, कर्मणो नित्याप्रत्यक्षत्वेन कुत्राप्यनुमानस्य व्याप्तिस्सिद्धेरिति भावः। तर्हि सूर्य्यगमनादेरपि प्रत्यक्षत्वं स्यादित्यत्राह। योग्यत्वेऽपि हीति । न हि योग्यास्सर्वेऽपि सहकार्यभावेऽपि गृह्यन्ते । व्यवहितविप्रकृष्टादीनामपि ग्रहणप्रसङ्गात् सूर्यगमनादिकन्तु दूरत्वान्न गृह्यत इति लोकप्रसिद्धमेतत् । कर्मणः प्रत्यक्षत्वं विपक्षे बाधकेनोपपादयति । नो चेदिति । यदि कर्माप्रत्यक्षं तर्हि कर्मस्वरूपमेव न स्यात् कर्मफलभूताया देशान्तरप्राप्तेरेव कर्मव्यवहारसिद्धेः । देशान्तरप्राप्तिरेव कथमिति चेत्तत्राह। फलमपि हि भवेत्कर्महेतोरिति। त्वदिष्टात् कर्मकारणादेव देशान्तरप्राप्तिरस्तु किमन्तर्गडुना कर्मणेति भावः। किञ्च मल्लयोर्मेषयोर्वा परस्परसंयोगस्य उभयकर्मजत्वात् तद्दृष्टान्तेन स्थाणुश्येनसंयोगस्याप्युभयकर्मजन्यत्वं स्यात् । प्रत्यक्षविरोधस्तत्रेति चेद्धन्त तर्हि कर्मणः प्रत्यक्षत्वं भवतैवाभिहितमिति व्याघातमजानानस्य किमुत्तरं देयम् ॥

इति सर्वकर्मणां नित्यानुमेयत्वभङ्गः ॥ १०८ ॥

एवं कर्मप्रत्यक्षत्वमुक्त्वा कर्मादिष्वसमवायित्वेन व्यवहारभेदं प्रतिक्षिपति । केचिदिति ।

**मू० केचित्कर्मादिरूपं जगदुरसमवायाह्वयं हेतुभेदं किन्त्वैरेवं निमित्ताश्रयमिह जनकं नानिमित्तं विभक्तम् । तत्प्रत्यासत्तिमात्रं व्यभिचरति यदि स्वावक्लृप्तेऽपि तुल्यं युक्त्या नैयत्यमत्रेत्यपि सममथवा स्वस्ति वः स्वैरवाग्भ्यः ॥ १०९ ॥**

टी० इत्थं किल वैशेषिकाणां साङ्केतिको व्यवहारः समवायिकारणं किञ्चिदसमवायिकारणञ्चान्यत् तच्च समवायिकारणप्रत्यासन्नमिति । अपरं पुनरीश्वरकालादिकं निमित्तमिति तत्प्रतिबन्द्या निराकरोति । किन्तोरिति । यदि समवायिकारणप्रत्यासन्नमसमवायिकारणमिति कल्प्यते तर्हि निमित्तकारणप्रत्यासन्नमनिमित्तकारणमिति चतुर्थं कारणं किन्न कल्प्यते । अथ निमित्तकारणप्रत्यासत्तिमात्रमकारणेष्वपि विद्यमानत्वाद् व्यभिचारदुःस्थमिति चेत् समवायिकारणप्रत्यासत्तिमात्रमपि व्यभिचारदुःस्थमित्याह । स्वावक्लृप्तेऽपि तुल्यमिति । न हि समवायिकारणप्रत्यासन्नानां सर्वेषामपि धर्माणामसमवायिकारणत्वं भवद्भिरुच्यते युक्त्या नैयत्यमत्रेत्यपि सममिति । न वयमनवधृतसामर्थ्यानामसमवायित्वं वदामः, अपि त्ववधृतसामर्थ्यानामिति युक्त्या विशेषयाम इति चेत्तर्हि वयमप्यनवधृतसामर्थ्यानामनिमित्तकारणत्वं न वदामः अपि त्ववधृतसामर्थ्यानामिति समस्समाधिः । अतोऽसमवायिकारणवदनिमित्तकारणमिति चतुर्थोऽपि कल्पः कल्प्यताम् । तथा च भवतां स्वैरवाग्भ्यः स्वस्तीति साधिक्षेपमाक्षिपति । अथवेति ॥

इत्यसमवायिकारणविभागक्लृप्त्यनौचित्यम् ॥ ॥ १०९ ॥

एवसमवायिकारणत्वेनावस्थितकर्मप्रसङ्गे परेषां कर्मभेदक्लृप्तिरप्यसमञ्जसेत्याह । कर्मेति ।

**मू० कर्मोत्क्षेपादिभेदात् कतिचिदकथयन् पञ्चधा तच्च मन्दं दिग्भेदात्तस्य भेदे दशविधमपि तत्कल्पनं सांप्रतं स्यात् । यत्किञ्चिद्भेदकाच्छेदनवधिकभिदा कर्महेतुर्ध्रुवाच्चेदव्याप्तिर्वृद्धितश्चेदियमितरसमा संकरस्त्वत्र सह्यः ॥ ११० ॥**

टी० उत्क्षेपणादिभेदात् पञ्चविधत्वे तत्तद्दिग्भेदाद् दशविधत्वमपि किन्न स्यात् । यत्किञ्चिद्भेदकात्पञ्चविधत्वं वदाम इति चेत् यत्किञ्चिच्छब्दस्यानेकार्थत्वादनवधिकभेदः प्रसज्येत कर्महेतुधैव्याद् भेद इति चेत्तत्राप्यव्याप्तिरेव दूषणम् । न ह्येकत्र हेतुस्सर्वेषामन्वेति । केवलमुत्क्षेपणादिबुद्धिमात्रेण भेदश्चेत्तर्हि इतरेष्वपि भ्रमणरेचनादिषु बुद्धिभेदोऽस्तीति तत्रापि नानात्वं प्रसज्येत । किञ्च बुद्धिभेदोऽपि न नियतः, गमनागमननिष्क*मणप्रवेशनादिषु सङ्करस्यापि दृष्टत्वात् । अतस्तत्तदुपाधिभेदादानन्त्यमेव कर्मणो न तु पञ्चत्वमिति ॥

इति कर्मणामुत्क्षेपणाद्यवान्तरभेदनिरूपणम् ॥ ११० ॥

पूर्वस्मिन् ग्रन्थे सङ्करस्त्वत्र सह्य इति जातिसङ्करप्रसङ्गे न विरोध इत्युक्तम् । तदेव समर्थ्यते । मृत्स्वर्णादीति ।

**मू० मृत्स्वर्णादिप्रसूते भवति हि घटधीर्नान्यदन्यद् घटत्वं नैकं बाध्यं समत्वात्तदिह परिहृतिः कुत्रचित्क्वापि योगः । पारापर्यं विरोधः परिहरणसमावेशनञ्चास्त्युपाधौ तुल्यञ्जातिप्रसङ्गादिकमिति न यथादृष्टभङ्गः क्वचित्स्यात् ॥ १११ ॥**

टी० समाविष्टानां जातीनां परापरभावः परस्परपरिहारेण वर्तमानानां विरुद्धानां जातीनां न समावेश इति केषाञ्चित् सङ्केतो न्यायवादिनां, तेन सुवर्णादिघटादौ घटत्वमेव नास्तीति तेषामाशयः । तन्नोपपद्यते अनुवृत्तधीरेव हि सर्वत्र जातिसद्भावे प्रमा-

* यदेकस्य बुद्ध्या गमनपदेन व्यवह्रियमाणं तदेवापरबुद्ध्या भवत्यागमनपदेन व्यवहारविषयः । एवं निष्क्रमणप्रवेशनादिव्यवहारोऽपि पुरुषबुद्धिविशेषकृतः संकीर्ण इत्येकक्रियायामेवाविप्रतिपन्नो विविधव्यवहार इति तात्पर्यम् ।

षम् । तथा च यथा मृद्घटे घटधीरस्ति एवं सुवर्णघटेऽपि घटधीरस्ति तथा च मृत्त्वघटत्वयोः परापरभावानुपपत्तिः । सुवर्णस्य तैजसत्वेन भवद्भिः स्वीकारात् । ननु मृद्घटेऽन्यद् घटत्वं सुवर्णघटेऽन्यद् घटत्वमिति तद् भवदङ्गीकृतानुवृत्तप्रतीतिविरुद्धमित्याह । नान्यदन्यद् घटत्वमिति । अस्तु तर्ह्येकं घटत्वं बाध्यतां तच्च न सङ्गच्छत इत्याह । नैकमिति । तत्र हेतुमाह । समत्वादिति । यदि पार्थिवघटत्वं बाध्यं भवतामपसिद्धान्तः । यदि सुवर्णघटत्वं तच्च न समत्वाद् यथा पार्थिवघटे घटत्वबुद्धिव्यवहारौ एवं सुवर्णघटेऽपि घटत्वबुद्धिव्यवहारयोस्समत्वादित्यर्थः । पार्थिवघटस्य प्रचुरत्वान्मुख्यं घटत्वमिति चेत् भारतव्यतिरिक्ते वर्षान्तरे सुवर्णघटस्यैव प्रचुरत्वात् तत्रैव मुख्यं स्यादिति समस्समाधिः । तथा च पार्थिवत्वघटत्वयोः कुत्रचित् सुवर्णघटादौ परस्परपरिहृतिः कुत्र चिद् मृद्घटादौ योग इति यथोपलम्भं स्वीकारान्न काचिदनुपपत्तिः । तर्हि गोत्वाश्वत्वयोरपि समावेशप्रसङ्ग इति चेन्न उपलम्भस्यैव नियामकत्वात् । इयं खलु मर्य्यादा केषाञ्चित् पारापर्यं सत्त्वघटत्वादीनां केषाञ्चिद्विरोधः गोत्वाश्वत्वादीनां केषांचित् परिहरणं समावेशनञ्च पृथिवीत्वघटत्वादीनां यद्येवमप्यतिप्रसङ्गादिव्यवहारस्तदुपाधावपि तुल्यमिति प्रतिबन्द्या निराचष्टे । उपाधाविति । दृष्टत्वादुपाधौ न दोष इति चेत्तज्जातावपि तुल्यमित्याह । न यथादृष्टभङ्गः क्वचित्स्यादिति । यथोपाधौ दृष्टत्वात् संकरः स्वीक्रियते तथा जातावपि संकरः स्वीकार्य्य इत्यर्थः ॥

इति परापरजातिसमावेशसंभवः ॥ १११ ॥

**मू० जातिः प्राणप्रदात्री गुण इह तदनुप्राणिते**

भेदकः स्यादित्याहुः केऽपि नेत्थं नियतिरु-
भयथाऽप्यर्थदृष्टेर्निशादौ । तेनान्वेष्टव्यभे-
दप्रतिनियतिमता केनचिन्नित्यरूप्यं प्राग्रा
यादृच्छिकीषु प्रमितिषु च यथादर्शनं तद्व्य-
वस्था ॥ ११२ ॥

टी० अथ केचिज्जातिगुणयोरेवं वैषम्यमाहुः या वस्तुनः प्राणप्रदायी प्रथमं प्रतीयत इत्यर्थः सा जातिः । गुणस्तु तदनुप्राणिते वस्तुनि भेदकः—विशेषको धर्म इति पश्चात् प्रतीयत इत्यर्थः । तदेतदनुपपन्नमित्याह । नेत्थन्नियतिरिति । तत्र हेतुमाह । निशादावुभयथाऽप्यर्थदृष्टेरिति । कदाचित् प्रथममेव जातिः प्रतीयते पश्चात्तद्गुणः कदाचित् पुनरन्धकारादौ सामान्यत एव शौक्ल्यादिगुणविशिष्टं वस्तु प्रतीयते पश्चात्तद्विशेषो जातिरिति । तेनान्वेष्टव्यस्य पदार्थस्य पृथिव्यादेः प्रतिनियतिमता केनचिदसाधारणेन धर्मेण गन्धवत्त्वादिना निरूप्यं यत्पृथिवीत्वादिकं तत्सामान्यम् । ततश्च यादृच्छिकीषु प्रमितिषु विशेषविषयासु सामान्यविषयासु च यथादर्शनं पौर्वापर्य्यव्यवस्था भवति तेन गवादिशब्दवाच्येषु प्रवृत्तिनिमित्तत्वेनोपादीयमानं गोत्वादिकं सामान्यमिति भावः ॥

इति स्वरूपनिरूपकादिविमर्शः ॥ ११२ ॥

वैशेषिकोक्तजातिपरिक्लृप्तिप्रक्रियां तन्मतपरिज्ञानाय शिष्याणामनुवदति । भिन्नेष्विति ।

मू० भिन्नेष्वेकावमर्शो न तु निरुपधिकस्तेषु चैकं
विरुद्धं ज्ञानाकारोऽपि बाह्यो न हि भवति
न चासिद्धमारोपणीयम् । तस्माद् गोत्वा-

दिबुद्धिव्यवहृतिविषयः कोऽपि सत्योऽनुवृत्त-
स्तस्य त्यागे ऽनुमादेः क्षतिरिति कण*भुक्-
तन्त्रभक्ता गृणन्ति ॥ ११३ ॥

टी० इत्थं किल जातिं साधयन्ति भिन्नेषु घटादिषु एकाव-मर्शो न निष्कारणकस्तेन तेन सामान्यमङ्गीकार्य्यम् । न च तेषु स्वरूपैक्यमस्ति विरुद्धत्वादित्याह । तेषु चैक्यं विरुद्धमिति । ज्ञाना-कारा एव सामान्यमिति चेद् वाह्यत्वेन प्रतिभासनात् तन्न युज्यत इत्याह । ज्ञानाकारोऽपि बाह्यो न हि भवतीति । वाह्यं समारोपितं सामान्यमिति चेत् तदपि न युज्यत इत्याह । न चासिद्धमारोपणीय-मिति । अन्यत्र सिद्धं ह्यन्यत्रारोप्यम् । सामान्यस्य क्वचिदप्यसिद्धत्वात् आरोपणमपि न युज्यत इति भावः । तस्माद् गोत्वादिबुद्धिव्यवहृ-तिविषयः कोऽपि सत्योऽर्थो गवादिष्वनुवृत्तः, तस्य त्यागेऽनुमानादेः क्षतिः—व्याप्तिग्रहणाभावादनुमानं न स्यात् । आदिशब्देन सङ्केतग्रह-णाभावादागमोऽपि न स्यादिति भावः । कणभुक्तन्त्रभक्ता गृण-न्तीति परपक्षप्रस्थानोपन्यासतां द्योतयति ॥

इति परोक्तजात्यनुवादः ॥ ११३ ॥

अथ सौगता जातिं खण्डयन्तीत्यनूद्य तत्पक्षं प्रतिक्षिपति । मध्य इति ।

मू० मध्ये यद्यस्ति जातिर्मतिविहतमथो नास्ति
भिन्ना भवेत् सा तस्मादन्यत्र वृत्तिर्न च
सकलमतिः क्वापि कृत्स्नांशवृत्त्योः । धर्मि-
ध्वंसे तु धर्मस्थितिरपि न भवेन्नात्र गत्या-

---

* कणभुक् तस्य भक्ता गृणन्तीति पा० ।

दि च स्यादित्याद्यैर्बाह्यजल्पैरनितरगतिका संविदऽवोभणीया ॥ ११४ ॥

टी० इत्थं किल तेषां जातिखण्डनपरिपाटी व्यक्तिद्वयमध्ये जातिर्यद्यस्ति मतिविहतमुपलम्भविरुद्धमित्यर्थः । अथ मध्ये नास्ति भिन्ना सा जातिर्भवेत् । किञ्च कार्त्स्न्येन वा जातिर्वर्तते एकदेशेन वा । आद्ये ऽन्यत्र व्यक्त्यन्तरे वा वृत्तिरेव न स्यात् । अंशेनोभयत्र वर्तते चेत्तत्रतत्रोभयत्रापि सकलमतिर्न स्यात् । कार्त्स्न्येन जातिप्रत्ययो न स्यादित्यर्थः । किञ्च धर्मिरूपव्यक्तिध्वंसे धर्मरूपजातिस्थितिर्न संघटते । ननु पूर्वगोव्यक्तिस्थाया जातेरुत्तरगोव्यक्तौ अद्रव्यत्वेन गमनेन संगतिर्न स्यात् । न च तत्रोत्पत्तिस्सम्भवति नित्यत्वेन जातेरङ्गीकारादित्याद्यैर्बाह्यजल्पैरनितरगतिका स्वारसिकबाधविधुरा जातिसंविदवोभणीयेत्यर्थः । न याति न च तत्रासीदित्याद्युक्तिः प्रत्यक्षविरुद्धत्वाददूषणमिति भावः ॥

इति सौगतोक्तजातिखण्डनपरिहारः ॥ ११४ ॥

इत्थं न्यायविदां जातिसमर्थनप्रकारमुक्त्वा सौगतोक्तमपोहरूपसामान्यं दूषयति । अन्यापोह इति ।

मू० अन्यापोहस्तु गोत्वप्रभृतिरिति तु नेदन्तया तत्प्रतीतेरन्योन्यापोहबुद्ध्या नियतिरिति मिथस्संश्रयस्तत्प्रतीतौ । विद्यादेपक्षसत्त्वाद्विषयसमतया बुद्धिनैयत्यसिद्धेश्शाब्दार्थत्वादपोहो विमतिपदमिति व्याप्तिभङ्गादिदुःस्थः ॥ ११५ ॥

टी० अगोत्वव्यावृत्तिर्गोत्वमनश्वत्वव्यावृत्तिरश्वत्वमिति नेदं युज्यते इदन्तया विधिरूपेणैव सामान्यप्रतीतेः । अन्योन्यापोहबुद्धिप्रतीतौ त्वन्योन्याश्रयप्रसङ्ग इत्याह । अन्योन्येति । गोत्वप्रतीतिसापेक्षमगोत्वमगोत्वप्रतीतिसापेक्षं गोत्वमित्यर्थः । कथन्तर्हि गौरेव गौरिति बुद्धिर्नैयत्यम् इत्थं गोत्वविरुद्धमश्वत्वं विधिरूपमेव गोत्वमाक्षिपति एवं गोव्यतिरिक्तभावत्वमगोत्वमाक्षिपति तत्र पूर्वं न्यूनत्वाद्विषमतया उत्तरं सर्वभाववर्तित्वात् समतया तेन गोत्वविरुद्धधर्मयोगादेव गौरेव गौरिति बुद्धिनियमसिद्धिरित्यर्थः । तेन भावरूपविरुद्धधर्मसिद्धौ व्यवहारनियमार्थमपोहो न कल्प्य इत्यर्थः । ननु सर्वश्शब्दार्थोऽपोहात्मकः शब्दार्थत्वादघटशब्दार्थवदित्यनुमानं व्याप्तिशून्यत्वाद्दुःस्थमित्याह । शब्दार्थत्वादिति । न हि स्वलक्षणशब्दोऽपोहपर इति प्रतिबन्द्यभिप्रायेण परिहारः ॥

इत्यपोहसामान्यवादभङ्गः ॥ ११५ ॥

एवमपोहसामान्यं निरस्यासाधारणस्वधर्मातिरिक्तं वैशेषिकाद्युक्तं सामान्यं निराकरोति । युज्येतेति ।

**सू० युज्येतोपाधितश्चेदनुगतधिषणा तत्र नेष्टान्यक्लृप्तिस्तस्मात् संघातवर्गेष्ववयवरचनाभेदतोऽन्यन्न सिध्येत् । सौसादृश्यात्तु जातिव्यवहृतिनियमस्तेन नातिप्रसक्तिर्नो चेन्मूर्त्तत्वमुख्यैस्त्वदभिमतिनयाद्व्यज्यतां जातिरन्या ॥ ११६ ॥**

टी० अनुवृत्तिप्रत्ययनिर्वाहार्थं खलु सामान्यं साऽनुगतधिषणोपाधितश्चेत्तत्रान्यस्य सामान्यस्य क्लृप्तिर्नेष्टा । तस्मात् संघातवर्गेषु

अवयवरचनाभेदतोऽन्यत् सामान्यन्न सिध्येत्। संघातो ऽवयविद्रव्यं सादृश्याज्जातिव्यवहारे न पुनरतिप्रसक्तिः। सौसादृश्यस्य विवक्षितत्वादित्याह। सौसादृश्यादिति। सौसादृश्यमत्यन्तसादृश्यम्, एवमनङ्गीकारे सर्वत्रापि जातिसिद्धिरित्यतिप्रसङ्गलक्षणं दूषणमाह। नो चेदिति। सौसादृश्यातिरिक्तजातिस्वीकारे गवादिशब्दवन्मूर्तादिशब्देष्वपि मूर्तत्वाद्यभिव्यङ्ग्यजातिस्वीकारः स्यादिति भावः॥

इति संस्थानविशेषातिरिक्तगोत्वादिभङ्गः॥ ११६॥

अस्तु वा परिकल्पिता जातिस्तस्या व्यञ्जकत्वेन परिगृहीतं नोपपद्यत इत्याह। जातेरिति।

**मू० जातेर्यद्व्यञ्जकं ते तदपि यदि मतं जातितस्संगृहीतं साऽपि व्यङ्ग्याऽन्यतः स्यात्तदुपरि च भवेज्जातिसंस्थानमाला। तेनैव व्यञ्जकस्याप्यनुगतिरिति चेत्तर्हि जातिः किमर्था व्यावृत्तानां स्वभावाद्यदि तदनुगतव्यञ्जकत्वं जितस्त्वम्॥ ११७॥**

टी० जातेर्व्यञ्जकं यत्तदपि यदि जातितस्संगृहीतं जात्यन्तरेण परिगृहीतं यदि वा न परिगृहीतम् अपरिगृहीतत्वे तस्यानुवृत्त्यभावात् परिगृहीतत्वमेव वाच्यं, तथा च सापि जातिर्व्यञ्जकान्तरेण व्यङ्ग्या स्यात्। तच्च व्यञ्जकं जातिपरिगृहीतं भवेत् सापि व्यञ्जकान्तरमपेक्षत इति जातिसंस्थानमाला स्यात्। जातितद्व्यञ्जकाऽनवस्था स्यादित्यर्थः। अनवस्थापरिहारार्थं स्वेनैव व्यञ्जकस्य धर्मस्यानुगतिरिति चेत् तर्हि जातिः किमर्था तेनैव स्वतोऽनुगतेन धर्मेण जातिकार्य्यनिर्वाहात्। तर्हि व्यावृत्ता एव धर्मा

अनुगतां जातिं व्यञ्जयतीति चेत् एवन्तर्हि त एव व्यावृत्ता धर्मा अनुगतबुद्धिव्यवहारयोर्निर्वाहका भवन्तु वस्तुस्वाभाव्यात् । तथा च निरर्थिकां जातिं कल्पयँस्त्वं विजितो भवसि । अयमत्र निर्णयः यत्र जातिस्तत्र साक्षात्सामान्यमनुवृत्तव्यवहारहेतुः । यत्र पुनरुपाधिस्तत्र गुणक्रियादिनिष्ठं व्यवहितं सामान्यमनुवृत्तप्रतीतेर्हेतुरिति हि न्यायविद्रहस्यम् । तथा च सति यत्सामान्यं व्यवहितं तदुपाधिरूपगुणक्रियानिष्ठं स्वयमप्रतिपन्नं जातिप्रतिपत्तिहेतुर्न भवति । प्रतिपन्नश्चेत् तत्प्रतिपत्तौ उपाध्यन्तरप्रतिपत्तिरवश्यं भाविनी स चोपाधिर्जातिपरिगृहीतः, सा च जातिरुपाध्यन्तरप्रतिपत्तिमूलस्वप्रतिपत्तिरिति व्यवस्थितैवानवस्थितिः ॥

इति परोक्तजातिव्यञ्जकानुपपत्तिः ॥ ११७ ॥

व्यावृत्तेरिति ।

**मू० व्यावृत्तैर्व्यक्तिवन्न व्यवहृतिनियमस्साध्यता नानुवृत्तौ तद्धर्मस्यानुवृत्तौ मदभिमतमिह स्वीक्रियेतेति चेन्न । केचित्संस्थानभेदाः क्वचन खलु मिथो भान्ति सादृश्यरूपास्तस्मादन्योन्यजैकस्मृतिविषयतया तत्तदेकावमर्शः ॥ ११८ ॥**

टी० अत्र कश्चिच्चोदयति । किं व्यावृत्तैरनुवृत्तैर्वा गवाद्यनुवृत्तव्यवहारनियमः । न तावद्व्यावृत्तैः, व्यक्तिवत्, न हि व्यक्तयोऽनुवृत्तव्यवहारं कुर्वन्ति । एवं व्यावृत्ता धर्मा नानुवृत्तव्यवहारनियमं कर्तुमर्हन्ति । अनुवृत्तैर्धर्मैर्व्यवहारनियमश्चेत् तदानीं साध्यत्वमेव नास्ति अनुवृत्तनियामकधर्मस्वीकारात् । तदिदमाह । साध्यता नानुवृत्ताविति । ननु व्यावृत्ता एव धर्माः स्वयमनुवृत्त-

धर्मान्तरेण परिगृहीता गवादिव्यवहारमनुवृत्तं निर्वहन्तु तन्न प्रथममेव मदभिमतोऽनुवृत्तधर्मः स्वीक्रियेत मध्ये किमेभिर्व्यावृत्तैः परिकल्पितैरिति चेतन्न केचिद्धीसंस्थानभेदाः क्वचन खलु मिथस्सादृश्यरूपा भान्ति यैर्भवदीयं सामान्यमभिव्यज्यते त एव सैसादृश्यव्यवहारविषयभूतास्सामान्यव्यवहारं निर्वहन्तु । तस्मात्तेषां सर्वेषामन्योन्यसापेक्षैकस्मृतिविषयतया तत्तदेकावमर्शस्तत्तज्जातीयत्वावमर्श इत्यर्थः । अन्यथा भवतामपि जात्यभिव्यञ्जकोपाधिरूपसैसादृश्यनिरूपणाय-स्तेजातिरप्युत्सीदेदिति हृदयम् ॥

इति संस्थानजात्यनुपपत्तिपरिहारः ॥ ११८ ॥

ननु कथं व्यावृत्तानां संस्थानानां नियतसादृश्यरूपत्वमित्यादिचोद्यमनूद्य परिहरति । सादृश्येति ।

**मू० सादृश्यस्यानुवृत्तौ भवति परमता जातिरेवाऽन्यथा चेत्तन्मूला नानुवृत्तव्यवहृतिरुचितेत्येतदप्यात्तसारम् । एकैकस्यन्तु तैस्तैर्निरुपधिनियतैस्सप्रतिद्वन्द्विकं स्याद्धर्माभावप्रतीतिप्रभृतिनियमवद्वस्त्यजेयंव्यवस्था॥११९॥**

टी० इयमत्र चोद्यप्रक्रिया किं सादृश्यमनुवृत्तं भवति तदा पराभिप्रेता सैव जातिः स्यात्, अन्यथा ऽननुवृत्तञ्चेत् तन्मूलाननुवृत्तसादृश्यमाला अनुवृत्तव्यवहृतिर्नोचिता स्यात् । एतन्निराकरोति । एतदिति । तत्कथमित्यत्राह । एकैकस्यमिति । यद्यप्येकैकस्थं सास्नादिधर्मस्वरूपं तथाऽपि तन्निरुपधिनियतैः स्वभावतोनियतैस्तैस्तैस्सास्नादिभिरन्यनिष्ठैस्सप्रतिद्वन्द्विकं स्यात् । इदमेवान्योन्यसप्रतिद्वन्द्विकरूपं सादृश्यशब्दवाच्यमभिधीयते । ननु कथं नियामकाभावे तेनैव धर्मेण

स धर्मस्सप्रतिद्वन्द्विक इति नियमः स्यात् स्वभावादेवेति ब्रूमः । स्वभावो हि नाम प्रामाणिकं स्वरूपमेव । यद्यथा प्रतीयते तत्तथैव स्वीक्रियत इति हि न्यायसंप्रदायः । तथा च सास्नादीनामेवान्योन्यसप्रतिद्वन्द्विकत्वं, न पुनः केसरादीनां, केसरादीनां चाश्वादिषु अन्योन्यप्रतिद्वन्द्विकत्वमुपलब्धिनियमादेव स्वीकार्यम् । इत्थमुपलब्धिनियमानङ्गीकारेऽतिप्रसङ्गः, भवद्भिरप्ययं नियमोऽङ्गीकार्य्य इत्याह । धर्माभावप्रतीतिप्रभृतिनियमवद्वस्त्यजेयं व्यवस्थेति । अग्नेरेवौष्ण्यं जलस्यैव शैत्यमित्यादिकमुपलम्भनियममन्तरेण नोपाध्यन्तरमपेक्षते, एवं घटाभावोऽपि घटप्रतियोगिक एव पटाभावस्तु पटप्रतियोगिक इत्युपलम्भादेव निषेध्यनिषेधकनियमः स्वीक्रियते । किञ्च घटव्यक्तीनामेव घटत्वजात्यभिव्यञ्जकत्वं न पुनर्घटपटव्यक्तीनां, नापि पटव्यक्तीनामिति नियतमेव दृष्टम्, एवमेकैकस्य सास्नादिधर्माः परस्परसप्रतिद्वन्द्विभावनियमेन सौसादृश्यशब्दार्थतां भजन्त इति निरवद्यम् ॥

इति व्यावृत्तसंस्थानानां नियतसंस्थानसादृश्यरूपत्वम् ॥ ११९॥

अथ केचित् शक्तिसंख्यासादृश्यादिकं गुणादेर्विभक्तमाहुः तन्मतमनुद्य दूषयति । सादृश्यमिति ।

**मू० सादृश्यं शक्तिसंख्याप्रभृति च कतिचिद्भिन्नमूचुर्गुणादेः स्यादत्रातिप्रसक्तिः प्रतिगुणमगुणीकारलिङ्गोपलब्धेः । साधर्म्यात् संग्रहश्चेत् सममिदमुभयोर्येन केनापि यद्वा किं दन्तादन्ति कृत्वा फलमिह बलिभुग्दन्तचिन्तान्तरेऽस्मिन् ॥ १२० ॥**

टी० तत्र हेतुमाह । स्यादत्रातिप्रसक्तिरिति । अतिप्रसक्तिं विवृणोति । प्रतिगुणमिति । यत्किञ्चिद्वैधर्म्यात् सादृश्यादीनां गुणादेर्विभागाङ्गीकारे सर्वेषामपि गुणानां प्रतिगुणमाकारभेदोपलब्धेर्गुणव्यतिरेककल्पनाप्रसङ्ग इत्यर्थः । उक्तप्रतिबन्द्याः परिहारमाशङ्कते । साधर्म्यादिति । गुणत्वनियामकसाधर्म्याद् गुणत्वेन संग्रहश्चेत्तदन्यत्रापि सममित्याह । सममिदमुभयोरिति । येन केनापीत्यनादरः भवत्कल्पितेनैव धर्मेणान्यत्रापि गुणत्वं वक्तुं शक्यत इत्यर्थः । अथ वा सादृश्यादीनां पृथक्त्वापृथक्त्वचिन्तनं जीवपरमात्मयाथात्म्यज्ञानपरेष्वप्यन्तसिद्धान्ते काकदन्तपरीक्षावदऽनपेक्षणीयमित्याह । यद्वेति ॥

इति सादृश्यादिपदार्थान्तरत्वभङ्गः ॥ १२० ॥

अत्र कश्चिच्चोदयति । गन्धेति ।

**मू० गन्धादौ सन्निवेशो न हि भवति न च द्रव्यभेदे निरंशे तस्माज्जात्यानुवृत्तव्यवहृतिरिति चेदुक्ततुल्योत्तरं तत् । तत्तद्वस्तुस्वभावाद् घटत इह मिथस्सप्रतिद्वन्द्विकत्वं तज्जात्याधारतादेरपि तव नियतिस्तत्र न ह्यन्यतः स्यात् ॥ १२१ ॥**

टी० सौसादृश्यं जातिरिति भवद्भिरुक्तम् स पुनस्संस्थानभेद इति चाभ्यधायि, तन्नोपपद्यते गन्धादौ संस्थानभेदाभावात् । न चात्मादौ निरंशे संस्थानभेदोऽस्ति अवयवरचनाविशेषो हि संस्थानं, तस्माज्जात्यैवानुवृत्तव्यवहारस्सर्वत्र संघटत इति इति चोद्यमनूद्योत्तरं वदति । उक्ततुल्योत्तरं तदिति । कथमुक्ततुल्योत्तरत्वमित्यत्राह । तत्तदिति । तत्तद्वस्तुस्वभावनियम एव सर्वत्र नियामकः ।

तेन स्वभावतः सप्रतिद्वन्द्विकत्वेन प्रमाणसिद्धं तत्तद्वस्त्वेव तत्तदनुवृत्तव्यवहारहेतुभावमनुभवति । एवं वस्तुस्वभावनियमानङ्गीकारे तत्तज्जात्याधारभावो भवन्मते तेषामेव गुणानां कथं स्यादिति चोद्ये स्वभावनियम एव भवतापि वाच्यः । अन्यतश्चेदनवस्थादिदोषदुष्टत्वात् । तेन सर्वसंस्थानेषु वस्तुषु संस्थानभेद एव व्यवहारनियामको गुणादिषु तत्तदसाधारणलक्षणमेव तत्तद्व्यवहारनियामकं तच्च भवतापि स्वीक्रियते, अन्यथा तत्तल्लक्षणाभावे तत्तज्जातिनियमो न स्यात्, तथा च तत्तल्लक्षणं भवता यथा कल्प्यते तथैवास्माभिरप्यङ्गीक्रियत इति न कश्चिद्दोषः ॥

इति निरवयवेष्वनुवृत्तव्यवहारनिर्वाहः ॥ १२१ ॥

एवं सामान्येन सामान्यं विचार्य्य सत्तासामान्यं विशेषतो निरूपयति । सत्तेति ।

**मू० सत्तासामान्यमेके त्रिषु परिजगृहुः केऽपि जातावपीदं प्रख्यादीनां समत्वात्कथय न किमिदं सर्वनिष्ठं गृहीतम् । किन्तु प्रामाणिकत्वप्रभृति समधिकं सत्त्वमन्यन्न दृष्टं तद् ब्रह्मेत्याश्रितं यैर्ध्रुवमपलपितं तत्तु तैर्धर्मतोक्तेः ॥ १२२ ॥**

टी० द्रव्यगुणकर्मसु सत्तेति प्रसिद्धमिदम् । अपरे पुनरेवं मन्यन्ते जातावपीति । तत्र हेतुमाह । प्रख्यादीनामिति । प्रतीतिव्यवहारौ हि सर्वत्र जातिकल्पने प्रमाणं जातावपि सत्प्रतीतिस्समाना चेत् किमिति तत्रापि सत्ता न कल्प्यत इति भावः । तदिदमाह । न किमिदं सर्वनिष्ठं गृहीतमिति । सत्त्वं सर्वनिष्ठं किन्न गृह्यत इत्यर्थः ।

गोत्वं सदश्वत्वं सदिति हि ग्रहणप्रवृत्तिः। किञ्च परमर्यादया सत्त्वमन्यदङ्गीकृत्योक्तम्। तत्त्वतो निरूपणे प्रामाणिकत्वाद्यतिरेकेण सत्त्वमन्यन्नास्ति तच्च प्रामाणिकत्वादिकं प्रामाणिकमेव स्वपरनिर्वाहकसमाधेरात्माश्रयादिदोषाप्रसङ्गात्। तस्मात्सत्त्वेऽपि न कश्चिद्दोषः, सत्त्वमस्तीत्यौपाधिकधर्माणां यावदुपाधिवृत्तेस्सर्वन्यायवित्सम्मतत्वात्। अथाद्वैतवादिनस्सत्त्वं ब्रह्मैवेति सङ्गिरन्ते। तदपरामर्शवचनमेव सत्त्वं हि धर्म एव न पुनर्धर्मि। तथा च ब्रह्मणोऽपि धर्मत्वाङ्गीकारे धर्म्यन्तरं कल्प्यम्। एवञ्च सति वस्त्वन्तरारोपितत्वेन ब्रह्मणोऽपि मिथ्यात्वं प्रसज्यत इति भावः। ध्रुवमपलपितं तनु तैरिति। तैर्मृषावादिभिर्ब्रह्मैवापलपितं सत्त्वस्य ब्रह्मत्वोक्तेः॥

इति सत्ताजातिनिरूपणम्॥ १२२॥

एवं सामान्यं निरूप्य वैशेषिकोक्तं विशेषमनर्थकत्वेन दूषयति। यज्जातीयमिति।

**मू० यज्जातीयं यदा यद्यदवधिगुणकं यत्र न ह्यन्यदीदृग् दृष्टैरित्थं विशेषैर्जगति विषमतां वक्ति वैशेषिकोऽपि। नित्येष्वत्यन्ततुल्येष्वपि नियतदशाभेदयोगोऽस्ति शास्त्रात् प्राच्योपाध्यादयो वा विदुरतिभिदुरान् योगिवर्य्यादयस्तान्॥ १२३॥**

टी० लोके हि देशकालादिविशेषाद्वस्तूनां विशेषो दृश्यते यज्जातीयमिति जातिः, यदेति कालः, यदिति स्वाभाविको वस्तुविशेषः, यदवधिगुणकमिति गुणविशेषः, यत्रेति देशविशेषः, यद्वस्त्वेतादृशगुणविशिष्टं तद्व्यतिरिक्तवस्तु न हीदृक्, अन्यद्वस्त्वन्यदेशकाला-

दिविशिष्टम् अन्यच्चान्यदेशकालादिविशिष्टमिति परस्परविभागः । इत्थं दृष्टैरेव विशेषैर्जगति वैशेषिकोऽपि विषमतां वक्ति । तथा च नित्येष्वप्यत्यन्ततुल्येष्वपि नियतावस्थायोगश्शास्त्रप्रमाणकानामध्यात्मविदामस्ति ईश्वरपरतन्त्रस्य जगत्सृष्ट्यादिकृत्यस्य नित्यानुवृत्तत्वाद् मुक्तानामपि जक्षत्क्रीडन् रममाण इत्यादिव्यापारपारम्पर्यस्यानुवृत्तेः । किञ्चामुक्तदशाभाविभिः प्राच्यैरेव धर्मविशेषैरुपलक्षणतयाऽवस्थितैर्मुक्तानामपि भेदो ज्ञातुं शक्यते । तदिदमाह । प्राच्योपाध्यादयो वेति । अस्तूपाधिभेदः कैरयं भेदो ज्ञायत इत्याशङ्क्याह । विदुरतिभिदुरान् योगिवर्य्यादयस्तानिति । तानुपाधीन् परस्परभिदुरान् योगिप्र*भृतयो विदुः जानन्तीति न दृष्टत्वानुपपत्तिः ॥ १२३ ॥

मुक्ता इति ।

मू० मुक्तास्त्वत्पदकम्प्रा न हि निगम†विदां ताद्दृशाश्वादयो वा येषामन्योन्यभेदी गजतुरगनयात्कल्प्यते ऽन्यो विशेषः । जात्यैक्याद्वः पृथक्त्वैरिह न यदि फलं स्याद्विशेषैः कथं तत्तेषामप्यस्त्युपाधिस्सम इति न भिदास्त्यत्र संरम्भमात्रात् ॥ १२४ ॥

टी० किञ्च समानजातीयत्वादिविशेषणविशिष्टाः परमाणवो मुक्तात्मानश्च परस्परव्यावर्त्तकधर्मवन्तः द्रव्यत्वाद् घटादिवदिति हि विशेषं साधयन्ति वैशेषिकादयः तत्तद्वस्तुनिष्ठैरेव पृथक्त्वैस्सिद्धसाधनम् । ननु पृथक्त्वानि पृथक्त्वजात्या क्रोडीकृतत्वेन परस्परमैक्य-

* अत्रत्यप्रभृतिपदेन नित्यमुक्ता मुक्ताश्च संजिघृक्ष्यन्ते ।
† निगमदृशामिति पा० ।

मापन्नानि इतरेतरव्यावर्तनं वस्तूनां न कुर्वन्तीति चेत् तदिदमनुवदति। जात्यैक्यादिति। तदेतत्प्रतिबन्द्या दूषयति। स्याद्विशेषैः कथं तदिति। पृथक्त्वैर्व्यावर्तनाभावे वस्तूनां विशेषैरपि व्यावर्तनं न स्यात् तेषामप्येकोपाधिक्रोडीकृतत्वेन व्यावर्तनशक्तेर्भग्नत्वात् तदिदमाह। तेषामिति। विशेषस्य विशेषलक्षणरूपैकोपाधिक्रोडीकृतत्वेऽपि विशेषकत्वं यदि न भज्येत पृथक्त्वस्यापि पृथक्त्वजातिक्रोडीकृतत्वेऽपि विशेषकत्वं न भ्रश्येदिति प्रतिबन्दिपर्यवसानम् ॥ १२४ ॥

किञ्च कल्प्यमानस्य विशेषस्य न कुत्राप्युपयोग इत्याह। नास्मदिति।

**मू० नास्मद्दृश्या विशेषाः प्रणिहितमनसां तद्धियां क्वोपयोगस्तत्तद्वस्तुप्रकाशस्सुलभ इह पुनर्भिन्नधीरस्तु मा वा। विश्वं* स्रष्टुर्विशिष्टप्रमितिमिह न ते कुर्वते नित्यसिद्धां तस्मात्तत्सिद्ध्यसिद्ध्योर्न फलमनुमया नागमोऽप्यत्र तादृक् ॥ १२५ ॥**

टी० न तावदस्माकं विशेषा उपकुर्वते तेषामस्मद्दृश्यत्वाभावात्। प्रणिहितमनसामुपकुर्वत इति चेत् तेषामपि क्वोपयोगः। न क्वाप्युपयोग इत्यर्थः। तदेव विवृणोति। तत्तदिति। योगिनां सर्वज्ञत्वेन सर्ववस्तुप्रकाशो ऽस्त्येव। तथा च सति तेषु पदार्थेषु भिन्नधीरस्तु मा वा। अयं भावः तेषां पदार्थानामन्योन्याभावविशिष्टत्वेन भवत्कल्पितेनैव भिन्नधीसद्भावेऽपि किं विशेषकल्पनेन। अथ-

* स्रष्टृशब्दस्तृन् प्रत्ययान्तो न तृच्प्रत्ययान्तस्तेन न लोकेति पाणिनीयानुशासनेन षष्ठीनिषेधादौत्सर्गिकी द्वितीया अन्यथा तु विश्वस्य स्रष्टुरिति स्यादिति ध्येयम्

वा भवत्कल्पितैरेव पृथक्त्वैर्भेदधीरस्तु । अतो विशेषकल्पनं प्रणिहितमनसां कुचोपयुज्यते । मा वेत्यनादरव्यवहारो विशेषतिरस्कारायैव न पुनः पृथक्त्वनिमित्तभेदधीतिरस्काराय । तर्हि विश्व*स्रष्टुरीश्वरस्य विशेषैस्तत्तद्वस्तुषु विशिष्टधीरित्याशङ्क्य तदपि न युज्यत इत्याह । विश्वं स्रष्टुरिति । ईश्वरस्य तत्तद्विशिष्टबुद्धेर्नित्यत्वेन न तामपि बुद्धिं विशेषाः कुर्वत इत्यर्थः । तस्मादनुमानेन विशेषसिद्ध्यसिद्ध्योर्न किञ्चित्फलम् । मा भूदनुमानम् आगमो ऽस्त्विति चेतन्नेत्याह । नेति । न हि विशेषसिद्धौ कश्चिदागमो दृश्यते, यदि दृश्यते स पुनर्जातिगुणादिभेदमेव दर्शयतीति न भवदभिमतविशेषसिद्धौ मानमित्याह । तादृगिति ॥

इति वैशेषिकक्लृप्तविशेषभङ्गः ॥ १२५ ॥

एवं विशेषं दूषयित्वा समवायमपि दूषयति । बन्धमिति ।

**मू० बन्धं नाध्यक्षयामस्समधिकमपृथक्सिद्धयोस्तत्स्वरूपात् कल्प्ये तस्यातिरेके तदुपरि च तथेत्यप्रकम्प्याऽनवस्था । ताभ्यामेष स्वभावाद् घटित इति कृता भक्तिरस्त्वेतयोस्ते नोचेज् ज्ञानादिकानां विषयविषयितादेरापतेदन्यदेवम् ॥ १२६ ॥**

टी० अपृथक्सिद्धयोस्समवायाख्यं स्वरूपादधिकं कल्प्यमानं संबधं न प्रत्यक्षयामः । अतः प्रत्यक्षात्समवायसिद्धिरिति दूरापास्तम् विशिष्टव्यवहारानुपपत्त्या समवायस्य स्वरूपाद् व्यतिरेके कल्प्ये समवायविशिष्टव्यवहारानुपपत्त्या पुनरपि समवायान्तरं कल्प्यमित्यन-

* विश्वस्रष्टुरिति तृजन्तम् ।

वस्था स्यात् । अनवस्थापरिहारार्थं ताभ्यां गुणगुण्यादिभ्यामेव समवायः स्वभावाद् घटत इति यदि भक्तिर्भवता क्रियते, कृता सा भक्तिर्गुणगुणिनोरेवास्तु । अयमर्थः गुणगुणिनौ अवयवावयविनौ जातिव्यक्ती परस्परं स्वभावादेव सम्बद्ध्येते इति तदिदमाह । ताभ्यामित्यादिना त इत्यन्तेन । नो चेत् एवमनङ्गीकारे ज्ञानार्थयोरपि विषयविषयिभावादिकं स्वभावातिरेकेण समवायवदन्यदेव सम्बन्धान्तरं स्यात् तदिदमाह । आपतेदन्यदेवेति ॥ १२६ ॥

किञ्च संबन्धे गुणगुण्यादिसर्वपदार्थसाधारणे सति गोरेव गोत्वेन सम्बन्धः, अश्वस्यैवाश्वत्वेन सम्बन्ध इति नियमो न स्यात्, अपि तु गुणजात्यादिसङ्करः स्यात् तदिदमाह । सम्बन्ध इति ।

**मू० सम्बन्धे सर्वतुल्ये प्रसजति गुणजात्यादिसङ्कीर्णभावस्तत्तद्द्वन्द्वस्वभावादनियतिशमने निष्फलाऽन्यस्य क्लृप्तिः । त्यक्ते तत्तद्विशेषे स्वयमुभयसमे चात्र सम्बन्धरूपे नाना सम्बन्धपक्षे ऽप्ययमधिकरणाधेयभेदः कथं स्यात् ॥ १२७ ॥**

टी० गोत्वमेव गवा संबद्ध्यते पृथिव्यैव गन्ध इति तत्तन्नियोगिद्वन्द्ववस्तुद्वयस्वभावादनियतिश्शाम्यतीत्याशङ्क्य परिहरति । तत्तदिति । निष्फलाऽन्यस्य क्लृप्तिः—गोत्वादितत्तद्वस्तुस्वभावादेवान्योन्यनियमे मध्ये समवायक्लृप्तिर्निष्फलेत्यर्थः । तत्र च तत्तद्विशेषे परित्यक्ते तत्तद्वस्तुगतस्वभावविशेषे परित्यक्ते संबन्धस्वरूपे अधिकरणाधिकर्त्तव्ययोर्द्वयोरपि समाने सति इदमधिकरणमिदमाधेयमिति भेदः कथं स्यादित्याह । त्यक्त इति । अयं भावः संब-

ज्ञाततानुमेयस्य ज्ञानस्य कथं तदभावे सिद्धिरिति चेत् । न क्षणिकात्मविशेषगुणत्वेन तस्य सुखदुःखादिवन्मानसप्रत्यक्षतासिद्धेः । तर्हि तद्वदेवानुभुत्सितग्राह्यत्वेन विषयान्तरसञ्चारो न स्यादिति चेत् । न निश्वासप्रश्वासहेतुभूतप्रयत्नेनानैका-

---

णात् प्रत्यक्षैव ज्ञाततेत्याशङ्क्याह । तद्वैशिष्ट्येति । ज्ञानविशिष्टत्वेनैवार्थस्य प्रकाशमानत्वादधिके ज्ञातताख्पाधिकार्थे प्रत्यक्षानुभवोऽपि न प्रमाणमित्यर्थः ।

ननु माभूदध्यक्षमनुमानं वा तथापि ज्ञानसिद्ध्यन्यथानुपपत्तिरूपयार्थापत्त्या ज्ञाततासिद्धिरिति शङ्कते । ज्ञाततेति । ज्ञातता क्रियाजन्या फलत्वात् ग्रामप्राप्तिवत् सैव क्रिया ज्ञानमिति ज्ञानसिद्धिः । अन्यथा तदेकसाध्यस्य तदभावे कथं सिद्धिरित्यर्थः । अर्थापत्तिमन्यथोपपत्त्या दूषयति । नेति । ज्ञानं मानसप्रत्यक्षं क्षणिकात्मविशेषगुणत्वात् सुखादिवदिति प्रत्यक्षत्वसिद्धावप्यनुमेयत्वे सुखादेरपि तथात्वप्रसङ्ग इत्यर्थः । क्षणिकात्मविशेषपदैस्त्रिभिः क्रमाद्धर्मादेः शब्दस्यात्मगतद्वित्वादेश्च व्युदासः । गुणग्रहणं स्फुटार्थम् । गुणव्यतिरेकेण क्षणिकविशेषाणामात्मन्यभावात् सामान्यविशेषान्त्यविशेषयोश्च क्षणिकपदेनैव निवृत्तेः । उक्तानुमानस्य प्रतिकूलतर्कपराहतिमाशङ्कते । तर्हीति । तद्वदेवेति । तेनैव हेतुना सुखादिवदेवेत्यर्थः । यदि ज्ञानमुक्तहेतुना सुखादिवन्मानसप्रत्यक्षं स्यात् तर्हि तद्वदेवानुभुत्सितग्राह्यमपि स्यात् । तथा च ज्ञानैकनियनसत्ताकत्वात् पूर्वपूर्वज्ञानग्राहकोत्तरोत्तरज्ञानसन्तानाविच्छेदे विषयान्तरोपलब्धिर्न स्यादित्यर्थः । नैष दोषः । जीवनपूर्वकप्रयत्ने हेतोर्व्यभिचारादिति परिहरति । नेति । तस्या-

न्तिकत्वात् । तस्याप्यबुभुत्सितग्राह्यत्वेन विषयान्तरसञ्चारानभ्युपगमे सुषुप्तिमरणमूर्च्छाविषयान्तरसञ्चारा न स्युरिति दुस्तरं व्यसनमिति कृतं प्रसक्त्यानुप्रसक्त्येति ॥ ४ ॥ ५ ॥ ऽऽ ॥

---

पि पक्षकोटिनिविष्टत्वे ऽनिष्टमाह । तस्येति । जीवनपूर्वकप्रयत्नस्याबुभुत्सितग्राह्यत्वे सुषुप्तावपि तत्सद्भावात् तज्ज्ञानानुवृत्तौ सुषुप्तिरेव न स्यात् एवमन्तिमादिश्वासहेतुप्रयत्नज्ञानेन मरणमूर्च्छनयोर्निवृत्तिः स्यात् यावज्जीवं सतः प्रयत्नसन्तानस्यैवाजस्रोपलम्भाद् विषयान्तरोपलम्भस्याप्यनवकाश एवेत्यर्थः । दुष्परिहारश्चायमनिष्टप्रसङ्ग इति सोपहासमाह । दुस्तरमिति । ननु माभूद् ज्ञानमबुभुत्सितग्राह्यं तथापि कथं प्रत्यक्षं न तावत् केवलनिर्विकल्पकवेद्यं विकल्पाभावे तदेकोन्नेयनिर्विकल्पकसद्भावे प्रमाणाभावात् न च केवलविकल्पवेद्यं निर्विकल्पकं विना तदनुत्पत्तेः नापि तत्पूर्वकविकल्पवेद्यं पूर्वं निर्विकल्पकगृहीतस्य तस्य तेनैव ग्रस्यमानस्याविकल्पमनवस्थानादित्याशङ्क्यान्त्यपक्ष एव सिद्धान्तः तत्र निर्विकल्पकगृहीतज्ञानव्यक्तिनाशे ऽपि तन्निष्ठज्ञानत्वसामान्यविशिष्टतया तद्ग्राहकनिर्विकल्पकसहकृतेन मनसा तत्समानविषयं व्यक्त्यन्तरं प्रथमत एव विकल्प्यत इत्यादि सर्वमुदयनादिग्रन्थेषु क्षुण्णमेवेत्यलं प्रासङ्गिकप्रमेयोपन्यासव्यसनेनेत्याह । इति कृतमिति । अयमितिशब्दः प्रकारवचनः । प्रमेयव्याप्यमित्यादिसङ्ग्रहोक्तं लक्षणद्वयमेकदेशिमतत्वादनतिप्रसिद्धत्वादनतिभेदाच्चोपेक्ष्य प्रमाणसामान्यलक्षणप्रकरणं समापयति । इतीति ॥ ४ ॥ ६ ॥ ऽऽ ॥

एवं प्रमाणसामान्यं लक्षयित्वा तद्विशेषान् लक्षयिष्यन् विभागेनोद्दिशति ।

**प्रत्यक्षमनुमानं स्यादुपमानं[१] तथागमः ॥ ६ ॥**
**प्रमाणं प्रविभज्यैवमक्षपादेन लक्षितम् ।**

एतानीयन्त्येव प्रमाणानि नान्यानि नाधिकानि न न्यूनानि चेति । न्यूनाधिकसङ्ख्यासङ्ख्येयान्तरव्यवच्छेदो विभागोद्देशस्य प्रयोजनम् । वादिप्रसिद्धितारतम्यमनादृत्य सौत्रक्रमानुरोधेनोद्दिष्टानीति[२] । तदुक्तम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥ ६ ॥ ऽऽ ॥

ननु सामान्यलक्षणानन्तरं विशेषलक्षणप्रस्तावादकाण्डे प्रत्यक्षादिपरिसंख्यानमुत्तरश्लोके न सङ्गच्छत इत्याशङ्क्य सङ्गमयन्नवतारयति । एवमिति । अनुद्दिष्टस्य लक्षणायोगादिदानीं विशेषोद्देशः सङ्गच्छत एवेत्यर्थः ।

अक्षपादग्रहणं मतान्तरेषु नैवमिति सूचनार्थम् तदुद्देशस्य प्रयोजनं वाच्यमित्यपेक्षायामाह ।

एतानीति । परिगणितान्येवेत्यर्थः । इयन्त्येवेति । चत्वार्येवेत्यर्थः । उभयत्र क्रमाद् व्यावर्त्यमाह । नेत्यादि । ननु बह्वादृताच्छब्दादुपमानस्य प्रथमोद्देशे को हेतुरत आह । वादीति । तारतम्यं क्रमः । किं तत् सूत्रं तदाह । प्रत्यक्षेत्यादि । ननु सूत्रे ऽप्येवमुद्देशे को हेतुरिति चेत् । उच्यते । तत्र सर्वप्रमाणोपजीव्यत्वात् प्रत्यक्षस्य प्राथम्यं तदितरप्रमाणोपजीव्यत्वसाम्यात् प्रत्यक्षानन्तर्यमनुमानस्य पृथक् प्रामाण्यदार्ढ्यसूचनार्थमुपमानस्य शब्दात् प्राथम्यं परिशेषाच्छब्दस्यान्ते निवेश इति ॥ ६ ॥ ऽऽ ॥

(१) प्रत्यक्षमनुमानाख्यमुपमानं—पा॰ A D. पु॰ ।
(२) उद्दिष्टवानिति—पा॰ B पु॰ ।

अक्षपादग्रहणेन सूचितं मतान्तरेषु न्यूनाधिकसङ्ख्याकप्रमाणाङ्गीकारं विवृणोति ।

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ॥ ७ ॥
अनुमानं च तच्चाथ साङ्ख्याः शाब्दं च ते अपि ।
न्यायैकदेशिनोऽप्येवमुपमानं च केचन ॥ ८ ॥
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ।
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ॥९॥
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ।

अर्थापत्त्यादीनामनुमानादावन्तर्भावं(१) वक्ष्याम इति उद्देशक्रमानुरोधेन प्रत्यक्षं लक्षयति ।

---

नन्वग्रिमश्लोकेषु मतान्तरोपन्यासस्य कः प्रसङ्ग इत्याशङ्क्याक्षपादपदेनाकाङ्क्षोत्थापनादित्याह । अक्षपादेति ।

न्यायैकदेशिनो भूषणीयाः केचन न्यायैकदेशिनः स्वयमित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ ऽऽ ॥

नन्वर्थापत्त्यादीनामप्रामाण्यमन्तर्भावो वा वक्तव्यः अन्यथा चतुष्ट्वानिर्वाहात् तदिदानीमपरोक्षेत्यादिना विशेषलक्षणोक्तिरयुक्तेत्याशङ्क्याह । अर्थापत्त्यादीनामिति । प्रमाकरणत्वान्नाप्रामाण्यं तावदेषामन्तर्भावस्तु तल्लक्षणयोगनिबन्धनस्तज्ज्ञानापेक्ष इति विशेषलक्षणानन्तरभावी न तत्प्रवृत्तिं प्रतिबध्नातीत्यर्थः । इतीति मत्वेति शेषः । तत्र प्रत्यक्षलक्षणस्य प्राथम्ये हेतुमाह । उद्देशेति । उद्देशो तु सर्वप्रमाणोपजीव्यत्वं हेतुरित्युक्तम् ।

---

(१) अनुमानाद्यन्तर्भावं-पा॰ पु॰ ।

## अपरोक्षप्रमाव्याप्तं प्रत्यक्षम् ।

अपरोक्षत्वं(१) साक्षात्त्वम् तच्च लैङ्गिकादिज्ञानव्यावृत्त ऐन्द्रियकज्ञानानुगतः कश्चिद् ज्ञानत्वावान्तरजातिभेद इत्यग्रे दर्शयिष्यति(२) । अपरोक्षप्रमाव्याप्तं

---

अपरोक्षेत्यनेन लैङ्गिकादिव्युदासः । गतमन्यत् । अत्राविघ्नमब्राह्मण इतिवन्नञस्तदभावतदन्यवृत्तित्वे प्रमासामानाधिकरण्यायोगादधर्मवत् तद्विरुद्धवृत्तित्वमित्याशयेनाह । अपरोक्षत्वमिति । तच्च न भूतत्वादिवदौपाधिकं सामान्यं किं तु मुख्यमेवेत्याह । तच्चेति । अत्राद्यविशेषणेन ज्ञानत्वानुभवत्वादेर्व्युदासः । द्वितीयेन स्मृतित्वस्य । तत्रापि तद्वृत्तिरित्युक्ते चाक्षुषत्वादिधर्मेष्वतिव्याप्तिः स्यादत उक्तम् अनुगत इति । तद्व्यावृत्तत्वानधिकरणमित्यर्थः । जातिग्रहणाद् व्यञ्जकधर्मस्यैन्द्रियकत्वस्य निवृत्तिः । ज्ञानत्वावान्तरेति स्फुटार्थम् । सत्तागुणत्वयोश्च प्रथमविशेषणेनैव पलायनात् । एतच्च लौकिकप्रत्यक्षाभिप्रायमीश्वरज्ञानाव्याप्तेः तेन लैङ्गिकादिव्यावृत्तमिन्द्रियजन्याजन्यज्ञानव्यावृत्तत्वानधिकरणसामान्यं साक्षात्त्वमिति योज्यम् । अजन्यज्ञानमीश्वरस्येति न तत्राव्याप्तिः । अग्र इति । प्रमेयेष्वक्षलक्षणप्रसङ्गादिन्द्रियं तच्च साक्षात्त्वं जातिभेद इति स्थितिरिति(३) वक्ष्यतीत्यर्थः । प्रसिद्ध्यनुरोधेन प्रमाकरण-

---

(१) आपरोक्ष्यं–पा· B पु· ।

(२) निवेदयिष्यति–पा· B पु· ।

(३) शरीरयोगे सत्येव साक्षात्त्वमितिसाधनम् ।
इन्द्रियं तच्च साक्षात्त्वं जाति भेद इति स्थितिः ॥
इति E पुस्तके टिप्पण्याम् ।

प्रत्यक्षमिति वचनमीश्वरस्यापि यथा प्रत्यक्षता स्यादिति । यथाहुः ।

तन्मे प्रमाणं शिव इति ।

---

मिति वक्तव्ये प्रमाव्याप्तमित्युक्तेः प्रयोजनमाह । अपरोक्षेति । अलौकिकप्रत्यक्षस्यापि संग्रहार्थमित्यर्थः ।

न चेदमीश्वरप्रामाण्यमसाम्प्रदायिकं न्यायाचार्यैस्तथासमर्थनादित्याह । यथाहुरिति । न्यायकुसुमाञ्जलावीश्वरप्रामाण्यसाधनं चतुर्थस्तवकार्थः । तत्रेश्वरस्य कथं प्रामाण्यं कुत्र वा प्रमाणेऽन्तर्भाव इत्यपेक्षायामुक्तार्थस्यायमुपसंहारश्लोकः(१) ।

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्तारिवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः॥इति।

अनुभवं तावत् त्रिभिर्विशिनष्टि । साक्षात्कारिणि साक्षात्कारिधर्मिण्यपरोक्ष इत्यर्थः । नित्ययोगिनि ईश्वरेण नित्यसम्बद्ध इत्यर्थः । एतेनेश्वरस्य प्रमाव्याप्तत्वात् प्रामाण्यम् । तत्रापि साक्षात्कारिप्रमायोगात् प्रत्यक्षत्वं चोक्तम् । परद्वारानपेक्षस्थितौ कारणान्तरनिरपेक्षसत्ताके नित्यसिद्ध इति यावत् । एतेनेश्वरानुभवस्य कारणासंस्पर्शित्वेन पूर्वोक्तनित्ययोगित्वमस्मृतिरूपत्वं कारणदोषानवकाशाद् वक्ष्यमाणभूतार्थत्वं सङ्कोचे कारणाभावात् सर्वविषयत्वं च सिद्धम् । भूतार्थो यथार्थः तस्मिन्ननुभवे निविष्टो विषयतया स्थितो निखिलप्रस्तारिणः सार्वत्रिकस्य

---

(१) मुक्तार्थन्यायोपसंहारश्लोकः—पा॰ F पु॰ ।

अन्यथा लौकिकप्रत्यक्षमात्रविवक्षायामिन्द्रिय-अन्यप्रमासाधकतमं प्रत्यक्षमित्यलक्षयिष्यदिति ।

तद्विभागमाह ।

द्विविधं च तत् ॥ १० ॥

ते एव द्वे विधे विभज्य दर्शयति ।

सविकल्पकमित्येकमपरं निर्विकल्पकम् ।

तयोर्लक्षणमाह ।

---

वस्तुनो जगज्जालस्य क्रमो विशेषो यस्य स तथोक्तः नित्यसर्वज्ञ इति यावत् । लेशस्याप्यल्पस्याप्यदृष्टिनिमित्तस्याज्ञातकरणस्य दुष्टेर्दोषस्य विगमादभावात् प्रभ्रष्टो निवृत्तः शङ्कातुषोऽनाप्तत्वशङ्कालेशो यस्य स परमाप्त इति यावत् । शिवः सर्वात्मनां दुःखोच्छेदकरः परमात्मा मे मम नैयायिकस्य तत् प्रत्यक्षाख्यं प्रमाणं कारणाधीनज्ञानतया भ्रान्त्यादिशङ्कोत्थानकलङ्किभिरपरैर्योगिभिः किं न किञ्चित् साध्यमस्तीत्यर्थः ।

नन्विदं लक्षणं लौकिकप्रत्यक्षाभिप्रायमेव किं न स्यादित्यत्राह । अन्यथेति ।

द्विविधं च तदितिश्लोकशेषेण एतल्लौकिकालौकिकरूपं द्वैविध्यमेवानूद्यते प्रागुक्तलक्षणविशेषतयेत्याशङ्क्य नेत्याह । तद्विभागमिति ॥ १० ॥

सविकल्पकमित्यादिना द्वैविध्यान्तरोक्तिशङ्कायामाह[१] । ते एवेति ।

---

(१) द्वैविध्यान्तरशङ्कायामाह—पा· E पु· ।

**नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् ॥ ११ ॥**
**अविशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम्(१) ।**

नामजातिद्रव्यगुणक्रियाभिर्विशिष्टमर्थं विषयीकुर्वत् सविकल्पकं प्रत्यक्षम् । यथा देवदत्तोऽयं ब्राह्मणः शुक्लो दण्डी गच्छतीत्यादि । नामादिविशेषणवैधुर्येण स्वलक्षणमात्रविषयं निर्विकल्पकम् । यथाहुः ।

अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्ध(२)वस्तुजम् ॥ इति ।

निर्विकल्पकमेव प्रत्यक्षमास्थिषत सौगताः । यथाहुः । कल्पनापोढमभ्रान्तं प्रत्यक्षमिति । तदसत् ।

---

हानादिव्यवहारहेतुत्वात् सविकल्पकस्य प्राथम्यं तदुन्नेयत्वादन्यस्य तदानन्तर्यम् । उद्दिष्टयोः पुनरुद्देशः पुनरुक्तिरत आह । तयोरिति ।

आदिशब्दार्थं दर्शयन्नाद्यं विवृणोति । नामजातीति । उदाहरति । यथेति । द्वितीयं विवृणोति । नामादीति ।

अत्र भट्टपादसम्मतिमाह । यथाहुरिति ।

आलोचनज्ञानं व्यवहारानङ्गमाकलनमात्रमित्यर्थः । आदिशब्दाज्जडमुमूर्ष्वादिसंग्रहः । शुद्धवस्तुजं विशेषणविशेष्यभावानुल्लेखीत्यर्थः ।

अथ सविकल्पकस्य प्रामाण्यपरीक्षार्थं परेषां विप्रतिपत्तिं तावदुपन्यस्यति । निर्विकल्पकमेवेति । आस्थिषत प्रतिज्ञातवन्त इत्यर्थः । आङः स्थः प्रतिज्ञायामित्या-

---

(१) प्रत्यक्षमितरद्भवेत्–पा॰ A पु॰ । (२) मुग्धेति क्वचित् ।

ग्राह्यांशे कल्पनानां भ्रान्तत्वेनाभ्रान्तपदेनैव[१] व्यावृत्तिसिद्धेः कल्पनापोढविशेषणवैयर्थ्यात् । किं च[२] विवादाध्यासितो विकल्पः स्वगोचरे प्रत्यक्षं प्रमाणत्वे सत्यपरोक्षावभासित्वात् निर्विकल्पकवत् । न चात्र विशेषणासिद्धिः । यतः साधितमधस्ताद् विकल्पानां प्रामाण्यम् । शाब्दिकास्तु सविकल्पकमेव प्रत्यक्षमाहुः । यथाहुः ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥ इति ।

---

त्मनेपदम् । कल्पनापोढं नामजात्यादियोजनारहितम् । दूषयति । तदसदिति । ग्राह्यांशे ज्ञानस्यैव नीलाद्याकार इत्यर्थः । सविकल्पकप्रामाण्ये प्रमाणमप्यस्तीत्याह । किं चेति । प्रत्यक्षं प्रत्यक्षप्रमाणमित्यर्थः । अन्यथा प्रत्यक्षाभासेनार्थान्तरता स्यात् । प्रमाणत्वे सतीति अविसंवादित्वे सतीत्यर्थः । अन्यथा साध्यावैशिष्ट्यात् । एतेन प्रत्यक्षाभासव्युदासः । शेषं लैङ्गिकादिनिरासार्थम् । अधस्तात् सौगतोक्तप्रमाणसामान्यलक्षणनिरासावसर इत्यर्थः । प्रामाण्यमविसंवादित्वमित्यर्थः । निर्विकल्पकं च परीक्षितुं तत्रापि विप्रतिपत्तिमुपन्यस्यति । शाब्दिकास्त्विति । सविकल्पकस्यैव प्रत्यक्षत्वे तदुक्तामेव युक्तिं लिखति ।

न सोऽस्तीति । शब्देनानुविद्धमित्यन्वयः । घटः पट इति शब्दविशिष्टविषयघटितमेव सर्वं विज्ञानं गृह्यतेऽनु-

---

(१) अभ्रान्तपदोपादानेन–पा· D पु· ।
(२) किं तु–पा· D पु· ।

तदपि न । अगृहीतसम्बन्धानां शब्दानुल्लेखिनः प्रत्ययस्योत्पत्तेः । इतरेषां चेन्द्रियसंयोगानन्तरमविशिष्टविषयापरोक्षानुभवस्य(१) दुरपह्नवत्वात्(२)। अन्यथा विकल्पस्यैवानुदयप्रसङ्गात् वाच्यदर्शनेन हि प्रतिसम्बन्धिवाचकस्मृतिरस्ति । यथाहुः ॥

यत् सञ्ज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् सञ्ज्ञां स्मारयितुं क्षमः ॥ इति ।

पिण्डदर्शनस्य चेन्द्रियसन्निकर्षव्यतिरेकेण न

---

व्यवसीयते ऽतः सर्वं प्रत्यक्षं सविकल्पकं विशिष्टार्थग्राहित्वाल्लैङ्गिकवदिति भावः ।

नैतद्युक्तमव्युत्पन्नप्रत्यक्षेषु हेतोर्बाधादित्याह । तदपि नेति । व्युत्पन्नप्रत्यक्षेष्वपि क्वचिद्बाध इत्याह । इतरेषां चेति । अनुभवसिद्धस्यापि तस्यापह्नवे ऽनिष्टमाह । अन्यथेति । कुत इत्याशङ्क्य तस्यैव तत्कारणवाचकस्मृतिबीजो(३)-द्बोधकत्वादित्याह । वाच्येति ।

उक्तमर्थं वृद्धसंवादेन स्पष्टीकरोति । यथाहुरिति । तत्र सञ्ज्ञिविकल्पे कारणमिति शेषः । दृष्टः सन्नालोचितः सन्नित्यर्थः । सञ्ज्ञिनिर्विकल्पकमेव साहचर्यात् संस्कारोद्बोधद्वारा प्रतियोगिसञ्ज्ञास्मृतिहेतुरित्यर्थः ।

तर्हि पिण्डज्ञानं प्रमाणान्तरकार्यत्वात्(४) न प्रत्यक्षमित्याशङ्क्येन्द्रियान्वयव्यतिरेकानुविधानादिन्द्रियकार्यमे-

---

(१) परोक्षावभासस्य–पा॰ B. D. पु॰ ।
(२) अपनेतुमशक्यत्वादित्यर्थः ।
(३) स्मृतिबीजं संस्कारः ।
(४) इन्द्रियकार्यत्वात् ।

कारणान्तरमुपलभ्यते[1] तस्मात् तदुभयमपि प्रत्यक्षमिति नैयायिकाः । यदसूत्रयदिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति। तत्र हि अव्यपदेश्यं व्यवसायात्मकमिति च निर्विकल्पकसविकल्पकयोर्ग्रहणम् । व्यपदिश्यते व्यवच्छिद्यते ऽनेनेति व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि तत्कर्म व्यपदेश्यं व्यवच्छेद्यमिति यावत् । अत्र सदसद्वा समानाधिकरणं व्यवच्छेदकं विशेषणं व्यधिकरणं तूपलक्षणम् । यथा दण्डी देवदत्तो

वेत्याह । पिण्डेति । उपसंहरति । तस्मादिति । नैयायिका न्यायविदः स्वयमित्यर्थः । अन्ये तु न्याये ऽनभिज्ञा इति भावः । उभयं प्रत्यक्षमित्यत्र सूत्रकारसंवाद[2]माह । यदसूत्रयदिति । नन्वत्र सूत्रे तयोर्नामापि न श्रूयत इत्याशङ्क्याह । तत्रेति । कथमाभ्यामनयोरभिधानमित्याशङ्क्य तत्राद्यमाद्यपरत्वेन व्याख्यातुं व्यपदेश्यशब्दे तावदृयत्प्रत्ययान्ते प्रकृत्यर्थमाह । व्यपदिश्यत इति । अस्य निर्देशार्थत्वं वारयति । व्यवच्छिद्यत इति । प्रत्ययार्थमाह । तत्कर्मेति । तदर्हमित्यर्थः । अर्हार्थे यत्प्रत्ययः । विशेषणोपलक्षणयोर्भेदमाह । अत्रेति । सदसद्वेति । भावरूपमभावरूपं वेत्यर्थः । समानाधिकरणं समानविभक्तिकं व्यधिकरणं भिन्नविभक्तिकं क्रमेणोदाहरति । यथेति । अव्यपदे-

(१) लक्ष्यते—पा॰ B पु॰ ।
(२) सम्मति—पा॰ E पु॰ ।

जटाभिस्तापस इति । अविद्यमानं व्यपदेश्यं यस्मिन् तदव्यपदेश्यं जात्यादिस्वरूपमात्रावगाहि । न तु तेषां मिथो विशेषणविशेष्यभावावगाहीति यावत् । व्यवसायो विनिश्चयो विकल्प इति यावत् । स एवात्मा स्वरूपं यस्य तद्व्यवसायात्मकमिति ॥ ११ ॥ ऽऽ ॥

अथानुमानं लक्षयति ।

व्याप्तिग्रहणसापेक्षं प्रमितेः साधनं विदुः ॥ १२ ॥ अनुमानमिति ।

व्याप्तेर्वक्ष्यमाणलक्षणाया ग्रहणमपेक्ष्य प्रमितेः

---

इयशब्देन नञो बहुव्रीहिसमासमाह । अविद्यमानमिति । फलितमाह । जात्यादीति । नन्वेतत्सविकल्पकेऽपि समानमत आह । न त्विति । अथ द्वितीयं द्वितीयपरत्वेन व्याचष्टे । व्यवसाय इति । आत्मशब्दस्येह चेतनपर्यायत्वेऽनन्वयादन्वययोग्यार्थमाह । आत्मा स्वरूपमिति । सूत्रेऽव्यभिचारिपदं प्रत्यक्षाभासव्युदासार्थम् । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति सामान्यलक्षणम् ॥ ११ ॥ ऽऽ ॥

उद्देशक्रमप्राप्तमनुमानलक्षणमवतारयति । अथेति । प्रथमविशेषणेन प्रत्यक्षादेः प्रमितिपदेनाभासानां साधनपदेन फलस्य च व्युदासः । अनुमीयतेऽनेनेत्यनुमानं करणे ल्युट् ।

तदेतद्विवृणोति । व्याप्तेरिति । केयं व्याप्तिरित्यत आह । वक्ष्यमाणेति । ननु प्रत्यक्षादेरपि विना प्रमेयादिक-(१)मप्रवृत्तेः प्रमेयादिव्याप्तिसापेक्षत्वादतिव्याप्तिरित्याश-

(१) प्रमेयमालोकादिकम् ।

साधनमनुमानम् । प्रत्यक्षादीनां तु प्रमेयव्याप्तिसद्भावे ऽपि तद्ग्रहणापेक्षा नास्तीति ग्रहणविशेषणेन तेषां निरासः । लिङ्गपरामर्शो ऽनुमानमित्याचार्याः । तत्र लिङ्गलक्षणमुत्तरत्र भविष्यति । परामर्श इति च प्रतिसन्धानात्मकं तृतीयलिङ्गज्ञानमभिमतमिति ॥ १२ ॥

व्याप्तिलक्षणमाह ।

व्याप्तिः सम्बन्धो निरुपाधिकः ।

सोपाधिकसम्बन्धवतां मैत्रीतनयत्वादीनां व्याप्तिर्माभूदिति निरुपाधिक इत्युक्तम् । स्वाभाविकः सम्बन्धो व्याप्तिरिति यावत् ।

---

आह । प्रत्यक्षादीनामिति । प्रमेयादीत्यादिशब्देन सहकार्यादिसंग्रहः । तत्र[1] व्याप्तेः प्रायेण सत्त्वैवापेक्षिता न तु तज्ज्ञान[2]मित्यदोष इत्यर्थः । उदयनाचार्यैरपीदमेव लक्षणं भङ्ग्यन्तरेणोक्तमित्याह । लिङ्गेति । तस्यार्थं वर्णयन् लिङ्गलक्षणाकाङ्क्षायामाह । तत्रेति । उत्तरत्रेति हेतुलक्षणावसर इत्यर्थः । द्वितीयलिङ्गपरामर्शस्य कारणत्वं केचिदिच्छन्ति तन्निरासार्थमाह । परामर्श इति । किं तत् तृतीयलिङ्गज्ञानं तदाह । प्रतिसन्धानात्मकमिति । तथा चायं धूमवानिति व्याप्तस्य लिङ्गस्य पक्षधर्मतानुसन्धानं प्रतिसन्धानं तदात्मकमित्यर्थः ॥ १२ ॥

ननु श्लोकशेषेण प्रकृतानुपयुक्तं किमप्युच्यत इत्याशङ्क्य नेत्याह । व्याप्तिरिति ।

विशेषणफलमाह । सोपाधिकेति । निरुपाधिकशब्दार्थमाह । स्वाभाविक इति । अनन्यप्रयुक्त इत्यर्थः ।

(१) प्रत्यक्षादौ । (२) ज्ञानं–पा॰ D पु॰ ।

कोऽसावुपाधिर्नाम यद्विधुरः सम्बन्धो व्याप्तिरित्यत्राह ।

साधनाव्यापकाः साध्यसमव्याप्ता उपाधयः[1] ॥ १३ ॥

यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधिः । यथा वैधहिंसायां हिंसात्वेनाधर्मत्वे साध्ये निषिद्धत्वमुपाधिः । तद्धि साध्यमधर्मत्वं व्याप्नोति न व्याप्नोति च साधनाभिमतं हिंसात्वम् पक्ष एव वैधहिंसायां सत्यपि हिंसात्वे तस्याभावात् । साधनाव्यापक इत्येतावदुच्यमाने ऽनित्यत्वसाधने कृतकत्वे सावयवत्वमुपाधिः स्यात् । अमूर्ते क्रियादौ कृतकत्वे सत्यपि सावयवत्वाभावेन साधनाव्यापकत्वात् ततश्च साध्यव्यापक इत्युक्तम् । न हि सावय-

---

ननूत्तरश्लोके उपाधिलक्षणस्य का सङ्गतिरत आह । कोऽसाविति ।

लक्षणं विवृणोति । यावदित्यादि । यावान् साधनदेशो यावत्साधनदेशं यावदवधारण इत्यव्ययीभावः । तत्रावर्तमानः साधनाव्यापक इत्यर्थः । यावत्साध्यदेशं वृत्तिर्यस्येत्यव्ययपूर्वपदो बहुव्रीहिः समपदेन व्याप्यत्वेन व्यापकत्वेन च साध्यसम्बन्ध उक्तः । उदाहरति । यथेति । लक्ष्ये लक्षणं पातयति । तद्धीति । व्याप्नोति व्याप्यते चेति शेषः । लक्षणाक्षरव्यावर्त्यमाह । साधनाव्यापक इत्यादिना । तस्मात् प्रयोजनवदेव विशेषणद्वयोपादा-

---

(१) ह्युपाधयः—पा॰ A पु॰ ।

वत्वं साध्यमनित्यत्वं व्याप्नोति अनित्येष्वेव क्रियादिष्वभावात् । अथ साध्यव्यापक इत्येवाभिधीयेत तत-श्चानित्यत्वसाधने सावयवत्वे कृतकत्वमुपाधिः स्यात् । तस्य साध्यानित्यत्वव्याप्तेः । साधनाव्यापक इत्युक्ते पुनस्तस्य सावयवत्वव्यापकत्वादनुपाधित्वं निरुपाधिकसाध्यसम्बन्धं चोभयम् । यथाहुः । कृतकत्वसावयवत्वादिप्रयुक्ता च विनाशितेति । तस्मात् प्रयोजनवदेव विशेषणद्वयोपादानम् । यथाहुः ।

एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ॥ इति ।

---

नमित्यन्तेन सन्दर्भेण । अनित्यत्वसाधने कृतकत्व इति । अनित्यः शब्दः कृतकत्वाद् घटवदित्यत्र साधनाव्यापकत्वाद् घटे सावयवत्वमुपाधिः स्यादित्यर्थः । अनित्यत्वसाधने सावयवत्व इति । क्षित्यादिकमनित्यं सावयवत्वाद् घटवदित्यत्र साध्यव्यापकत्वात् कृतकत्वमुपाधिः स्यादित्यर्थः । ननु कृतकत्वसावयवत्वयोरेकस्य सोपाधिकत्वमस्तु तथा च साधनाव्यापकत्वसाध्यव्यापकत्वयोरन्यतरेणैव लक्षणसिद्धौ लाघवादित्याशङ्क्याह । निरुपाधिकेति । अनित्यत्वसाधने द्वयोरपि दृष्टशक्तिकत्वान्नान्यतरपरित्यागो न्याय्य इति भावः । द्वयोरप्यनित्यतासाधकत्वे वृद्धसम्मतिमाह । यथाहुरिति । प्रकृतमुपसंहरति । तस्मादिति । समपदं तु पक्षेतरत्वनिरासार्थमिति शेषः ।

उपाधिलक्षणमुदयनवाचा संवादयति । एकसाध्ये-

अन्यत्राप्युक्तम् । कः पुनरुपाधिः । साध्यप्रयोजकं निमित्तान्तरमिति । किमस्य लक्षणम् । साधनाव्यापकत्वे सति साध्यव्यापकत्वमिति(१) । स्फटिकग-

ति । मिथः सम्बन्धशून्ययोरन्यत्र परस्परपरिहारवृत्त्योर्द्धयोर्हेत्वोः क्वचिदेकेन साध्येन सहाविनाभावे दृष्टे सति तत्र यदत्ययो यदभावः प्रकृतसाध्याभावेनाविनाभावी यन्निवृत्त्या साध्यं निवर्तत इत्यर्थः । स उपाधिः स एव प्रयोजकः इतरस्त्वप्रयोजकः । यथा हिंसात्वनिषिद्धत्वयोः क्रतुहिंसायां कलञ्जभक्षणे च पृथग्वृत्त्योः क्रतुहिंसायामधर्मत्वे साध्ये तेन सह बाह्यहिंसायां द्वयो(२)रविनाभावे दृष्टेऽपि कदलीफलभक्षणादौ निषिद्धत्वनिवृत्त्या अधर्म निवृत्तिदर्शनान्निषिद्धत्वमुपाधिस्तद्वदित्यर्थः ।

अत्रापि साधनाव्यापकत्वे सति साध्यसमव्यापकत्वमेव भङ्ग्यन्तरेणोक्तं तदेतदात्मतत्त्वविवेकेऽप्युक्तमित्याह । अन्यत्रापीति । तद्ग्रन्थं लिखति । कः पुनरित्यादि । निमित्तान्तरं हेत्वन्तरमित्यर्थः । अयं किरणावलीग्रन्थ इति कैश्चिदुक्तं तदाकरदर्शनाशक्ति(३)विलसितमित्यपास्तम्(४) । तत् न्यायकुसुमाञ्जलौ त्वेतल्लक्षणोक्त्यनन्तरमुपाधिशब्दप्रवृत्तिनिमित्तं चोक्तम् । तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्यसावुपाधिरुच्यत इति । तदर्थतो दर्शयति । स्फटिकेत्यादि ।

(१) साध्यसमव्याप्तिरुपाधिरिति–पा· C पु· ।
(२) हिंसात्वनिषिद्धत्वयोः ।
(३) तदपरिचयप्रदर्शनाशक्ति–पा· E पु· ।
(४) तदास्ताम्–पा· E पु· ।

तत्वेन रक्तताप्रतीतौ जपाकुसुमवत् साधनाभिमतग-
तत्वेन स्वधर्मभूताया व्याप्तेः प्रतिभासनिमित्तत्वेना-
स्योपाधित्वव्यपदेश इति ॥ १३ ॥

उपाधिद्वैविध्यमाह ।

भवन्ति ते च द्विविधा निश्चिताः शङ्किता इति[1]

निर्णीतोभयविशेषणवान् निश्चित उपाधिः । यथोदाहृतमेव निषिद्धत्वम् । उक्तयोर्विशेषणयोरन्यतरसदसद्भावशङ्कायां तु शङ्कित उपाधिः स्यात् । यथा मैत्रीगर्भत्वेन सप्तमगर्भस्य श्यामत्वे साध्ये शाकाद्याहारपरिणतिः । पक्षभूते हि सप्तमगर्भे श्यामत्वोपाधेः

---

उप समीपस्थे स्वधर्माधानादुपाधिरुच्यत इत्यर्थः ॥ १३ ॥

ननु सम्प्रति प्रकृतानुमानविभागप्रस्तावादुत्तरश्लोके बहुवचननिर्देशः कथमत आह । उपाधीति ।

शङ्किताः सन्दिग्धा इत्यर्थः ।

तत्र निश्चितोपाधेर्लक्षणमुदाहरणं चाह । निर्णीतेति । शङ्कितोपाधेरप्याह । उक्तयोरिति । साधनाव्यापकत्वसाध्यव्यापकत्वयोरित्यर्थः । गर्भस्य श्यामत्व इत्यनेन प्राणिश्यामत्व एवायमुपाधिर्न सर्वत्रेति सूचितम् । तेनेन्द्रनीलादिश्यामत्वे साध्यव्याप्तिभङ्ग इति चोद्यं गर्भश्रावेण गलितम् । अस्य शङ्कितोपाधित्वं कथमत आह । पक्षभूते हीति । ननु साधनाव्यापकत्वं सन्दिग्धं चेत् तस्या-

---

(१) अपि—पा॰ A पु॰ ।

शाकाद्याहारपरिणामस्याभावानिश्चयात् साधना-व्यापकत्वं सन्दिग्धमिति भवति शङ्कितोपाधित्वम् । साधनाव्यापक इत्यनिश्चितपक्षवृत्तित्वस्य विवक्षितत्वात् न लक्षणासंग्रहः । तदेतदुभयविधोपाधिविधुरः सम्बन्धो व्याप्तिरिति ।

अनुमानस्यावान्तरभेदमाह ।

**अनुमानं त्रिधा भिन्नम् ।**

अवान्तरभेदानामानन्त्ये ऽपि राशित्रयेणैव क्रोडीचकार इत्यर्थः । ता एव विधा विभजते ।

---

सत्समत्वाल्लक्षणमसम्भवि स्यादित्याशङ्क्याह । साधनाव्यापक इति । अनिश्चितपक्षवृत्तित्वस्येति । निश्चितपक्षवृत्तित्वाभावस्येत्यर्थः । निश्चितपक्षवृत्तिरहितत्वस्येति पाठे निश्चितायाः पक्षवृत्ते राहित्यमभावस्तस्येत्यर्थः । उभयथापि पक्षवृत्तिनिश्चयाभावस्य लक्षणत्वात् तस्य च पक्षवृत्तित्वाभावनिश्चये तत्सन्देहे च सम्भवान्नासम्भवदोष(१) इत्यर्थः । प्रकृतव्याप्तिलक्षणमुपसंहरति । तदेतदिति ।

ननु लक्षितमनुमानमथोपमाने लक्षयितव्ये किमर्थं पुनरनुमानोत्कीर्तनमुत्तरश्लोक इत्याशङ्क्य तद्विभागार्थमित्याह । अनुमानस्येति ।

ननु स्वार्थाद्यनेकभेदसम्भवे कथं त्रैविध्यमत आह । अवान्तरेति । अथान्वयीत्यादिना पुनस्त्रैविध्यान्तरमुच्यत इति भ्रमं निरस्यति । ता एवेति । अत्रोभयव्याप्तिकादन्व-

---

(१) नासम्भवाद्दोष—पा॰ E पु॰ ।

**अन्वयि व्यतिरेकि च ॥ १४ ॥**

**अन्वयव्यतिरेकीति ।**

**तदुक्तम् । तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टं चेति । तत्र तदिति व्याप्तिज्ञानं ( पक्षधर्मताज्ञानं ) लिङ्गदर्शनं च परामृश्यते । ते पूर्वे यस्य लिङ्गप्रतिसन्धानस्य[1] तत् तत्पूर्वकं ततश्च तत्पूर्वकमित्येतावता सामान्यलक्षणमुच्यते । शेषेण सामान्यतो विशेषतश्च विभागोद्देश इति ।**

---

यव्यतिरेकिणः पूर्वमेकैकव्याप्तिकयोरितरयोरुद्देशः तत्रापि व्यतिरेकस्यान्वयपूर्वकत्वादन्वयिनः प्राथम्ये ऽर्थाद्व्यतिरेकिणो माध्यस्थ्यमिति क्रमः ।

अत्र सूत्रसंवाद[2]माह । तदुक्तमिति । सूत्रार्थमाह । तत्रेति । तच्छब्दस्य बुद्धिस्थार्थविशेषपरत्वमाह । तदितीति । लिङ्गदर्शनं द्वितीयलिङ्गज्ञानमित्यर्थः । लिङ्गप्रतिसन्धानस्येति । तृतीयलिङ्गपरामर्शस्येत्यर्थः । तथा च तत्पूर्वकशब्देन लिङ्गपरामर्शोऽनुमानमिति सामान्यलक्षणमुक्तमित्याह । ततश्चेति । शेषेणेति । त्रिविधमिति सामान्यतो विभागः पूर्ववदित्यादि विशेषतः । व्यतिरेकापेक्षया पूर्वभावित्वात् पूर्वशब्देनान्वय उच्यते तद्वदन्वयीत्यर्थः । शेषशब्देन पश्चाद्भावित्वाद् व्यतिरेकस्तद्वद् व्यतिरेकीत्यर्थः । सामान्यतः कैवल्यपरिहारेणोभयविशिष्टतया दृष्टत्वात् सामान्यतो दृष्टमित्यन्वयव्यतिरेक्युच्यते । केचित् तु पूर्वव-

---

(१) परामर्शस्य–पा· D पु· ।

(२) सूत्रसम्मति–पा· E पु· ।

तेषां त्रयाणां विशेषलक्षणाभिधानं प्रतिजानाति तावत् ।

तेषां लक्षणमुच्यते ।

तत्र केवलान्वयिनो लक्षणमाह ।

सर्वेषु केषुचिद्वापि सपक्षेषु समन्वयि[1] ॥ १५ ॥
विपक्षशून्यं पक्षस्य व्यापकं केवलान्वयि ॥

वक्ष्यमाणलक्षणाः पक्षादयः । तत्र पक्षीकृतेषु सर्वेषु व्याप्त्या वर्तमानं सर्वेषु सपक्षेषु कतिपयेषु वा वर्तमानमविद्यमानविपक्षं केवलान्वयि । यथा सर्वा-

दिति कारणलिङ्गकं शेषवदिति कार्यलिङ्गकं ततोऽन्यत् सामान्यतो दृष्टमिति व्याचक्षते तत्प्रकृतविसंवादाच्चिन्त्यम् ।

ननु तेषां लक्षणमुच्यत इति प्रतिज्ञा न युज्यते व्याप्तिग्रहणसापेक्षमित्यत्रैवोक्तत्वादित्याशङ्क्य सत्यं सामान्यलक्षणमुक्तं विशेषलक्षणं तु प्रतिज्ञायत इत्याह । तेषां त्रयाणामिति । प्रतिजानातीति परस्मैपदं चिन्त्यम् । सम्प्रतिभ्यामनाध्यान इत्यात्मनेपदस्मरणात् ।

तत्रोद्देशक्रमादेवोच्यत इत्याशयेनाह । तत्रेति । अत्र विपक्षशून्यमित्यनेनास्य इतराभ्यां भेद उक्तः ।

पक्षादीनां किं लक्षणमत आह । वक्ष्यमाणेति । यत् प्रथमार्द्धे सपक्षेषु कृत्स्नैकदेशवृत्तिभेदाद्धेतोर्द्वैविध्यमुक्तं तत् क्रमेणोदाहरति । यथेत्यादि । हेतोरसाधारण्य-

(१) क्षतान्वयम्–पा॰ A पु॰ ।

नित्यत्ववादी कश्चिदनित्यत्वेन सम्प्रतिपन्नान् घटादीन् सपक्षीकृत्य प्रयुङ्क्ते विप्रतिपन्नं सर्वमनित्यं प्रमेयत्वाद् घटवदिति । तदिदं सकलसपक्षवर्तिन उदाहरणम् । सपक्षैकदेशवर्तिनस्तु धर्मादयः कस्यचित् प्रत्यक्षाः मीमांसकानामप्रत्यक्षत्वादस्मत्सुखादिवदिति । मीमांसकानामप्रत्यक्षत्वं हि घटादिषु(१) न वर्तते वर्तते चास्मत्सुखादिष्विति भवति सपक्षैकदेशवृत्तिः । अत्र चोभयत्रापि विश्वस्यापि पक्षसपक्षकोटिद्वयान्तर्भावात् विपक्षाभाव इति ॥ १५ ॥ ऽऽ ॥

केवलव्यतिरेकिणं लक्षयति ।

असपक्षं विपक्षेभ्यो व्यावृत्तं पक्षभूमिषु ॥ १६ ॥
सर्वासु वर्तमानं यत् केवलव्यतिरेकि तत् ॥

अत्र विपक्षव्यावृत्त्यभिधानेन(२) विपक्षसत्ता

---

परिहारार्थमुक्तं मीमांसकानामिति । लक्ष्ये लक्षणं योजयति । अत्र चेति ॥ १५ ॥ ऽऽ ॥

कस्येदं लक्षणमिति मन्दानामसन्देहार्थमाह । केवलव्यतिरेकिणमिति ।

असपक्षमित्यनेन इतरभेदाभ्यामसाधारणाच्च भेदः विपक्षव्यावृत्तिकथनाद्विरुद्धभेदः । तथापि सर्वमनित्यं सत्त्वादित्यादिकालातीतभेदात् को भेद इत्यत आह । अत्रेति । सति विपक्षे ततो व्यावृत्तिर्लक्षणं न तु निर्वि-

(१) सपक्षेषु घटादिषु–पा॰ C पु॰ ।
(२) व्यावृत्तिकथनेन–पा॰ B पु॰ ।

दर्शिता । असतो व्यावृत्तेरशक्याभिधानत्वात् । यथा सर्वज्ञप्रणीता वेदा वेदत्वात् । यः सर्वज्ञप्रणीतो न भवति नासौ वेदः । यथा कुमारसम्भवादिरिति । यथा वा सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात् । यदुक्तसाध्यं न भवति तदुक्तसाधनमपि न भवति यथा गगनमिति । अत्र हि सर्वस्यापि कार्यजातस्य पक्षत्वेन कक्षीकरणात्[1] । अकार्यस्य तु विपक्षत्वाद् भवति सपक्षाभाव इति ॥ १६ ॥ ऽऽ ॥

शिष्यव्युत्पादनार्थं[2] प्रासङ्गिकं किञ्चिदाह ।

---

पक्षत्वमेवातो नोक्तदोष इत्यर्थः । तर्हि

तस्माद्वैधर्म्यदृष्टान्तेनेष्टोवश्यमिहाश्रयः ।
तदभावे च तन्नेति वचनादपि तद्गतेः ॥

इति ब्रुवतो बौद्धस्य किमुत्तरमत आह । असत इति । अन्यथा तद्वत् साधर्म्यदृष्टान्तस्यापि निवृत्तावनुमानस्यैव निवृत्तिरिति भावः । उदाहरति । यथेति । विषयव्याप्त्यर्थमुदाहरणान्तरमाह । यथा वेति । अत्र पूर्वानुमाने वेदनित्यत्ववादिनं प्रति वेदानां सर्वज्ञप्रणीतत्वे साध्ये तन्नान्तरीयकतया कार्यत्वमपि साध्यम् उत्तरानुमाने तु सिद्धकार्यभावस्य जगतः सर्ववित्कर्तृकत्वमेव साध्यमिति विशेषः ॥ १६ ॥ ऽऽ ॥

ननूत्तरार्द्धे लक्षणस्य व्यतिरेकित्वसाधनं प्रकृतासङ्ग-

---

(१) स्वीकारात्-पा॰ B पु॰ ।
(२) व्युत्पादनाय-पा॰ B पु॰ ।

असाधारणधर्मत्वाद् व्यतिरेक्येव लक्षणम् ॥ १७ ॥

लक्षणं नाम यदुच्यते तदपि केवलव्यतिरेकिरूपमनुमानमेव । कुतः लक्ष्यस्य ह्यसाधारणधर्मो लक्षणं भवति केवलव्यतिरेकि च सपक्षस्यैवाभावात् सत्यपि विपक्षे तत्रावर्तमानत्वाच्च पक्षस्यैवासाधारणं यतः । तर्हि सास्नादिमत्त्वं गोर्लक्षणमित्युक्ते

तमित्याशङ्क्याह । शिष्येति । प्रासङ्गिकमिति । व्यतिरेकिप्रसङ्गादागतमित्यर्थः[1] ।

नन्विह व्यतिरेकित्वलक्षणत्वयोः किमनूद्य किं विधीयत इत्याशङ्क्यैवकारलिङ्गादप्राप्तत्वाच्च व्यतिरेकित्वमेव विधेयमिति व्याचष्टे । लक्षणं नामेति । ननु व्यतिरेकित्वं नाम व्यावृत्तत्वं तदपि लक्षणस्य प्राप्तमेवेति कथं विधीयत इत्याशङ्क्य सत्यम् अप्राप्तमनुमितिकरणविशेषत्वं विधीयत इत्याह । केवलव्यतिरेकिरूपमिति । अत्र प्रयोगः । लक्षणं केवलव्यतिरेक्यनुमानमसाधारणधर्मत्वात् सम्प्रतिपन्नव्यतिरेक्यनुमानवदिति । नन्वसिद्धो हेतुः साधनविकलश्च दृष्टान्त इत्याशयेनाह । कुत इति । असिद्धिं तावत् परिहरति । लक्ष्यस्य हीति । अन्यथा लक्षणत्वव्याघातः तस्य तल्लक्षणत्वादिति भावः । साधनवैकल्यं च निरस्यति । केवलव्यतिरेकि चेति । यत इति । अतोऽनुमानमेवेति पूर्वेणान्वयः । अत्र चोदयति । तर्हीति । सास्नादिमत्त्वलक्षणस्यानुमानत्वे किं लक्ष्यस्य गवादेः स्वरूपमेव साध्यमुत तत्सम्बन्धिधर्मान्तरम् । नाद्यः सिद्ध-

(१) प्रसङ्गाङ्गमित्यर्थः- पा॰ E पु॰ ।

कथमस्य व्यतिरेकितेति चेत्[1]। श्रूयतामवधानेन अयं गौरिति व्यवहर्तव्यः सास्नादिमत्त्वात् न यदेवं न तदेवं यथा महिषादिरिति। तयोरेव हेतुदृष्टान्तयोः गौरितरेभ्यो भिद्यत[2] इति प्रतिज्ञा द्रष्टव्या। न चैतदसाम्प्रदायिकम्। अथ किंलक्षणः कोसाविति प्रश्नार्थः तदा केवलव्यतिरेकिपरं स्यात्। लक्षणस्य

साधनात्। नेतरः सन्दिग्धस्य तस्य कस्यचिदभावात् कथमनुमानत्वमिति भावः। तर्ह्यश्रुतचरं लक्षणार्थरहस्यमाकर्ण्यतामायुष्मतेत्याह। श्रूयतामिति। व्यावृत्तिव्यवहारयोरन्यतरस्य साध्यत्वान्नोक्तदोषावकाश इत्याह। अयं गौरित्यादि। एवं च प्रमाणलक्षणाभ्यां वस्तुनः सिद्धिरित्यस्यापि स्वरूपसाधकप्रमाणेन व्यावृत्तिसाधकप्रमाणेन लक्षणापरनाम्ना स्वरूपतो व्यावृत्तितश्च वस्तुसिद्धिरिति प्रशस्तपादभाष्यनिष्कण्टकाया[3]मस्माभिर्व्याख्यातार्थो द्रष्टव्यः। नन्वेतत् स्वकपोलकल्पितमित्याह। न चैतदिति। कुत इत्याशङ्क्य न्यायकुसुमाञ्जलावुपमानाधिकारे नागरिकवनेचरप्रश्नोत्तरवाक्यार्थविचारग्रन्थं लिखति। अथेत्यादि। प्रश्नार्थ इति। कोसौ गवय इति[4] प्रश्नवाक्यार्थ इत्यर्थः। तदा केवलव्यतिरेकिपरं स्यादिति। गोसदृशो गवय इत्युत्तरवाक्यमिति शेषः। अयमसौ गवय इति व्यवहर्तव्यः

(१) व्यतिरेकित्वप्रतीति चेत्–पा· B पु·।

(२) व्यावर्तते–पा· B पु·।

(३) निःकण्टिकाया–पा· E पु·। प्रशस्तपादभाष्यनिकषटीकाया–पा· F पु·।

(४) कीदृग्गवय इति–पा· E पु·।

तथाभावादित्यादिषु बहुषु प्रदेशेषु न्यायाचार्यैरेव लक्षणस्य केवलव्यतिरेकित्वेन व्यवहारादिति ॥ १७ ॥

यद्यसाधारणो धर्मो लक्षणादिपदपर्यायवाच्यो व्यतिरेकी तर्ह्यसाधारणानैकान्तिकरूपो हेत्वाभास एवायं भवेदित्याशङ्क्याह ।

**सपक्षे सति चाभासः स्यादसाधारणस्त्वसौ ।**

सति सपक्षे तत्रावर्तमानः पक्षमात्रवर्ती हेतुरसाधारणानैकान्तिको नामाभासः स्यात् ॥ यथा भूर्नित्या[1]

गोसदृशत्वाद् यस्तथा न व्यवह्रियते नासौ गोसदृशः यथा हस्तीत्येवं परं स्यादित्यर्थः । लक्षणस्य तथाभावादिति । केवलव्यतिरेकित्वादित्यर्थः । अयमप्येकः किरणावलीग्रन्थ आत्मप्रकरणस्थ इति कैश्चिद्दुण्डतुण्डैराख्यातं तथैव व्याख्यातं च तदप्याकरापरिज्ञानवञ्चनासाहसविलास एवेत्यास्ताम् । आदिशब्देन यत् किरणावल्यां पृथिवीप्रकरणे केवलव्यतिरेकिविशेष एव लक्षणमित्यादि तथा चाचार्यवाचस्पतिटीकायां समानासमानजातीयव्यवच्छेदो लक्षणार्थ इति च तत्सर्वं सङ्गृह्यते । आचार्यैरुदयनवाचस्पतिप्रभृतिभिः ॥ १७ ॥

ननूत्तरार्द्धमसङ्गतं प्रमाणपदार्थे हेत्वाभासलक्षणायोगादित्याशङ्क्य शङ्कोत्तरत्वेनावतारयति । यदीति ।

ननूभयोः पक्षमात्रवृत्तित्वाविशेषात् को भेद उक्त इत्याशङ्क्य सपक्षसत्त्वासत्त्वाभ्यां भेद उक्त इति व्याचष्टे ।

(१) नित्या भूमिः—पा· B पु· ।

गन्धवत्त्वादिति। अत्र हि गगनादिषु सपक्षेषु सत्स्वपि तत्रावर्तमानं पञ्चभूतभूमिमात्रवर्ति गन्धवत्त्वमाभाषो भवति अविद्यमानसपक्षः केवलव्यतिरेकीत्युक्तमेवेति भावः।

अन्वयव्यतिरेकिणं लक्षयति।

**व्यावृत्तं यद्विपक्षेभ्यः सपक्षेषु कृतान्वयम् ॥१८॥**
**व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तत्।**

विपक्षेभ्य इति बहुवचनेन सकलविपक्षव्यावृत्तिर्दर्शिता। कृतान्वयमिति च सपक्षान्वयमात्रं विवक्षितम् न तु व्याप्तिरिति पक्षीकृतसर्वधर्मिव्याप्तिः पूर्वयोरिवात्रापि विवक्षितेति दर्शितम् व्याप्त्या पक्षे

---

सतीत्यादि। व्यतिरेकी तु नैवमित्याह। अविद्यमानेति। उदाहरणं चोक्तमेवेति भावः।

उत्तरश्लोके ऽपि पूर्ववत् प्रासङ्गिकाभासनिरूपणभ्रमं वारयति। अन्वयेति।

ननु विपक्षादित्येकवचनोपादाने लाघवाद् बहुवचनं वृथेत्याशङ्क्याह। विपक्षेभ्य इति। नन्विह विवक्षितस्य सपक्षसत्त्वस्य लाघवाद् वृत्त्यादिशब्दैरपि सुवचत्वात् किमित्यन्वयशब्देन तत्रापि बहुव्रीहिद्वाराभिधानमत आह। कृतेति। अन्यथा सपक्षेष्विति बहुवचनसामर्थ्यात् पूर्ववत् व्याप्तिप्रतीतौ सपक्षव्यापकस्यैव संग्रहो भवेन्न त्वेकदेशवर्तिन इति भावः। व्याप्त्येति विशेषणस्य प्रयोजनमाह। पक्षीकृतेति। पूर्वयोरिवेति। केवलयोरिवेत्यर्थः। व्या-

वर्तमानमिति । यथा अनित्यः शब्दः कृतकत्वाद् घटवदिति सपक्षव्यापकः कृतकत्वस्य सर्वेष्वनित्येषु वृत्तेः । तयोरेव साध्यदृष्टान्तयोः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः । अनित्येषु द्व्यणुकादिष्ववृत्तेः घटादिषु च वृत्तेरिति ॥ १८ ॥ ऽऽ ॥

पक्षादिलक्षणमाह ।

पक्षः साध्यान्वितो धर्मी
साध्यजातीयधर्मवान् ॥ १९ ॥
सपक्षोऽथ विपक्षस्तु
साध्यधर्मनिवृत्तिमान् ।

---

पकमुदाहरति । यथेति । व्यापकत्वं व्यनक्ति कृतकत्वस्येति । एकदेशवर्तिनमप्युदाहरति । तयोरेवेति । अत्र सामान्यवत्त्वे सतीत्यनेन सामान्यसमवाययोर्व्युदासः । अस्मदादिबाह्येन्द्रियपदैः क्रमाद्योगिबाह्येन्द्रियग्राह्यपरमाण्वादीनामस्मदाद्यन्तरिन्द्रियग्राह्यात्मादीनां शब्दलिङ्गैकग्राह्येश्वरपरमाण्वादीनां च निरासः । ग्राह्यपदेनासिद्धिपरिहारः । अस्य सपक्षैकदेशवृत्तित्वं व्यनक्ति । अनित्येष्विति ॥ १८ ॥ ऽऽ ॥

उत्तरश्लोकस्योक्तवक्ष्यमाणानुमानसामान्यविशेषलक्षणानन्तर्भावादसाङ्गत्यमाशङ्क्योक्तलक्षणाकाङ्क्षितपक्षादिलक्षणपरत्वात् सङ्गतिरित्याशयेनाह । पक्षादीति ।

साध्यधर्मवत्त्वेन सपक्षत्वे पक्षोऽपि सपक्षः स्यादित्युक्तं साध्यजातीयधर्मवानिति । एवं साध्यधर्मनिवृत्तिमानित्यत्रापि साध्यधर्मविशेषस्य तज्जातीयधर्मस्य च निवृत्तिमान् विपक्ष इति विवक्षितम् । अन्यथा साध्यधर्मविशेषनिवृत्तिमात्रेण विपक्षत्वे सपक्षस्यापि तथाभावाद् विपक्षत्वप्रसङ्ग इति ॥ १९ ॥ ऽऽ ॥

प्रकारान्तरेणानुमानद्वैविध्यमाह ।

---

अत्र सपक्षलक्षणे जातीयरः प्रयोजनमाह । साध्यधर्मवत्त्वेति । सपक्षलक्षणस्य पक्षे ऽतिव्याप्तिनिरासार्थोऽयं प्रत्यय[1] इत्यर्थः । विपक्षलक्षणे तु जातीयरः प्रत्ययार्थोऽपि विवक्षितव्य इत्याह । एवमिति । अन्यथा सपक्षे ऽतिव्याप्तिः स्यादित्याह । अन्यथेति । साध्यधर्मविशेषवान्[2] धर्मी पक्षः । तज्जातीयधर्मवान् सपक्षः । तदुभयविरही विपक्ष इति लक्षणार्थः ॥ १९ ॥ ऽऽ ॥

दृष्टमित्याद्यनन्तरश्लोके ऽस्येति सर्वनाम्ना सन्निहितपक्षादित्रयपरामर्शात् तस्य च दृष्टादिद्वैविध्यायोगादसाङ्गत्यमित्याशङ्क्य प्रकरणात् सन्निधेर्दुर्बलत्वादनेकेष्टिपशुसोमात्मकराजसूयगतानामभिषेचनीयाख्यसोमयागसन्निधिबाधेन विदेवनादिधर्माणां सर्वात्मकप्रकृतराजसूयसम्बन्धवत् सन्निहितपक्षादिसम्बन्धबाधेन तदाश्रितप्रकृतानुमानविषयत्वेनावतारयति । अनुमानद्वैविध्यमिति । तर्हि पूर्वोक्तत्रैविध्यविरोध इत्यत आह । प्रकारान्तरेणेति ।

---

(१) प्रयास–पा॰ E पु॰ ।

(२) विशिष्टवानिति क्वचित् ।

दृष्टं सामान्यतो दृष्ट-
मिति चास्य विधाद्वयम् ॥ २० ॥
पूर्वं प्रत्यक्षयोग्यार्थं
तदयोग्यार्थमुत्तरम् ।

विशेषतो दृष्टं सामान्यतो दृष्टमिति च द्विविधमनुमानं भवति । तत्र प्रत्यक्षयोग्यार्थानुमापकं विशेषतो दृष्टं यथा धूमादिरिति । नित्यातीन्द्रियार्था-

---

ननु सामान्यतो दृष्टस्य प्रतिकोटित्वेन विशेषतो दृष्टमिति निर्देष्टुं युक्तं न तु दृष्टमिति अन्यथा नीलोत्पलस्य रक्तोत्पलवदुत्पलमात्रस्यापि प्रतिकोटित्वापत्तेरित्याशङ्क्य सत्यं श्लोके वृत्तसङ्कोचात् कण्ठतो नोक्तं सामान्यशब्दसामर्थ्यलभ्यत्वादित्याशयेनाह । विशेषतो दृष्टमिति । ननु सर्वस्याप्यनुमानस्य प्रथमं व्याप्त्या सामान्य एव प्रवृत्तेः पश्चात् पक्षधर्मतावशेन विशेषपर्यवसानाच्च सामान्यतो दृष्टं विशेषतो दृष्टं चेति कुतो भेदसिद्धिरित्याशङ्क्यान्यथा लक्षणोदाहरणाभ्यामुभयं विविञ्चन्नुत्तरार्द्धं व्याचष्टे । तत्रेत्यादि । पूर्वं व्यवधानादिना अप्रत्यक्षत्वे ऽपि पश्चात् तदपाये विशेषतो व्यक्तितः प्रत्यक्षदृश्यार्थत्वाद्धूमाद्यनुमानं विशेषतो दृष्टमित्यर्थः । विशेषतो दृष्टे ऽतिव्याप्तिपरिहारार्थं विशिनष्टि । नित्येति । रूपादिज्ञानं करणसाध्यं क्रियात्वात् छिदिक्रियावत् ज्ञानत्वाद्वा लैङ्गिकवदित्यत्र नित्यानुमेयस्य चक्षुरादेः कुठारादिषु करणत्वसामान्येन दृष्टस्य विषयत्वादिदं सामान्यतो दृष्टमित्यर्थः । यदुक्तं प्राक् निरूपा-

नुमापकं सामान्यतो दृष्टमिति। यथा चक्षुराद्यनुमापकं रूपादिज्ञानम्। सौगतास्तु तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावः। ततश्च कार्यात्मानौ कारणमात्मानं चानुमापयतः। यथा धूमवत्त्वाद्धूमध्वजानुमानम्। शिंशपात्वाद् वृक्षत्वानुमानं चेति प्रतिपन्नाः। यथाहुः।

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमो दर्शनान्न नदर्शनात्॥ इति।

तदयुक्तम्। अकार्यानात्मनो रसादेरकारणानात्मभूतरूपाद्यनुमानस्य लोके बहुलमुपलब्धेः। किं

धिकः सम्बन्धो व्याप्तिरिति तत्र व्याप्तिरविनाभावः स चान्वयव्यतिरेकाभ्यामेव नियम्यते नान्यथेति विवक्षितम्। अन्यथैवेति शाक्याः अतस्तन्मतं निराकर्तुमुत्कीर्तयति। सौगतास्त्विति। तदुत्पत्तिः कार्यकारणभावः। एवकारोऽन्वयव्यतिरेकपक्षनिराकरणार्थः[(१)]। स्वभावाद् वेति। तादात्म्याद् वेत्यर्थः। दर्शनादन्वयात् नदर्शनाद् व्यतिरेकाच्च न नञर्थस्य नशब्दस्य सुप्सुपेति समासः। केचित्त्वदर्शनादिति छित्वा अदर्शनाद्व्यतिरेकान्न तथा न दर्शनाच्चान्वयाच्चेति व्याचक्षते।

तदेतद्दूषयति तदयुक्तमिति। तादात्म्यतदुत्पत्ती विनाप्यविनाभावदर्शनादव्यापकमिदं लक्षणमित्याह। अकार्येति। अन्धस्य रसाद्रूपानुमानम् आदिशब्दाद्रूपादिभिरपि यथायथमन्यतमदर्शनादितरानुमानमूह्यम्। एवमुभयपक्षसाधारणं दूषणमभिधायाधुना तादात्म्यपक्ष एव

(१) निवारणार्थः-पा॰ E पु॰।

च व्याप्तिर्नाम सम्बन्धविशेषः । स च भेदसमाना-धिकरण इति कथं तत्प्रतिपत्तौ तादात्म्ये जागरूके ऽविनाभावो जीवितमासादयेत् । किं च लिङ्गलिङ्गिनोश्च तादात्म्ये लिङ्गज्ञान एव लिङ्गिनोऽपि प्रतीतिप्रसङ्गादनुमेयं नावशिष्येत । लिङ्गलिङ्गिनोश्च व्यतिकरश्चात्र प्रसज्येत । न हि तादात्म्ये सत्यप्येकं व्यभिचरति नान्यदिति सङ्घटीति । सामान्यविशेषात्मना भेदाङ्गीकारे ऽप्यनुमेयाभावः । न ह्यस्ति

दोषत्रयं विवक्षुर्व्याप्त्यभावस्तावदाद्यो दोष इत्याह । किं च व्याप्तिरिति । द्वयोः सम्बन्धो नैकस्येति भावः । अथानुमेयाभावो द्वितीय इत्याह । किं च लिङ्गेति । अन्यथा तदेव ज्ञातमज्ञातं चेति व्याघात इति भावः । लिङ्गलिङ्गिव्यतिकरस्तृतीय इत्याह । लिङ्गलिङ्गिनोश्चेति । वृक्षत्वं लिङ्गं शिंशपात्वं[1] लिङ्गीति व्यत्ययः स्यादित्यर्थः । वृक्षत्वं शिंशपात्वव्यभिचारान्न लिङ्गं शिंशपात्वमेव तु तदव्यभिचाराल्लिङ्गमित्याशङ्क्याह । न हीति । तथात्वे वा तादात्म्यमेव न स्यादिति भावः । ननु नात्यन्तमभेदस्तादात्म्यं येनोक्तदोषः स्यात् किं तु सामान्यविशेषात्मना भेदस्यापि सम्भवान्न कश्चिद्दोष इत्याशङ्क्याह । सामान्येति । कुत इत्यत आह । न ह्यस्तीति । वृक्षोऽयं शिंशपात्वाद् व्यतिरेकेण घटवदित्यत्र विशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वनियमाल्लिङ्गज्ञानात् प्रागेव लिङ्गिनो ज्ञातत्वादनुमेयाभावः । अज्ञातत्वे वा लिङ्गस्याप्यज्ञातत्वादज्ञातासिद्धो

(१) शिंशुपात्वं पा· F पु· ।

सम्भवः सामान्यमनिश्चितं निश्चितस्तु विशेष इति। न च तस्मिन् सति भावमात्रं तत्कार्यमपि तु तस्मिन् सत्येव भावः। स चाविनाभाव एवेति तत्कार्यत्वात् तदविनाभावं वदत आत्माश्रयदोषापत्तिरिति कृतं विस्तरेण ॥ २० ॥ ८८ ॥

एवं सप्रकार[1]मनुमानं लक्षयित्वा उपमानं लक्षयति।

---

हेतुः स्यादित्यर्थः। अथ तदुत्पत्तावप्यसाधारणं दोषं वक्तुं तदुत्पत्तिं तावद् विविनक्ति। न चेति। अन्यथैवं प्रलपतो बौद्धस्य स्वनिषेककाले यदृच्छासन्निहितरासभकार्यत्वं केन वार्येत इति भावः। ततः किमत आह। स चेति। इतिशब्दो हेत्वर्थे तत्कार्यत्वात् तदविनाभाव इत्युक्ते तयोर्घटकलशादिशब्दवत् पर्यायत्वात् तदविनाभावात् तदविनाभाव इत्युक्तं भवेत् तथा च स्वसिद्धौ स्वापेक्षणादात्माश्रय इत्यर्थः। नहिं भवतामपि कार्यलिङ्गकानुमानेषु व्याप्तिज्ञाने का गतिरित्याशङ्क्यैदृशां सर्वेषामपि भवतामेवान्वयव्यतिरेकावन्तरेण कान्या गतिरस्तीत्याशयेनाह इति कृतमिति। इत्यनुमानम्[2] ॥ २० ॥ ८८ ॥

नन्वद्यापि स्वार्थपरार्थभेदानुक्तेरसमाप्त एवानुमाने कथमिदानीमुपमानोक्तिरुत्तरश्लोक इत्याशङ्क्याह। एवं सप्रकारमिति। स्वार्थादिभेदस्तु उत्तरत्र यः परार्थानुमा-

---

(१) सप्रपञ्च–पा॰ D पु॰।
(२) इत्यनुमानम्–इति नास्ति F पु॰।

अव्युत्पन्नपदोपेतवाक्यार्थस्य च सञ्ज्ञिनि ॥ २१ ॥
प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते ।

अव्युत्पन्नेनागृहीतसङ्गतिना पदेनोपेतं यद्वाक्यम् अतिदेशवाक्यमिति यावत् । तस्य योऽर्थः साधर्म्यादिस्तस्य पूर्वं वाक्येनानुभूतस्य पश्चात् सञ्ज्ञिनि गवयादौ यत् प्रत्यक्षेण प्रत्यभिज्ञानं तदुपमानम् । अकृ-

---

तस्येत्याद्यवयवलक्षणादेवार्थात् प्रतीतौ न कण्ठोक्तिमपेक्षत इति भावः । सङ्गतिस्तूदृश एवोक्ता ।

अव्युत्पन्नेतिपदमव्युत्पन्नपदमिति स्वरूपपरत्व(१)शङ्कानिरासार्थमाह । अव्युत्पन्नेनेति ।

अव्युत्पन्नशब्दार्थमाह । अगृहीतेति । प्रभिन्नकमलोदरादिवाक्याद्भिनत्ति । अतिदेशेति । स चार्थो नियत एवेत्याह । साधर्म्यादिति । आदिशब्दाद् वक्ष्यमाणवैधर्म्यधर्ममात्रयोर्ग्रहणम् । नन्वपूर्वदर्शनस्य कथं प्रत्यभिज्ञानमत आह । पूर्वमिति । प्रत्यक्षेण प्रत्यक्षप्रमाणेनेत्यर्थः । तदुपमानमिति । प्रत्यक्षफलं यत्प्रत्यभिज्ञाप्रत्यक्षं तदुपमीयते ऽनेनेत्युपमानम् उपमितिकरणमित्यर्थः । उपमितिश्च सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपत्तिरिति भावः । उक्तार्थे च आचार्य(२)सम्मतिमाह । अकृतेति । अत्र सञ्ज्ञायाः स्मर्यमाणतयैवोपयोगकथनात् तदतिरिक्तातिदेशवाक्यार्थप्रत्यभिज्ञैवोपमानमिति केचिद्व्याचक्षते ते प्रष्टव्याः गोसदृ-

---

(१) स्वरूपलक्षणत्व–पा॰ E पु॰ ।
(२) न्यायाचार्य–इति क्वचित् ।

तत्समयसङ्ग्रास्मरणसहायं तत्समभिव्याहृतवाक्यार्थ-
प्रत्यभिज्ञाप्रत्यक्षमुपमानमित्याचार्याः ॥ २१ ॥ ऽऽ ॥

उपमानत्रैविध्याय वाक्यार्थत्रैविध्यमाह(१) ।

शो गवय इत्यत्र गवयपदत्यागे तत्र वाक्यं नाम किमस्तीति यदर्थप्रत्यभिज्ञानमुपमानं भवेत् । न चैकपदं वाक्यमस्ति न चावाक्यमुपदेशाय कल्पते किं चात्रैव तत्समभिव्याहृतविशेषणं सङ्ग्रहे ऽप्यव्युत्पन्नपदोपेतविशेषणं च तत्साहित्यमुद्घोषवदुन्मत्तगीतं स्यात् । नन्वभिहितपदार्थसंसर्गो वाक्यार्थः न चाव्युत्पन्नं पदं किञ्चिदभिधातुमीष्टे तत्किमर्थं तत्साहित्यमिति चेत् तर्हि श्रूयतामुपमानरहस्यमवहितैः कीदृग्गवय इति गयवशब्दप्रवृत्तिनिमित्तविशेषं पृष्टस्तस्य गवयत्वरूपस्य रूपतो निर्देष्टुमशक्यत्वात् तदुपलक्षणं गोसादृश्यमाचष्टे गोसदृशो गवय इति। तथा च वाक्यादेव गवयशब्दो गोसदृशस्यार्थस्य वाचक इति सामान्यतो व्युत्पन्नमेव विशेषतो व्युत्पत्त्यर्थं तूपमानमपेक्षत इति । तदुक्तमाचार्यैः वाक्यादेव निश्चिते ऽपि सामान्ये विशेषतो बोधकत्वे ऽस्य मानान्तरमनुसरणीयमिति । तस्मात् सामान्ये व्युत्पन्नमव्युत्पन्नं च विशेषे यत् तदव्युत्पन्नपदं तद्युक्तवाक्यार्थप्रत्यभिज्ञानमेव तत्स्मृतिसहकृतमुपमानमिति लक्षणार्थ इत्यश्रद्धेयमेवापरिशीलिताचार्यवचसामपव्याख्यानमिति ॥ २१ ॥ ऽऽ ॥

ननूपमानविभागप्रस्तावे वाक्यार्थविभागः प्रक्रान्तवाजपेयस्य शरद्वर्णनप्राय इत्याशङ्क्याह । उपमानेति ।

(१) वाक्यार्थभेदमाह–पा· B पु· ।

अत्रातिदेशवाक्यार्थस्त्रिविधः परिगृह्यते[1]॥२२॥
साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः ।

साधर्म्यादिभेदेनातिदेशवाक्यार्थस्त्रिविधो[2] भवति । तद्भेदात् तत्प्रतिसन्धानात्मकमुपमानमपि त्रिधा भिद्यत इति भावः । तत्र यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य पश्चाद् वनं गतस्य नागरिकस्य वाक्यानुभूतस्य गोसादृश्यस्य गवये यत् प्रतिसन्धानमयमसौ गोसदृश इति तत्साधर्म्योपमानम् । वैधर्म्योपमानं तु कीदृगश्व इति प्रश्ने गवादिवद् द्विशफो न भवत्यश्व इत्यतिदेशवाक्याद्गवादिवैसादृश्यमधिगतवतः पश्चादेकशफत्वादिरूपस्य वैसादृश्यस्य तुरङ्गमे प्रत्यभिज्ञानम् । धर्ममात्रोपमानं तु उदीच्येनोदीरितं दीर्घग्रीवः प्रलम्बोष्ठः कठोरतीक्ष्णक-

---

द्वितीयार्द्धं त्रैविध्यान्तरोक्तिशङ्कां निरस्यन् श्लोकं व्याचष्टे । साधर्म्यादीति । वाक्यार्थत्रैविध्यस्योपमानत्रैविध्यप्रयोजकत्वं व्यनक्ति । तद्भेदादिति । प्रतिसन्धेयभेदात् प्रतिसन्धानभेद इत्यर्थः । प्रतिसन्धानं प्रत्यभिज्ञानम् । त्रिविधमप्युदाहरति । तत्रेत्यादि । अत्रान्वयरूपत्वात् पूर्वं साधर्म्यं ततो व्यतिरेकरूपत्वाद्वैधर्म्यं ततः परिशेषाद्धर्ममात्रमिति न्याय्यः क्रमः । श्लोके तु वृत्तानुसाराद्व्यत्ययः ।

---

(१) परिकल्प्यते—पा॰ A पु॰ ।

(२) त्रिप्रकारो—पा॰ B पु॰ ।

शटकाशी पशुः क्रमेलक इति वाक्यं श्रुतवतो दाक्षिणात्यस्य उत्तरापथे करभदर्शनानन्तरमयमसौ तादृशः पशुरिति प्रत्यभिज्ञानम् । ततश्च प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमितिसूत्रगतं साधर्म्यपदं च वैधर्म्यस्य धर्ममात्रस्य चोपलक्षणं बोद्धव्यम् । अत एव

---

क्रमेलकः करभ उष्ट्र इत्यनर्थान्तरम् । अत्र कैश्चिद्धर्ममात्रविषयस्येतरभेदवदुपमानोपमेयकोटिद्वयाभावान्नोपमानत्वं किं त्वसाधारणधर्मत्वाद् गन्धवत्त्वादिवल्लक्षणमात्रं नच केवलव्यतिरेक्येवेति चोद्यमुत्पाद्य सत्यम् यदत्र वाक्येनानुभूतं दीर्घग्रीवत्वादिकं यच्च पश्चात् सञ्ज्ञिनि दृश्यमानं तयोर्धर्मयोरेवोपमानोपमेयभावादुपमानत्वमिति पर्यहारि। तदसत् लोके समानधर्मसम्बन्धाद्धर्मिणोरुपमानोपमेयभावः प्रसिद्धो न धर्मयोः अस्तु वा तथापि भवदुक्तयोर्धर्मयोर्भेदोऽस्ति वा न वा अस्ति चेत् कथं तदेवेदमिति प्रत्यभिज्ञासिद्धिः न चेत् कथमुपमानोपमेयभावः तर्हि कथमुपमानत्वमिति चेद्व्युत्पन्नेत्यादिलक्षणयोगादिति ब्रूमः । तथापि कथमवयवार्थविरहिण्युपमानशब्दे प्रवृत्तिरिति चेत् रूढिन्यायादिति सन्तोष्टव्यम् । केवलव्यतिरेकित्वं तु व्यावृत्तिविषये ऽङ्गीकुर्मः सञ्ज्ञासञ्ज्ञिसम्बन्धस्तु न लक्षणार्थ इति तत्रोपमानमेव विजयत इति समाधेयम् । उक्तत्रैविध्यस्य सूत्रविरोधं परिहरति । ततश्चेति । प्रसिद्धसाधर्म्यात् प्रसिद्धेन गवादिना गवयादेः साधर्म्यात् साधर्म्यप्रत्यभिज्ञानात् साध्यस्य सञ्ज्ञासञ्ज्ञिसम्बन्धबोधस्य साधनमुपमानमिति सूत्रार्थः । उपलक्षणत्वे

साधर्म्योपमानोदाहरणानि बहूनि दर्शयित्वा अन्यान्यप्याहस्म भगवान् भाष्यकारः । एवमन्योऽप्युपमानस्य विषयो बुभुत्सितव्य इति ॥ २२ ॥ ऽऽ ॥

वादिविप्रतिपत्तेरुपमानस्य प्रमेयं फलं च दर्शयति ।

प्रमेयं तस्य सम्बन्धः सञ्ज्ञायाः सञ्ज्ञिना सह ॥२३॥
तत्प्रतीतिः फलं चास्य नासौ मानान्तराद्भवेत् ।

सञ्ज्ञासञ्ज्ञिसम्बन्ध उपमानस्य प्रमेयम् फलं च तत्सम्बन्धप्रतीतिः(१) । यथाहुः ।

सम्बन्धस्य परिच्छेदः सञ्ज्ञायाः सञ्ज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ इति ।

---

प्रमाणमाह । अत एवेति । तस्य प्रामाण्यसूचनार्थमुक्तं भगवानिति । भाष्योक्तेः साधर्म्योदाहरणान्तरत्वशङ्कां निरस्यति । बहूनीति । तत्र निराकाङ्क्षत्वाद्वैधर्म्यादिविषये वेत्यर्थः ॥ २२ ॥ ऽऽ ॥

नन्वस्योत्तरश्लोके प्रमेयफलकथनं प्रक्रमविरुद्धं प्रत्यक्षादेस्तदनुक्तेरत आह । वादिविप्रतिपत्तेरिति । पार्थक्ये लक्षणे चेति शेषः ।

श्लोकाक्षराणि योजयति । सञ्ज्ञेति ।

अत्रोदयनसम्मतिमाह । यथाहुरिति । नासौ मानान्तरादित्युक्तम् ।

अतिदेशवाक्यादनुमानाद्वा तत्प्रतीतेरित्याशङ्क्य न

---

(१) प्रतिपत्तिः—पा॰ B पु॰ ।

न ह्ययं सम्बन्धोऽतिदेशवाक्यादेव प्रतीयते वाक्यश्रवणसमये गवयपदप्रवृत्तिनिमित्तस्य गवयत्वस्याप्रतीतेः सम्बन्धिनोऽनवगमे सम्बन्धस्य दुरवगमत्वात्। गवयपदादेव तदवगमे परस्पराश्रयतापत्तिः। न च गोसादृश्येनोपलक्षयितुं शक्यते अदृष्टचरेण गवयत्वेन गोसादृश्यस्य सम्बन्धादर्शनात्। न हि पुरुषेणादृष्टसम्बन्धो दण्डः पुरुषमुपलक्षयति। प्रतीतमेव गोसादृश्यं गवयपदप्रवृत्तिनिमित्तमस्त्विति चेत्। न

---

तावदाद्य इत्याह। न हीत्यादिना प्रसङ्गाच्चेत्यन्तेन। अप्रतीतेरिति। केनापि प्रमाणेनेति शेषः। माभूत्त्वायीत्यत आह। सम्बन्धिन इति। सम्बन्धज्ञानस्य सम्बन्धिज्ञानपूर्वकत्वमित्यर्थः। नन्विन्द्रियलिङ्गाविषयत्वेऽप्यतिदेशवाक्यगतगवयपदादेव गवयत्वं प्रत्येष्यत इत्यत आह। गवयपदादेवेति। तर्हि तेन तद्ग्रहे सम्बन्धग्रहः सम्बन्धग्रहे च तद्ग्रह इत्यन्योन्याश्रय इत्यर्थः। तर्हि तद्गतगोसदृशपदात् तत्सादृश्योपलक्षितं सत् प्रतीयतामित्याशङ्क्योपलक्षणस्यैवासम्भवान्नेत्याह। न चेति। अशक्यत्वे हेतुमाह। अदृष्टचरेणेति। न ह्यगृहीतसम्बन्धयोरुपलक्ष्योपलक्षकभावः। अत्र दृष्टान्तमाह। न हीति। तथा च सादृश्यस्योपलक्षकत्वे सिद्धे गवयत्वप्रतीतिसिद्धिः तत्सिद्धौ च तत्सम्बन्धज्ञानमपेक्ष्योपलक्षणसिद्धिरित्यन्योन्याश्रयप्रसङ्ग इति भावः। तर्ह्यप्रतीतगवयत्वं गवयपदप्रवृत्तिनिमित्तं माभूत् प्रतीतं तु सादृश्यमेव तथा भविष्यतीति शङ्कते।

तस्य प्रतियोगिनिरूप्यत्वेन प्रतियोगिनमनभिधायाभिधानानुपपत्तेः प्रतियोगिनो गोरप्यभिधाने गौरवप्रसङ्गात् अप्रतीतगूनामारण्यकानां तत्सादृश्यानवगमेन गवयपदव्यवहाराभावप्रसङ्गाच्च । ननु गवयशब्दो गवयत्वस्य वाचकोऽसति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुक्तत्वात् योऽसति वृत्त्यन्तरे यत्र प्रयुज्यते स तस्य वाचकः यथा गोशब्दो गोत्वस्येत्यनुमानादेव तत्सम्बन्धप्रतीतिरिति चेत् । न तद्वाचकत्वज्ञानमन्तरेण लिङ्गविशेषणासिद्धेः । उपचारेणापि तत्र प्रयोगोपपत्तेः । यथाहुः ।

---

प्रतीतमिति । परिहरति । नेति । तस्येति । सादृश्यस्येत्यर्थः । तस्याप्यभिधाने दोषमाह । प्रतियोगिन इति । गौरवादप्यवीक्षतोऽनिष्टमाह । अप्रतीतगूनामिति । अप्रतीता गावो यैरिति विग्रहः । गोस्त्रियोरुपसर्जनस्येति ह्रस्वः । अथानुमानात् सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतिरिति द्वितीयं पक्षमाशङ्कते । नन्विति । गौणलाक्षणिकप्रयोगेषु व्यभिचारवारणाय हेतुं विशिनष्टि । असति वृत्त्यन्तर इति । सम्बन्धज्ञानात् प्रागस्यैव सन्दिग्धत्वात् सन्दिग्धविशेषणासिद्धो हेतुरिति परिहरति । नेति । अथ प्रयोगान्यथानुपपत्त्या तत्सिद्धिरत आह । उपचारेणापीति ।

अत्राप्युदयनसम्मतिमाह । यथाहुरिति । उक्तरीत्या सादृश्यस्य निमित्तत्वायोगान्निमित्तस्य सतो गवयत्वस्य

साद्दृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि च[1] ॥ इति ।

मीमांसकास्तु गृह्यमाणपदार्थगतसादृश्यविज्ञानात् तत्प्रतियोगिकस्मर्यमाणपदार्थगतसादृश्यविज्ञानमुपमानमिति वर्णयन्ति । यथा गामनुभूतवतो वनं गतस्य गवये गृह्यमाणाद्गोसादृश्यात् स्मर्यमाणे नग-

केनापि प्रमाणेनाप्रतीतेः पूर्वं प्रत्यभिज्ञानात् प्राक् शब्देनातिदेशवाक्येन समयः सङ्केतो दुर्ग्रहः अनुमयानुमानेनापि तथा त्वदुक्तलिङ्गविशेषणासिद्धेरित्यर्थः । अतः सम्बन्धपरिच्छेदार्थं प्रामाणान्तरमास्थेयमित्युपमानसिद्धिरिति ॥

अथ शाबरमुपमानलक्षणं दूषयितुमनुभाषते मीमांसकास्त्विति । अत्र गृह्यमाणपदार्थगतसादृश्यज्ञानस्य पञ्चमीनिर्देशात् करणतयेतरत् प्रथमानिर्दिष्टं फलम् तत्सामानाधिकरण्यनिर्देशादुपमानशब्दोऽप्युपमितिवचनस्तदेतदुदाहरणेन स्पष्टीकरोति । यथेत्यादि । तदुक्तं शालिकायाम् । सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानमिति । अत्र सादृश्यदर्शनं गृह्यमाणपदार्थगतसादृश्यज्ञानं तदत्र करणं तदुत्थं ज्ञानं सादृश्यविषयं स्मर्यमाणपदार्थगतसादृश्याख्यप्रमेयादिविषयं यत् तदुपमानमुपमितिस्तदेव प्रमाणमिति शालिकार्थः । कारिकायां तु सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानमित्यत्र विशिष्टं स्मर्यमाणं वस्तु तद्विशिष्टं वा सादृश्यं प्रमेयमित्युक्तम् ।

(१) वा–पा· C पु· ।

रस्थे गवि गवयप्रतियोगिकसादृश्यज्ञानमेतत्सदृशः स गौरिति । तदिदमनुमानान्नातिरिच्यते । तथाहि । गौर्गवयसदृशः गवयस्थसादृश्यप्रतियोगित्वात् यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः यथा यमो यमान्तरेणेत्यनुमानादेव तत्सिद्धेः[१] । न च व्याप्तिग्रहणविधुराणामपि प्रतीतिदर्शनादननुमानत्वमिति वाच्यम् सर्वेषामेवान्ततः करतलयोरिव गृहीतव्याप्तिकत्वात् । किं च सदृशदर्शनात् स्मर्यमाणपदार्थगतसादृश्यज्ञानस्य प्रमाणान्तरत्वाभ्युपगमे विसदृशदर्शनात्[२]

---

तस्माद्यत् स्मर्यते वस्तु सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ इति ।

तदेतद्दूषयति । तदिदमिति । अनुमानान्तर्भावमभिव्यक्तुं प्रयोगमारचयति । तथाहीत्यादि । अत्र गोर्गवयसदृशत्वं नाम तत्प्रतियोगिकसादृश्याधिकरणत्वं तत्प्रतियोगिकत्वं तु तत्प्रति सम्बन्धित्वमिति न साध्यविशिष्टता । ननु यमदृष्टान्तादगृहीतव्याप्तिकानामपि सादृश्यप्रतीतेर्नानुमानान्तर्भाव इति शङ्कामनूद्य निरस्यति । न चेति । माभूदविशिष्टे यमदृष्टान्ते व्याप्त्यनुसन्धानं तथापि सर्वस्यापि नित्यनिर्दिष्टयोर्निजकरतलयोरिव यद्येन सदृशं तदपि तेन सदृशमिति व्याप्तिग्रहणसम्भवादनुमानमेवेत्यर्थः । अथास्मिन् पक्षे प्रमाणातिरेकलक्षणम-

---

(१) यथा गौर्गवान्तरेणेत्यनुमानवृत्तेः–पा· C पु· । अनुमानप्रवृत्तेः–पा· B पु· ।

(२) विसदृशज्ञानात्–पा· C पु· ।

तस्मातियोगिकस्मर्यमाणवस्तुगतवैसादृश्यज्ञानस्यापि प्रमाणान्तरत्वमास्थेयं तुल्यन्यायत्वात् । यथाहुः ।

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ[1] व्यक्तमिति चेत् प्रकृते न किम् ॥

इति ॥ २३ ॥ ऽऽ ॥

अथागमं लक्षयति ॥

**यथार्थदर्शिनः पुंसो यथादृष्टार्थवादिनः ॥ २४ ॥**
**उपदेशः परार्थो यः स इहागम उच्यते ।**

---

तिप्रसङ्गं चाह । किं चेति । न्याय उपपत्तिः ।

अत्रोदयनसंवाद[2]माह । यथाहुरिति । साधर्म्यं सादृश्यं वैधर्म्यं वैसादृश्यं मानं मानान्तरं तथा च सादृश्यदर्शनोत्थायाः सादृश्यबुद्धेः प्रमाणान्तरत्वे वैसादृश्यदर्शनोत्थायास्तद्‌बुद्धेरपि तथात्वापत्तिरित्यर्थः । अथ गृह्यमाणस्य गोः स्मर्यमाणमहिषवैसादृश्यान्यथानुपपत्त्या तस्याप्येतद्वैसादृश्यकल्पनादियमर्थापत्तिरित्यभिमानस्तर्हि गवयगतगोसादृश्यान्यथानुपपत्त्या गोरप्येतत्सादृश्यकल्पनमर्थापत्तिरेवेति कष्ट[3]मुपमानस्वरूपमेव नष्टमित्याहार्थापत्तिरिति । इत्युपमानम्[4] ॥ २३ ॥ ऽऽ ॥

उद्देशक्रमादुपमानानन्तर्यमागमस्येत्याशयेनाह । अथेति ।

---

(१) अर्थापत्तेरसौ–पा· C पु· ।
(२) सम्मति–पा· E पु· ।
(३) क्लिष्ट–पा· E पु· ।
(४) इत्युपमानम्–इति नास्ति E पु· ।

यथावस्थितार्थदर्शी यथादृष्टार्थवादी चाप्तः । तस्य श्रोतृप्रवृत्तिनिवृत्त्युपयोगिवचनमागमः । यथार्थदर्शिनोऽप्ययथार्थवादिनो वचनमप्रमाणं यथा विप्रलम्भकस्य वाक्यम् । यथार्थवादिनो[1]ऽयथार्थदर्शिनोऽपि वचनं तथा यथा भ्रान्तस्यायथार्थदर्शिनो यथार्थवादिनोऽप्यष्टौ काकदन्ता इति । श्रोतृप्रवृत्तिनिवृत्त्यनुपयोगिवचनमनुपादेयमिति तन्निवृत्त्यर्थमुक्तं परार्थ इति । तदुक्तम् । आप्तोपदेशः शब्द इति । उपदिश्यते ऽनेनेति उपदेशो वाक्यं तदर्थज्ञानं वा । पूर्वत्र वाक्यार्थज्ञानं फलमुत्तरत्र हानादिबुद्धिरिति ॥

---

नन्वाप्तोपदेश आगम इति प्रसिद्धं लक्षणं किं नेष्यत इत्याशङ्क्य तदेवेदमित्याह । यथावस्थितेति । एवं च सति पुनराप्तलक्षणोक्तिगौरवं नास्तीति भावः । परार्थशब्दार्थमाह । श्रोतृइति । उपदेशशब्दार्थमाह । वचनमिति । वाक्यमित्यर्थः । क्रमाद् विशेषणत्रयस्यापि व्यावर्त्यमाह । यथार्थेत्यादि । शास्त्रं हि तच्छासनादित्युक्तत्वादपरार्थस्य प्रामाण्यमेव नास्तीत्यर्थः । अत्र सूत्रसम्मतिमाह । तदुक्तमिति । ननूपदिष्टिरुपदेशः भावे घञः स्मरणात् तत्कथमस्य शब्दशब्देन करणवृत्तेन सामानाधिकरण्यमित्याशङ्क्य अकर्तरि च कारके सञ्ज्ञायामिति करणार्थत्वमाह । उपदिश्यते ऽनेनेति । पक्षद्वये ऽपि फलभेदं दर्शयति । पूर्वत्रेति । इत्यागमः ॥

---

(१) यथादर्शनवचने ऽपि--पा॰ B पु॰ ।

एवमेतानि चत्वार्येव प्रमाणानि[1] एतेष्वेवेत-रेषां यथासम्भवमन्तर्भावः । अर्थापत्तिसम्भवयोरनु-मानान्तर्भावात् ऐतिह्यस्य च शब्दानतिरेकात् अभा-वस्य च प्रत्यक्षाद्यव्यतिरेकात् । तदेतत्सूत्रकारैरेव न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यादिति[2] प-रिचोदनापूर्वकं शब्द ऐतिह्यानर्थान्तरभावादनुमाने ऽर्थापत्तिसम्भवाभावानर्थान्तरभावादभावस्य प्रत्य-

इत्थं प्रमाणचतुष्टयं निरूप्य तत्रैवेतराण्यन्तर्भाव-यितुमुपोद्घातयति । एवमिति । नन्वर्थापत्त्यादिषु जाग्रत्सु कथं चत्वार्येवेत्यवधारणमत आह । एतेष्वेवेति । कुत्र कस्यान्तर्भाव इत्यत आह । अर्थापत्तीत्यादि । न चैत-च्चतुष्ट्वमसाम्प्रदायिकं सूत्रकारेणैवाक्षेपपूर्वकं समर्थितत्वा-दित्याह । तदेतदिति । चतुष्ट्वमित्यर्थः । अनर्थान्तर-भावात् प्रमाणान्तरत्वाभावादित्यर्थः । अप्रतिषेध इति सूत्रशेषः चतुष्ट्वस्याप्रतिषेध इत्यर्थः । आदिशब्दादर्थाप-त्तिरप्रमाणमनैकान्तिकत्वान्नानैकान्तिकत्वमर्थापत्तेरनर्था-पत्तावर्थापत्त्यभिमानात् तथा नाभावः प्रमाणम् प्रमे-यासिद्धेरित्याद्यन्तर्भावोपयोगिप्रमाणपरीक्षासूत्राणां सं-ग्रहः । एवं चादिशब्दाद्भाष्यवचनादिपरामर्श इति केषा-ञ्चिद्व्याख्यानं प्रत्याख्यातं सम्भवति सूत्रपरामर्शित्वे तस्या-न्याय्यत्वादिति । अथ सङ्ग्रहे प्रमाणचतुष्टयमात्रलक्षणा-

(१) एतेभ्य एवदेवमनुष्यतिरश्चां व्यवहाराः प्रवर्तन्ते-इत्य-धिकं C पु० ।

(२) सम्भवाभावानामिति क्वचित् ।

त्वाद्यनर्थान्तरभावादित्यादि समर्थितम् । तथाहि । अनुपपद्यमानार्थदर्शनात् तदुपपादकभूतार्थान्तरकल्पनमर्थापत्तिः । यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्य गृहभावदर्शनेन वा बहिरभावस्य कल्पनम् । तत्र तावद्बहिर्भावमन्तरेण गृहाभावस्य कानुपपत्तिरिति वाच्यम् । तमन्तरेणासौ न भवतीति चेत् । न भवतीत्यस्य कोर्थः । किं न जायत इति किं वा नावतिष्ठत इति । न प्रथमः । बहिर्भावाकार्यत्वाद् गृहाभावस्य । न द्वितीयः । शब्दान्तरेणाविनाभावस्यैवाङ्गीकारात् । गम्येन हि विना

दर्थसिद्धमितरान्तर्भावं स्वयं समर्थयितुमारभते । तथाहीति । तत्रादावर्थापत्तेरन्तर्भावं वक्तुं तत्स्वरूपं तावदाह । अनुपपद्यमानेति । उदाहरति । यथेति । उक्तवैपरीत्येनाप्यर्थापत्तिमुदाहरति । गृहभावेति । अथैनामनुमानेन्तर्भावयितुमनुपपत्तिशब्दार्थं तावत् पृच्छति । तत्रेति । तं विना तस्या भवनमेवानुपपत्तिरिति परः शङ्कते । तमिति । तर्हीयमेवानुमानजीवातुर्व्याप्तिरिति वक्तुं प्रश्नपूर्वकमभवनं द्वेधा विकल्पयति । न भवतीत्यस्येति । बहिर्भावमन्तरेण गृहाभावस्याभवनं नामानुत्पत्तिरनवस्थानं वेत्यर्थः । बहिर्भावाकार्यत्वादिति । देवदत्तस्य गृहाभावो नाम गृहसंसर्गाभावस्तस्य प्रागभावत्वे ऽकार्यत्वात् प्रध्वंसत्वे प्रागेव देवदत्तनिष्ठक्रियाजन्यविभागजनितत्वादित्यर्थः । शब्दान्तरेणेति । अनुपपत्तिशब्देनेत्यर्थः । तं विनानवस्थानस्याविनाभावत्वमभिव्यक्तुमविनाभावस्वरूपमाह ।

गमकस्यानवस्थानमेवाविनाभावः। कीदृशं च बहिर्भावस्योपपादकत्वम्। न तावत् तज्जनकत्वं तदकार्यत्वात् तस्येत्युक्तत्वात्। स्वसद्भाव एव गृहाभावस्यावस्थानमिति चेत्। तर्हि व्यापकत्वमेवाभिहितं[1] स्यात्। प्रमाणद्वयविरोध एवानुपपत्तिरिति चेत्। मैवं व्याहतं भाषिष्ठाः। प्रमाणयोः सतोर्विरोध एवानुपपन्नः[2] शुक्लोऽयं घटोऽयमितिवत्सहभा-

गम्येनेति। यथाग्निं विना धूमानवस्थानं तयोर्व्यतिरेकव्याप्तिरेव तद्वदनयोरपीत्यर्थः। एवमनुपपद्यमानार्थस्य गमकस्य व्याप्यत्वमुक्त्वा तदुपपादकस्यापि तद्गम्यस्य व्यापकत्वं वक्तुं तत्स्वरूपं च पृच्छति। कीदृशं चेति। तच्च तज्जनकत्वं वा तदवस्थानप्रयोजकस्वावस्थानकत्वं वा। नाद्यः उक्तोत्तरत्वादित्याह। न तावदिति। द्वितीयमाशङ्कते। स्वेति। तर्हि सिद्धं नः समीहितं नामान्तरेणान्वयव्याप्तेरेवाभिधानादित्याह। तर्हीति। व्याप्यव्यापकभाव एवाविनाभाव इत्यर्थः। तर्हि गृहाभावजीवनग्राहिणोः प्रमाणयोर्विरोध एवानुपपत्तिरिति गुरुः शङ्कते। प्रमाणेति। गोत्वाश्वत्वयोरिव नित्यसहानवस्थायिनोः[3] प्रमाणत्वविरुद्धत्वयोः सामानाधिकरण्यं व्याहतमिति परिहरति। मैवमिति। व्याहतिं व्यनक्ति। प्रमाणयोरित्यादिनाभावादित्यन्तेन। सति प्रामाण्ये विरोधाभावमुदाहरति। शुक्लोऽयमिति। एकस्मिन्नेव पटे पट-

(१) अभिमतं—पा॰ B पु॰।

(२) एव न सम्भवति—पा॰ B पु॰।

(३) नित्ययोः सहानवस्थायिनोः—पा॰ F पु॰।

वात्[१] । विरुद्धयोश्च न प्रामाण्यं वस्तुनो द्वैरूप्यासम्भवेन रज्जुरियं सर्पोऽयमितिवदन्यतरस्य प्रामाण्याभावात्[२] । न चात्र जीवनगृहाभावयोर्विरोधोऽस्ति । जीवत एव स्वात्मनो गृहाभावदर्शनेन जीवनगृहाभावयोः सहसम्भवात् । जीवनप्रमाणेन जीविते प्रमिते[३] जीवता क्वचित् स्यातव्यमिति देशसामान्यसम्बन्धे चावगते तच्च जीवनं गृहे वा बहिर्वेति विषये[४] सन्देहमात्रं जायते न प्रमाणमेव प्रव-

त्वशुक्लत्वग्राहिणोः प्रमाणत्वमस्ति न तु विरुद्धत्वमित्यर्थः । विरुद्धत्वे प्रामाण्याभावं चोदाहरति । रज्जुरिति । एकस्मिन्नेव पुरोवर्तिनि रज्जुत्वसर्पत्वग्राहिणोस्तु विरुद्धयोर्न प्रामाण्यमन्यतरबाधावश्यम्भावादित्यर्थः । बाधे हेतुमाह । वस्तुन इति । प्रकृते तु द्वयोः प्रामाण्यमेव न च विरोधः स्वानुभवस्यैव तत्र साक्षित्वादित्याह । न चात्रेति । ननु गृहाभावग्राहिणः प्रत्यक्षस्य गणिताप्तवाक्यादिना जीवनग्राहिप्रमाणेन गृहावस्थानव्याप्तिविषयेण विरोधः सम्भविष्यतीत्याशङ्क्याह । जीवनप्रमाणेनेति । अयमर्थः । न हि जीवनं गृहावस्थानेन व्याप्तं येन तद्ग्राहिप्रमाणेन विरोधः स्यात् किं तु देशसामान्येन व्याप्तं न च तावता विरोधः बहिःसद्भावेनापि तदुपपत्तेरिति तर्हि येन

(१) सह सम्भवात्–पा· B C पु· ।
(२) अन्यतराप्रामाण्यावश्यम्भावात्–पा· C पु· ।
(३) जीवने प्रमिते–पा· B पु· ।
(४) विशेष–पा· B पु· ।

तत[1] इति नास्ति गृहाभावस्य प्रमाणविरोधः । अत एव जीवनविशिष्टेन गृहाभावलिङ्गेन बहिर्भावानुमानं सुकरम् । जीवनस्य विशेषानिश्चये[2] ऽपि सामान्यनिश्चयेन तद्विशिष्टस्य गृहाभावस्य लिङ्गत्वात् । यथा स्थाणुत्वपुरुषत्वविशेषानिश्चये ऽपि ऊर्ध्वद्रव्यमात्रनिश्चयेन तद्विशिष्टदेशादिकमवधार्य व्यवहारप्रवृत्तिः । प्रयोगश्च देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहे ऽसत्त्वात् । यो विद्यमानो यत्र नास्ति स ततोऽन्यत्रास्ति यथाहमिति । तथैव देवदत्तो बहि-

विशेषो गृह्यते तेनैव विरोधो भविष्यतीत्याशङ्क्य न केनापि गृह्यते किं तु सन्दिह्यत इत्याह । तच्चेति । फलितमाह । अत एवेति । विरोधाभावादेवेत्यर्थः । ननु जीवनस्य देशविशेषानिश्चये सन्दिग्धविशेषणासिद्धो हेतुः स्यादित्याशङ्क्याह । जीवनस्येति । सामान्यतो निश्चितस्यैव व्यवहारहेतुत्वमुदाहरति । यथेति । यथा यदेतदूर्ध्वद्रव्यमग्रे दृश्यते स्थाणुर्वा पुरुषो वा ततोऽन्यद्वा अतः समीपे तिष्ठ त्वमदागमनपर्यंत (?) मित्यादावनिश्चितविशेषस्य द्रव्यमात्रस्य व्यवहारहेतुत्वं तद्वदत्रापि जीवनमात्रस्यैव हेतुत्वमित्यर्थः । प्रतिपादितमर्थं प्रयोगारूढं करोति । प्रयोगश्चेति । तत्राद्यविशेषणेन मृतेषु जनिष्यमाणेषु च व्यभिचारनिरासः द्वितीयेन गेहस्थेष्वेवेति । द्वितीयोदाहरणे ऽपि

(१) न प्रमाणं किमपि प्रवर्तत—पा॰ B पु॰ ।

(२) जीवनस्य देशविशेषानिश्चये—पा॰ B पु॰ देशविशेषनिश्चयाभावे—पा॰ C पु॰ ।

नास्ति मूर्तत्वे सति गृहे सत्त्वात् यथाहमिति । तस्मात् सिद्धमेव अनुपपद्यमानदर्शनात् तदुपपादकार्थान्तरकल्पन[1]मनुमानमिति । अन्यथानुमानतया प्रसिद्धे धूमोदाहरणे ऽपि धूमः स्वकारणं दहनमाक्षिपति प्रतिक्षिपति चानुपलब्धिरिति प्रमाणद्वयविरोधात् पर्वतार्वाग्भागे दहनाभावः परभागे च दहनावस्थानमित्यर्थापत्तितापत्तिः । यथाहुः ॥

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाप्यसौ समः ॥ इति ।

---

प्रयोगमाह । तथैवेति । क्रमात् पदद्वयेनाकाशादौ बहिर्भूतेषु च व्यभिचारनिरासः । परमप्रकृतमुपसंहरति । तस्मादिति । अनुपपद्यमानोपपादकयोर्व्याप्यव्यापकभावादविरोधाद्वेत्यर्थः । तथाप्यनुमानत्वानङ्गीकारे धूमाद्यनुमानस्याप्यर्थापत्तित्वापत्तेर्जगत्यनुमानकथैवास्तमियादित्याह । अन्यथेति । तत्रापि प्रमाणद्वयविरोधं सम्पादयति । धूम इति । कार्यानुपलब्ध्योर्दहनभावाभावग्राहिणोर्विरोधादित्यर्थः ।

अत्रोदयनसम्मतिमाह । यथाहुरिति । अनियम्यस्याव्याप्यस्यायुक्तिरनुपपत्तिः न अनियन्ता अव्यापक उपपादको न भवति तथा मानयोर्भावाभावग्राहिप्रमाणयोः पूर्वोक्तरीत्या विरोधश्च नास्ति अतोऽर्थापत्तिरनुमानान्न भिद्यत इति भावः । अन्यथा प्रसिद्धे धूमाद्यनुमाने चासौ विरोधः समः तस्याप्यर्थापत्तित्वापत्तिरित्यर्थः । इत्यर्थापत्त्यन्तर्भावः ॥

---

(१) तदुपपादककल्पन–पा॰ B पु॰ ।

अथाभावस्य च प्रत्यक्षादिषु यथासम्भवमन्तर्भावः। तत्र तावदिह भूतले घटो नास्तीति प्रतीतिरिन्द्रियजन्या अनन्यत्रोपक्षीणेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वात् रूपादिबुद्धिवत्। अधिकरणग्रहणोपक्षीणमिन्द्रियमिति चेत् न त्वगिन्द्रियेण घटादिग्रहणे प्रतियोगिस्मृतिमतोऽन्धस्य शुक्लाद्यभावप्रतीतिप्रसङ्गात्। प्रतियोगिग्राहकेन्द्रियेणाधिकरणप्रतीतिरपेक्षणी-

---

इत्थमर्थापत्तिमनुमाने ऽन्तर्भाव्य सम्प्रत्यभावं प्रत्यक्षादिषु यथायथमन्तर्भावयितुमाह। अथेति। अधिकरणग्रहणप्रतियोगिस्मरणसहकृतयानुपलब्ध्या षष्ठप्रमाणेनाभावो गृह्यते नेन्द्रियादिनेति मीमांसकाः। यथाहुः।

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायते ऽक्षानपेक्षया॥ इति।

तान् प्रति कश्चिदभावस्य प्रत्यक्षत्वं साधयति। तत्र तावदिति। अत्र प्रतिपत्तेरापरोक्ष्यादित्याद्युदयनेनोक्तहेत्वपेक्षस्येष्टत्वात् प्रथमं हेतुमुपेक्ष्य द्वितीयं प्रयोगतो दर्शयति। इहेत्यादि। अनयोरेव प्रतिज्ञादृष्टान्तयोः साक्षात्कारिप्रतीतित्वादिति हेतुप्रयोगे प्रथमहेतुव्याख्यानं चेति द्रष्टव्यम्। न च प्रतिवाद्यसिद्धो हेतुः तस्यापरोक्षत्वे लैङ्गिकादिवदज्ञातकरणत्वानुपपत्तेरिति लिङ्गग्रहणोपक्षीणेन्द्रियव्यापारानुविधायिनि लैङ्गिकज्ञाने व्यभिचारनिरासार्थमुक्तम् अनन्यत्रोपक्षीणेति। विशेषणासिद्धिमाशङ्कते। अधिकरणेति। किं येन केनचिदिन्द्रियेणाधिकरणग्रहणमिष्टं प्रतियोगिग्राहकेन्द्रियेण वा नाद्यः अतिप्रसङ्गादि-

येति चेत् न त्वगिन्द्रियग्राह्ये वायौ चाक्षुषरूपाभावानवगमप्रसङ्गात् । अभावप्रतीतौ चाधिकरणप्रतीतेरनुपयोगान्न तत्रेन्द्रियमुपक्षीयते । उपयोगे वा तन्तुनाशोत्तरकालं पटप्रध्वंसानिरूपणप्रसङ्गात् । तस्य हि प्रतियोग्यधिकरणाधारत्वेन तन्त्वाश्रयत्वात् तेषां च विनष्टत्वात् । भवतु वाधिकरणग्रहणावश्यम्भावः । तथापि न तत्रेन्द्रियमुपक्षीयते तदवान्तरव्यापारत्वात् तस्य । न चैवं लिङ्गज्ञानस्यापि इन्द्रियावान्त-

---

त्याह । नेति । द्वितीयमाशङ्कते । प्रतियोगीति । तत्राप्यनिष्टमाह । नेति । किं चाधिकरणग्रहणस्यानुपयोगाच्च न तत्रेन्द्रियस्योपक्षय इत्याह । अभावप्रतीताविति । उपयोगित्वोक्तौ यत्राधिकरणमेव न सम्भवति तत्राभावोपलम्भो न स्यादित्याह । उपयोगे वेति । अधिकरणाभावं सूचयति । तन्तुनाशोत्तरकालमिति । अभावस्य तन्त्वाश्रयत्वे युक्तिमाह । तस्येति । तर्ह्यधिकरणाभावः कथमत आह । तेषामिति । कारणविभागात् कारणनाशाद्वा कार्यद्रव्यनाशः । तत्र द्वितीयप्रक्रियायामधिकरणं न सम्भवतीति भावः । ननु तन्तुनाशे ऽपि तदवयवपरम्परायामापरमाणोरस्त्येवाधिकरणं यत्किञ्चिद्दृष्टमनुमितं वा अन्यथा निराश्रयस्येन्द्रियेणापि दुर्ग्रहत्वादित्याशङ्क्याह । भवतु वेति । अनुपक्षये मण्डूकप्लुत्या व्यापाराऽव्यवधानत इति हेतुमुपादत्ते । तदवान्तरेति । न हि स्वाङ्गं स्वस्य व्यवधायकमिति भावः । तर्हि लिङ्गज्ञानस्याप्यवान्तरव्यापारत्वे लैङ्गिकस्याप्यैन्द्रियकत्वापत्तिरित्याशङ्क्याह । न चैव-

रव्यापारत्वप्रसङ्गः । यद्धि यज्जनयित्वैव यज्जनयति तत्र तस्य तदवान्तरव्यापारत्वात् । इन्द्रियस्य च लिङ्गज्ञानमन्तरेणापि लिङ्गिज्ञाने सामर्थ्योपलम्भात् । न च तुच्छत्वादिन्द्रियसन्निकर्षाभावो ऽभावस्य यथा ज्ञानेन विषयत्वेन सन्निकृष्यते तथेन्द्रियेणापि सन्निकर्षोपपत्तेः। न च तुच्छत्वमप्यभावस्य अभावप्रतियो-

मिति । कुत इत्याशङ्क्य तल्लक्षणाभावादित्याशयेन तल्लक्षणमाह । यद्धीति । यस्य कारकस्य स्वकार्यकरणे यदवश्यापेक्षितमवान्तरकार्यं स तस्यावान्तरव्यापारो यथेन्द्रियस्यार्थसन्निकर्षो यागस्यापूर्वं कुठारस्योद्यमनादिकं चेत्यर्थः । प्रकृते नैवमिन्द्रियस्य लिङ्गिग्रहणे लिङ्गनैरपेक्ष्यदर्शनादित्याह । इन्द्रियस्येति । नन्विन्द्रियस्य सन्निकृष्टार्थग्राहित्वादभावस्य च तुच्छत्वेन[1] सन्निकर्षायोगाद् नैन्द्रियकत्वमिति बाधः प्रतिरोधो वेत्याशङ्क्य किमिदं तुच्छत्वं निषेधात्मकत्वं वा निरूपाख्यत्वं वा तत्राद्ये परस्परसन्निकृष्टत्वहेतोरसिद्धिरित्याह । न चेति । कुत इत्यत आह । यथेति । इन्द्रियसन्निकर्षः संयुक्तादिविशेषणविशेष्यभावः द्वितीये तु तदेव नास्तीत्याह । न चेति । तुच्छत्वाभावे ऽभावत्वमेव न स्यादित्याशङ्क्योभयं विविनक्ति । अभावेति । विधिर्भावः । तन्निषेधो ह्यभावः । तद्वर्तमानदशायां तत्प्रतियोगिनो विधित्वेन निषेधत्वेन च दुर्निरूपत्वान्निरूपाख्यत्वलक्षणं तुच्छत्वम् अभावत्वं तु निषेधबुद्धिविषयत्वम् अतोऽस्य प्रामाणिकत्वात् प्रमासम्बन्धवद्प्रतिबन्धः प्रमाकरणसम्बन्ध इति भावः । अथा-

(१) अभावोऽसन्निकृष्टः तुच्छत्वात् । अभावः ऐन्द्रियको न भवति असन्निकृष्टत्वात् तुच्छत्वाद्वा ।

गित्वं हि तुच्छत्वं नाभावत्वम् । किं च षष्ठप्रमाणवा-
दिनाऽप्यनुपलब्धेरज्ञाताया एव ज्ञानजनकत्व[१]मास्थे
यम् । अन्यथा तस्या अप्यभावरूपत्वेनानुपलब्ध्यन्तरा-
पेक्षायामनवस्थाप्रसङ्गात् । ततश्चाज्ञातकरणत्वाद्
रूपादिज्ञानवदेवाभावज्ञानस्येन्द्रियजन्यत्वं स्वध्यवसा-
नम् । सर्वत्र च बाह्यार्थेषु भावप्रमाणावष्टम्भेनैव मनसो
ऽपि ज्ञानहेतुत्वं दृष्टमित्यभावज्ञाने ऽपि तथात्व-
मुपगम्यत इति अनुपलब्धिसहायत्वं[२] नोपपद्यते ।
किं च भावज्ञानजननसमर्थस्य लिङ्गशब्दादेस्तद-
भावज्ञानजनने ऽपि सामर्थ्यमुपलब्धमिति इन्द्रिय-

---

ज्ञातकरणत्वादिति यद्धेत्वन्तरं तदाह । किं चेति । अस्य
प्रतिवाद्यसिद्धिं परिहरति । षष्ठेति । तदनिष्टावनिष्टमाह ।
अन्यथेति । अभावरूपत्वेनेति । उपलब्ध्यभावत्वेनेत्यर्थः ।
फलितमाह । ततश्चेति । स्वध्यवसानं सुनिश्चयम् आतो युजि-
तिस्यनेः खलर्थे युच्प्रत्ययः । अथ भावावेशाच्च चेतस इति
यद्धेत्वन्तरं तदाह । सर्वत्रेति । विमतमभावज्ञानं भावप्र-
माणाकृष्टमनोजन्यं बाह्यार्थज्ञानत्वाद्रूपादिज्ञानवदिति प्र-
योगः । बाह्यपदेनात्मतद्धर्मज्ञानव्युदासः । अथ प्रतियो-
गिनि सामर्थ्यादिति यद्धेत्वन्तरं तदाह । किं चेति ।
इन्द्रियमभावग्राहि भावग्राहित्वाच्छब्दलिङ्गादिवदिति
प्रयोगः । अस्य व्याप्तिमाह । भावज्ञानेति । उपनया-

---

(१) अभावज्ञानकारणत्व–पा॰ C पु॰ ।
(२) सहकारित्वं–पा॰ B पु॰ ।

स्याप्यभावप्रतियोगिनि घटादौ समर्थस्य तदभावज्ञानजनने ऽपि सामर्थ्यमनुमीयते । किं च इन्द्रियदोषेण दूष्यमाणमभावज्ञानं तदेवात्मनः करणीकरोति कारणदोषादेव हि कार्यदोषाः प्रादुर्भवन्ति[१] । अन्यथातिप्रसङ्गात् । किं चाघटं भूतलमिति विशिष्टज्ञानस्येन्द्रियजन्यत्वावश्यम्भावाद् विशेष्यांश इव विशेषणांशे ऽपि तज्जन्यत्वमकामेनापि स्वीकरणीयम्

दिकमाह । इन्द्रियस्येति । अक्षाश्रयत्वाद्दोषाणामित्येतद्व्याचष्टे । किं चेन्द्रियेति । यत्र सर्वे वस्तुनि नास्तीति भ्रमो जायते सोऽभावभ्रमः स इन्द्रियजन्यः तद्दोषदुष्टत्वात् पीतशङ्खभ्रमवदित्यर्थः । हेत्वसिद्धिं परिहरति । कारणदोषादिति । विपक्षे बाधकमाह । अन्यथेति । ज्ञानस्य स्वतो दोषाभावादधिकरणग्रहणप्रतियोगिस्मरणानुपलब्धीनां दुष्टत्वायोगादिन्द्रियदोषदुष्टत्वानङ्गीकारे नूनमाकस्मिकत्वप्रसङ्ग इत्यर्थः । आचार्यस्तु इन्द्रियमभावप्रमाकरणं तद्विपर्ययकरणत्वाद् यद्यद्विपर्ययकरणं तत् तत्प्रमाकरणं यथा रूपप्रमायां चक्षुरिति प्रायुङ्क्त । विकल्पनादिति यद्धेत्वन्तरमवशिष्टं तद्व्याचष्टे । किं चाघटमिति । हेत्वसिद्धिं परिहरति । इन्द्रियजन्यत्वावश्यम्भावादिति । अनन्यत्रोपक्षीणेन्द्रियव्यापारानुविधानादिति भावः । विमतं विशिष्टज्ञानं विशेषणांशे ऽपीन्द्रियजन्यं ऐन्द्रियकविशिष्टज्ञानत्वाद् दण्डीतिज्ञानवदिति प्रयोगः । लैङ्गिकादिव्यभिचारनिरासार्थमैन्द्रियकविशेषणमुपसंहरति । तस्मादिति । अभावमात्रस्य प्रत्यक्षत्वसाधने

(१) प्रादुःषन्ति—पा० C पु० ।

तस्मात् प्रत्यक्षयोग्यार्थानुपलब्धौ तदभावोऽपि प्रत्यक्षः नन्वेवमनुपलब्धिः कारणं स्यादिति चेत् हन्तैवमभावानुपलब्धिरपि भावग्रहणकारणमापन्नमायुष्मताम् । भावोपलम्भे ऽप्यभावानुपलम्भस्य नित्यं सन्निधानादिति । तदेतत्सर्वं न्यायकुसुमाञ्जलौ प्रपञ्चितमाचार्यैः । यथा ।

---

परमाण्वाद्यभावेषु बाधः स्यादित्यत उक्तं प्रत्यक्षयोग्येति । नन्वेवमनुपलब्धेरप्यावश्यकत्वादुभयवादिसिद्धा सैव प्रमाणमस्त्वित्याशयेन शङ्कते । नन्वेवमिति । आवश्यकत्वे कारणत्वं स्यात् न तु प्रमाणत्वम् अन्यथाभावोपलम्भे ऽप्यभावानुपलब्धिरेव प्रमाणं स्यात् नेन्द्रियमिति सोपहासं परिहरति । हन्तैवमिति । अत्र कारणशब्दः प्रमाणवचनः । सैव कुत इत्यत आह । भावोपलम्भे ऽपीति । अपिशब्दादभावोपलम्भे भावानुपलम्भवदिति दृष्टान्तः सूचितः । नन्वघटं भूतलमिति विशिष्टबुद्धाविन्द्रियग्राह्यत्वे ऽप्यभावस्य केवलस्यातत्त्वान्नास्ति अस्तित्वे वा केवलसौरभस्य चाक्षुषत्वप्रसङ्गः तस्मात् पूर्वं केवलग्रहणायानुपलब्धिराश्रयणीया अन्यथा नागृहीतविशेषणेतिन्यायाद् विशिष्टधीरेव न स्यात् किं च यदिह भूतले घटो नास्तीत्यभाव इन्द्रियेण विकल्प्यते तदा प्रथमं निर्विकल्पकेनापि ग्राह्यः अन्यथा विकल्पानुदयात् न च प्रतियोगिनिरूप्यस्यास्य तद्युज्यते प्रमाणान्तरे तु नेयमनुपपत्तिरित्याशङ्क्याह । तदेतत्सर्वमिति ॥

प्रतिपत्तेरापरोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥
तथा
प्रतियोगिनि सामर्थ्याद् व्यापाराव्यवधानतः ।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ इति ।

तत्रैव तदुभयमप्येवं समाहितम् अनन्यानिरूप्यस्वभावानां दण्डकुण्डलादीनामेव विशेषणीभविष्यतां पूर्वं कैवल्येन ग्रहणं तादृशामेव च विकल्पानां घटादीनां विकल्पनीयानां पूर्वं निर्विकल्पकग्राह्यत्वं विषयसम्बन्धिप्रतियोगिनिरूप्याणां तु ज्ञानसमवायाभावानां नित्यसनिरूप्यस्वभावतया विशेषणत्वे वा विशेष्यत्वे वा विकल्पसामग्रीसमवधानवत एवेन्द्रियस्य सामर्थ्यावधारणान्न कैवल्ये निर्विकल्पकग्रहणापेक्षेति न कुत्राप्यनुपलब्धिपैशाच्याः प्रवेशावकाश इति । अथ तत्रापि कुत्र प्रपञ्चितं तदाह । यथा प्रतिपत्तेरापरोक्ष्यादित्यादि । अभावप्रतिपत्तिरिन्द्रियजन्या अपरोक्षत्वाद् रूपादिप्रतिपत्तिवत् । परोक्षत्वे वा लैङ्गिकादिवदज्ञातकरणत्वानुपपत्तिः । एवमन्ये ऽपि हेतवः पूर्वोक्तरीत्या योजनीयाः । भावावेशाद्भावप्रमाणपरतन्त्रत्वादित्यर्थः । प्रतियोगिनिषेधाभाव इत्यर्थः । व्यापारेति । द्वितीयहेतुविशेषणासिद्धिपरिहारार्थोऽयं हेतुः सा च पूर्वमभावग्रहणे ऽधिकरणग्रहणस्यानुपयोगादिति पर्यहारि इदानीं तूपयोगमङ्गीकृत्य परिह्रियते अधिकरणग्रहणस्यावान्तरव्यापारत्वेनाव्यवधायकत्वादिति । अक्षेति । अभावविपर्ययस्येन्द्रियदोषोत्थत्वादैन्द्रियकत्वमित्यर्थः । विकल्पनादिति । अघटं भूतलमित्यभावविकल्प-

ननु गृहादिमात्रमनुभूयान्यत्र गतवतः प्रतियोगिस्मरणे सति इन्द्रियव्यापारमन्तरेणाप्यभावो ऽनुमीयते[१] । यथाहुः ।

स्वरूपमात्रं दृष्ट्वापि पश्चात् किञ्चित् स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव[२] प्रतिपद्यते ॥ इति ।

सत्यम् । न तत्राभावः प्रत्यक्षः किं तु स्मरण-

---

स्येन्द्रियकत्वाद् विशेषणस्याभावस्याप्यैन्द्रियकत्वमित्यर्थः । इन्द्रियाणीति पक्षनिर्देशः अभावज्ञानकरणमिति साध्याध्याहारः ।

इदानीं परः प्रकारान्तरेणाभावप्रतीतेरनैन्द्रियकत्वमाशङ्कते । नन्विति ।

अत्र भट्टकारिकां संवादयति । स्वरूपमात्रमिति । गृहादिस्वरूपमेव । न तु देवदत्तभावाभावावित्यर्थः । किञ्चिदिति प्रतियोगीत्यर्थः । तत्र गृहादावन्यनास्तितां देवदत्ताद्यभावमित्यर्थः । तदैव प्रश्नसमय एवातीन्द्रियलिङ्गादेरनवकाश उक्तः तस्मादनुपलब्धेरेवेयं बाह्यालीत्यर्थः ।

नूनमत्राभावस्याप्रत्यक्षत्वे ऽप्यनुमेयत्वान्न षष्ठप्रमाणावकाश इति परिहरति । सत्यमिति । अनुमापकलिङ्गमाह । किं त्विति । देवदत्तस्तदा तत्र नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वाद् गण्डशैलवत् नोपलब्धश्च स्मृतियोग्यत्वे सत्यस्मर्यमाणत्वात् तद्वदेवेति प्रयोगः । नन्वनुमानस्य ज्ञातकरणत्वेन स्मृत्यभावस्याप्यनुपलब्ध्यन्तरगम्यत्वे

---

(१) अनुभूयते–पा· C पु· ।
(२) तथैव–पा· C पु· ।

योग्यस्य स्मरणाभावादनुमीयते । स्मरणाभावश्च मानसप्रत्यक्ष इति नानवस्था । अनयैव दिशा प्रातर्गजाभावविज्ञाने ऽपि ज्ञेयम्[1]। कथमन्यथा प्रमाणान्तरवादिनः सायन्तनसमये ऽनुभूयमानस्य गजादेः प्रातःकालीनाभावविषयो ऽनुभवो जायेत । न हि तदानीं तस्यानुपलब्धिरस्ति। प्रातःकालीनैवानुवर्तत इति चेत् न तत्रापि दृश्यत्वाभावेन योग्यानुपलब्धेरभावात्। स्मर्तव्यस्य स्मरणाभावस्तत्राभावज्ञाने का-

पुनस्तस्य तस्याप्येवमनवस्था स्यादित्यत आह। स्मरणाभावश्चेति । अभावस्य प्रतियोगिग्राहककरणग्राह्यत्वाचास्य मानसत्वं स्मरणानुपलब्धिस्तु यथा वः सत्तयैव करणं तथा नः सत्तयैव मनःसहकारिणीति नानवस्थेति सर्वं सुस्थम्। उक्तं न्यायमन्यत्राप्यतिदिशति । अनयैवेति । तदपि स्मरणाभावलिङ्गानुमेयमित्यर्थः। तदनङ्गीकारे बाधकमाह। कथमन्यथेति । ननु तस्यानुपलब्धिरेव प्रमाणमस्तीत्याशङ्क्य किं सायंतनगजानुपलब्धिः प्रातस्तनगजानुपलब्धिर्वा नाद्यः तदानीं तस्योपलभ्यमानत्वादित्याह । न हीति । द्वितीयमाशङ्कते। प्रातःकालीनेति। प्रातःकालीनगजसम्बन्धिनीत्यर्थः। तत्रापीति। तदानींतनगजस्येदानींकालविप्रकृष्टतया दर्शनयोग्यत्वाभावेनायोग्यत्वानुपलब्धिः सती न कालान्तराभावमवगमयितुमीष्ट इत्यर्थः। तर्हि स्मृतियोग्यस्यास्मर्यमाणत्वात् स्मरणाभावलक्षणायोग्यानुपलब्धिरेवास्तीति शङ्कते। स्मर्तव्यस्येति। तर्हि प्रमित्यभावलक्षणाया एवा-

(१) विज्ञानमपि नेयम्-पा० B पु० ।

रणमिति चेत् न तर्ह्यभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्येतिभाष्यमुन्मत्तप्रलपितमेव स्यात् ॥

अत्र केचिदभावप्रमेयमपलपन्तः प्रमाणविशेषचिन्तामेव न सहन्ते । तेषामिह भूतले घटो नास्तीति प्रतीतिर्निर्विषया भवेत् । नास्तीति व्यव-

---

नुपलब्धेरभावप्रमाणत्वं प्रतिपादयता भवदीयभाष्यकारवचसैव विरोधः स्यादित्याह । तर्हीति । तदेव भाष्यं पठति । अभावोऽपीति । अभाव इति लक्ष्यनिर्देशः अभावाख्यं प्रमाणमित्यर्थः । प्रमाणाभाव इति लक्षणं प्रमित्यभावरूप इत्यर्थः । तस्य प्रमेयमाह । नास्तीत्यस्यार्थस्येति । प्रमेयाभावरूपस्यार्थस्येत्यर्थः । प्रमापक इति शेषः । उपलक्षणं चैतत् ।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ इति ।

वार्तिकविरोधश्चेति द्रष्टव्यम् ।

ननु सति कुड्ये चित्रकर्म लोके तावदभावपदार्थ एव नास्ति तत्कुत्र कस्य प्रामाण्यमन्तर्भावो वेति स्वरूपापलापवादिनः प्राभाकरान्निराकर्तुं तन्मतं तावदाह । अत्र केचिदिति । प्रमाणं हि प्रमेयव्याप्तं न चाभावप्रमाणस्य किञ्चित्प्रमेयमुपलभ्यते अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति भावः । संविदेव हि भगवती विषयसत्त्वोपगमे शरणमित्याशयेन परिहरति । तेषामिति । नास्तीतिप्रतीतौ यत् स्फुरति तदेव तस्य प्रमेयमिति भावः । परस्तु सा प्रतीतिरेव नास्तीति शङ्कते । नास्तीति । व्यवहारमात्रमभिवदनव्यापार एवेत्यर्थः । प्रतीत्यपह्नव एको दोषः अङ्गीकृतस्य

हारमात्रमेवात्रास्ति न संविदिति चेत् । तर्हि संविदपलापदोषस्तावदापद्येत । व्यवहारालम्बनं च न किञ्चित् पश्यामः । भूतलमात्रमिति चेत् न घटवति भूतले भूतलमात्रत्वाभावेन घटाभावव्यवहारो न स्यात् । तन्मात्रशब्दस्य भूतलादर्थान्तरव्यावृत्तिपरत्वे(१) त्वभावस्वीकरणात् । अन्यथा घटवत्यपि प्रसङ्गः। यादृशस्य भूतलस्य विज्ञानमभावज्ञान(२)कारणं भवद्भिरुपगम्यते तादृशमेवास्माकम् व्यवहारालम्बन-

व्यवहारमात्रस्यापि निरालम्बनत्वं द्वितीयो दोष इति दूषयति । तर्हीति । आलम्बनमाशङ्कते । भूतलमात्रमिति । कोऽर्थः किं मात्रशब्दस्यावधारणार्थत्वमाश्रित्य सर्वभावान्तरविविक्तं भूतलमुच्यते उत मीयते परिच्छिद्यते ऽनेनेति व्युत्पत्त्या तद्गतं किञ्चिद्धर्मान्तरमुच्यते उतायोगव्यवच्छेदेन भूतलस्वरूपमुच्यत इति त्रेधा विकल्प्याद्यं दूषयति । पटवतीति। अघटे ऽपीति शेषः । द्वितीये सिद्धं नः समीहितमित्याह । तन्मात्रेति । अर्थान्तरत्वे धर्मान्तरत्व इत्यर्थः । तृतीयं निरस्यति । अन्यथेति । अनर्थान्तरत्व इत्यर्थः । तर्ह्यधिकरणग्रहणस्य यादृगालम्बनं वस्तुतो व्यवहारालम्बनमिति शङ्कते । यादृशस्येति । तत्राधिकरणग्रहणस्यावश्यम्भावादिति शङ्कितुराशयः । आश्रयनाशहेतुकद्रव्यनाशज्ञाने तद्व्यभिचारात् किं तेनेत्युक्तमस्माभिस्तद्विस्मृतमायुष्मतेत्याह। न आश्रयज्ञानस्ये-

(१) अर्थान्तरत्वे-पा॰ B पु॰ । परत्वेन घटाभावस्वीकारात्-पा॰ C पु॰ ।

(२) ग्रहण-पा॰ B पु॰ ।

मिति चेत् न आश्रयज्ञानस्य कारणत्वानभ्युपगमात् । भूतलज्ञानस्य कारणत्वाभ्युपगमे चास्माकं न काचन क्षतिः। न हि घटवति प्रसङ्गः दृश्यादर्शनसहकृतस्यैव हेतुत्वाङ्गीकारात् । तस्य च तत्राभावात्[१] । भवदभिमताभावाश्रय एवास्माकं व्यवहारविषय इति चेत् तर्हि शौक्ल्यादेरप्याश्रय एव व्यवहारालम्बनं भवे-

ति। अङ्गीकृत्याप्याह। भूतलज्ञानस्येति। कथं न क्षतिः तस्याश्रयत्वेन ज्ञाने आत्माश्रयादिदोषप्रसङ्गाद् भूतलत्वेन ज्ञाने घटवत्यपि नास्तीतिधी[२]प्रसङ्गादित्याशङ्काद्यमनङ्गीकारेणैव पराहत्य द्वितीयं प्रसज्यप्रतिषेधति। न हीति। कुत इत्यत आह। दृश्येति। दृश्यादर्शनं योग्यानुपलब्धिः। कथमेतावतोक्तातिप्रसङ्गनिवृत्तिरित्यत आह। तस्येति। दृश्यादर्शनस्येत्यर्थः। तत्रेति। घटवतीत्यर्थः। भवतां तु दृश्यादर्शनस्वीकारे सिद्धान्तक्षतिरिति भावः। अथाभावाश्रयप्रतिबन्द्या शङ्कते। भवदिति। अभावविशिष्टस्याभावाश्रयत्वे आत्माश्रयादिदोषः। तदविशिष्टस्याश्रयत्वे घटवत्यपि प्रसङ्गः तस्मादुदासीनं वस्तुस्वरूपमात्रमाश्रय इत्याश्रयणीयम् तदेवास्माकमभावव्यवहारालम्बनमित्यर्थः। तर्हि शुक्लः पट इत्यादिव्यवहारा अपि तन्मात्रालम्बना इति तदपह्नवोऽपि सुकर इति प्रतिबन्द्या परिहरति। तर्हीति। ननु भावान्तरसंवित्तिरभावः तदुक्तं शालिकायाम्।

(१) तस्य चासम्भवात्-पा· D पु· ।

(२) नास्तित्वधी-पा· F पु· ।

दिति गुणादिपदार्थोऽपि दत्तजलाञ्जलिः स्यात् । न च बुद्धिभेद एवाभावः । सुषुप्त्यादौ तदभावेनातीतानागतानामत्यन्तासतां च गगनकुसुमादीनामभावाभावेन भाव एव भवेदिति सुषुप्तिसुलभा एव सर्वे पदार्थास्तत्रभवतां भवेयुः । नन्वयमभावः किं भूतले

येयं दृश्येषु प्रतियोगिषु तदेकविषया बुद्धिः । सैव तेषां प्रतियोगिनामभाव उच्यत इति ।

तथा च सैव व्यवहारालम्बनमिति शङ्कामनूद्य निरस्यति । न चेति । बुद्धिभेदस्तदेकविषया बुद्धिर्भूतलादिभावान्तरसंवित्तिरिति यावत् । अभावस्य बुद्धिरूपत्वे सुषुप्तौ सर्वबुद्ध्यपरमाद् भावोन्मज्जनप्रसङ्ग इत्यर्थः । वृत्तिविरोधेनाभावो नास्तीति(१) शङ्कामनूद्य प्रतिबन्द्या समाधत्ते । नन्विति । भूतलविशेषणं कैवल्यं स्वयमेव चेदयमभावः तदा स्वस्य स्ववृत्तावात्माश्रयः कैवल्यान्तरं चेत् तस्यापि कैवल्यान्तरापेक्षायामनवस्था(२) स्यादित्यभावस्याश्रयवृत्तिविरोधेनापह्नवे शुक्लादेरपि तथा स्यात् । तथाहि किमिदं शौक्ल्यं पटे वर्तते शुक्लपटे वा । नाद्यः नीलपटेऽपि वृत्तिप्रसङ्गात् । द्वितीये तद्विशेषणं शौक्ल्यं स्वयं चेदात्माश्रयः अन्यचेत् तस्याप्यन्यापेक्षायामनवस्थाने(३) मूलोच्छेदः

(१) विरोधादप्यभावो नास्तीति–पा· E पु· ।

(२) यत् कैवल्यं वर्तते भूतले न स्वविशिष्टे किं तु कैवल्यान्तरविशिष्टे तदपि कैवल्यान्तरविशिष्टे ऽनवस्था इत्यर्थः ।

(३) एतच्छौक्ल्यं विशेषणीभूतं शौक्ल्यान्तरविशिष्टे वर्तते तथा चानवस्था भवति ।

वर्तते केवले भूतले वा । नाद्यः घटघटिते ऽपि प्रसङ्गात् । नाप्युत्तरः । कैवल्यस्याभावपर्यायत्वेनात्माश्रयाऽनवस्थयोरन्यतरस्य प्रसङ्गात् । अनुपपद्यमानाश्रयत्वेनाभावमपह्नुवानस्तुल्यन्यायतया शुक्लादिधर्मजातमप्यपह्नुवीत । स्वतोऽवान्तरविशेषविरहिणस्तुच्छस्य कथं तस्य प्रमेयतेति चेत् । न ज्ञानादिवदुपपत्तेः । निःस्वभाव एवायमिति चेत् । न सद्भा-

---

(१) स्यात् । अथ शौक्ल्यस्य पटमात्रमाश्रयः न च नीले ऽपि प्रसङ्गः तस्यैव प्रतिबन्धकत्वादिति चेद्भावस्यापि तन्मात्र(२)माश्रयः न च घटवत्यपि प्रसङ्गस्तस्यैव(३) प्रतिबन्धकत्वादिति तुल्यम् तर्हि प्रतियोग्येकनिरूप्यस्य स्वतो निर्धर्मकस्य खपुष्पकल्पस्य तस्य कथं प्रमाविषयत्वमिति शङ्कते । स्वत इति । ज्ञानादिप्रतिबन्द्या समाधत्ते । नेति । ज्ञानं सर्वत्रैकं नित्यं च एवं शुक्लमधुरादिरूपरसादिभेदाश्चेति प्राभाकाराः । तथा च यथा तेषामवान्तरविशेषविरहे ऽपि प्रमेयत्वं तद्वद्भावस्यापीति भावः । ननु तेषां भावस्वभावत्वात् प्रमेयत्वं युक्तम् अभावस्तु निःस्वभावः कथं प्रमीयत इति शङ्कते । निःस्वभाव इति । अभावोऽपि भावविलक्षणस्वभावो न तु गगनकुसुमादिवत् निःस्वभाव इति परिहरति । नेति । अत्र वृद्धसम्मतिमाह ।

---

(१) मूलभूतं यच्छौक्ल्यं तस्योच्छेदः स्यात् ।

(२) भूतलमात्रम् ।

(३) घटस्यैव ।

वृत्तिरूपस्य स्वभावस्य विद्यमानत्वात् । यथाहुः । असदसदिति गृह्यमाणं यथाभूतं सद्विपरीतं च तत्त्वमिति । तस्मान्न किञ्चिदेतत् ॥

सम्भवो नाम सहस्रादेः शतादिविज्ञानम् । तदप्यविनाभावप्रतिसन्धानेन जायत इत्यनुमानमेवेति ॥

इतिहोचुर्वृद्धा इत्यनिर्दिष्टप्रवक्तृकं प्रवादपा-

---

यथाहुरिति । असदसदिति । गृह्यमाणमिति प्रमाणोक्तिः । अभावोभाव इति भावनिषेधात्मकतया सर्वजनसंवेदनसिद्धमित्यर्थः । अत एव यथाभूतं पारमार्थिकं न तु तुच्छमित्यर्थः । सद्विपरीतं भावविलक्षणस्वभावं न तु भावान्तरस्वभावमिति लक्षणोक्तिः । चकारः पूर्वोक्तप्रमाणसमुच्चयार्थः । तत्त्वमेतदभावस्वरूपमित्यर्थः । पूर्वपक्षनिरासमुपसंहरति । तस्मादिति । प्रमाणविरुद्धत्वादित्यर्थः । एतदभावनिराकरणं न किञ्चिन्निरासार्हमपि न भवतीत्यर्थः । इत्यभावान्तर्भावः ॥

अथ सम्भवस्य स्वरूपमन्तर्भावं चाह । सम्भवो नामेति । अनुमानत्वे प्रयोजकमाह । अविनाभावेति । प्रयोगस्तु शतं सहस्रे सम्भवति न्यूनसंख्यात्वात् द्वयोरेकत्ववत् अन्यथा कारणाभावात् सहस्रसंख्यैव न स्यात् एवं खार्यां द्रोण इत्याद्युन्नेयम् । इति सम्भवान्तर्भावः ॥

अथैतिह्यमप्यन्तर्भावयितुं तत्स्वरूपं तावदाह । इतिहेति । इतिहेति निपातसमुदायः प्रवादवाची इतिहैवैतिह्यं प्रवादः अनन्तावसथेतिहभेषजाञ्ञ्य इति स्वार्थे ञ्यः ।

रम्पर्यमैतिह्यम् । यथा ।

वटेवटे वैश्रवणश्चत्वरेचत्वरे शिवः ।
पर्वतेपर्वते रामः सर्वत्र मधुसूदनः ॥ इत्यादि ।

तत् प्रायशोऽप्रमाणमेव । प्रमाणत्वे च सति शब्द एवान्तर्भाव इति । यथाहुः ॥

इह भवति शतादौ सम्भवाद् या सहस्रा-
न्मतिरविपुतिभावात् सानुमानादभिन्ना ।
जगति न बहु तथ्यं नित्यमैतिह्यमुक्तं
भवति तदपि सत्यं[1] नागमाद्भिद्यते तत् ॥ इति ।

स्पष्टमस्पष्टमिति च द्विविधं प्रमाणमिति जैनजनाः । तैरप्येतान्येव परोक्षापरोक्षतया लक्षितानि ।

---

अस्यानिर्दिष्टेत्यादि लक्षणम् इतिहोचुरिति स्वरूपप्रदर्शनम् । उदाहरति । यथेति । एतदप्रमाणस्योदाहरणं कर्मारम्भे मङ्गलाचरणाद्विघ्नोपशान्तिरिति तु प्रमाणस्योदारहणम् । अनयोर्यथायथं शब्दतदाभासयोरन्तर्भाव इत्यभिप्रेत्याह । तत्प्रायेत्यादि । अत्र भट्टकारिकां संवादयति । यथाहुरिति । शतादौ विषये सहस्रादिरूपात् सम्भवात् सम्भवाख्यप्रमाणाद्या मतिरस्त्यन्वयार्थो विपुतिरविनाभावस्तस्य भावात् सद्भावादित्यर्थः । शेषं सुगमम् । नन्वार्हतैः स्पष्टमस्पष्टं चेति प्रमाणद्वयमुच्यते तेन प्रमाणषट्कमायातमिति शङ्कते । स्पष्टमिति । एतेषामेव शब्दान्तरेण व्यपदेशान्नातिरेक इति परिहरति । तैरपीति ।

---

(१) भवति तु यदि सत्यं–पा॰ B पु॰ ।

चैतन्यं ज्ञानं तदाश्रय आत्मा । यदा कदाचिच्चेतनभावस्य[1] लक्षणत्वान्न मुक्तमूर्च्छितसुषुप्तैरव्याप्तिः । सूत्रकारस्तु पूर्वदर्शनप्रतिसन्धानहेतुकेच्छादिलिङ्गत्वमात्मनो लक्षणमाह । यथा इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥

अत्र सूत्रकारशैलीमनुविदधानः शरीरस्य लक्ष-

इतरेषामात्मशेषतया तस्य प्राधान्यात् प्राथम्यमिति निर्द्धारणाभिप्रायः। ननु पर्यायशब्दस्यैव लक्षणत्वे ऽतिप्रसङ्ग इत्यत आह। चैतन्यमिति चेतयते जानातीति व्युत्पत्त्या चेतनश्चैतन्याश्रय इति लक्षणं लभ्यत इत्यर्थः । चेतयतेः कर्तरि ल्युट् चेतनस्य कर्म चैतन्यं ज्ञानमिति फलितोक्तिः ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । मुक्तमूर्च्छितादिष्वव्याप्तिं परिहरति। यदा कदेति । चैतन्यात्यन्ताभावानधिकरणत्वं विवक्षितमित्यर्थः । सूत्रकारोक्तिव्याजेन लक्षणान्तरमप्याह । सूत्रकारस्त्विति । इष्टानिष्टसाधनस्य वस्तुनः पूर्वानुभवः पूर्वदर्शनम् प्रतिसन्धानं नाम पुनः कदाचित् तज्जातीयदर्शने तत्साधनत्वानुमानं तद्धेतुकं तदुत्पन्नं यदिच्छादिकं तल्लिङ्गत्वमात्मनो लक्षणमित्यर्थः। इच्छादयः क्वचिदाश्रिताः गुणत्वाद् रूपवदित्यनुमानं यत् पुनः पृथिव्यादिपरिशेषेणाष्टेतर[2]द्रव्यनिष्ठत्वसाधनादात्मनस्तल्लिङ्गत्वलक्षणसिद्धिः । सूत्रं पठति । इच्छाद्वेषेति।

ननु त्रयाणामन्यतमस्यैव व्यावर्तकत्वादितरवैयर्थ्यं

(१) कदाचिच्चैतन्यसमवायस्य–पा॰ B पु॰ ।
(२) परिशेषादष्टेतर–पा॰ F पु॰ ।

यान्त्रयमाह ।

**शरीरमन्त्यावयवि चेष्टाभोगेन्द्रियाश्रयः ॥२१॥**

अन्त्यावयवि चेष्टाश्रय इत्येकं लक्षणम् । अत्र चेष्टा नाम प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया विवक्षिता । ततश्चादृष्टवदात्मसंयोगासमवायिकारणकक्रियाश्रयाणां दहनपवनादीनां निरासः । तदुक्तम् । अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनम् अणुमनसोश्चाद्यं कर्मेत्येतान्यदृष्टकारितानीति । अन्त्यावयवीति करचरणादिव्युदासः । अन्त्यावयवि भोगाश्रय इति द्वितीयं लक्षणम् । भोगाश्रयत्वं नाम भोगायतनत्वम् । यदाश्रित्य आत्मा भोगवान् भवतीति

---

किमर्थमुत्तरश्लोके शरीरस्य लक्षणत्रयोक्तिरित्यत आह । सूत्रकारेति । स तु विषयव्याप्तिकामुक इति भावः ।

ननु चेष्टादीनामेकैकस्यैव लक्षणत्वादितरानर्थक्यमित्याशङ्क्यैतल्लक्षणत्रयमिति व्याचष्टे । अन्त्येति । चेष्टालक्षणं तावदाह । अत्रेति । अथैतद्विशेषणव्यावर्त्यमाह । ततश्चेति । दहनपवनादीनां तथात्वे समानतन्त्रसूत्रसम्मतिमाह । तदुक्तमग्नेरित्यादि । द्रव्यानारम्भकमवयविद्रव्यमन्त्यावयवीति तेन पदेन शरीरारम्भकाणां करचरणादीनां व्युदास इत्यर्थः । ननु सुखदुःखानुभवो भोगः तदाश्रयत्वमात्मनो न तु शरीरस्येत्यसम्भवि लक्षणमित्याशङ्क्य व्याचष्टे । भोगायतनत्वमिति । नन्वनयोः को विशेष इत्यत

यावत् । अन्त्येति पूर्ववदवयवव्यावृत्तिः । अवयवीति मनसः । अन्त्यावयवीन्द्रियाश्रय इति तृतीयं लक्षणम् । अन्त्यावयवीतीन्द्रियारम्भकपरमाण्वादेश्च निरासः । तदुक्तम् । चेष्टेन्द्रियार्थाश्रयः शरीरमिति । न च मृतशरीरैरव्याप्तिः । कादाचित्कस्येन्द्रियाश्रयत्वादेरेव लक्षणत्वात् तेषामपि तथाभावादिति ॥ २७ ॥

इन्द्रियलक्षणमाह ।

---

आह । यदाश्रित्येति । शरीरावच्छेदेनैवात्मनो भोगाश्रयत्वात् तदवच्छेद्यधर्मावच्छेदके शरीर उपचर्यत इत्यर्थः । एवंविधभोगाश्रयस्य हस्तादेर्मनसश्चक्रमादन्त्यावयविपदाभ्यां व्युदास इत्याह । अन्त्येतीत्यादि । ननु तृतीयलक्षणे शरीरस्य कुण्डवदरवत्संयोगवृत्त्येन्द्रियाश्रयत्वे तावतैवेन्द्रियारम्भकपरमाण्वादेर्निरासादन्त्यावयविपदवैयर्थ्यम् तन्तुपटवत्समवायवृत्त्या चैतल्लक्षणमसम्भवि स्यात् सत्यम् किं तु विशेषानादरेण सम्बन्धमात्रविवक्षयोच्यत इति ग्रन्थगतिः । परमार्थतस्तु संयोगवृत्त्यैव न च विशेषणवैयर्थ्यं शरीरवच्छरीरावयवानामपि इन्द्रियसंयोगाश्रयत्वेन तन्निरासार्थत्वादिति द्रष्टव्यम् । यदनुसारेण लक्षणत्रयमुक्तं तत्सूत्रं दर्शयति । तदुक्तमिति । अर्थ्यत इत्यर्थो भोगः लक्षणत्रयस्याप्यव्याप्तिमाशङ्क्याह । न चेति । कुत इत्याशङ्क्य चेष्टादिसम्बन्धात्यन्ताभावानधिकरणत्वस्य लक्षणत्वात् तस्य तेष्वपि सम्भवादित्याह । कादाचित्कस्येति ॥ २७ ॥

शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम् ।
इन्द्रियं तत्र(१)साक्षात्त्वं जातिभेद इति स्थितिः ॥ २८ ॥

शरीरयोग इति इन्द्रियसन्निकर्षो व्युदस्यते एवकारेण कादाचित्कशरीरयोगिन आलोकादयः साक्षादिति च शरीरयोगीनि चेष्टादीनि लिङ्गानि प्रमितीत्यप्रमाहेतवो दोषाः साधनमिति चेन्द्रियसंस्काराः तेषां साधनानुग्राहकत्वेन स्वयमसाधनत्वात् ।

---

उत्तरश्लोके साक्षात्त्वस्यापि लक्ष्यमाणत्वादसन्देहार्थमाह । इन्द्रियेति ।

शरीरयोगस्तत्संयोगः तेन सन्निकर्षव्युदासः । ननु प्रमितिपदोपादानादप्रमाजनकस्येन्द्रियत्वं न स्यादिति चेन्न प्रमासाधनत्वात्यन्ताभावानधिकरणत्वस्य विवक्षितत्वादिति । यदा फले ऽतिव्याप्तिभिया हेत्वादिपदोपादानं तदाञ्जनादिसंस्कारद्रव्येष्वतिव्याप्तिः स्यात् तदर्थं साधनग्रहणमित्याह । साधनमिति । कथं तेन तन्निवृत्तिरत आह । तेषामिति । कारणत्वे ऽपि करणत्वाभावादित्यर्थः । ननूक्तरीत्या शरीरेन्द्रियलक्षणयोरन्योन्यसापेक्षत्वादन्योन्याश्रय इति चेन्नैष दोषः यदेन्द्रियाश्रयः शरीरमितीन्द्रियज्ञानसापेक्षत्वं शरीरस्य लक्षणमुच्यते तदेन्द्रियस्य रूपाद्युपलब्धिलिङ्गत्वादिकं शरीरज्ञाननिरपेक्षं लक्षणान्तरमाश्रयणीयम् एवमिन्द्रियस्यापि पूर्वोक्तशरीरज्ञानसापेक्षलक्षणाभिधाने शरीरस्य चेष्टाश्रयत्वादिन्द्रियज्ञाननिरपेक्षं लक्षणमाश्रयणीयमिति व्यवस्थानात् । श्लो-

---

(१) तच्च साक्षात्त्वं–पा· C पु· ।

साक्षात्त्वं तु ज्ञानत्वावान्तरजातिभेद इत्युक्तम् ॥ २८ ॥

अर्थबुद्धिमनसां लक्षणमाह ।

**अर्थाः स्युरिन्द्रियग्राह्या बुद्धिरर्थप्रकाशनम् ।**
**सुखादेरापरोक्ष्यस्य साधनं मन इन्द्रियम् ॥ २९॥**

अत्रेन्द्रियग्राह्या एवार्थत्वेन विवक्षिताः । ते च द्रव्येषु पृथिव्यादयश्चत्वारः आत्मा च । गुरुत्वधर्माधर्मसंस्कारव्यतिरिक्ता विंशतिर्गुणाः । पञ्चापि कर्माणि । सामान्यं समवायोऽभावश्च । अत्र बुद्धिजन्यस्यार्थगतस्य प्राकट्यादिपदवेदनीयस्य प्रकाशान्तरस्या-

---

कशेषं व्याचष्टे । साक्षात्त्वमिति । उक्तमिति । एतदेव प्रत्यक्षलक्षणे स्वयं व्याख्यातमित्यर्थः । संग्रहकाराभिप्रायेण तु तत्र वक्ष्यमाणोक्तिरित्यविरोधः ॥ २८ ॥

स्फुटार्थमाह । अर्थेति ।

नन्विन्द्रियग्राह्याणामेवार्थत्वं कथमन्यत्रापि प्रयोगदर्शनादित्यत आह । अत्रेन्द्रियेति । अन्येषां मोक्षानुपयोगिज्ञानत्वादेष्वेव सङ्कोचित इत्यर्थः । स्वमते वायोः स्पर्शनत्वाच्चत्वार इत्युक्तम् । आत्मा मानसप्रत्यक्षस्तथा बुद्ध्यादयश्च षट् समवायस्य सम्बन्धिप्रत्यक्षत्वे प्रत्यक्षत्वम् अभावप्रत्यक्षत्वं तूक्तम् । बुद्धिलक्षणस्य ज्ञाततायामतिव्याप्तिमाशङ्क्याह । अत्रेति । ज्ञानातिरिक्तस्यार्थप्रकाशस्य मीमांसकाभिमतस्य प्रागेव परास्तत्वान्न कुत्राप्यतिव्याप्तिरिति भावः । नन्वापरोक्ष्यं साक्षात्त्वं तच्च जातिभेद इत्युक्तम् तस्य च नित्यतया तत्साधनं

नभ्युपगमादर्थप्रकाशो बुद्धिरित्युक्तम् । सुखादिविषयापरोक्षज्ञानसाधनमिन्द्रियं मनः । साधनमिति कर्तुरात्मनो निरासः । इन्द्रियमिति मनसः सन्निकर्षस्य । आदिशब्देन बुद्धिदुःखेच्छाद्वेषप्रयत्ना गृह्यन्ते । सुखाद्यन्यतमग्रहणसाधनत्वमेव लक्षणम् । सूत्रकारस्तु विभुनैवात्मनाधिष्ठितेन्द्रियेषु नानार्थसम्बद्धेष्वपि यत् संयोगक्रमवशात् ज्ञानोत्पत्तिक्रमः प्रक्रमते तन्मन इति युगपद्ज्ञाना[1]नुत्पत्तिलिङ्गत्वं मनसो लक्षणमाह।

मन इति लक्षणमसङ्गतमत आह । सुखादीति । ननु फलाद्भेदज्ञानार्थं हेतुपदं प्रयुज्यतां किं साधनपदेनेत्यत आह । साधनमितीति । तर्हि युगपत्सुखादिज्ञानासम्भवाल्लक्षणमसम्भवीत्यत आह । सुखाद्यन्यतमेति । एवं चैकैकविषयज्ञानसाधनत्वस्यैव लक्षणत्वात् सुखसाक्षात्कारसाधनं दुःखसाक्षात्कारसाधनमित्यादीनि षल्लक्षणानि भविष्यन्तीत्यर्थः । एवं संग्रहोक्तं लक्षणं व्याख्याय सूत्रकारोक्तव्याख्यानपूर्वकमाह । सूत्रकारस्त्विति । नन्वीन्द्रियाणामात्मसम्बन्धक्रमाद् विषयसम्बन्धक्रमाद्वा ज्ञानक्रम इत्याशङ्क्याह । विभुनेति । प्रक्रमते प्रवर्तते व्यासङ्गेति शेषः । विमतो ज्ञानक्रमः आत्मेन्द्रियार्थसम्बन्धातिरिक्तकरणसम्बन्धक्रमनिबन्धनस्तदभावे ऽपि भाविक्रमत्वात् शब्दकर्मसन्तानक्रमवदिति मनसस्तल्लिङ्गत्वमित्यर्थः । ननु सर्वदा स्पर्शरहितद्रव्यत्वादिसाधनैर्मनसोऽपि विभुत्वसिद्धावात्मक्रमकरणासम्भवाल्लक्षणमसम्भवीत्या-

(१) युगपद्ज्ञानानुत्पत्ति–पा॰ D पु॰ ।

युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति । एवं चाणुतयैव मनसः सिद्धिः । अन्यथा युगपदनेकेन्द्रियाधिष्ठानाद्युगपद्ज्ञानोदयप्रसङ्गात् । तथा च विभुत्वहेतवः सर्वे सर्वदा स्पर्शरहितद्रव्यत्वादित्यादयो धर्मिग्राहकप्रमाणेन बाधिता भवन्तीति ॥ २९ ॥

प्रवृत्तिलक्षणमाह ।

**प्रवृत्तिरत्र वागादेः पुण्यापुण्यमयी क्रिया ।**

वाङ्मनःशरीराणां पुण्यापुण्यमयो(१) व्यापारः प्रवृत्तिः । तदुक्तम् । प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ

---

शङ्क्याह । एवं चेति । जगत्कर्तुः सर्वज्ञत्वादिवन्मनसोऽणुत्वमधिकरणसिद्धान्तन्यायाद् धर्मिग्राहकादेव सिद्धमित्यर्थः । अनङ्गीकारे दण्डमाह । अन्यथेति । भ- द्धित्वहेतूनां का गतिरत आह । तथा चेति । । तर्हि पृथिव्यादिषु गुणादिषु च क्रमात् पदत्रयेण व्यभिचा ज्ञानमात्रे रासः । आदिशब्दाद् विशेषगुणद्रव्यत्वज्ञानासमवायि नि- कारणाधारत्वादिसङ्ग्रहः । न च दीर्घशष्कुलीभक्षणादौ ज्ञानयौगपद्यसम्भवादसम्भावि लक्षणमिति वाच्यम् । शतपत्रशातनवदाशुभावनिबन्धनो यौगपद्याभिमानो यत इति सर्वमवदातम् ॥ २९ ॥

संग्रहे वृत्तानुसारात् पश्चादुद्दिष्टापि प्रवृत्तिः सूत्रानुसारात् प्रथमं लक्ष्यत इत्याह । प्रवृत्तीति ।

अविहिताप्रसिद्धक्रियानिरासार्थमुक्तं पुण्यापुण्यमयीति । आरम्भो व्यापारः । ननु मनोबुद्ध्योरत्यन्तभे-

---

(१) पुण्यापुण्यरूपो—पा· C पु· ।

इति । अत्र बुद्धिशब्देन बुध्यते ऽनेनेति मनो विवक्षितमिति ।

दोषलक्षणमाह ।

**प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च ते ॥ ३० ॥**

प्रवर्तयन्तीति प्रवर्तनाः प्रवृत्तिहेतवो दोषा इत्यर्थः । ते च रागद्वेषमोहाः । तत्र रागद्वेषौ वक्ष्यमाणलक्षणौ । मिथ्याप्रत्ययो मोहः । मोहस्य प्रवृत्तिहेतुत्वं न स्वातन्त्र्येण किं तु रागद्वेषानुग्राहकत्वेन । मूढमेव हि रागद्वेषौ प्रवर्तयत इति । तदुक्तम् । प्रवर्तनालक्षणा दोषा इति ॥ ३० ॥

प्रेत्यभावं लक्षयति[1] ।

**मृत्वोत्पत्तिः प्रेत्यभाव उत्पत्तिर्देहसङ्गतिः ।**

---

दात् संग्रहसूत्रयोर्विसंवाद इत्यत आह । अत्र बुद्धिशब्देनेति ।

सूत्रानुसारादेवेदानीं दोषो लक्ष्यत इत्याह । दोषलक्षणमिति ।

प्रवर्तना प्रेरणा सैव लक्षणं येषां ते तथोक्ताः प्रवर्तका इत्यर्थः । तदेतदर्थतो व्याचष्टे । प्रवर्तयन्तीति । उपलक्षणं चैतत् । निवृत्तिहेतवश्चेति द्रष्टव्यम् । वक्ष्यमाणलक्षणाविति वैशेषिकगुणाधिकरण इत्यर्थः । मूढस्यापि रागद्वेषमन्तरेणावैषम्यमाह । मोहस्येति ॥ ३० ॥

---

(१) प्रेत्यभावस्य लक्षणमाह–पा॰ C पु॰ ।

नित्यस्यात्मनो जननमरणासम्भवात् पूर्वोत्तरदेहविश्लेषसंश्लेषौ मरणोत्पत्ती इति । तदुक्तम् । पुनरुत्पत्तिः प्रेत्यभाव इति ।

फलं लक्षयति ।

**फलं प्रवृत्तिसाध्यं स्यात् तच्च देहसुखादिकम् ॥ ३१ ॥**

प्रवृत्तिः पुण्यापुण्यरूपेत्युक्तम् । तदुक्तम् । प्रवृत्तिदोषजनितोऽर्थः फलमिति ॥ ३१ ॥

दुःखं लक्षयति ।

**प्रतिकूलतया वेद्यं दुःखं देहेन्द्रियादिकम् ।**

प्रतिकूलतया वेद्यं[1] दुःखम् । तच्च देहः षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिधम् । तत्र दुःखं स्वत एव निरुपाधिकम् । इत-

---

उत्पत्तिर्देहसङ्गतिरित्यत्र तद्विशेष एव मरणमिति शेषः । ननु प्रागसतः सत्त्वमुत्पत्तिः सतोऽसत्त्वं विनाशस्तदेव च मरणमिति न्यायः तत्कथमन्यथोच्यत इत्याशङ्क्याह । नित्यस्येति । स्वकर्मार्जितस्य मनसः पूर्वदेहान्निष्क्रमणं विश्लेषः उत्तरदेहप्रवेशः संश्लेषः ते एव मरणोत्पत्ती इत्यर्थः ॥

देहसुखादिकमित्यादिशब्दादिन्द्रियदुःखादिसङ्ग्रहः । प्रवृत्तिदोषजनित इति दोषमूलप्रवृत्तिजनित इत्यर्थः ॥ ३१ ॥

एतत्कर्मफलमेव अनेकधात्मोपघातकत्वाद् दुःखमित्याह । प्रतिकूलतयेति ।

---

(१) वेदनीयं—पा॰ C पु॰ ।

राणि तु सुखस्पर्शे ऽपि दुःखानुषङ्गाद् विषसम्पृक्तान्न-वदौपाधिकदुःखानीति । तदुक्तम् । बाधनालक्षणं दुःखमिति ।

एतस्योक्तप्रकारस्य दुःखस्यात्यन्तिकनिवृत्ति-(१)रपवर्ग इत्याह ।

दुःखात्यन्तसमुच्छेदमपवर्गं प्रचक्षते ॥ ३२ ॥

तदुक्तम् । तदत्यन्तविमोक्षोऽपवर्ग इति । दुःखनिवृत्तेरात्यन्तिकत्वं नाम सजातीयस्य(२) तत्रै-वात्मनि पुनरनुत्पाद इति ॥ ३२ ॥

ननु निःश्रेयसोपयोगीनि द्रव्यादीनि प्रमेया-न्तराणि सन्ति तानि कुतः सूत्रकारैर्न लक्षितानि

---

ननु नष्टस्य दुःखस्य पुनरनुत्थानादात्यन्तिकदुःख-निवृत्तेरमुक्तात्मस्वतिव्याप्तिरित्यत्यन्तशब्दार्थं निर्वक्ति । दुःखनिवृत्तेरिति । दुःखान्तरप्रागभावासहचारतदुःख-ध्वंसो मोक्ष इत्यर्थः । इदमप्यात्मान्तरापेक्षयास्मदादि-दुःखध्वंसे ऽतिव्याप्तिमाशङ्क्याह । तत्रैवात्मनीति । तथा चैकात्मनिष्ठनिखिलदुःखध्वंससाकल्यं मोक्षः मुमुक्षूणां च प्रत्येकमेकत्वान्नाव्याप्तिश्चेति विलासकारोक्तलक्षणमुक्त-मित्यनुसन्धेयम् ॥ ३२ ॥

अथ मोक्षे साक्षादित्यादिश्लोकस्यानुपयोगमाश-

---

(१) आत्यन्तिकी निवृत्ति–पा॰ C पु॰ ।
(२) निवृत्तसजातीयस्य–पा॰ C पु॰ ।

तत्राह ।

मोक्षे साक्षादनङ्गत्वादक्षपादैर्न लक्षितम् ।
तन्त्रान्तरानुसारेण षट्कं द्रव्यादि लक्ष्यते ॥ ३३ ॥

सत्यम् । द्रव्यादीन्यपि निःश्रेयसोपयोगीनि विद्यन्ते तानि त्वाहत्य निःश्रेयसानङ्गत्वादक्षपादा न लक्षयांचक्रुः । वयं तु तेषामपि परम्परया तदुपयोगोऽस्तीति काणादतन्त्रमनुसृत्य लक्षणमाचक्ष्महे इति । तानिदानीं पदार्थानुद्दिशति ॥ ३३ ॥

द्रव्यं गुणास्तथा कर्म जातिश्चैतत्त्रयाश्रया ।
विशेषः समवायश्च पदार्थाः षडिमे मताः ॥ ३४ ॥

द्रव्यगुणकर्मणामेव जातिमत्त्वं न सामान्यादीनां त्रयाणामित्युक्तमेतत्त्रयाश्रयेति । तेषामपि जातिमत्त्वे जात्यनवस्थितिः । विशेषस्य स्वरूपव्याघातः ।

---

क्ष्याह । ननु निःश्रेयसेति । अन्यत् प्रतिज्ञायान्यदुद्दिश्यत इति शङ्कां निरस्यति । तानिति ॥ ३३ ॥

इह सर्वाश्रयत्वेन प्राधान्यात् सामान्यवदुपक्रमान्निःसामान्येषु बह्वाश्रयत्वात् समवाय्युपक्रमात् तच्छेषत्वाच्च द्रव्याद्युद्देशक्रमः । उद्देशमध्ये प्रक्रमभेदेन जातेरेव विशेषणोपादानं किमर्थमत आह । द्रव्यगुणेति । ननु सामान्यादीनामपि सामान्यवत्त्वे किं बाधकमत आह । तेषामपीति । प्रादुष्यादित्यत्रोपसर्गप्रादुर्भ्याम-

समवायस्य संयोगसमवाययोरन्यतराभावेना[1]सम्बन्धश्च प्रादुःष्यात् । यथाहुः ।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ इति ।
अन्योन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः ।
सामान्ययोः समावेशो जातिसङ्कर उच्यते[2] ॥
इति ॥ ३४ ॥

---

स्तिर्य्यचूपर इति षत्वम् ।

अत्रोदयनसम्मतिमाह । व्यक्तेरित्यादि । तत्राकाशकालदिशामेकैकत्वेनानेकवृत्तित्वासम्भवान्नाकाशत्वादिजातिसम्भवः सम्भवे वा व्यक्तिभेदः स्यात् स च धर्म्मिग्राहकप्रमाणबाधित इति भावः । तुल्यत्वं पर्यायत्वम् तत्र व्यञ्जकभेदाभावात् परापरभावाभावाच्च न घटत्वकलशत्वयोर्भेदः भेदे वा पर्यायत्वहानिः सा च व्यवहारविरुद्धेति भावः । अन्यत्र परस्परपरिहारवतो एकत्र समावेशः यथा नभसि मनसि च परस्परपरिहारिणोर्भूतत्वमूर्तत्वयोः पृथिव्यादिचतुष्टये तयोरपि जातित्वे परस्परपरिहारः स्यात् परापरभावश्च स्यात् तदुभयमपि बाधितमिति भावः । सामान्यस्यापि सामान्यवत्त्वे ऽनवस्थानात् । विशेषाणां च व्यावृत्तैकस्वभावानां सामान्यवत्त्वे स्वभावहानिः स्यात् । संयोगस्य

---

(१) समवाये संयोगसमवाययोरसम्भवेना—पा॰ C पु॰ ।
(२) अन्योन्येतिकारिका नास्ति B पु॰ ।

द्रव्यलक्षणमाह ।

**गुणानामाश्रयो द्रव्यं कारणं समवायि वा ।**

गुणाश्रयो द्रव्यमित्येकं लक्षणम् समवायिकारणमित्यपरम् । तदुक्तम् । क्रियावद्गुणवत्समवायिकारणं द्रव्यमिति ।

द्रव्याणि परिसङ्ख्यष्टे ।

**भूरापो ज्योतिरनिलो नभः कालस्तथा दिशा ॥ ३५ ॥**
**आत्मा मन इति प्राहुर्द्रव्याणि नव तद्विदः ।**

तद्विद इत्यनेन पदार्थविदामेष सिद्धान्तः ।

---

धर्मत्वात् समवायस्य चानवस्थानादसम्बन्ध एव समवायस्य सामान्यवत्त्वे बाधकमिति संग्रहार्थः ॥ ३४ ॥

इतः परं कणादसूत्राण्येव संवादयिष्यति तत्र द्रव्यलक्षणे तत्संवादमाह । तदुक्तमिति । गुणवत्त्वात्यन्ताभावानधिकरणत्वं गुणवत्त्वं क्रियावत्त्वं तु द्रव्यस्यैवेति प्रतिपादनार्थं विभुष्वव्याप्तेः प्रयोजनं तु मनःप्रभृतौ द्रव्यत्वसाधनम् ॥

ननु द्रव्यत्वसामान्यलक्षणानन्तरं तद्विशेषलक्षणे वक्तव्ये किमुत्तरश्लोके कथ्यत इत्याशङ्क्य सत्यं तदर्थमेतान्युद्दिशतीत्याह । द्रव्याणीति ।

टाबन्तत्वं हलन्तानामिति वचनात् दिशाशब्दः साधुः । पृथिव्याद्युद्देशक्रमस्तु भोग्यगुणाश्रयत्वेन भूतपञ्चके प्राप्ते भोग्यगुणभूयस्त्वानुसारेण चतुर्णां क्रमः । भूतोपक्रमादाकाशम् । एकैकद्रव्योपक्रमाद् दिक्कालौ तयोस्तु सोपनेयक्रियासंयोगक्रमात् क्रमः । विभुक्रमादात्मा । परि-

अन्ये तु तमःशब्दयोरपि द्रव्यत्वमिच्छन्तीति सूचयति । यथाहुः ।

वर्णात्मकाश्च ये शब्दा नित्याः सर्वगतास्तथा ।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः ॥ इति ।

तथा ।

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥ इति ।

केचित्तु वियति विततानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तम इति वर्णयन्ति[1] । मनोव्यतिरिक्तत्वे सत्यस्पर्शवत्त्वेन क्रियावत्त्वरूपवत्त्वासि-

शेषात् तदुपकरणत्वाद्वा मन इति । अतद्विदां विप्रतिपत्तिमाह । अन्ये त्विति ।

सर्वगता इत्यनेन वर्णानां परममहत्त्वमुक्तगुणवत्त्वाद् द्रव्यत्वम् । अमूर्तत्वे सति बाह्येन्द्रियग्राह्यद्रव्यत्वात् पृथक्द्रव्यत्वं च । ततश्च कस्यचित् कस्यापि द्रव्यस्य गुणा न मता इत्यर्थः । तम इत्यादि । चलमित्यनेन क्रियावत्त्वान्नीलमित्यादिना गुणवत्त्वाच्च द्रव्यत्वं तमसः रूपित्वे सत्यस्पर्शवत्त्वात् प्रसिद्धद्रव्यवैधर्म्यं चेति नवैवेत्यनवधारणसिद्धिरिति भावः । तमसो गुणान्तर्भावात् न द्रव्यातिरेक इति केषांचिद् वैशेषिकैकदेशिनां समाधानमुपन्यस्यति । केचित्त्विति । तदेतत् प्राभाकरमतमिति कैश्चिद् व्याख्यातं तदपि तन्मतापरिशीलनविलसितमेव भावाभावस्तम इत्येव तेषां मतं तदुक्तं शालिकायाम् ।

(१) वदन्ति-पा· B पु· ।

दुर्द्रव्यत्वानुपपत्तेः नैल्यान्तरवत्तेजस्येवोपलम्भप्रसङ्गेन पृथिवीगुणत्वानुपपत्तेश्चालोकाभावस्तम इति काणादाः। शब्दस्य तु गुणत्वमुत्तरत्र वक्ष्यामः। तस्मान्नवैव द्रव्याणीति सिद्धम्। तदुक्तम्। पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणीति ॥ ३५ ॥ ८८ ॥

तत्र गन्धवती भूमिरापः सांसिद्धिकद्रवाः ॥ ३६ ॥
उष्णस्पर्शगुणं तेजो नीरूपस्पर्शवान् मरुत्।

भूमिभेदाश्च मणिवज्रादयः पाषाणाः। सांसि-

---

यत्र तेषामसंयोगः स महानन्धकार इति।

तेषामल्पसोऽपि तेजोवयवानामित्यर्थः। इयांस्तु विशेषः स च भावान्तरमेव न तु निषेधात्मेति। तदप्युक्तं तत्रैव अपवारितालोकभूभागादिकमेव छायेति। तस्मादेकदेशिमतमेवैतत्। अथैतन्मतद्वयनिरासपूर्वकं भावमेव सिद्धान्तमाह। अस्पर्शवत्त्वेनेति। तमो निष्क्रियं प्रत्यक्षत्वे सत्यस्पर्शवत्त्वादात्मवत् क्रमात् पदद्वयेन मनोघटयोर्व्यभिचारनिरासः नीरूपं चास्पर्शवत्त्वादाकाशवदिति त्वदुक्तयोः क्रियावत्त्वगुणवत्त्वयोरसिद्धौ द्रव्यत्वमेव नास्ति कुतो वातिरेक इति भावः। एवं यदि तमः पार्थिवरूपं स्यात् आलोकासहकृतचक्षुर्ग्राह्यं न स्या[illegible] घटनैल्यवत् न चैवं तस्मान्न तथा गुणान्तर्भावस्याप्यसिद्धेर्भाव एव तम इत्याह। नैल्यान्तरवदित्यादि ॥ ३५ ॥ ८८ ॥

मणिवज्रपाषाणेषु गन्धवत्त्वस्याव्याप्तिमाशङ्क्याह।

द्धिकत्वं द्रवत्वस्याजानसिद्धत्वं तेन द्रव्यान्तरसंश्लेषोपाधिकद्रवत्वानां पार्थिवानां सर्पिःप्रभृतीनां तैजसानां सीसादीनां च व्यवच्छेदः । यथोक्तम् । सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यमिति । तथा त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यमिति । अपां विकारः करकादिः । उष्णस्पर्श इति शीतस्पर्शानामनुष्णाशीतस्पर्शानां च सलिलपवनादीनां निरासः(१) । न चैवं चान्द्रमसेन महसा भवत्यव्याप्तिः । उष्णा-

---

भूमिभेदाश्चेति । तेषामपि भूर्विकारत्वात् गन्धवत्त्वमनुमेयम् । भूर्विकारत्वं च पाकजरूपवत्त्वात् अनुपलम्भो गन्धस्यानुद्भूतत्वात् सितभास्वरत्वं तूपष्टम्भकतेजोवयवगतमिति भावः । आदिशब्दात् स्फटिकादिसंग्रहः । अप्लक्षणे सांसिद्धिकविशेषणस्यार्थकथनपूर्वकं व्यावर्त्यमाह । सांसिद्धिकत्वमिति । आजानसिद्धत्वमुत्पत्तिसिद्धत्वमित्यर्थः । सांसिद्धिकं प्रकृतित आगतं तत् तथोक्तम् । संसिद्धिप्रकृती समे इत्यमरः । द्रव्यान्तरे संश्लेषोऽग्निसंयोगः । अत्र पूर्वेषां पार्थिवत्वं भौमानलेन्धनत्वात् उत्तरेषां तैजसत्वम् अत्यन्ताग्निसंयोगेऽप्येकरूप्यादवगन्तव्यम् । गुरुत्वादिकं तूपष्टम्भकपार्थिवावयवगतमित्याद्यूह्यम्(२) । अथैषां द्वयानामपि तथात्वे सूत्रसम्मतिमाह । यथेत्यादि । अप्लक्षणस्य करकादावव्याप्तिमाशङ्क्याह । अपां विकार इति । आप्यत्वात् तत्रापि सांसिद्धिकद्रवत्वमनुमेयम् । किं च प्रतिबद्धमित्यवसेयम् आदिशब्देन हिममथनफेनादिसंग्रहः । तेजोलक्षणे विशेषणफलमाह । उष्णेति । अव्याप्तिमाशङ्क्य

---

(१) व्युदासः—पा· B पु· ।

(२) इत्याद्यूह्यमूहनीयम्—पा· E पु· ।

स्पर्शस्यापि तस्यानुद्भूतस्पर्शत्वेन हिमानीगतशैत्य-मात्रोपलम्भात् । चतुर्विधं तेजः । भौमं दिव्यमौदर्य-माकरजं चेति । नीरूपस्पर्शवत्त्वाभ्यां पृथिव्यादी-नामाकाशादीनां च व्यवच्छेदः । अप्रत्यक्षस्यापि

निरस्यति । न चैवमिति । अथ प्रसिद्धत्वाद्विषयतेजसो विभागं लक्षणं चाह । चतुर्विधेति । भौमं काष्ठेन्धनं दिव्य-मम्बुजमशितेन्धनमुदर्यमाकरोत्थं स्वर्णादिकमनिन्धनमिति चतुर्णां लक्षणसंग्रहः । स्वमते वायोः स्पार्शनत्वे ऽपि वैशेषिको भूत्वाह । अप्रत्यक्षस्येति । अरूपित्वादप्रत्य-क्षस्यापीत्यर्थः । विमतः स्पर्शः गुणत्वाद् रूपवत् क्वचिदा-श्रितः सन्ननुष्णाशीतापाकजत्वेन रूपिद्रव्यास्पर्शी व्योमा-दिषु च धर्मिग्राहकप्रमाणबाधादष्टेतरद्रव्याश्रितः तदा-श्रयणे बाधकाक्रान्तगुणत्वाद् व्यतिरेकेण रूपवदिति स्पर्श-लिङ्गाद् वायुसिद्धिः । तथा जीर्णपर्णादिषु शुकशुकादि-शब्दः शब्दविभागजन्यः शब्दत्वाद् भेरीदण्डसंयोगोत्थ-शब्दवत् स्पर्शवद्वेगवद्द्रव्याभिघातजः सत्परिशेषादष्टा-न्तराभिघातोत्थ इति शब्दाद् वायुसिद्धिः । तथा नभसि तृणतूलादीनां धृतिः पतनप्रतिबन्धलक्षणा या सास्मदाद्य-नधिष्ठितलिङ्गद्रव्यधृतित्वात् नौकाधृतिवत् स्पर्शवद्द्रव्य-संयोगजा सती परिशेषादष्टान्तरद्रव्यसंयोगजेति धृतेरपि वायुसिद्धिः । तथा शाखादिकम्पः प्रयत्नादिकारणान्तरा-जन्यः कम्पत्वात् नदीपूराहतकाशकाण्डकम्पवत् स्पर्शव-द्वेगवद्द्रव्यसंयोगजः सत्परिशेषादष्टान्तरद्रव्यसंयोगोत्थ इति कम्पादपि तत्सिद्धिः । अथास्य स्पर्श ३६ ।।ेऽ पृथि-व्यादिवन्नानात्वसिद्धेरपि व्युत्पत्त्यर्थं प्रासिमाशङ्क्याह ।

वायोः स्पर्शशब्दधृतिकम्पलिङ्गैः सिद्धिः । तन्नानात्वस्य च तृणोर्द्ध्वगमनानुमेयेन सम्मूर्च्छनलिङ्गेनावगतिरिति ॥ ३६ ॥ ऽऽ ॥

नभः शब्दगुणं कालश्चिरादिव्यवहारकृत् ॥ ३७ ॥
दिशा पूर्वादिधीहेतुः शेषं प्रागेव लक्षितम् ।

शब्दगुणत्वं नभसो लक्षणम् । तच्चानुमेयम् । तदुक्तम् । निष्क्रमणं प्रवेशनमित्याकाशलिङ्गमिति ।

---

तन्नानात्वस्य चेति । तृणोर्द्ध्वगमनानुमेयेनेति । तृणोर्द्ध्वगमनानुमितोर्द्ध्वगमनानुमेयेनेत्यर्थः । सम्मूर्च्छनं नाम समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः सन्निपातः स च मिथः प्रतिघातात्मा नानात्वव्याप्त इति तदेवानुमीयते स च वायूर्द्ध्वगमनेन तच्च तृणोर्ध्वगमनेनेत्यर्थः । प्रयोगस्तु प्रतिहन्ता वायुः प्रतिहन्यमानाद्वायोरन्यः तत्प्रतिहन्तृत्वात् देवदत्ताद्यज्ञदत्तवत् । प्रतिहन्यते चायं वायुः अनूर्द्ध्वगमनशीलत्वे सति पत्राद्यन्योन्योर्ध्वगमनत्वात् परस्पराहतनदीपूरवत् वायुः ऊर्ध्वगतिमांश्चायं तृणाद्यूर्द्ध्वगमनासमवायिकारणसंयोगाधारत्वात् तादृग्ज्वलदनलनवदिति ॥ ३६ ॥ ऽऽ ॥

आकाशादीनां लक्षणान्याह । नभ इत्यादि । तत्र नभोलक्षणं सन्निकृष्याह । शब्दगुणत्वमिति । तस्य तद्गुणत्वे किं प्रमाणमत आह । तच्चेति । शब्दो गुणः गुणत्वात् रूपवत् क्वचिदाश्रितः सन् भाष्योक्तरीत्या परिशेषात् अष्टेतरद्रव्याश्रित इत्यनुमानादाकाशे शब्दगुणवत्त्वं सिद्धमित्यर्थः । अत्र सूत्रसम्मतिमाह । तदुक्तमिति । निष्क्रमणप्रवेशयोरवकाशकार्यत्वात् तस्यैवाकाशत्वात् तस्य लिङ्गत्वमिति सूत्रार्थः । नन्वत्र शब्दगुणकत्ववार्तापि नास्तीति

चिरमचिरं युगपदित्यादिप्रत्ययव्यवहारयोर्निमित्तं कालः । परापरव्यतिकरानुमेयः काल इति काललक्षणम्[1] । तदुक्तम् । अपरस्मिन् परं युगपच्चिरं क्षिप्रमिति च काललिङ्गानीति । तत्रापरस्मिन् परमिति दिङ्निमित्तं न प्रतिषेधार्थमुक्तम् । एकस्मिन् देशे एकस्य भावाभावव्यवहारस्यापकः काल इति केचित् । एकस्यापि कालस्योपाधिभेदात् क्षणलवादिभेदव्यपदेशः । पूर्वापरादिदेशप्रतीतिव्यवहारयोर्निमित्तं दिक् । तदुक्तम् । इत इदमिति यतस्तद्दिशो लिङ्गमिति । इत

चेत् सत्यम् इदं सर्वपक्षलिङ्गमाकाशस्य परिशेषात् शब्द इति सिद्धान्तसूत्रं वक्ष्यति तस्येदमुपलक्षणमित्यदोषः ॥

काललक्षणं विवृणोति । चिरमिति । चिरादिव्यवहारासाधारणकारणद्रव्यं काल इत्यर्थः । लक्षणान्तरमाह । परापरेति । व्यतिकरो वैपरीत्यम् । एतस्य सूत्रोक्तषड्लिङ्गोपलक्षणत्वाद् विपरीतपरत्वानुमेयः काल इत्यादीनि षल्लक्षणानि भविष्यन्तीति भावः । तदेव सूत्रं पठति । अपरस्मिन्नित्यादि । मतान्तरेण लक्षणान्तरमाह । एकस्मिन्निति । एकस्यैकत्र भावाभावौ यद्भेदादुपपद्येते स काल इत्यर्थः । ननु काललिङ्गाविशेषात् एकस्य तस्य कुतो भेद इत्याशङ्क्याह । एकस्यापीति ॥

दिग्लक्षणं विवृणोति । पूर्वापरेति । पूर्वापरादिप्रत्ययलिङ्गा दिगिति लक्षणमित्यर्थः । यत इति प्रथमार्थे सार्व-

(१) इत्यादि च लक्षणम्–पा· B पु· ।

इदं पूर्वेण इत इदं परेणेत्यादिज्ञानं यत् तद्दिशो लिङ्गमिति सूत्रार्थः । सा च कालवदेका विभ्वी नित्यैव तत्तदुपाधिभेदात् प्राच्यादिव्यवहारहेतुर्भवतीति दर्शयितुं दिशेत्येकवचनम् । तदुक्तम्(१) । कार्यविशेषेण नानात्वमिति । आदित्यसंयोगः कार्यविशेषो विवक्षितः । शेषमात्मा मनश्च प्रागेव प्रमेयवर्गे लक्षितमिति ॥ ३७ ॥ ८८ ॥

अथ गुणलक्षणमाह ।

**कर्मणो व्यतिरिक्तत्वे जातिमात्राश्रयो गुणः ॥ ३८ ॥**

जात्याश्रय इति सामान्यादित्रयव्युदासः । मात्रेति गुणादेरप्याश्रयो द्रव्यं व्युदस्यते । कर्मापि जातिमात्राश्रय इति तद्व्यावृत्त्यर्थं व्यतिरिक्तत्वे(२) सतीत्युक्तम् । तदुक्तम् । द्रव्याश्रयोऽगुणवान् संयोगवि-

---

विभक्तिकस्तस्मिः । ज्ञानं यत् तद्दिशो लिङ्गमित्यर्थः । औपाधिकनानात्वे सूत्रसम्मतिमाह । तदुक्तमिति । प्रथमचरमादित्यसंयोगोपाधिकः प्राचीप्रतीच्यादिभेद इत्यर्थः । दिक्कालसाधनप्रपञ्चस्त्वस्मत्प्रणीतप्रशस्तपादभाष्यनिष्कण्टिकायां द्रष्टव्यः । शेषं सुगमम् ॥ ३७ ॥ ८८ ॥

गुणलक्षणे कर्मव्यतिरिक्तत्वं नाम संयोगविभागयोरनपेक्षकारणत्वाभावः अन्यथापेक्षितव्यावृत्तेरतिप्रसङ्गित्वादिति । एतच्च सौत्रे लक्षणे व्यक्तमित्याह । तदु-

---

(१) तच्चोक्तम्–पा॰ B पु॰ ।
(२) कर्मान्यत्वे–पा॰ B पु॰ ।

भागयोरकारणमनपेक्ष इति गुणलक्षणमिति । ननु गुणोऽपि गुणत्वसमवायस्य रसाद्यभावस्य चाश्रय इति कथं जातिमात्राश्रय इत्युच्यते । अनवस्थादुःस्थतया समवायस्य समवायान्तराभावात् अद्रव्यत्वेन च संयोगाभावात् संयोगसमवाययोर्भावधर्मत्वेनाभावाश्रयत्वासंभवाच्च केवलं विशेषणविशेष्यभाव एव तयोः स चाश्रयाश्रयिभावमन्तरेणापि भवतीत्यौपचारिकी

---

कमिति । अत्र द्रव्याश्रयशब्देन सामान्य वत्त्वं लक्ष्यते । अगुण इति च समवायिकारणत्वराहित्यमिति वृत्तिकारः । तथा च गुणसिद्धौ निर्गुणत्वसिद्धिर्नान्योन्याश्रय इति भावः । स्वोक्तलक्षणे जातिमात्राश्रयत्वं गुणस्यासिद्धं समवायाभावयोरप्याश्रयत्वादिति शङ्कते । नन्विति । मुख्यसम्बन्धपूर्वकस्यैवाश्रयत्वस्येह लक्षणत्वात् समवायाभावयोश्च तदसम्भवान्नातिव्याप्तिरिति। कथं मुख्यसम्बन्धाभावस्तयोरित्याशङ्क्य समवाये तावत् समवायाभावं दर्शयति । अनवस्थेति । संयोगाभावं च दर्शयति । अद्रव्यत्वेनेति । अभावे ऽपि तदुभयाभावं दर्शयति । संयोगेति । कथं तर्हि रूपसमवायवान् घटः पटध्वंसवन्तस्तन्तव इति च तयोः सम्बन्धताव्यवहार इत्यत्राह। केवलमिति । ननु विशेषणविशेष्यभावोऽपि रूपवान् दण्डीत्यादौ मुख्यसम्बन्धपूर्वक एव दृष्ट इत्याशङ्क्य नायं नियमः पशुमानित्यादौ अन्यथापि दर्शनादित्याह । स चेति । आश्रयाश्रयिभावमिति। मुख्यसम्बन्धमित्यर्थः। सम्बन्धव्यवहारस्तूभयनि-

तत्र सम्बन्धवाचो युक्तिरिति ॥ ३८ ॥

आद्यन्तग्रहणेन गुणान् परिसङ्ख्यायास्तेषां विशेषलक्षणाभिधानं प्रतिजानीते ।

चतुर्विंशतिरुद्दिष्टा गुणाः कणभुजा स्वयम् ।
रूपाद्याः शब्दपर्यन्तास्तेषां लक्षणमुच्यते ॥ ३९ ॥

रूपोपक्रमाः शब्दावसानाश्चतुर्विंशतिर्गुणाः । सूत्रक्रमानुरोधेनाद्यन्तग्रहणम् । तदुक्तम् । रूपरसग-

---

रूप्यत्वसाम्यादौपचारिक इत्याह । औपचारिकीति ॥ ३८ ॥

ननूत्तरश्लोके गुणानां लक्षणप्रतिज्ञा न युक्ता सामान्यलक्षणस्योक्तत्वात् विशेषलक्षणस्योद्देशं विनानुपपत्तेः तथा संख्याविशेषकथनमाद्यन्तनिर्देशश्च किमर्थमित्याशङ्क्य सामान्यलक्षणानन्तरं के गुणाः कियन्तः किं च तेषां विशेषलक्षणमित्याकाङ्क्षायां सर्वत्रेदमुत्तरमुपतिष्ठत इत्यवतारयति । आद्यन्तेति । के गुणा इत्यत्रोत्तरं रूपाद्या इति । कियन्त इत्यत्र चतुर्विंशतिरिति । अस्यैवोद्देशत्वाद् विशेषलक्षणप्रतिज्ञा च युक्तेत्यर्थः । ननु शब्दो द्रव्यमिति भाट्टाः संख्या तु पृथक् पदार्थ इति प्राभाकराः कर्मापि गुण इति भूषणः एवं न्यूनाधिकसंख्याविप्रतिपत्तेः कथं चतुर्विंशतिरित्यत्रोत्तरं कणभुजेति । कणादोक्तस्यैव युक्तियुक्तत्वात् तत्सिद्धिरिति भावः ।

तृतीयपादस्य पूर्वार्द्धेनैकवाक्यतामाह । रूपेति । किमपेक्षया रूपशब्दयोराद्यन्तत्वमत आह । सूत्रेति । तानि सूत्राणि दर्शयति । रूपरसेत्यादि । रूपाद्युद्देशक्रमस्तु

न्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा इति । चशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः सङ्गृहीताः । ततश्च कण्ठोक्ताः सप्तदश चशब्दसमुच्चिताः सप्तेति गुणाश्चतुर्विंशतिः । तेषां विशेषलक्षणं वक्ष्याम इति ॥ ३९ ॥

नेत्राद्येकाक्षगम्यत्वमर्थत्वे सति लक्षणम् ।
रूपस्य च रसस्यापि गन्धस्य स्पर्शशब्दयोः ॥ ४० ॥

चक्षुर्ग्राह्यत्वेन घटादिद्रव्यस्य तद्गतस्य च सत्तादिसामान्यस्य च संख्यापरिमाणादिगुणस्य च रूपत्वं माप्रसांक्षीदिति एकत्वं विशेषणम् तेषां त्वगिन्द्रियस्यापि विषयत्वात् । एवं स्पर्शनैकेन्द्रियग्राह्य इत्यत्रापि विशेषणफलं वाच्यम् । गन्धरसशब्दानां तु घ्राणरसनश्रोत्रग्राह्यत्वमेव लक्षणम् । एकत्वविशेषणस्य व्यवच्छेद्याभावेनाविवक्षितत्वात् । लक्षणसौकर्येण क्रम-

---

निकषे द्रष्टव्यः ॥ ३९ ॥

अथ प्रतिज्ञातानि विशेषलक्षणान्याह । नेत्रेति । चक्षुरेकग्राह्योऽर्थो रूपमिति रूपलक्षणम् ।

तत्रैकविशेषणं द्वीन्द्रियग्राह्यनिरासार्थमित्याह । चक्षुरिति । तदेतत्स्पर्शलक्षणे ऽप्यतिदिशति । एवमिति । गन्धादित्रयलक्षणे त्वेकशब्दत्यागे घ्राणग्राह्योऽर्थो गन्ध इत्यादि योज्यमित्याह । गन्धेति । पश्चादुद्दिष्टस्य शब्दस्यादौ लक्षणे कारणमाह । लक्षणसौकर्येणेति । ननु शब्दो द्रव्यं कथं

सुखाद्युः शब्दोऽत्र लक्षितः । ननु साक्षादिन्द्रिय[1]सम्ब-न्धेन साक्षात्कार्यत्वात् घटादिवदेव शब्दो द्रव्यं न गुण इति चेत् न शब्दो गुणः बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपवत् श्रोत्रं स्वगुणसजातीयगुणग्राहकम् बाह्येन्द्रियत्वात् घ्राणवदित्यादिभिर्गुणत्वस्यैव सिद्धेः ॥ ४० ॥

अर्थशब्दस्य विवक्षितमर्थं प्रयोजनं चाह ।

---

गुणेषु लक्ष्यत इति चोदयति । नन्विति । साक्षादित्यादिना पदत्रयेण क्रमात् घटरूपादौ समवायाभावयोरिन्द्रियरूपादौ च व्यभिचारनिरासः । असिद्धिं परिहरति । नेति । शब्दस्य स्वोपलब्धिकारणत्वेन श्रोत्रव्यवस्थापकत्वात् न हेत्वसिद्धिरिति भावः । अन्तरिन्द्रियव्यवस्थाहेतोः सुखादिज्ञानस्य गुणत्वे ऽपि युगपद्ज्ञानानुत्पत्तिलिङ्गे तद्धेतौ व्यभिचारनिरासाय बहिरित्युक्तम् । शब्दस्य गुणत्वे प्रमाणान्तरमाह । श्रोत्रमिति । सजातीयपदं दृष्टान्ते साध्यवैकल्यनिरासार्थम् । तच्च पक्षे ऽपि सम्भवतीत्यविरोधः । आदिशब्दात् सामान्यवत्त्वे सति बाह्येन्द्रियग्राह्यत्वादित्यादिसंग्रहः । द्रव्यत्वे तु शब्दस्य नित्यविभुत्वेन सर्वोपलब्धिरनुपलब्धिरेव वा स्यान्न तु कदाचिदुपलब्धिरिति प्रतितर्कपराहतेः गुणत्वमेव सिद्ध्यतीति भावः । यदुक्तं शब्दस्य गुणत्वमुत्तरत्र वक्ष्याम इति तदेतदिति बोध्यम् ॥ ४० ॥

ननूत्तरश्लोके अर्थशब्दार्थकथनं प्रकृतासङ्गतमित्याशङ्क्याह । अर्थशब्दस्येति । रूपादिलक्षणस्यस्येति शेषः ।

---

(१) साक्षादक्ष–पा· B पु· ।

द्रव्यादित्रयमेवार्थ इति काश्यपनिर्णयः ।
अतो रूपादिसामान्यैर्नातिव्याप्तिर्भविष्यति॥४१॥

द्रव्यगुणकर्माख्यमर्थ इति वैशेषिकपरिभाषा । अतो रूपत्वादिसामान्यपञ्चकस्य चक्षुराद्येकेन्द्रियग्राह्यत्वे ऽपि अर्थत्वाभावान्न तैरतिव्याप्तिः ॥ ४१ ॥

संख्यायाः परिमाणस्य पृथक्त्वस्य च[1] लक्षणम् ।
गुणत्वे सति हेतुत्वं तत्तद्धीव्यवहारयोः ॥ ४२ ॥

एकादिज्ञानव्यवहारयोर्निमित्तं गुणः संख्या । दीर्घादिज्ञानव्यवहारयोर्निमित्तं गुणः परिमाणम् । तच्चतुर्विधम् । महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वं चेति । पृथगिति ज्ञानव्यवहारयोर्निमित्तं गुणः पृथक्त्वमिति ॥ ४२ ॥

संयोगस्तु विरोधी स्याद् गुणत्वे सति कर्मणः ।
यस्मात् संयोगविध्वंसो विभागः स गुणो भवेत्
॥ ४३ ॥

---

अत इति। पारिभाषिकार्थत्वादित्यर्थः । अन्यथातिव्याप्तिः स्यादेवेति भावः ॥ ४१ ॥

संख्यादिलक्षणेषु निमित्तमित्यसाधारणकारणमित्यर्थः । तत्समवायिकारणव्युदासार्थं गुणत्वे सतीत्युक्तम् ॥ ४२ ॥

---

(१) पृथक्त्वस्यापि—पा॰ A पु॰ ।

कर्मविरोधी गुणः संयोगः युतसिद्धयोः संश्लेषः संयोगः युतसिद्धिश्चासम्बद्धयोर्विद्यमानतेति केचित् । संयोगविरोधी गुणो विभाग इति ॥ ४३ ॥

परापरधियोर्हेतू दिक्कालापेक्षयैव यौ ।
परत्वमपरत्वं च क्रमादेतौ गुणौ मतौ ॥ ४४ ॥

दिगपेक्षया कालापेक्षया वा परत्वबुद्धिनिमित्तं गुणः परत्वम् । तयोरेवापेक्षाया अपरत्वबुद्धिनिमित्तं गुणोऽपरत्वमिति ॥ ४४ ॥

लक्षिता बुद्धिराह्लादः सुखं दुःखं च लक्षितम् ।
इच्छानुरागो द्वेषः स्यादसहिष्णुत्वलक्षणः ॥ ४५ ॥

निगदव्याख्यातमेतत् ॥ ४५ ॥

प्रयत्नस्त्वात्मधर्मः स्यादुत्साहो भावना च सः ।

आत्मधर्मः कृत्यादिपदवाच्य उत्साहः प्रयत्नः ।

---

संयोगलक्षणे गुणग्रहणं दिक्कालादिव्युदासार्थम् । संयोगस्य लक्षणान्तरमाह । युतसिद्धयोरिति । संयोग इति केचिदित्यन्वयः । युतसिद्धिलक्षणं चाह । युतसिद्धिश्चेति ॥ ४३ ॥

दिक्कृतकालकृतत्वभेदेन द्विविधे परत्वापरत्वे इत्याह । दिक्कालापेक्षयेति ॥ ४४ ॥

निगदः पाठः स एव व्याख्यानं यस्य तत्तथोक्तम् पाठादेव गम्यमानार्थमित्यर्थः ॥ ४५ ॥

प्रयत्नलक्षणमाह । प्रयत्नस्त्विति । लक्षणांशं निष्कृ-

स एव भावनेति व्यपदिश्यते । यथाहुः ।

भावनैव प्रयत्नात्मा सर्वत्राख्यातगोचरः । इति ।

गुरुत्वं तु गुणो हेतुराद्ये पतनकर्मणि ॥ ४६ ॥
द्रवत्वं तु गुणो हेतुराद्ये स्यन्दनकर्मणि[1] ।

द्वितीयादिपतनस्य स्यन्दनस्य च वेगहेतुत्वादाद्य इत्युक्तम् । पतनस्यन्दनयोराश्रयद्रव्यस्यापि समवायिकारणत्वेन हेतुत्वाद् गुण इत्युक्तम् ॥४६॥ऽऽ॥

व्याह। आत्मेत्यादि। अत्रोत्साह इति लक्षणम् उत्साहपदार्थः प्रयत्नः क्वचिल्लोके हर्षेऽप्युत्साहपदप्रयोगदर्शनात् तथा न भ्रमितव्यमित्याह। कृत्यादीति। आदिशब्दादुपयोगादि[2]-शब्दसंग्रहः। तथा च कृत्यादिपर्यायपदार्थ उत्साहः प्रयत्नो न हर्षपदार्थस्तस्य गौणत्वादित्यर्थः। न च कायिकव्यापारविशेषे ऽपि प्रयत्नभ्रमः कार्य इत्याशयेनाह। आत्मधर्म इति। ननु कृत्यादिपदवाच्यः प्रयत्न इत्युक्तं कृतितत्साध्यमध्यस्थ इत्यादि भावनायास्तद्वाच्यत्वदर्शनादित्याशङ्क्याह। स एवेति। योऽयमुत्साहापरनामा लोके प्रसिद्धः प्रयत्नः स एव वेदे पुरुषप्रवर्तनात्मशब्दभावनाविषयभूतपुरुषप्रवृत्तिरूपा भावनेति व्यपदिश्यत इत्यर्थः। अत्राचार्यसंमतिमाह। यथाहुरिति। किं करोति पचति किं करोति गच्छतीत्येवं सर्वत्र करोतिसामानाधिकरण्यदर्शनात् सर्वधात्वर्थवर्तिसामान्यरूपं करोत्यर्थभूतभावना पूर्वोक्तप्रयत्नलिङाद्याख्यातप्रत्ययवाच्यतया प्रतीयत इति वार्तिकार्थः ॥ ४६ ॥ ऽऽ ॥

(१) स्यन्दनकर्मणि-पा० A पु० ।
(२) उद्योगादि-पा० E पु० ।

स्निग्धधीर्यद्विशिष्टे ऽर्थे स्नेहश्चिक्कणता च[1] सः ॥ ४१ ॥

चिक्कणत्वं स्नेह इति लक्षणान्तरमिति ॥ ४१ ॥

यज्जातीयसमुत्पाद्यस्तज्जातीयस्य कारणम् ।
स्वयं यस्तद्विजातीयः संस्कारः स गुणो मतः ॥४८॥

स्वोत्पादकसजातीयस्योत्पादकः स्वयं च तद्विजातीयो गुणः संस्कार इति । यथा स्मृतिहेतुः संस्कारः स ह्यनुभवज्ञानजन्यः स्मृतिज्ञानहेतुः स्वयं न ज्ञानजातीयः[2] । यथा वा वेगः कर्मजः[3] कर्महेतुः स्वयं

---

स्निग्धेति । स्निग्धव्यवहारासाधारणं कारणं गुणः स्नेह इत्यर्थः ।

चिक्कणविशेषणवैयर्थ्यमाशङ्क्याह । चिक्कणत्वमिति ॥ ४७ ॥

संस्कारलक्षणे संस्कारः स गुणो मत इति संस्कारानुवादेन गुणत्वं विधीयत इति तच्चायुक्तमित्याशयेन वैपरीत्येन योजयन् लक्षणार्थं निष्कृष्याह । स्वोत्पादकेति । अत्र गुणग्रहणं संयोगापेक्षया तादृक्कर्मव्युदासार्थम् । तथापि कर्मापेक्षया तादृक्संयोगव्युदासार्थमद्विष्ठत्वे सतीति विशेषणीयम् । तथापि विहितनिषिद्धक्रियापेक्षया तादृग्धर्माधर्मव्यवच्छेदाय सर्वोत्पत्तिमतां निमित्तत्वरहित इति विशेषणीयम् । लक्ष्ये लक्षणं योजयति । यथेत्यादि । वेग-

---

(१) स स्नेहश्चिक्कणश्च–पा॰ B पु॰ ।
(२) स्वयं ज्ञानविजातीयः–पा॰ C पु॰ ।
(३) कर्मजन्यः–पा॰ B पु॰ ।

कर्म न भवति। (यथा स्थितिस्थापकः वेष्टनादिकर्मजन्यः वेष्टनादिकर्मकारणं स्वयं च न कर्मरूपः[१]।) वेगो भावना स्थितिस्थापकश्चेति त्रिविधः संस्कार इति॥४८॥

विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः।
प्रतिषिद्धक्रियासाध्यः पुङ्गुणोऽधर्म उच्यते[२] ॥४९॥

श्रुत्यादिविहितानुष्ठानसाध्यः पुङ्गुणो धर्मः। श्रुत्यादिप्रतिषिद्धानुष्ठानसाध्यः पुङ्गुणस्त्वधर्म इति ॥ ४९ ॥

अत्र पृथिव्या रूपरसगन्धस्पर्शसंख्यापरिमाण-

---

ग्रहणं स्थितिस्थापकस्याप्युपलक्षणम्। ननु संस्कारलक्षणं वेगादिषु कथं युज्यते अन्यलक्षणस्यान्यत्रासम्भवादित्याशङ्क्य नैष दोषः तेषां तद्विशेषत्वादित्याशयेन संस्कारं विभजते वेग इत्यादिना। एषां च त्रयाणां पूर्वोक्तैकलक्षणव्यवस्थापितसंस्कारत्वाख्यैकसामान्ययोगादेकगुणत्वं धर्माधर्मयोस्तु तादृग्व्यवस्थापकाभावान्नादृष्टत्वाकारेणैकगुणत्वमिति निकषे निरटङ्कि ॥ ४८ ॥

विहितनिषिद्धैकक्रियासाध्यावात्मगुणौ धर्माधर्मावित्याह। विहितेत्यादि। अतिरोहितमन्यत् ॥ ४९ ॥

निरूप्यैवं गुणान् सर्वान् कस्य द्रव्यस्य के गुणाः।
कियन्त इत्यपेक्षायां विभज्य प्राह सम्प्रति ॥

अत्रेत्यादिना विभाग इत्यन्तेन। तत्र पृथिव्या

(१) कर्म न भवति—पा॰ B पु॰। ( ) एतन्मध्यस्थः पाठो नास्ति D पु॰।
(२) प्रतिषिद्धक्रियासाध्योऽधर्मः पुंसो गुणो मतः—पा॰ A पु॰।

पृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराश्चतुर्दश गुणाः । तत्र रूपं शुक्लाद्यनेकविधम् अग्निसंयोगविरोधि । रसस्तु षड्विधो मधुरादिः । द्विविधो गन्धः सुरभिरसुरभिश्च। स्पर्शोऽनुष्णाशीतः पाकजश्च। अपामपि स्नेहगन्धयोः प्रक्षेपप्रतिक्षेपमात्रविशेषितास्त एव गुणाः । अप्सु रूपरसस्पर्शाः शुक्लमधुरशीताः । रसस्नेहगुरुत्वव्यतिरिक्तास्त एव तेजसः । अत्र रूपं शुक्लं भास्वरं च उष्ण एव स्पर्शः । वायोस्तु रूपद्रवत्वव्यतिरिक्तास्त एव गुणाः । स्पर्शोऽनुष्णाशीतोऽपाकजश्च। स्पर्शव्यतिरिक्तास्त एव मनसः । त एव परत्वापरत्वसंस्कारव्यतिरिक्ताः[1] शब्दसहाया विहायसः । दिक्कालयोश्च शब्दपरिहारेण[2] त एव भवन्ति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारस-

विशेषगुणानाह । तत्र रूपमित्यादि । तत्र रूपरसस्पर्शाः स्वाश्रयव्यवच्छेदसमर्थावान्तरसामान्यवत्त्वेन विशेषगुणाः गन्धस्तु तदेकनियतत्वात् स्वरूपत एव । एवमेवाबादिष्वपि रूपादीनां विशेषगुणत्वं स्नेहसांसिद्धिकद्रवत्वशब्दबुद्ध्यादीनां तु स्वरूपत एवेति बोद्धव्यम् । तत्र क्षित्युदकात्मानश्चतुर्दशगुणाः एकादशगुणं तेजः नवगुणो वायुः अष्टगुणं मनः षड्गुणं नभः पञ्चगुणौ दिक्कालाविति विवेक्तव्यम् ।

(१) विधुराः–पा॰ B पु॰ ।
(२) प्रहाणेन–पा॰ B पु॰ ।

श्रीचीनास्त एवात्मन इति गुणविभागः ॥

ततश्च रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगाः दश मूर्तैकगुणाः। बुद्ध्यादय आत्मविशेषगुणाः शब्दश्चेति दशामूर्तैकगुणाः। इतरे तूभयगुणाः। रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्ध्यादयः शब्दश्चेति षोडश वैशेषिकगुणाः। इतरे सामान्यगुणाः। संयोगविभागौ द्वित्वद्विपृथक्त्वादयश्चानेकाश्रिताः। अन्ये त्वेकैकवृत्तयः। केचन गुणा बाह्यैकैकेन्द्रियग्राह्याः यथा पञ्चापि रूपादयः। केचित्तु बाह्येन्द्रि-

---

अथैषां मिथः केषाञ्चित्साधर्म्यं केभ्यश्च वैधर्म्यं चाह। ततश्चेति। वेगग्रहणं स्थितिस्थापकोपलक्षणम्। तयोः संस्कारात्मनैकत्वाद् दशत्वाविरोधः। एकशब्देन मूर्तामूर्तगुणव्युदासः। मूर्तत्वव्याप्यगुणत्वं वा मूर्तगुणत्वम्। एवं बुद्ध्यादीनाममूर्तगुणत्वं नामामूर्तैकगुणत्वममूर्तत्वव्याप्यगुणत्वं वा व्यावर्त्यं तु पूर्वकथितमेव। इतरे संख्यादय उभयगुणाः मूर्तामूर्तगुणाः द्रव्यत्वव्यापकगुणा इत्यर्थः। विशेषगुणा एव वैशेषिकगुणाः नवान्यतममात्रनिष्ठत्वोचितावान्तरसामान्यवन्तः स्वाश्रयव्यवच्छेदसमर्था अवान्तरसामान्यवन्तो वेत्यर्थः। तद्रहिताः सामान्यगुणा इत्याशयेनाह। इतर इति। अनेकत्र व्यासज्यवृत्त्येकव्यक्तिका इत्यर्थः। आदिशब्दात् त्रित्वत्रिपृथक्त्वादिसंग्रहः। एकैकवृत्तय इति। गुणत्वे सत्यव्यासज्यवृत्तय इत्यर्थः। बाह्यैकैकेन्द्रियग्राह्या इति।

यद्वयग्राह्याः यथा संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगाः । केचिदन्तःकरणग्राह्याः । यथा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः । धर्माधर्मभावनागुरुत्वानि नित्यातीन्द्रियाणि । अत्र एकादश गुणाः कारणगुणपूर्वकाः । यथाऽपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः । दश त्वनेवंविधाः बुद्ध्यादय आत्मविशेषगुणाः शब्दश्चेति । तूलपरिमा-

---

मनोऽव्यवच्छेदार्थं बाह्यपदम् । अन्यथैकेन्द्रियग्राह्यत्वासम्भवात् । एकपदं द्वीन्द्रियग्राह्यनिरासार्थम् । तथापि परमाणुरूपादावव्याप्तेः तन्निष्ठगुणत्वावान्तरजातिमत्त्वेन निर्ब्रूयात् । एवं द्वीन्द्रियग्राह्यत्वमपि निर्वक्तव्यम् अन्यथा परमाणुगतेऽव्याप्तेः । अन्तःकरणग्राह्या इति । गुणत्वे सति तन्मात्रग्राह्या इत्यर्थः । तेन सुखत्वादेर्बाह्येन्द्रियग्राह्याणां च निरासः । नित्यातीन्द्रियाणीति । अस्मदादीन्द्रियग्रहणयोग्यतारहितानीत्यर्थः । भावनेति स्थितिस्थापकस्याप्युपलक्षणम् । कारणगुणपूर्वका इति । स्वसमवायिसमवायिकारणगुणासमवायिकारणका इत्यर्थः । अपाकजपदेन द्रवत्वमपि विशेषणीयम् पार्थिवपरमाणुगतरूपादिवत् पार्थिवतैजसपरमाणुगतनैमित्तिकद्रवत्वस्यापि व्यावर्तनीयत्वात् । वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः तयोरप्यक्रियाजन्यत्वेन परिमाणस्य संख्याप्रचयाजन्यत्वेन च विशेषणात् तज्जन्येषु लक्ष्यबहिष्कारान्नाव्याप्तिदोषः । दश त्वनेवंविधा इति । अकारणगुणपूर्वका इत्यर्थः । एतच्च पाकजपरत्वापरत्वादीनामप्युपलक्षणम् । अन्यथा तेष्वेवातिव्याप्तेः ।

णोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वापाकजाश्च संयोगजाः । संयोगविभागवेगाः कर्मजाः । शब्दोत्तरविभागौ विभागजौ । परत्वापरत्वद्वित्वद्विपृथक्त्वादयश्च बुद्ध्यपेक्षाः[१] तद्विनाशात् तद्विनाश[२] इति । रूपादयः पञ्चापि भूतगुणाः । रूपरसगन्धस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहाश्च समानजात्यारम्भकाः । सुखदुःखेच्छाद्वेषप्रयत्ना असमान-

दशग्रहणं तु भाष्यकारीयकण्ठोक्त्यभिप्रायमिति । संयोगजा इति । गुणत्वे सति संयोगासमवायिकारणका इत्यर्थः । कर्मजा इति । वेगेन स्थितिस्थापकोऽप्युपलक्ष्यते तावप्यकारणगुणपूर्वकौ संयोगविभागावप्याद्यौ ग्राह्यौ । एवं विभागजत्वं च विभागासमवायिकारणत्वम् । शब्दोऽत्र शब्दसंयोगजन्यो विवक्षितः । बुद्धिरसाधारणनिमित्तत्वेनापेक्ष्यत इति बुद्ध्यपेक्षाः अपेक्षाबुद्धिजन्या इत्यर्थः । रूपादयः पञ्चापीति । अपिशब्दाद् गुरुत्वद्रवत्वस्नेहकालकृतपरत्वापरत्वकारणगुणपूर्वकवेगस्थितिस्थापकानां संग्रहः । भूतगुणाः भूतैकगुणा इत्यर्थः । एतेनात्मविशेषगुणा नवाप्यभूतगुणाः शेषास्तु भूताभूतगुणा इत्यर्थात् सिद्धमिति बोद्धव्यम् । रूपादयः स्नेहान्ताः समानजात्यारम्भका इति । सजातीयमात्रारम्भका इत्यर्थः । अन्यथोभयारम्भकेष्वतिव्याप्तेः । आरम्भकत्वं

(१) अपेक्षाबुद्धिजन्याः-पा॰ D पु॰ ।
(२) तद्विनाशविनाशिनः-पा॰ B पु॰ ।

जात्यारम्भकाः । संयोगविभागसंख्यागुरुत्वद्रवत्वोष्ण-स्पर्शस्नेहज्ञानधर्माधर्मसंस्काराः समानासमानजात्यारम्भकाः। बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतारम्भकाः । रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः । संयोगविभागसंख्यैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगधर्माधर्मास्तूभयत्रारम्भकाः । गुरुत्वद्र-

चात्रोपादानेतरकारणत्वमसमवायिकारणत्वं चेति द्वयमपि विवक्षितम् । तत्राद्ये स्नेहोष्णस्पर्शवर्जितानामेवेदं साधर्म्यम् तयोः संग्रहरूपादेर्विजातीयस्याप्यारम्भकत्वात् । अत्रानुष्णेति निषेधः स्नेहस्याप्युपलक्षणम्(!) । एतच्चात्मधर्मेतरकार्यविषयमिति ज्ञेयम् । द्वितीये तु तयोरप्यवर्जनमिति विवेकः । सुखादयो विजातीयमात्रारम्भकाः संयोगादयस्तूभयारम्भकाः तत्र स्नेहोऽपि ग्राह्यः । आरम्भकत्वं चात्र सर्वत्राप्युपादानेतरकारणत्वमेव । स्वाश्रयसमवेतारम्भका इति । स्वाश्रयमात्रसमवेतबुद्ध्यपेक्षेतरकार्यारम्भकनिष्ठगुणत्वव्याप्यजातिमन्त इत्यर्थः । एवं चापेक्षाबुद्धावन्त्यशब्दे च नाव्याप्तिः । परत्रारम्भका इति । परत्रैवारम्भका इत्यर्थः । ते च संग्रहज्ञानादृष्टेतरस्वाश्रयसमवेतानारम्भकत्वे सत्यारम्भका इति निर्वाच्याः । तेन स्नेहवैधप्रयत्नादौ नाव्याप्तिः । परिमाणस्यारम्भकत्वेन विशेषणाज्ज्ञानारम्भकेष्वव्याप्तिरिति । उभयत्रारम्भका इति। एकत्रैवारम्भकत्वे सत्यारम्भका इत्यर्थः । अत्र वेगेन स्थितिस्थापकोऽपि ग्राह्यः स्नेहस्य संग्रहातिरिक्तकार्यापेक्षया पूर्वं परत्रारम्भकेषु संग्रहः इदानीं तदपेक्षयोभयत्रारम्भकेषु ग्रहणमित्यविरोधः । गुरुत्वेत्यादि ।

वत्ववेगप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः । रूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहशब्दा असमवायिकारणानि । नवात्मविशेषगुणा निमित्तकारणानि । संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगास्तूभयकारणानि । परत्वापरत्वद्वित्वद्विपृथक्त्वादीनि अकारणानि । संयोगविभागशब्दाः आत्मविशेषगुणाश्च प्रदेशवृत्तयः । शेषाः स्वाश्रयव्यापिनः । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वस्नेहसांसिद्धिकद्रवत्वानि यावद्द्रव्यभावीनि । शेषास्त्वयावद्द्र-

---

वेगेन स्थितिस्थापको ग्राह्यः । संयोगविशेषो नोदनाभिघाताख्यः । क्रियाहेतव इति । उपादानेतरत्वे सति क्रियां प्रत्यसाधारणकारणानीत्यर्थः । रूपेत्यादि । उष्णस्पर्शस्य पाकजोत्पत्तौ निमित्तत्वात् तद्व्यवच्छेदार्थमुक्तमनुष्णेति । परिमाणं चात्र द्रव्यारम्भकद्रव्यनिष्ठमहत्त्वं विवक्षितं तेनाण्वाकाशान्त्यावयविपरिमाणबहिष्कारः एतेषामसमवायिकारणत्वमेवेत्यर्थः । तच्च निमित्तोपादानत्वासहचरितकारणत्वं स्नेहादीनां च संग्रहादिनिमित्तत्वे ऽपि तद्व्यतिरिक्तकार्यापेक्षया चेदमवधारणमित्यदोषः । नवेति । निमित्तत्वमेवेत्यर्थः तत्र समवाय्यसमवायित्वासहचरितकारणत्वम् । उभयथाकारणत्वं च निमित्तासमवायिव्यतिरिक्तत्वानधिकरणत्वम् । ज्ञानेतरकार्याजनकत्वमकारणत्वम् । स्वात्यन्ताभावसमानाधिकरणत्वं प्रदेशवृत्तित्वम् । तद्वैपरीत्यमेव स्वाश्रयव्यापित्वम् । यावद्द्रव्यभावीन्याश्रयविनाशैकविनाश्यानीत्यर्थः । स्वाश्रये सत्येव विनाशि-

व्यभाविन इति ।

कथं पार्थिवद्रव्ये पाकजगुणोत्पत्तिप्रकार इति चेदित्थम् । श्यामस्य घटाद्यामद्रव्यस्य दहनसम्बन्धे तदभिघातान्नोदनाद्वा तदारम्भकेषु परमाणुषु कर्मोत्पत्तौ तेषां विभागेन संयोगनाशे सति कार्यद्रव्यं विनश्यति । ततस्तत्परमाणुषु चौष्ण्यापेक्षाद्दहनसम्बन्धाच्छ्यामत्वादिविनाशे सति अन्यस्मादग्निसंयोगात्[1] पाकजाः परमाणुषु रक्तादयो जायन्ते । तदनन्तरमदृष्टवदात्मसंयोगात् तेषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद् द्व्यणुकादिप्रक्रमेणोत्पत्तौ कार्ये का-

---

त्वमयावद्द्रव्यभावित्वमिति ॥ इति साधर्म्यम् ॥

अथायावद्द्रव्यभाविप्रसङ्गात् पाकजोत्पत्तिप्रकारं वक्तुं पृच्छति । कथमिति । अवस्थित एव कार्यद्रव्ये तत्रैवाग्निसंयोगात् श्यामादयो नश्यन्ति रक्तादय उत्पद्यन्ते इति मीमांसकादयः । प्राभाकरास्तु रूपादीनां सामान्यवन्नित्यतया तत्सम्बन्धानामेवाग्निसंयोगाद् विनाशोत्पादाविति वर्णयन्ति । तदुभयमप्यसहमानः पीलुपाकवाद्याह । इत्थमिति । नोदनाभिघातौ संयोगविशेषौ निगदव्याख्यातमन्यत् । नन्वस्मिन् पक्षे पूर्वपरिमाणावरणावधारणरेखोपरेखादिविन्यासादितादवस्थ्यं नोपपद्यते इत्याशङ्क्य क्रमात् कतीनामेवावयवानामनतिदूरविश्लिष्टानां पुनर्झटिति घटनान्न किञ्चिदनुपपन्नमित्यादि सर्वमन्यत्र द्रष्टव्य-

---

(१) दहनसम्बन्धात्–पा॰ B पु॰ ।

रूपगुणप्रक्रमेण रक्तादिगुणोत्पत्तिरिति कृतं विस्त-रेण ॥

अथ कर्मलक्षणमाह ।

कर्म चासमवायि स्याद्यत्संयोगविभागयोः ।

समुच्चितयोः संयोगविभागयोरसमवायिकारणं कर्म तेनैकत्र कारणयोः संयोगविभागयोर्नातिव्याप्तिः । असमवायिकारणं च समवायिकारणप्रत्यासन्नम्[1] । द्विविधा च प्रत्यासत्तिः । समवायिकारणसमवेत-

मित्याशयेनाह । इति कृतमिति । प्रक्रिया तु विस्तरभयान्न लिख्यते । प्रमाणं तु पीलुपाके विमताः पिठरे रूपादयः कारणगुणपूर्वका अवयविरूपादित्वात् पटरूपादिवदित्याद्यूह्येयम् । इति पाकजोत्पत्तिः ॥

सामान्यवत्त्सु शिष्टत्वात् सामान्यादेः प्राक्कर्मलक्षणमाह । अथेति । ननु संयोगविभागयोरसमवाय्यसमवेतमित्यर्थश्चेत् सामान्यादावतिव्याप्तिः असमवायिकारणमित्यर्थश्चेत् संयोगविभागयोरपि तथात्वात् तयोरेवातिव्याप्तिरित्याशङ्क्य व्याचष्टे । समुच्चितयोरिति । समुच्चयफलमाह । तेनेति । संयोगस्य विभागाजनकत्वे सति संयोगजनकत्वं विभागस्यापि संयोगाजनकत्वे सति विभागजनकत्वं कर्मणां तूभयजनकत्वमिति भेद इति भावः । एवं कर्मलक्षणस्यासमवायिकारणज्ञानसापेक्षत्वात् तल्लक्षणं चाह । असमवायिकारणं चेति । कथञ्चित् प्रत्यासन्नेषु अदृष्टादिष्वतिव्याप्तिपरिहारार्थं विशेषमाह । द्विविधेति । समवा-

(१) अवधृतसामर्थ्यं—इत्यधिकं B पु. ।

त्वं तत्कारणसमवेतत्वं च । तत्राद्यं यथा पटस्य तन्तुद्वयसंयोगः । द्वितीयं तु पटगतशौक्ल्यस्य तन्तुगतं शौक्ल्यमिति । तदुक्तम् । एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारणमिति कर्मलक्षणम् ।

कानि कर्माणि कियन्ति चेत्याह ।

उत्क्षेपणमपक्षेप आकुञ्चनमथापरम् ॥ ५० ॥
प्रसारणं गतिश्चेति भिद्यते कर्म पञ्चधा ।

तदुक्तम् । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि कर्माणीति ॥ ५० ॥ ऽऽ ॥

---

यिकारणसमवेतत्वमिति । कार्यस्य यत् समवायिकारणं तत्रैव समवेतत्वं कार्यैकार्थप्रत्यासत्तिरिति यावत् । तत्कारणसमवेतत्वमिति । तस्य कार्यसमवायिकारणस्य यत्कारणं समवायिकारणं तत्समवेतत्वं कारणैकार्थप्रत्यासत्तिरिति यावत् । क्रमेणोदाहरति । यथेत्यादि । एवमपि तन्तुरूपस्य पटं प्रत्यसमवायिकारणत्वं स्यात् कार्यैकार्थप्रत्यासत्तिभावात् तन्निवारणार्थमवधृतसामर्थ्यमिति विशेषणीयम् । अथ कर्मलक्षणे सूत्रसम्मतिमाह । तदुक्तमिति । एकद्रव्यमुपादानतया यस्येत्येकद्रव्यमिति गुणान्यतो व्यवच्छेदः गुणो न भवतीत्यगुणमिति गुणाच्च व्यवच्छेदः । आर्षं नपुंसकत्वम् । एतावदेकं लक्षणं शेषमन्यत् । तदेव स्वोक्तलक्षणसमानार्थं चेति भावः । अनपेक्षत्वं चास्य पश्चाद्भाविभावरूपकारणानपेक्षत्वम् ।

ननु कर्मप्रस्तावे का सङ्गतिरुत्क्षेपणादिनिरूपणस्येत्याशङ्क्याह । कानीति ॥ ५० ॥ ऽऽ ॥

तेषां विशेषलक्षणमाह ।

ऊर्ध्वं चाधश्चाभिमुखं तिर्यग्विष्वगिति क्रमात् ॥ ५१ ॥

तानि पञ्चापि कर्माणि देशसंयोगहेतवः ।

ऊर्ध्वादिदेशसंयोगासमवायिकारणत्वं[१] यथासंख्यमुत्क्षेपणादिलक्षणम् । विष्वगित्यनियतदेशविशेषमित्यर्थः । अत्र गमनग्रहणेन भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पवननमनोन्नमनानि सङ्गृह्यन्ते ॥ ५१ ॥ ८८ ॥

अथ जातिः[२] ॥

---

कर्मलक्षणस्योक्तत्वात् पौनरुक्त्यमाशङ्क्याह । तेषां विशेषेति ।

ननूर्ध्वादिदेशसंयोगहेतुत्वं समवायिनिमित्तयोरतिव्याप्तमित्याशङ्क्य हेतुशब्देनासमवायिकारणत्वस्य विवक्षितत्वान्नैष दोष इति व्याचष्टे । उर्ध्वादीति । ऊर्ध्वदेशसंयोगासमवायिकारणमुत्क्षेपणम् । अधोदेशसंयोगासमवायिकारणमपक्षेपणमित्यादि योज्यमित्यर्थः । ननु भ्रमणादिभिरतिरेकात् कथं पञ्चैवेत्यवधारणमित्याशङ्क्याह । अत्र गमनेति । तेषामप्यनियतदिग्देशविशेषसंयोगहेतुत्वविशेषाद्गमनान्तर्भावान्नातिरेक इति भावः ॥ ५१ ॥ ८८ ॥

अथ निःसामान्येषु बह्वाश्रयत्वात् तावज्जातिर्लक्ष्यत इत्याशयेनाह । अथेति । अत्र मध्ये तिङन्तप्रयो-

---

(१) उर्ध्वादिदेशैर्द्रव्यसंयोगस्यासमवायिकारणत्वं-पा· B पु· ।

(२) अथ सामान्यमाह-पा· B पु· ।

**सामान्यं नित्यमेकं स्यादनेकसमवायि च**[1] ॥ ५२ ॥

नित्यमेकमनेकसमवायि सामान्यमित्यर्थः । नित्यमित्युक्ते गगनादेरपि सामान्यत्वप्रसङ्गादनेकसमवायीत्युक्तम् । अनेकसमवायीत्युक्ते संयोगस्यावयविनश्च प्रसङ्गान्नित्यमित्युक्तम् । नित्यमनेकसमवायीत्युक्ते सलिलाद्यनेकपरमाणुगतरूपादीनामपि प्रसङ्गादेकं स्यादित्युक्तम् ॥ ५२ ॥

विशेषं लक्षयति ।

**अजातिरेकवृत्तिश्च विशेष इति शिष्यते**[2] ।

जातिसमवाययोरपि जातिशून्यत्वात् तद्व्यवच्छेदायोक्तमेकवृत्तिरिति । अनेकवृत्तित्वात् तयोः । रूपादीनामप्येकवृत्तित्वादजातिरित्युक्तम् । तेषां जातिमत्त्वात् । एकद्रव्याः स्वरूपसन्तो विशेषा इत्याचार्याः । तत्राप्येकद्रव्या इति सामान्यसमवाययोर्व्युदासः ।

गादन्ते चकाराच्च लक्षणद्वयं माशङ्कीरित्येकलक्षणतया व्याचष्टे । नित्यमिति ॥ ५२ ॥

अथ समवायिप्रस्तावाद् विशेषो लक्ष्यत इत्याशयेनाह । विशेषमिति ।

रूपादीनामिति कर्मणामप्युपलक्षणम् । द्रव्यस्य तूभयमपि व्यावर्तकमिति भावः । अथ व्युत्पत्त्यतिशयार्थं किरणावलीकारोक्तलक्षणं पदप्रयोजनं चाह ।

(१) नित्यमेकं सद–पा· B पु· ।

(२) कथ्यते–पा· C पु· ।

दासः[1] । स्वरूपसन्त इति सत्तासमवायेन सतां द्रव्यगुणकर्मणामिति । समानजातीयाः समानगुणकाः परमाणवो मुक्तात्मानश्च परस्परव्यावर्तकधर्मसमवायिनः द्रव्यत्वाद् घटवदित्यनुमानाद् विशेषसिद्धिरिति ॥

समवायलक्षणमाह ।

**समवायस्तु सम्बन्धो नित्यः स्यादेक एव सः[2] ॥ ५३ ॥**

नित्य इति संयोगादेर्व्युदासः । सम्बन्ध इति नित्याकाशादेः । न च नित्यविभूनां संयोगैरतिव्याप्तिः संयोगहेतूनामन्यतरकर्मोभयकर्मणामसम्भवेन तेषां

---

एकद्रव्या इत्यादि । विप्रतिपन्नत्वाद् विशेषसद्भावे प्रमाणं चाह । समानजातीया इत्यादिना । अत्र पक्षविशेषणैः जात्यादिना अर्थान्तरत्वनिरासः । एतेन व्यावर्तकधर्ममात्रसिद्धौ ते च सम्प्रतिपन्नजात्यादिव्यतिरिक्ताः तदात्मकत्वे बाधकोपपन्नधर्मत्वाद् व्यतिरेकेण जात्यादिधर्मवदिति परिशेषाद् विशेषसिद्धिरित्यर्थः ॥

अथ परिशेषात्[3] समवायो लक्ष्यत इत्याह । समवायस्त्विति । विभवो नित्यसंयुक्ताः । कदाचिन्न विभज्यन्ते चेति केचित् । तथा च तेष्वतिव्याप्तिरित्याशङ्क्य तेषामेवाभावान्नैष दोष इत्याह । न चेति । संयोगाभावे कारणमाह । संयोगहेतूनामिति । तदसम्भवश्च तेषां

(१) व्यवच्छेदः–पा· B पु· ।
(२) एव तु–पा· A पु· ।
(३) अथार्थान्तरत्वपरिशेषात्–पा· F पु· ।

संयोगस्यैवाभावात् । एक एवायं समवायः । सत्तासामान्यवत् तत्सम्बन्धिभेदाद्भेदेन व्यपदिश्यत इति । सूत्रं तु इहेति यतः कार्यकारणयोः स समवाय इति । अत्र कार्यकारणयोरित्ययुतसिद्धयोरुपलक्षणम् । तेनायुतसिद्धयोरवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषतद्वतोश्च योऽयमिह तन्तुषु पट इत्यादिरिहप्रत्ययो भवति स समवाय इति सूत्रार्थः । अयुतसिद्धयोरिति युतसिद्धकुण्डबदरादिसंयोग-

निष्क्रियत्वान्निरवयवत्वाच्चेति शेषः । जन्यसम्बन्ध एव संयोगव्यवहारदर्शनान्नाजः संयोगोऽस्तीति भावः । ननु विभवो मिथः संयुज्यन्ते द्रव्यत्वात् सम्मतवदिति तत्सिद्धिरिति चेन्न युतसिद्धेस्तत्रोपाधित्वात् प्रकृते तदभावादिति सङ्क्षेपः । विस्तरस्तु निकषे द्रष्टव्यः । श्लोकशेषं व्याचष्टे । एक एवेति । ननु घटसमवायः पटसमवाय इति भेदव्यवहारदर्शनात् समवायो नानेति प्राभाकरास्तान् प्रत्याह । सत्तेति । घटसत्ता पटसत्तेत्यादिवदौपाधिक इत्यर्थः । अत्र सौत्रं लक्षणं(१) चाह । सूत्रं त्विति । ननु कार्यकारणयोरेव समवायश्चेत् कथमस्य पञ्चपदार्थवृत्तित्वमित्याशङ्क्य व्याचष्टे । अत्रेति । उपलक्षणफलाभिधानपूर्वकं लक्षणं निष्कृष्याह । तेनेत्यादि । अयुतसिद्धयोरिहप्रत्ययहेतुः सम्बन्धः समवाय इत्यर्थः । अत्र सम्बन्धपदेन अदृष्टादिहेत्वन्तरव्युदासः । तथा कार्यकारणभावादीना-

(१) सूत्रोक्तं लक्षणं–पा· E पु· ।

व्युदासः । इहेति चायुतसिद्धयोरेव कार्यकारणभावा-
दिसम्बन्धो व्युदस्यते। युतसिद्धिः पृथक्सिद्धिः सा चा-
सम्बद्धयोर्विद्यमानतेत्युक्तम् । तदभावोऽयुतसिद्धिः ।
सत्तावदेक एवायं समवायः सर्वत्रेत्यत्रापि सूत्रम् ।
तत्त्वम्भावेनेति । तत्त्वमेकत्वं भावेन सत्तया व्याख्या-
तमित्यर्थः । इह गवि गोत्वमिति प्रत्ययोऽधिकर-
णाधिकर्तव्यसम्बन्धनिबन्धनः अबाधितेहप्रत्ययत्वा-
दिह कुण्डे बदरणीतिप्रत्ययवदित्यनुमानात् सम-
वायसिद्धिरिति ॥ ५३ ॥

एवं लक्षिता षट्पदार्थी एतस्यामेव भावात्मक-

मपि मुख्यार्थवृत्तिना तेनैव व्युदासादिहेत्यादिविशेषणं व्यर्थमेव तथापि स्पष्टार्थमुक्तमिति द्रष्टव्यम् । युतसिद्धि-पदार्थाभिधानपूर्वकमयुतसिद्धिपदार्थमाह। अयुतसिद्धिरित्यादि । मिथ आश्रयाश्रयिभावनियमानपेक्षसत्ताकत्वं युतसिद्धिः तत्सापेक्षसत्ताकत्वमयुतसिद्धिरिति पीडार्थः(१) । सूत्रे तत्त्वशब्देन बुद्धिस्थमेकत्वं परामृश्यत इत्याह । तत्त्व-मेकत्वमिति । सत्तया व्याख्यातमिति । यथैकापि सत्ता सम्बन्धिभेदाद्भेदेन व्यपदिश्यते तद्वत् समवायोऽपीत्यर्थः । अनुपदमेवोक्तं चैतदिति भावः । अथेहप्रत्ययं प्रमाणपर-त्वेनापि व्याचष्टे । इह गवि गोत्वमित्यादि । भ्रान्तेहप्रत्य-यव्यभिचारनिवारणार्थमबाधितेत्युक्तम् । घटादिप्रत्यय-व्युदासार्थमिहेति विशेषणम् ॥ ५३ ॥

प्रासङ्गिकं निगमयति । एवमिति । ननु षडेवेति-

(१) पदार्थ इति क्वचित् ।

विश्वमन्तर्भवति(१) । भावव्यतिरिक्तोऽभाव इति तेन सह सप्तैव पदार्था इति नियमः(२) । कौमारिलास्तु सामान्यात्तानेव चतुरः पदार्थानुररीकृत्य विशेषं समवायं चापलपन्तीत्याह ।

विशेषसमवायौ द्वौ नाङ्गीचक्रुः कुमारिलाः ।

प्राभाकरास्तु विशेषमवजानते प्रतिजानते च शक्तिसंख्यासादृश्यादयः पृथक् पदार्था इत्याह ।

पञ्चार्थान् गुरवः प्राहुर्विशेषेण विवर्जितान्॥५४॥

नियमः कथमित्याशङ्क्य किं न्यूनत्वादनियमः आधिक्याद्वा । नाद्यः षण्णां साधितत्वादित्यर्थः । न द्वितीयः भावस्याधिक्यासम्भवादित्याह । एतस्यामेवेति । अभावाधिक्यं चेदिष्टमेवेत्याह । भावव्यतिरिक्त इति । अभावस्तु भावव्यतिरिक्त इति हेतोस्तेनैव पदार्थातिरेको न तु भावान्तरेण स चेष्ट एवेति षडेव पदार्था इति नियमसिद्धिरित्यन्वयार्थाभिप्रायः । षडेवेत्यवधारणं न्यूनाधिकसंख्याव्यवच्छेदार्थमित्युक्तम् ॥

तत्र न्यूनसंख्यायाः कुतः प्रसक्तिरित्यत उक्तं संग्रहे विशेषेत्यादि । तच्च गुरुमतवत् केषाञ्चिदापापोऽपि स्यादित्याह । अनादिकारणेषु घटपटादिकार्यजननानुकूलाः शक्तयोऽतीन्द्रियाः नित्याः सर्वत्रैकजातिवत् प्रत्येकपरिसमाप्ताश्च संख्या चैकत्वद्वित्वाद्यनेकरूपा सर्वत्रैकैका

(१) विश्वमपि जगदन्तर्भवति–पा· B पु· ।

(२) इति स्थितिः–पा· B पु· ।

तदेतद्द्वयं वार्तम्[१]। विशेषसमवाययोः समर्थनात्[२]। स्वरूपसहकारिव्यतिरेकेण शक्तेरभावात्। संख्याया गुणगणनायामन्तर्भावात् सामान्य एव सादृश्यस्यान्तर्भावाच्च। यथाहुः।

नित्या च जातिवत् प्रत्येकपरिसमाप्तिशक्तिवत् स्वातिरिक्तसप्तपदार्थवृत्तिरपेक्षाबुद्धिव्यङ्ग्या उत्पादविनाशौ तु शक्तिवदेव तत्समवायानामेव न सङ्ख्याया इति। सादृश्यं तु सदृशबुद्धिवेद्यं द्रव्यगुणकर्मवृत्तित्वात् ततोऽन्यदनुवृत्तिबुद्ध्यविषयत्वादसम्बन्धरूपत्वाच्च समवायातिरिक्तं पृथगेवेति तेषां मतम्। अत्र सादृश्यादय इत्यादिशब्दः प्रामादिकः अष्टपदार्थवादिभिस्तैः शक्त्यादित्रयादन्यस्यादिशब्दग्राह्यस्यानभिधानात् यथोक्तं प्रमेयपरायणे द्रव्यगुणकर्मसामान्यशक्तिसङ्ख्यासादृश्यसमवाया अष्टौ पदार्था इति। तथाग्रेतरग्रन्थे तावत एव पार्थक्यनिरासाच्चेत्यास्तां तावत्॥

तदिदं मतद्वयमयुक्तमित्याह। तदेतदिति। वार्त्तं फल्गु निःसारमयुक्तमिति यावत्। वार्त्तं फल्गुन्यरोगे चेत्यमरः। तत्र न्यूनत्वशङ्का दत्तोत्तरेत्याह। विशेषेति। आधिक्यशङ्कां च सङ्कोचयति। स्वरूपेति। मृदादिकारणस्वरूपसहकारिसाकल्यातिरिक्तशक्तिपदार्थसद्भावे प्रमाणाभाव इत्यर्थः। सङ्ख्याया इति द्रव्यगताया इति शेषः। गुणादिगतत्वारोपितेति भावः।

(१) अयुक्तम्—पा· B पु·।
(२) समर्थितत्वात्—पा· B पु·।

सामान्यान्येव भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते ॥ इति ॥ ५४ ॥

एवं प्रमेयप्रसङ्गात् पदार्थषट्कं लक्षयित्वा प्रकृतमेवानुक्रम्य(१) संशयलक्षणमाह ।

संशयः कथितो ज्ञानमवधारणवर्जितम् ।

अनवधारणात्मकः प्रत्ययः संशय इति ।

सामग्रीभेदेन संशयत्रैविध्यमाह ।

समानानेकधर्माभ्यां विमतेश्च तदुद्भवः ॥ ५५ ॥

समानधर्माणामनेकेषां साधारणो धर्मः एकः

---

सामान्यानीति । गोसदृशो गवय इत्यत्र यानि गवि गुणावयवकर्मसामान्यानि तान्येव भूयांसि गवये दृश्यमानानि गोसादृश्यमित्युक्तमित्यर्थः । नन्वेतद्भवान्तरेऽपि समानमत आह । भिन्नेति । भिन्नं गोत्वादन्यत् प्रधानसामान्यं गवयत्वरूपं यस्य पिण्डस्य तस्मिन् वर्तमानमित्यर्थः । इति प्रमेयपदार्थः ॥ ५४ ॥

ननु षट्पदार्थनिरूपणानन्तर्यं कथं संशयस्य प्रमेयानन्तरोद्दिष्टस्येत्याशङ्क्याह । एवं प्रमेयेति ।

अवधारणवर्जितमित्यस्यार्थमाह । अनवधारणात्मक इति ।

ननूत्तरार्द्धे कारणभेदकथनस्य किं प्रयोजनमत आह । सामग्रीति ।

द्वन्द्वान्ते श्रुतस्य धर्मशब्दस्य प्रत्येकसम्बन्धेनासङ्ग्रहं व्याचष्टे । समानधर्म इति । अनेकधर्म इत्यत्रानेकेषां धर्म

---

(१) मेवोपसङ्क्रम्य–पा॰ B पु॰ ।

साधारणः अनेकोऽसाधारणः । अनेको धर्मः एकस्यै-वासाधारणो ध इति यावत् । विमतिर्वादिविप्र-तिपत्तिः । एतस्मात् कारणत्रयात् परस्परविरुद्धारो-प्यविशेषस्मरणसापेक्षादन्यतरकोटिनिर्णायकप्रमाण-वैधुर्ये सति यथायथं संशयो भवति । तत्राद्यो यथा स्थाणुपुरुषसाधारणोर्ध्वतादिदर्शनेन स्थाणुरयं पुरुषो वेति । द्वितीयस्तु गन्धवत्त्वात् पृथिवी नित्यानि-त्या वेति । तृतीयस्तु भौतिकाहङ्कारिकत्वेन सांख्य-वैशेषिकविप्रतिपत्तेः किंप्रकृतीनीन्द्रिया[१]णीति । के-

इति षष्ठीसमासे पूर्वाभेदेन पौनरुक्त्यादश्रुतसम्बन्धलक्ष-णादोषाच्च निषादस्थपतिवत् कर्मधारय एवेति व्याचष्टे । अनेकोऽसाधारण इति । सामर्थ्यलभ्यं धर्मिणमाह । एक-स्यैवेति । एवं पदार्थमुक्त्वा कारणान्तराणि समुच्चिन्वन् वाक्यार्थमाह । एतस्मादिति । विरुद्धारोप्यविशेषः स्थाणु-त्वपुरुषत्वनित्यत्वानित्यत्वादयः तेषां स्मरणमित्यग्रहण-स्याप्युपलक्षणम् । निर्णायकप्रमाणं वक्रकोटरादि शिरःपा-ण्यादि बन्धवत्त्वादिति अनित्यव्यावृत्तनिरवयवत्वादिधर्म-कस्याकाशादेर्नित्यत्वं दृष्टं तथा नित्यव्यावृत्तसावयवत्वा-दिधर्मकस्य द्व्यणुकादेरनित्यत्वं च दृष्टम् गन्धस्तूभय-व्यावृत्तधर्मत्वादुभयरूपतां पृथिव्याः सम्पादयन् नित्या-नित्या वेत्यनवधारणज्ञानं कोटीत्यर्थः । भौतिकानीति वैशेषिकाः । आहङ्कारिकाणीति सांख्याः । ननु यथा संख्यं पाठक्रमादर्थक्रमस्य बलीयस्त्वादिति विप्रतिपत्ते-

(१) किंप्रकृतिकानीन्द्रिया—पा. B पु. ।

च्चित्तूपलब्ध्यनुपलब्ध्योरपि पृथक् संशयकारणत्वमिच्छन्ति । यथा कूपखननानन्तरमुदकमुपलभ्य किं पूर्वं सदेवोदकमिदानीमभिव्यक्तमुपलभ्यते किं वा पूर्वमसदेव खननव्यापारजनितमुपलभ्यत इत्युपलब्धेः संशयः । अनुपलब्धेस्तु किं सन्नेव पिशाचो नोपलभ्यते किं वासन्निति । अनयोः समानधर्मान्तर्भावमाचक्षते वार्त्तिककाराः । तथाहि पूर्वं सदेव किञ्चित्केनचिद्व्यापारेणाभिव्यक्तमुपलभ्यते । यथा प्रदीपारोपेण न घटः[१] किञ्चासदेव जातमुपलभ्यते । यथा कुलालादिव्यापारानन्तरं स एवेति सदसतोः साधारणेनोपलब्धिलक्षणेन धर्मेण संशयः । अनुपलब्धिश्च सतामपि परमाणवादीनामसतां च शशविषाणादीनां च दृश्यत इत्यत्रापि समानधर्मादेव संशयः । अत्र सूत्रम् । समानानेकधर्मोपपत्तेर्विप्रति-

रिति संशयः स्यात् तदस्थस्येति शेषः । किंप्रकृतिकानीति भूतप्रकृतिकान्यहङ्कारप्रकृतिकानि वेत्यर्थः । अथ भासर्वज्ञाय संशयपाञ्चविध्यं कर्तुमनुवदति । केचित्त्विति । क्रमाद्भेदद्वयं चोदाहरति । यथेत्यादि । तदेतद्वृद्धैरेव प्रत्याख्यातमित्याह । अनयोरिति । अन्तर्भावप्रकारं प्रपञ्चयति । तथाहीत्यादि । उपलब्ध्यनुपलब्ध्योः सदसत्साधारणधर्मत्वात् समानधर्मान्तर्भाव इत्यर्थः । अत्र स्वोक्तत्रैविध्ये सूत्रसम्मतिमाह । अत्र सूत्रमिति । हन्त सूत्रे पाञ्च-

(१) प्रदीपारोपयोरघटः— पा॰ C पु॰ ।

पत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति । अत्रोपलब्ध्यनुपलब्धिशब्दाभ्यां साधकबाधकप्रमाणयोर्ग्रहणं[1] तयोरव्यवस्था अभावः तस्मिन् सति विशेषस्मरणापेक्षः समानानेकधर्मविप्रतिपत्तिभ्यः संशयो भवतीति सूत्रार्थः ॥ ५५ ॥

प्रयोजनलक्षणमाह ।

यदुद्दिश्य प्रवर्तन्ते पुरुषास्तत् प्रयोजनम् ।

उद्देश्यं प्रयोजनम् । तदुक्तम् यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनमिति ।

दृष्टान्तलक्षणमाह ।

व्याप्तिसंवेदनस्थानं दृष्टान्त इति गीयते ॥ ५६ ॥

स च साधर्म्यवैधर्म्यभेदेन द्विविधो भवेत् ।

व्याप्तिग्रहणभूमिर्दृष्टान्त इति । स च द्विविधः ।

---

विध्यं प्रतीयत इत्याशङ्क्य त्रैविध्यपरतया व्याचष्टे । अत्रेति । साधकबाधकप्रमाणाभावसहकृताद् विशेषाग्रहणं तत्स्मरणसव्यपेक्षात् समानधर्मादिकारणत्रयादेव संशयो जायते एतत्त्रैविध्यपरमेव सूत्रमित्यर्थः । इति संशयपदार्थः ॥ ५५ ॥

यदुद्दिश्येति । प्रेक्षावत्प्रवृत्तिफलं प्रयोजनम् । यागादिप्रवृत्तेः स्वर्गादि कृष्यादिप्रवृत्तेः प्रसवादिकं चेत्यर्थः । अधिकृत्य विषयीकृत्योद्दिश्येति यावत् । उद्देशोऽभिसन्धिः । इति प्रयोजनपदार्थः ॥

---

(१) रुपादानम्—पा· B पु· ।

साधर्म्यवैधर्म्यभेदात् । तत्र साधनधर्मप्रयुक्तसाध्यधर्मवान् साधर्म्यदृष्टान्तः । यथा कृतकत्वेन शब्दानित्यत्वसाधने घटः । साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्तिमान् वैधर्म्यदृष्टान्तः । यथा तत्रैवाकाशः । तदुक्तम् । लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति । अत्र लौकिका वैदिकबुद्धिविरहिणः प्रमाणतर्काभ्यामर्थपरीक्षणक्षमाः परीक्षकाः तेषामुभयेषामपि बुद्धिसम्प्रतिपत्तिर्यत्रास्ति स दृष्टान्तः । सर्वेषां सम्प्रतिपत्तिविषय इति यावत् । अत्र वादिप्रतिवादिनोः सम्प्रतिपत्तौ तात्पर्यमिति ॥ ५६ ॥ ऽऽ ॥

---

साधर्म्यदृष्टान्तस्य विवक्षितं लक्षणमुदाहरणं चाह । तत्रेति । वैधर्म्यदृष्टान्तस्याप्याह । साध्यधर्मनिवृत्तीति । ननु लौकिकपरीक्षकाणां को विशेषः उभयेषां लौकिकसिद्धत्वाविशेषादित्याशङ्क्य भेदमाह । लौकिका इति । वैदिकबुद्धिविरहिण इति किं तु लौकिकव्यवहारमात्रकुशला इत्यर्थः । बुद्धिसाम्यं[1] बुद्धित्वजातिरिति शङ्कां वारयति । बुद्धिसम्प्रतिपत्तिरिति । एतत्कोटिद्वयोपादानं सर्वोपलक्षणं कोट्यन्तरपर्युदासपरं तदसम्भवादित्याह । सर्वेषामिति । तर्हि कुत्रापि सर्वसम्प्रतिपत्त्यसम्भवाद् दृष्टान्तासिद्धिरित्याशङ्क्याह । वादिप्रतिवादिनोरिति । तत्सम्प्रतिपत्तौ सर्वसम्प्रतिपत्तिः स्यादेवेति भावः । इति दृष्टान्तपदार्थः ॥ ५६ ॥ ऽऽ ॥

---

(१) बुद्धिसामान्यं–पा॰ E पु॰ ।

सिद्धान्तलक्षणं तदवान्तरविभागश्च दर्शयति ।

अभ्युपेतः प्रमाणैः स्यादाभिमानिकसिद्धिभिः॥५७॥
सिद्धान्तः सर्वतन्त्रादिभेदात् सोऽपि चतुर्विधः ।

अनित्यः शब्द इति केषाञ्चिन्मतम्[१] । अन्येषां तु नित्य इति । तत्र प्रमाणैरभ्युपगतः सिद्धान्त इत्युक्तेऽन्यतरस्य सिद्धान्तता न स्यात् । वस्तुनो द्वैरूप्यासम्भवेनोभयोरपि प्रमाणमूलत्वासम्भवादत उक्तम् । आभिमानिकसिद्धिभिरिति । तत्तद्वादिनां प्रमाणमूलत्वाभिमानमत्र विवक्षितम् न तु तत्त्वतः प्रमाणमूलत्वमित्यर्थः । तदुक्तम् । तन्त्राधिकरणाभ्युपगमसंस्थि-

---

उत्तरश्लोके सर्वतन्त्रेत्यादिश्लोकशेषस्य लक्षणानुपयोगादानर्थक्यमाशङ्क्याह । सिद्धान्तेति । आभिमानिकसिद्धिभिरिति । अभिमानमात्रसिद्धप्रमाणभावैरित्यर्थः ।

एतद्विशेषणप्रयोजनमाह । अनित्य इत्यादि । अन्यतरस्य सिद्धान्तता न स्यादिति । सिद्धान्तलक्षणाभावादव्याप्तिः स्यादित्यर्थः । तत्र हेतुमाह । तदुक्तमिति । तन्त्राधिकरणाभ्युपगमसंस्थितिरिति । तन्त्रं शास्त्रमधिकरणमाश्रयो येषामर्थानां ते तन्त्राधिकरणाः तेषामभ्युपगमसंस्थितिरित्थंभावव्यवस्थाधर्मनियम इति यावत् सिद्धान्तः तथा च शास्त्रसिद्धार्थस्यैवाभ्युपगमः सिद्धान्तो नान्यस्येत्यर्थः । तथा च वार्त्तिकम् योऽर्थो न शास्त्रितस्तस्याभ्युपगमो न

---

(१) केषाञ्चित् सिद्धान्तः–पा॰ B पु॰ ।

तिः[1] सिद्धान्त इति । स च सिद्धान्तः सर्वतन्त्रादिभेदाच्चतुर्विधो भवति । तत्रापि सूत्रम् । स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावादिति ॥ ५७ ॥ ऽऽ ॥

तत्र सर्वतन्त्रसिद्धान्तमुदाहरणं च दर्शयति ।

**सर्वतन्त्राविरुद्धोऽर्थः स्वतन्त्रेऽधिकृतश्च यः ॥ ५८ ॥**
**स सर्वतन्त्रसिद्धान्तो यथामानेन मेयधीः ।**

प्रमाणात् प्रमेयसिद्धिरित्येवं सर्वशास्त्रानुमतं स्वशास्त्रे चाभ्युपगतमिति सर्वतन्त्रसिद्धान्तो भवतीति ॥ ५८ ॥ ऽऽ ॥

**स्वतन्त्र एव सिद्धोऽर्थः परतन्त्रैर्निवारितः ॥ ५९ ॥**
**प्रतितन्त्रो यथान्याये सर्वज्ञस्य प्रमाणता ।**

ईश्वरः प्रमाणमिति योऽर्थः[2] तन्त्रान्तरैर्निषिद्धः स्वशास्त्रे चाभ्युपगतो नैयायिकस्य प्रतितन्त्रसिद्धान्त इति ॥ ५९ ॥ ऽऽ ॥

**अनुमेयस्य सिद्धार्थौ योऽनुषङ्गेण सिद्ध्यति ॥ ६० ॥**

---

सिद्धान्त इति । तत्रापीति । चातुर्विध्ये ऽपीत्यर्थः । सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावाद् भिन्नार्थत्वाच्चातुर्विध्यं सिद्धमिति सूत्रार्थः ॥ ५७ ॥ ऽऽ ॥

लक्ष्ये लक्षणं योजयति । प्रमाणादिति । अत्र सर्वतन्त्रशब्दः शास्त्रवचन इत्याह । सर्वशास्त्रेति ॥ ५८ ॥ ऽऽ ॥

प्रतितन्त्रो निगदव्याख्यातः ॥ ५९ ॥ ऽऽ ॥

---

(१) प्रमाणाभ्युपगमसंसिद्धः—पा॰ B पु॰ ।
(२) मित्येषोऽर्थः—पा॰ B पु॰ ।

स स्यादाधार[1]सिद्धान्तो जगत्कर्ता यथेश्वरः

अनुमेयानुषक्तसिद्धिरधिकरणसिद्धान्तः । यथ महीमहीधरमहोदधिप्रभृतीनां कर्तृमत्त्वस्य कार्यत्वानुमानेन सिद्धौ ईश्वरसिद्धिः । उपादानादिगोचरापरोक्षज्ञानचिकीर्षाप्रयत्नादिमतः कर्तृत्वात् पक्षीकृतविषयस्य ज्ञानादेरीश्वरव्यतिरेकेणान्यत्रासम्भवात् । अन्ये तु हेतुसिद्ध्यनुषङ्गिसिद्धिरप्यधिकरणसिद्धान्त इत्याहुः । यथेन्द्रियव्यतिरिक्तचेतनसाधनस्य दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति हेतोः सिद्धावनुषङ्गि-

अधिक्रियत इत्यधिकरणमनुमेयार्थः तत्सिद्धौ सामर्थ्यादर्थान्तरसिद्धिरधिकरणसिद्धान्त इत्याशयेनाह । अनुमेयस्येति । उदाहरति । यथेति । मह्यादिकं सकर्तृपूर्वकं कार्यत्वादिति कर्तृसिद्धावपीश्वरसिद्धिरित्यर्थः । नन्वदृष्टद्वारा जीवानामेव कर्तृत्वे कथमीश्वरसिद्धिरित्याशङ्क्य सामर्थ्यादिति मन्वानस्तदेवाह । उपादानादीति । आदिशब्दात् कारणान्तरसंग्रहः । प्रयत्नादित्यादिशब्देन साकल्योपनीतकार्यानुकूलकायव्यापारादिसंग्रहः । तथापि कथमीश्वरसिद्धिरत आह । पक्षीकृतेति । अथास्यैव मतान्तरेण लक्षणान्तरमाह । अन्ये त्विति । उदाहरति । यथेति । दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति दर्शनगृहीतस्यार्थस्य स्पर्शनेन प्रत्यभिज्ञानादित्यर्थः । तथा चेन्द्रियचैतन्यपक्षे अन्यस्यान्यानुभूतार्थप्रत्यभिज्ञानापत्तेस्तत्करणकस्तदन्य एव प्रत्यभिज्ञाने त्वीन्द्रियातिरिक्तात्मसिद्धिरिति भावः । तत्रोक्तहेतुसिद्धेस्तन्नान्तरीयकतयेन्द्रियनानात्वादिसिद्धि-

(१) स एवाधार पा॰ A पु॰ ।

णामिन्द्रियनानात्वादीनां सिद्धिरिति ॥ ६० ॥ ऽऽ ॥

अभ्युपगमसिद्धान्तमुदाहरणं च दर्शयति ।

साधितः परतन्त्रे यः स्वतन्त्रे च समाश्रितः॥ ६१ ॥
स ह्यभ्युपगमो न्याये मनसोऽनुमतिर्यथा ।

काणादतन्त्रसाधितस्य मनसः समाश्रयणं नैयायिकानामभ्युपगमसिद्धान्त इति ॥ ६१ ॥ ऽऽ ॥

तस्यैव लक्षणान्तरमाह ।

तद्विशेषपरीक्षा वा सद्भावे ऽन्यत्र साधिते ॥ ६२ ॥
यथान्यत्र मनःसिद्धौ तस्याक्षत्वपरीक्षणम् ।

तन्त्रान्तरेण साधितसद्भावस्य कस्यचिदर्थस्य किञ्चिद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः । यथा तस्यैव मनसो न्याये सूत्रकारैरेवात्मप्रतिपत्तिहेतूनां मनसि सद्भावादिति चोद्यपूर्वकं ज्ञातुर्ज्ञानसाधनोपपत्तेः सञ्ज्ञाभेदमात्रमित्यादिभिरिन्द्रियत्वपरीक्षणमिति ।

---

रित्याह । इति हेतोरिति । आदिशब्दान्नियतविषयत्वैककर्तृप्रेर्यत्वादिसंग्रहः ॥ ६० ॥ ऽऽ ॥

विधान्तरभ्रमं वारयति । तस्यैव लक्षणान्तरमिति ।

यथान्यत्रेत्येतद्विवृणोति । यथा तस्यैवेति । आत्मप्रतिपत्तिहेतूनामात्मसाधकलिङ्गानामिच्छादीनां मनसि सम्भवान्मनोधर्मत्वोपपत्तेरात्मेदं मनःपदार्थो नेन्द्रियमिति चोद्य सूत्रार्थः । अस्तु तस्य ज्ञातुः सुखाद्युपलम्भे कस्यचित्कारणस्यावश्यम्भावात् तस्य सञ्ज्ञामात्रे विवादो नेन्द्रियत्वे इति समाधानं सूत्रार्थः । आदिशब्दान्नियमश्च निरनुमान इत्याद्युत्तरसूत्रसंग्रहः । प्रथमलक्षणे वृद्धसम्मति-

परतन्त्रोक्तः स्वतन्त्रे चानिषिद्धार्थोऽभ्युपगमसिद्धान्त इत्याचार्याः ॥ ६२ ॥ ऽऽ ॥

अवयवलक्षणमाह ।

**यः परार्थानुमानस्य प्रयोगो वाक्यलक्षणः ॥ ६३ ॥**
**तस्या[1]वान्तरवाक्यानि कथ्यन्ते ऽवयवा इति ।**

महावाक्यात्मके परार्थानुमानप्रयोगे ऽवान्तरवाक्यान्यवयवा इति । स्वार्थानुमाने वाक्यप्रयोगाभावात् परार्थेत्युक्तम् ॥ ६३ ॥ ऽऽ ॥

ते चावयवाः प्रतिज्ञादयः पञ्चेत्याह ।

**ते प्रतिज्ञादिरूपेण पञ्चेति न्यायविस्तरः ॥ ६४ ॥**

तदुक्तम् । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति । न्यायविस्तर इति वदता मतान्तरेषु[2] यो विशेषः सूचितस्तमेव दर्शयति[3] ।

माह । परतन्त्रोक्त इति । इति सिद्धान्तपदार्थः ॥ ६२ ॥ ऽऽ ॥

पूर्ववदिदमपि सिद्धान्तभेदस्यैव लक्षणान्तरमिति मन्दभ्रमवारणार्थमाह । अवयवेति । ननु वाक्यस्यावयवाः पदान्येव तत्र कुतोऽवान्तरवाक्यानीत्यत आह । महावाक्यात्मक इति । दर्शपूर्णमासादिप्रकरणपठिताङ्गवाक्येष्वतिव्याप्तिपरिहारार्थमाह । अनुमानप्रयोग इति । परार्थविशेषणस्य प्रयोजनमाह । स्वार्थेति । अन्यथा तस्यापि लक्षणकोटिनिवेशादतिव्याप्तिः स्यादिति भावः ॥ ६३ ॥ ऽऽ ॥

(१) तत्रा–पा· B पु· । (२) तन्त्रान्तरीयो–पा· C पु· ।
(३) स्फुटयति–पा· B पु· ।

त्रीनुदाहरणान्तान् वा यद्वोदाहरणादिकान् ।
मीमांसकाः सौगतास्तु सोपनीतिमुदाहृतिं ॥ ६५ ॥

मीमांसकाः प्रतिज्ञाहेतूदाहरणान्युदाहरणोपनयनिगमनानि वा त्रय एवावयवा इति सङ्गिरन्ते । सुगतमतानुवर्त्तिनस्तूदाहरणोपनयौ द्वावेवावयवा इत्यातिष्ठन्ते(१) तत्रोपनयनिगमनयोः प्रतिज्ञाहेत्वोश्च प्रयोजनान्तरसद्भावोऽन्यत्र साधित इति नेह प्रतन्यत इति भावः ॥ ६४ ॥ ६५ ॥

---

अथ त्रीनित्याद्युत्तरश्लोके मतान्तरोपन्यासस्य प्रसञ्जकमाह । न्यायविस्तर इति । वद्लेति । सङ्गिरन्ते । आतिष्ठन्त इति च प्रतिज्ञातवन्त इत्यर्थः । समः प्रतिज्ञाने आङः स्थः प्रतिज्ञायामिति चोभयत्रापि क्रमादात्मनेपदम् । तावतैव व्याप्तिपक्षधर्मतालाभादतिरिक्तावयवाङ्गीकारे प्रतिज्ञाहेत्वोर्निगमनोपनयाभ्यां पुनरुक्तिरित्यन्येषामभिसन्धिः तर्ह्यनयोः प्रयोजनं किमिति नोक्तं संग्रहकारेणेत्यत आह । प्रतिज्ञाहेत्वोश्चेति । अन्यत्रेति । उदयनग्रन्थेष्वित्यर्थः । अत्र प्रतिज्ञायास्तावद्वक्ष्यमाणसाधनस्याश्रयविषयप्रत्यायनं प्रयोजनम् अन्यथानिराश्रयस्य निर्विषयस्य तस्य प्रयोगायोगाद्धेतोस्तु साधनस्वरूपप्रत्यायनं प्रयोजनमन्यथा साध्यस्य साधनाकाङ्क्षानिवृत्तेर्व्याप्तिपक्षधर्मतयोश्च सम्बन्धिधर्मिनिरूप्ययोस्तदप्रतीतावप्रतीतेश्चेत्यनुसन्धेयम् । उदाहरणे तु न कस्यचिद् विवादः अन्यथा व्याप्त्यप्रतीतेः उपनयनिगमनयोस्तु प्रयोजनं स्वयमेव वक्ष्यतीति न किञ्चिदवशिष्यते ॥ ६४ ॥ ६५ ॥

(१) इत्याचक्षते–पा॰ D पु॰ ।

तेषु चावयवेषु प्रतिज्ञा नाम परप्रतिपादनार्थं पक्षवचनमित्याह ।

तत्र प्रतिज्ञा पक्षोक्तिः प्रतिपादयितुं परम् ।

तदुक्तम् । साध्यनिर्देशः प्रतिज्ञेति । अत्र साध्यशब्दः पक्षवचनः । पक्षः साध्यान्वितो धर्मीत्युक्तमेव । धर्मिनिर्देशपूर्वकं साध्यनिर्देशः कार्यः शब्दोऽनित्य इति । यथाहुः ।

सिद्धधर्मिणमुद्दिश्य साध्यधर्मो विधीयते ।

तथा ।

यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।

तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥ इति ।

---

ननु संग्रहे पक्षोक्तिः प्रतिज्ञेत्युक्तं सूत्रे तु साध्योक्तिरिति विरोधमाशङ्क्याह । अत्र साध्यशब्द इति । तर्हि धर्मिमात्रनिर्देशः प्रतिज्ञेत्यर्थः स्यादित्याशङ्क्याह । पक्ष इति । ननु साध्यधर्मनिर्देश एव क्रियतां किं तद्विशिष्टधर्मिनिर्देशगौरवेणेत्यत आह । धर्मिनिर्देशेति ।

कोऽयं नियम इत्याशङ्क्य भित्तिकचित्रकर्मवन्निराश्रयधर्मविधानायोगादित्याशयेनाह । सिद्धमिति । उद्देश्यविधेयलक्षणपर्यालोचनयापि सिद्धसाध्यविधानं गम्यते इत्याह । तथा यद्वृत्तेति । यद्वृत्तं यच्छब्दः एवं तद्वृत्तमपि तच्छब्दः । प्राथम्यं विधेयात् प्रागुचार्यत्वम् । आदिशब्दात् प्राधान्यादिसंग्रहः । चकाराद्विधेयस्य गुणत्वादिसंग्रहः । उपादेयेति विधेयोपलक्षणम् । यथा ग्रहं समार्ष्टीत्यत्र यो ग्रहस्तं संमृज्यादिति वचनव्यक्तग्रहस्योद्देश्यत्वं संमार्गस्य विधेय-

हेतुलक्षणमाह ॥

लिङ्गस्य वचनं हेतुः साधकत्वप्रकाशकम्[1] ॥ ६६ ॥
व्याप्यं लिङ्गं तच्च रूपैश्चतुःपञ्चसमन्वितम्[2] ।

साधनत्वाभिव्यञ्जकविभक्त्यन्तं लिङ्गवचनं हेतुः यथा कृतकत्वादिति। साधकत्वप्रकाशकमित्यनेन तत्कत्वमिकृत्यादिलिङ्गमात्रवचनस्य हेतुत्वनिरासः। लिङ्गेत्यनेन[3]

---

त्वम्। एवं ब्राह्मणो न हन्तव्य इत्यादिनिषेधोऽपि यो ब्राह्मणस्तन्न हन्यादिति ब्राह्मणोद्देशेन हनननिषेधविधिः। एवं प्रकृतेऽपि शब्दोऽनित्य इत्यत्र यः शब्दः सोऽनित्य इति शब्दस्योद्देश्यत्वमनित्यत्वस्य विधेयत्वं तस्मात् सिद्धे धर्मिणि साध्यधर्मविधाननियमात् धर्मिणि निर्देशपूर्वकमेव साध्यनिर्देशः कार्य इति सिद्धमिति तात्पर्यम् ॥

मन्दानामसन्देहार्थमाह। हेतुलक्षणमाहेति।

कृतकत्वमत्र साधनमित्यादावतिव्याप्तिपरिहारार्थं साधनत्वादिविशेषणं विवक्षितार्थपरत्वेन व्याचष्टे। साधनत्वाभिव्यञ्जकेति। व्याख्यातविशेषणस्य विवक्षितं व्यावर्त्यं व्यनक्ति। साधनत्वप्रकाशकमित्यनेनेति। तादृग्विभक्त्यन्तमित्यनेनेत्यर्थः। लिङ्गमात्रमतथानिर्दिष्टलिङ्गे तद्व्युदास इत्यर्थः। अथ लिङ्गपदव्यावर्त्यमाह। लिङ्गेत्यनेनेति। यत् कृतकं तदनित्यमिति व्याप्तिवचनं तस्य व्याप्तिप्रकाशनद्वारा साधनत्वप्रकाशकत्वेऽप्यलिङ्गवचनत्वान्न तत्रातिव्याप्तिरित्यर्थः।

---

(१) प्रकाशकम्–पा· D पु· ।

(२) पञ्चभिरन्वितम्–पा· A पु· । (३) लिङ्गमित्यनेन–पा· D पु· ।

व्याप्तिवचनस्य हेतुत्वव्युदासः । व्याप्तिमल्लिङ्गं तच्चतु-
र्भिःपञ्चभिर्वा रूपैरुपेतं रूपाणि च पक्षधर्मत्वं सपक्षे
सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्ष-
त्वं चेति । तत्रान्वयव्यतिरेकिणः पञ्च रूपाणि इत-
रयोस्तु पक्षसपक्षयोरभावाच्चत्वारीति व्यवस्थितो

ननु लिङ्गतामपि तन्नोच्यत इति चेत् सत्यम् नान्तरीयक-
तया न तु व्याप्तिवत् प्राधान्यादिदोषः तर्हि मूले कुठारः
तादृग्विभक्त्यन्तत्वाभावादेव तद्व्यावृत्तेर्विशेषणवैयर्थ्या-
दिति सूक्ष्ममिति चेत् सत्यम् तथापि हेत्वाभासादिव्युदा-
सः फलमिति सूक्ष्मम् विहितेति[1] तादृग्विभक्त्यन्ता अपि
लिङ्गाभासवचना न लिङ्गवचना इति तेन तेषां व्युदासः
ग्रन्थस्तु स्थूलदृष्ट्योक्त इति गतिः । लिङ्गवचनं हेतुरित्युक्तम्
अथ किं तल्लिङ्गमित्याकाङ्क्षायां लक्षणद्वयमुक्तं संग्रहे व्या-
प्यं लिङ्गमित्यादिना तत्र तच्च लिङ्गं व्याप्यमित्येकं लक्षणं
शेषमेकं तत्राद्यं व्याचष्टे । व्याप्तिमदिति । निरुपाधिकसम्ब-
न्धशालीत्यर्थः । द्वितीयेऽपि चतुःपञ्चैरिति समासस्य समु-
च्चयार्थत्वे विरोधाद् विकल्पार्थतया निगृह्णाति । तच्चतुर्भि-
रिति । संख्याव्ययेत्यादिना बहुव्रीहिः । बहुव्रीहौ संख्येय
इत्यादिना डस्समासान्तः । नन्वेवमपि कदाचिदन्वयव्य-
तिरेकेण चातुरूप्यमितरयोः पाञ्चरूप्यं च स्यात् तच्चासङ्गत-
मित्याशङ्क्य व्रीहियवादिवदैच्छिकत्वेन तथा उदितानुदित-
होमवद्व्यवस्थितत्वान्नायं दोष इत्याह । तत्रेति । तथा चतुःप-
ञ्चव्यतिरिक्तसंख्याकत्वानधिकरणरूपोपेतं लिङ्गमिति नि-
र्वाच्यम् । अन्यथैकैकस्या व्याप्तेर्मिलितस्यासम्भवाच्चान्य-
था वा रूपैर्व्याप्तिपक्षधर्मतोपाधिकरूपैरुपेतं लिङ्गमिति लक्ष-

(१) मभिहितमित्यनुमीयते ।

विकल्पः । निरुपाधिकसाध्यसम्बन्धशालिलिङ्गमिति लक्षणमालायाम् । व्याप्तिपक्षधर्मतोपेतरूपपञ्चकोपेतं लिङ्गमित्यात्मतत्त्वविवेकः । रूपाणि च दूषणपञ्चकव्यावृत्तये ऽभिमतानीति नाव्याप्तिः । हेतुश्च साधर्म्यवैधर्म्याभ्यां द्विविधो भवति । तदुक्तम् । उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः । तथा वैधर्म्यादिति ॥६६॥ऽऽ॥

---

णम् । चतुःपञ्चैरिति तु तानि रूपाणि यथायोगं क्वचित् चत्वारि क्वचित् पञ्च च भवन्तीति सिद्धार्थानुवादोऽयमसन्देहार्थ इति व्याख्येयम् । तत्र प्रथमलक्षणे उदयनसम्मतिमाह । निरुपाधिकेति । द्वितीये ऽपि तामाह । व्याप्तीति । ननु किमिदं विशेषलक्षणं सामान्यलक्षणं वा । नाद्यः तस्याप्रस्तुतत्वात् न द्वितीयः केवलभेदयो[१]रव्याप्तेरित्याशङ्क्य सामान्यलक्षणमेव । न चाव्याप्तिरिति परिहरति । रूपाणि चेति । तथाहि यथासंख्यमसिद्ध्यादिदोषपञ्चकव्यावृत्तये पक्षधर्मत्वादिपञ्चकरूपपरिग्रहः तस्य च व्याप्तिपक्षधर्मतालाभः फलम् । स च यावद्व्यावृत्त्यरूपपरिग्रहस्य न्याय्यत्वात् क्वचिद्रूपचतुष्टयादेव भवति क्वचिद्रूपपञ्चकादिति स्थिते व्याप्तिपक्षधर्मतोपाधिरूपोपेतमित्येव लिङ्गलक्षणमिति सिद्धम् । पञ्चग्रहणं तु चतुष्टयस्याप्युपलक्षणम् । सच्चतुःपञ्चैरितिवत् सिद्धार्थानुवाद इति व्याख्येयम् । साधर्म्यवैधर्म्याभ्यामन्वयव्यतिरेकव्याप्तिभ्यामित्यर्थः । उदाहरणसाधर्म्यादन्वयदृष्टान्तवृत्तित्वात् यत् साध्यसा-

---

(१) केवलोऽन्वयी । भेदो व्यतिरेकी ।

साधान्तरभेदमुदाहरणमुदाहरति[१] ।

द्विधोदाहरणं सम्यग् व्याप्तिनिर्देशपूर्वकम् ॥६१॥
दृष्टान्तवचनं तत् स्यादन्वयव्यतिरेकतः ।

व्याप्तिनिर्देशपूर्वकं[२] सम्यग्दृष्टान्तवचनमुदाहरणम् । तच्च दृष्टान्तभेदेनान्वयोदाहरणं व्यतिरेकोदाहरणमिति च द्विधा भिद्यते । तत्राद्यं साधनान्वये साध्यान्वयप्रदर्शनेन दृष्टान्तवचनम् यत् कृतकं तदनित्यं यथा घट इति । द्वितीयं तु साध्याभावेन साधनाभावप्रदर्शकदृष्टान्तवचनं[३] यदनित्यं न भवति तत्कृतकमपि न भवति । यथाकाश इति । व्याप्तिनिर्देशपूर्वकमित्यनेनापि अनुपदर्शितव्याप्तिकस्य घटपटाका-

---

धनं स हेतुः । तथा तद्वद्वैधर्म्याद्व्यतिरेकदृष्टान्तव्यावृत्तत्वात् यत् साध्यसाधनं सोऽपि हेतुरित्यर्थः । उपलक्षणं चैतत् उभयव्याप्तिमानुभाभ्यां समाधाय हेतुरिति लभ्यते ॥ ६६ ॥ ऽऽ ॥

कृत्स्नस्यापि श्लोकस्य लक्षणपरत्वभ्रमं वारयति । साधान्तरेति । उदाहरति । व्याहरतीत्यर्थः ।

दृष्टान्तभेदेनेति । अन्वयव्यतिरेकभेदेनेत्यर्थः । तथा च वाच्यभेदाद्वचनभेदो न्याय्य इति भावः । क्रमाद्भेदद्वयमुदाहरति । तत्रेत्यादि । अन्वयः सद्भावः । उदाहर-

---

(१) मुदाहरणमाह–पा· D पु· ।

(२) व्याप्तिप्रदर्शनपुरःसरं–पा· B पु· ।

(३) साधनाभावं प्रदर्श्य दृष्टान्तवचनं–पा· B D पु· ।

श्चवदिति च दृष्टान्तमात्रवचनस्य निरासः । सम्य-
गिति वैपरीत्योपदर्शितव्याप्तिकस्य यथा यदनित्यं
तत्कृतकं यथा घटः । यत् कृतकं न भवति तदनि-
त्यमपि न भवति यथाकाशमिति च । तदुक्तम् ।
साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणमिति
तद्विपर्ययाद्वा विपरीतमिति च ॥ ६७ ॥ ऽऽ ॥

उपनयमाह ।

दृष्टान्तापेक्षया पक्षे हेतोर्व्याप्तिप्रदर्शकम् ॥ ६८ ॥
वचनं स्यादुपनयस्तथेति न तथेति वा ।

उदाहरणोपदर्शिताविनाभावस्य हेतोर्धर्मि-
ण्युपसंहार उपनयः । स चोदाहरणद्वैविध्येन द्विविधो

---

णद्वैविध्ये सूत्रसम्मतिमाह । तदुक्तमिति । साध्यः पक्षः
तत्साधर्म्यात् तन्निष्ठसाधनजातीयधर्मकत्वात् तद्धर्मभावी
तन्निष्ठसाध्यजातीयधर्मसद्भाववान् दृष्टान्तः तद्वचनमिति
शेषः । उदाहरणमन्वयोदाहरणमिति पूर्वसूत्राक्षरार्थः ।
तद्विपर्ययेन तद्वैपरीत्येन(१) साध्याभावात् साधनाभाव-
वतो दृष्टान्तस्य वचनं विपरीतं व्यतिरेकोदाहरणमित्युत्त-
रसूत्रार्थः । तात्पर्यार्थस्तु ग्रन्थोक्त एव ग्राह्यः ॥ ६७ ॥ ऽऽ ॥

स्फुटार्थमाह । उपनयेति ।

दृष्टान्तापेक्षयेत्येतत् विवृण्वन् निष्कृष्य लक्षण-
माह । उदाहरणेति । उपसंह्रियते ऽनेनेत्युपसंहार उपसं-
हारवचनमित्यर्थः । चतुर्थपादं व्याचष्टे । स चेति । सूत्रे

(१) तद्विपर्ययेन उक्तवैपरीत्येन—पा॰ E पु॰ ।

भवति। तथा चायं कृतकः शब्द इति साधर्म्योपनयः। न तथा चायं कृतकः शब्द इति वैधर्म्योपनयः। तदुक्तम्। उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपसंहार उपनय इति ॥ ६८ ॥ ऽऽ ॥

हेतुपूर्वं पुनः पक्षवचो निगमनं मतम् ॥ ६९ ॥

व्याप्तिपक्षधर्मतावद्धेतुपुरःसरं धर्मिणि साध्यस्योपसंहारो निगमनम्। पुनरित्युपसंहाररूपत्वमस्य प्रदर्शितम्। तस्मादनित्यः शब्द इति। तदुक्तम्। हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति। उपनयनिगमनयोः कृतकार्यत्वादानर्थक्यमिति चेत् न व्याप्तिमत्तया प्रतिसन्धीयमानस्य लिङ्गस्यानुमानत्वा-

---

उदाहरणापेक्षः साधनस्योपसंहार उपनय इति लक्षणम्। तथेत्यादिस्तु भेदोक्तिः ॥ ६८ ॥ ऽऽ ॥

निगमनलक्षणं व्याख्यातुं पठति। हेत्विति। पक्षवचः प्रतिज्ञावचनमित्यर्थः। प्राचीनहेतूक्तितो विशेषमाह। व्याप्तीति। पक्षवच इत्येतद्व्याचष्टे। धर्मिणीति। ननूपसंहाररूपत्वं संग्रहे न प्रतीयते इत्यत आह। पुनरितीति। हेत्वपदेशात् हेतूक्तिपूर्वकमित्यर्थः। प्रतिज्ञाद्यवयवत्रयपक्षावलम्बेन मीमांसकः प्रत्यवतिष्ठते। उपनयेति। कृतकार्यदिति हेतुप्रतिज्ञाभ्यामेव गतार्थत्वादित्यर्थः। परिहरति। नेति। कुतो नेत्याशङ्क्य उपनयस्य तावदर्थवत्तामाह। व्याप्तिमत्तयेति। प्रतिसन्धानं पक्षधर्मतानुसन्धा-

दुपनयाधीनत्वाच्च तत्प्रतिसन्धानस्य प्रसिद्धाविनाभावस्य साधनस्य पक्षधर्मताप्रतिपादनेन स्वरूपासिद्ध्यन्यथासिद्धिनिरासेनापि प्रयोजनवत्त्वादुपनयस्य निगमनेऽपि हेत्वनुवादांशस्य तस्मादेवानित्यो नान्यस्मादिति सिद्धसाधनतोपाधिनिरासप्रयोजनत्वात् । पक्षानुवादस्यानित्य एवायं न नित्य इति नियमेन बाधप्रतिरोधयोर्निरसनेन सप्रयोजनत्वात् । केचन जर-

---

नम् । ततः किमत आह । उपनयेति । हेतुना तु स्वरूपमात्रस्य पक्षधर्मतोक्ता न तु व्याप्तस्येति विशेषः । न चैतावता हेतोर्वैयर्थ्यं तस्य प्रागेवोक्तार्थत्वादिति । व्याप्तस्य पक्षधर्मताप्रतिसन्धानमुपनयप्रयोजनमित्युक्तम् । अथ तद्द्वारा स्वरूपासिद्धिव्याप्यत्वासिद्धिनिरासो वा प्रयोजनमित्याह । प्रसिद्धेति । अन्यथासिद्धिः सोपाधिकत्वं व्याप्यत्वासिद्धिरिति यावत् । व्याप्त्यनुसन्धानात् तन्निरासः पक्षधर्मताप्रत्यभिज्ञानात् स्वरूपासिद्धिनिरास इति विवेकः । अथ निगमनप्रयोजनं चाह । निगमनेऽपीति । तत्र सर्वाणि वाक्यानि सावधारणानीति न्यायेन तस्मादेवेति हेत्ववधारणस्य प्रमाणान्तरसिद्धिशङ्कानिरासः फलमित्याह । हेत्विति । न चेदं हेतुकृत्यं व्याप्तिपक्षधर्मतानुसन्धानात् प्राक् तस्य तदवधारणाशक्तेरिति भावः । अनेनैव न्यायेन साध्यावधारणात् । प्रबलस्य समबलस्य वा तद्विपर्ययादेकस्य व्यवच्छेदात् पक्षांशोऽपि सफल इत्याह । पक्षेति । न चैतत्प्रतिज्ञाकृत्यं विशिष्टलिङ्गानुसन्धानात् प्राक् तस्यास्तदवधारणाशक्तेरिति ।

नैयायिकास्तु जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासैः सह दशावयवा इत्याचक्षते। तदसत्। परप्रतिपादकस्य वाक्यस्यार्थे यान्यवान्तरवाक्यानि संहत्य निष्पादयन्ति तानि ह्यवयवाः। जिज्ञासादयस्तु परप्रतिपादनानङ्गत्वात् साधनवाक्यैकदेशतयावयवत्वं न लभन्ते। तस्मात् सुष्ठूक्तं पञ्चावयवा इति। अत एवाह भगवान् भारते व्यासः। पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवदिति ॥ ६९ ॥

अथ जरन्नैयायिकमतं निराकर्तुमाह। केचनेति। तत्र साध्यार्थज्ञानेच्छा जिज्ञासा साध्यतद्विपर्ययगोचरो विमर्शः संशयः साधनयोग्यता शक्यप्राप्तिः तत्साध्यपुरुषार्थः प्रयोजनम् निगमनवाक्यश्रवणानन्तरमेव साध्यावधारणात् पूर्वोक्तसंशयोत्थितिः संशयव्युदासः। तत्राद्याश्चत्वारः प्रमाणप्रवृत्तिहेतुत्वात् पौरस्त्यावयवाः। पञ्चमस्तु प्रमाणफलरूपत्वात् पाश्चात्य इति निश्चयः। अथैतेषामवयवलक्षणाभावादवयवत्वं नास्तीति परिहरति। तदसदिति। किं तल्लक्षणमित्याकाङ्क्षायां प्रागुक्तमेव दर्शयति। परप्रतिपादकस्येति। प्रकृते तदभावान्नावयवत्वमित्याह। जिज्ञासादयस्त्विति। एतेषामशब्दात्मकानामर्थित्वादिवत् अधिकारविशेषणतया पुरुषप्रवृत्तिमात्रोपयोगिनां न शब्दात्मकवाक्यावयवत्वं युक्तं गुण इव कनकभूषणैकदेशत्वमित्यर्थः। व्यासवाक्यं चात्र प्रमाणयति। अत एवेति। जिज्ञासादीनामवयवार्थत्वायोगादेवेत्यर्थः। इत्यवयवपदार्थः ॥ ६९ ॥

तर्कलक्षणमाह ।

तर्कोऽनिष्टप्रसङ्गः स्यादनिष्टं द्विविधं मतम्[१] ।
प्रामाणिकपरित्यागस्तथेतरपरिग्रहः ॥ १० ॥

प्रामाणिकप्रहाणम्[२] अप्रामाणिकस्वीकार इति द्विविधमनिष्टम् । तयोरन्यतरस्य प्रसञ्जनं तर्कः । यथा यद्युदकं पीतं पिपासां न शमयेत् तर्हि पिपासुना न पीयेत इति प्रामाणिकपरित्यागप्रसङ्गः । यद्यु-

उद्देशक्रमात् तर्को लक्ष्यत इत्याह । तर्केति ।

अनिष्टप्रसङ्ग इति । अनिष्टव्यापकप्रसङ्ग इत्यर्थः । अन्यथा यद्यग्निर्दाहको न स्यात् रूपवानपि न स्यादित्यादेर्व्याप्तिविकलस्यापि तर्कत्वप्रसङ्गः । अत एवोक्तमात्मतत्त्वविवेके तर्कमधिकृत्य सोऽपि व्याप्तिबलमालम्ब्य अनिष्टप्रसङ्गरूप इति । तथा च व्याप्यारोपेऽनिष्टव्यापकप्रसञ्जनं तर्क इति लक्षणं द्रष्टव्यम् । एतच्च हेतुरारोपितं लिङ्गमित्यत्र व्यक्तीभविष्यति ।

प्रामाणिकेत्याद्युत्तरार्द्धमनिष्टस्येत्यनिष्टविभागवाक्येनैकवाक्यतया योजयति । प्रामाणिकप्रहाणमित्यादि । द्वयोरप्यनिष्टयोः समुच्चयेन प्रसञ्जनं तर्क इति मातर्कोरित्याह । तयोरन्यतरस्येति । अनयोरात्मतत्त्वविवेकोक्ते एवोदाहरणे क्रमेण दर्शयति । यथेत्यादि । तत्र विमतमुदकं पिपासाशामकं विशिष्टोदकत्वात्[३] मत्पीतोदकवदिति प्रयोगे साध्यानङ्गीकारे प्रथमस्तर्कः तत्र प्रत्यक्षसिद्धपाननिषेधात् प्रामाणिकार्थत्यागः विमतमुदकं परस्या-

(१) अनिष्टस्य द्वयी विधा—पा॰ B पु॰ ।
(२) प्रामाणिकपरित्यागो—पा॰ D पु॰
(३) 'वा शीतोदकत्वा' दिति E पुस्तके टिप्पण्याम् ।

दकं पीतं परमन्तरधक्ष्यत् तदविशिष्टं मामपि दहे-
दित्यप्रामाणिकस्वीकारः । यथाहुः तर्कमधिकृत्य
तात्पर्यपरिशुद्धिकाराः । तस्य च स्वरूपमनिष्टप्र-
सङ्ग इति ॥ ७० ॥

आत्माश्रयादिभेदेन तर्कः पञ्चविधः स्मृतः ।
अङ्गपञ्चकसम्पन्नस्तत्त्वज्ञानाय कल्पते ॥ ७१ ॥

यथाहुः । स चात्माश्रयेतरेतराश्रयचक्रकाश्रया-
नवस्थानिष्टप्रसङ्गभेदेन पञ्चविध इति ॥ ७१ ॥

तर्काङ्गानि दर्शयति ।

---

न्तर्दाहकं न भवति तत एव तद्वदेवेति प्रयोगे साध्यान-
ङ्गीकारे द्वितीयस्तर्कः । तत्रोदकस्यात्यन्ताप्रसिद्धान्तर्दा-
हकत्वविधानादप्रामाणिकार्थस्वीकार इति विवेकः । अथ
स्वोक्तं तर्कलक्षणमुदयनोक्तलक्षणेन संवादयति । यथाहु-
रिति । तात्पर्यपरिशुद्धिर्नामोदयनविरचिता वाचस्पति-
कृतवार्त्तिकतात्पर्यटीकाव्याख्या । अत्राप्यनिष्टप्रसङ्गोऽ-
निष्टव्यापकप्रसञ्जनमित्यर्थः । नन्वत्र लक्ष्यपदलाभः कथ-
मित्याशङ्क्य प्रकरणादित्याह । तर्कमधिकृत्येति ॥ ७० ॥

अथ तर्कविभागश्लोकं स्फुटार्थत्वान्निगदेन व्याचष्टे।
आत्माश्रयेत्यादि । अथात्मतत्त्वविवेकसम्मतिव्याजेना-
दिशब्दार्थमाह । यथाहुः स चेत्यादि । तत्र ज्ञानघटादेरुत्प-
त्तिज्ञप्तिस्थित्यादिष्वव्यवधानेन स्वापेक्षणमात्माश्रयः ।
द्वयोरन्योन्यापेक्षणमितरेतराश्रयः । पूर्वस्य स्वापेक्षितम-
ध्यमापेक्षितोत्तरापेक्षितत्वं चक्रकाश्रयः । पूर्वस्योत्तरापेक्षा
अनवस्था अनिष्टप्रसङ्गस्तु व्याख्यात एव ॥ ७१ ॥

व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ॥ १२ ॥

प्रसञ्जकस्याहार्यलिङ्गस्य प्रसञ्जनीयेन व्याप्ति-र्व्याप्तिः प्रतितर्कैरप्रतिघातः तर्काप्रतिहतिः प्रसञ्ज-नीयस्य विपर्यये पर्यवसानम्। एवं चेदेवं स्यान्नैवमिति प्रसञ्जनीयस्यानिष्टत्वमुक्तं द्विविधमधस्तात् । अननु-

---

ननु यदुक्तं तर्कोऽनिष्टप्रसङ्ग इति तत् किं तर्कस्य सामान्यलक्षणं विशेषलक्षणं वा । आद्ये कथमनिष्टप्रसङ्ग-स्येह तर्कावान्तरभेदोक्तिः द्वितीये सामान्यलक्षणमन्य-द्वाच्यम् । अत्रोच्यते पूर्वश्लोके यत्सम्पत्त्या तर्कस्य तत्त्व-ज्ञानसमर्थनमुक्तं कानि तान्यङ्गानीत्याकाङ्क्षायामाहेत्या-शयेनाह । तर्काङ्गानीति ।

तत्र व्याप्तिं व्याचष्टे । प्रसञ्जकस्येति । आपादक-स्यापाद्येन सहाविनाभावो व्याप्तिरित्यर्थः । यथा मूर्त-त्वाभावे मनसः क्रियावत्त्वं न स्यात् इत्यत्रामूर्तत्वस्य निष्क्रियत्वेनेति। तर्काप्रतिहतिरित्यत्र तर्कशब्देन प्रतितर्को विवक्षितः अन्यथा अप्रसक्तप्रतिषेधादित्याशयेन व्या-चष्टे । प्रतितर्कैरिति । यथोदाहृतस्यैव मनसः मूर्तत्वे स्पर्शवत्त्वापत्तिः पृथिव्यादिवत्त्वेन प्रतितर्केणाप्रतिघातो धर्मिग्राहकविरुद्धत्वादस्येति । आपाद्यवैपरीत्यनिष्ठत्वं तर्कस्य विपर्यये पर्यवसानं यथोदाहृत एव न च निष्क्रियं मन इत्याशयेनाह । प्रसञ्जनीयस्येत्यादि । द्विविधमिति । प्रामाणिकप्रहाणाप्रामाणिकस्वीकरणरूपेणेत्यर्थः । अथा-ननुकूलत्वस्यानिष्टाङ्गेदं व्यतिरेकदृष्टान्तेन व्याचष्टे । अन-

कूलत्वं प्रसङ्गस्य विरुद्धहेत्वाभासवत् प्रतिपक्षासाधकत्वमित्येतानि पञ्चाङ्गानीति ॥ ७२ ॥

अन्यतमाङ्गानङ्गीकारे को दोषस्तत्राह ।

**अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेत् ।**

उक्तेष्वङ्गेष्वन्यतमस्याभावे तर्क आभासो भवति । यथा यदिदं पानीयं पिपासोर्दुःखं नाशमयिष्यत्

---

नुकूलत्वमिति । यथा नित्यः शब्दः कार्यत्वादित्यस्य विरुद्धहेत्वाभासस्य साध्यविरुद्धानित्यत्वसाधकतया प्रतिवन्द्यनुकूलत्वात् तदुक्ततर्कस्य मूर्तत्वविपरीतामूर्तत्वसाधकत्वाभावादननुकूलत्वं प्रतिवाद्यनुकूलत्वाभावः तच्च पूर्वोक्तानिष्टादन्यदेवेत्यर्थः । उपसंहरति । इत्येतानीति । इतिशब्दोऽयं प्रकारवचनः अन्यतमाङ्गसमाप्तौ ॥ ७२ ॥

उत्तरार्द्धे आभासत्वाभिधानस्य शङ्कोत्तरत्वान्न वैयर्थ्यमित्याह । अन्यतमेति ।

तत्र प्रागुक्तव्याप्त्याद्येकैकाङ्गवैकल्यात् क्रमेण व्याप्तिविकलादयः पञ्चाभासाः भवन्तीत्याशयेन व्याचष्टे । उक्तेष्विति । तत्राद्यस्योदाहरणद्वयमाह । यथेत्यादि । अत्रोभयत्रापि व्याप्तिवैकल्यं व्यक्तमेवादिशब्दादुदाहरणान्तरसंग्रहः । द्वितीयस्तु मूर्तत्वे मनसः स्पर्शवत्त्वापत्तिरिति । अस्यामूर्तत्वे धर्मिग्राहकप्रमाणबाध इति अनेन प्रतिहतत्वादिति । तथा तृतीयतुरीययोरपि नित्यः शब्दः प्रत्यभिज्ञायमानत्वादिति प्रयोगे यदि नित्यो न स्यात् न प्रत्यभिज्ञायेत प्रत्यभिज्ञायते चेति मीमांसकोक्तस्तर्कः उदाहर्तव्यः । तस्य ज्वालाप्रत्यभिज्ञावत्

तर्हि रूपवदपि नाभविष्यद् गगनादिवत् । यदि परमन्तरधस्यन्मामपि सुरभिमकरिष्यदित्यादिस्तर्काभासः । विस्तरस्त्वात्मतत्त्वविवेकपरिश्रमशालिनां सुगम एव। तत्र हि मिथो विरोध मूलशैथिल्येष्टापादनानुकूलत्वविपर्ययापर्यवसानैस्तर्काभासत्वादुपक्रम्य स्थूलद्रव्यमपलपतो बौद्धस्य नेदं स्थूलं द्रव्यं विरुद्धधर्मसंसर्गप्रसङ्गादित्यादयः प्रलापास्तर्काभासाः प्रदर्शिताः । प्र-

---

स एवायं गकार इत्यादिप्रत्यभिज्ञायाः सादृश्यमूलभ्रान्तित्वेन विपर्ययपर्यवसानानिष्टत्वयोरभावादिति । पञ्चमस्तु यदि नित्यः शब्दो न स्यात् कृतको न स्यात् कृतकश्चायमिति । अत्र प्रसङ्गस्य विपक्षसाधकत्वेन परानुकूलत्वादाभासत्वम् । नन्वेते भेदाः किमिति नोदाह्रियन्ते ऽत आह । तर्काभास इति । शालिनामिति शेषे षष्ठी न लोकेत्यादिना कृद्योगषष्ठ्या एव निषेधादिति । अथाकृतपरिश्रमाणां च तत्राप्रवेशार्थं तदुक्तिप्रदेशं दर्शयति । तत्रेत्युपक्रम्य दर्शिता इत्यन्वयः । यथा नायं पर्वतो निरग्निरित्यादिना सन्दर्भेणेति शेषः । इत्यादयो बौद्धस्य प्रलापा इत्यन्वयः । तदुक्ततर्काणामनर्थकत्वात् प्रलापत्वोक्तिः । नेदं स्थूलमित्यादिबौद्धोक्तस्थूलद्रव्यनिरासे तर्काणां मिथो विरोधेत्यादिग्रन्थो पूर्वोक्ताङ्गवैकल्यप्रयुक्तमाभासत्वं प्रतिज्ञाय पश्चाद्यथा नायं पर्वत इत्यादिना प्रपञ्चितमित्यन्वयार्थौ तत्र मिथो विरोधेत्यनेन प्रतितर्कप्रतिघात उक्तः । तथाहि नेदं स्थूलं विरुद्धधर्मसंसर्गप्रसङ्गात् नास्थूलं तथा प्रतिभासप्रसङ्गादित्यनयोस्ता-

बोधसिद्धावपि नित्यसमोत्थानप्रकाराणा[1]मङ्गवैकल्येन तर्काभासत्वमुक्तम् । यथायथं तर्काङ्गपञ्चकान्यतमहानिरत्रोहनीयेति ।

तर्कस्य विषयकारणप्रयोजनानि दर्शयति ।

अस्याविज्ञाततत्त्वोऽर्थः सन्दिग्धो विषयो मतः ७३
हेतुरारोपितं लिङ्गं फलं तत्त्वार्थनिर्णयः ।

अविज्ञाततत्त्वः[2] संशयविषयोर्थस्तर्कस्य वि-

---

वत् परस्परार्थप्रतिक्षेपकत्वादुभयोरनाभासत्वानुपपत्तेरवश्यमेकस्यैकेन प्रतिघात इति मूलशैथिल्यं व्याप्तिवैकल्यम् । शेषं सुगमम् । यदुक्तमङ्गान्यतमवैकल्ये तर्कस्याभासतेति तत्परिशिष्टे ऽपि स्पष्टमित्याह । प्रबोधसिद्धावपीति । नित्यसमोत्थानप्रकाराणामिति । अनित्यः शब्द इति वादिना प्रतिज्ञाते जातिवादिना किमिदमनित्यत्वं नित्यमनित्यं वा भिन्नमभिन्नं वा कार्यमकार्यं वेत्याद्यनेकधाविकल्पोक्तानामनिष्टप्रसङ्गभेदानामित्यर्थः । एतत्सर्वं जातिपरिच्छेदे स्फुटीभविष्यति । परिशिष्टग्रन्थं पठति । यथायथमिति । अत्राङ्गहान्या तर्काणामाभासत्वं विवक्षितमिति भावः ।

तर्कलक्षणस्य वृत्तत्वादुत्तरश्लोकस्य कैमर्थक्यशङ्कायामाह । तर्कस्येति ।

नन्वप्रतीते धर्मिणि प्रमाणाप्रवृत्तेः प्रतीते सन्दे-

---

(१) नित्यसमादिजातिप्रकाराणा–पा॰ D पु॰ ।
(२) अविज्ञायमानतत्त्वः–पा॰ D पु॰ ।

पयः । सन्दिग्धे न्यायः प्रवर्तत इति न्यायात् । कारणं त्वाहार्यलिङ्गम् सतामेवाग्न्यादीनामारोप्यमाणस्यास-त्त्वस्य लिङ्गत्वात् । अनग्निश्चेन्निर्धूमः स्यादिति व्या-प्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनं तर्क इति लक्षणमा-लायाम् । आरोपितावेव व्याप्यव्यापकावभिमतौ प्र-माणाङ्गस्य चास्य तत्त्वनिर्णय एव फलम् । अङ्गानां

हायोगात् कथं सन्दिग्धत्वं विषयस्येत्याशङ्क्य साध्यवि-शेषणसन्देहादित्याशयेन विशिनष्टि । अविज्ञातेति । हेतु-रारोपितं लिङ्गमित्यत्रोदयनसम्मतिमाह । व्याप्येत्यादि । ननु फलं तत्त्वार्थनिर्णय इत्यसङ्गतं तस्य प्रमाणफलत्वादि-त्याशङ्क्याह । प्रमाणाङ्गस्येति । अङ्गानामङ्गिफलेनैव फल-वत्तेति मीमांसान्यायं सूचयति । अङ्गानामिति । फलो-पकार्यङ्गानां प्रयाजादीनां पृथक्फलवत्त्वे कथं तदुपकार-कत्वं कथंतरां च तदङ्गत्वमिति भावः । चतुर्थे द्रव्यसंस्का-रकर्मसु परार्थत्वात् तत्फलश्रुतिरर्थवादः स्यादित्यत्र चि-न्तितम् । यस्य पर्णमयी जुहुर्भवति न स पापं श्लोकं शृणोति यदा-ङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत् प्रयाजानुयाजा इज्यन्ते वर्मैव तद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्या इति । अत्र पर्णं द्रव्यम् अञ्जनं संस्कारः प्रयाजादिकं कर्म एत-त्त्रितयं पुरुषार्थं क्रत्वर्थं त्वेत्यादि विचार्य पुरुषार्थमेवेदमपा-पश्लोकश्रवणादिफलसम्बन्धादिति प्राप्ते सिद्धान्तितं शृ-णोत्यादिषु सर्वत्र वर्तमानापदेशतः श्रूयमाणफलस्यापि न साध्यत्वं प्रतीयते ।

(१) प्रयोजनमात्र-पा॰ E पु॰ ।

प्रधानफलेनैव फलवत्त्वस्य दर्शपूर्णमासाद्यङ्गेषु प्रयाजादिषु स्थितत्वात्। तदुक्तम्। अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति। अत्राविज्ञाततत्त्वे ऽर्थे इति विषयो दर्शितः। उक्तरेण पञ्चम्यन्तेन कारणम्। कारणस्याहार्यलिङ्गस्योपपत्तिः सद्भावस्तस्मादिति। इत्थम्भावलक्षणे तृतीयान्तत्वमङ्गीकृत्य तर्कव्यापारनिर्देश इति केचित्। कारणस्योपपत्तिः सम्भावना प्रमाणविषयाभ्यनुज्ञानमिति यावत्। तदुपलक्षित इति तत्त्वज्ञानार्थमिति प्रयोज-

नासाध्ये साधनत्वं च द्रव्यसंस्कारकर्मणाम्।
तस्मात् क्रत्वर्थतैवैषामर्थवादः फलश्रुतिरिति ॥

तस्मात् सुष्ठूक्तम् अङ्गानां प्रधानफलेनैव फलवत्त्वमिति। अथ स्वोक्तेषु तर्कस्य विषयकारणप्रयोजनलक्षणेषु सूत्रं संवादयति। तदुक्तमिति। अत्र सूत्रे केन भागेन कस्योक्तिः कथं वेत्याकाङ्क्षायां क्रमाद् विविच्य दर्शयति। अत्रेत्यादि। योऽर्थः सामान्यतो विज्ञातस्तत्त्वतो न विज्ञातः स सन्दिग्धो ऽर्थो विषय इत्यर्थः। पञ्चम्यन्तेनेति। पञ्चम्यर्थे तसिलन्तेनेत्यर्थः। सार्वविभक्तिकं तसिमाश्रित्य तृतीयार्थत्वेन केषाञ्चिद् व्याख्यानं तदाह। इत्थम्भावे तृतीयान्तत्वमिति। तृतीयार्थे तसिप्रत्ययार्थत्वमित्यर्थः। अस्मिन् पक्षे कारणोपपत्तिशब्दयोरन्यमर्थमाचक्षमाणस्तमेव तर्कव्यापारं दर्शयति। कारणस्येति। ननु केयं प्रमाणस्य सम्भावना नाम तत्राह। प्रमाणेति। प्रमाणस्य विषयः साध्यधर्मः तस्याभ्यनुज्ञानं कोट्यन्तरनिराकरणं न च तस्यैव साधनार्हत्व-

नम् । ऊह इति लक्षणम् । ऊहशब्देन प्रसङ्गाभिधानात् । यथाहुः किरणावलीकाराः ऊहापरनामा प्रसङ्गात्मा तर्क इति ॥ ७३ ॥ ऽऽ ॥

किमयं तर्कः स्वयमेव तत्त्वनिर्णयाय न प्रभवति बाढमित्याह ।

**प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेत् ॥ ७४॥**

तत्त्वनिर्णयहेतूनां प्रमाणानामनुग्राहकतया तत्त्वाध्यवसायः फलं न तु स्वतः[१] अनिष्टप्रस-

---

बोधनमित्यर्थः । इत्थम्भावशब्दार्थं व्यनक्ति । तदुपलक्षित इतीति । एतेन प्रमाणप्रवृत्त्युपयोगिव्यापारवत्त्वात् प्रमाणाङ्गं तर्क इत्युक्तं भवति । नन्वनिष्टप्रसङ्गस्तर्क इत्युक्तम् तत्कथं मूहस्तर्क इत्युच्यत इत्याशङ्क्याह । ऊहशब्देनेति । ऊहप्रसङ्गयोः पर्यायत्वादित्यर्थः । तदेव कुत इत्यत आह । यथाहुरिति । शब्दार्थनिर्णये वृद्धव्यवहार एव प्रमाणमिति भावः ॥ ७३ ॥ ऽऽ ॥

ननूत्तरार्द्धे तर्कस्य प्रमाणानुग्राहकत्वं किमर्थमुच्यत इत्याशङ्क्य शङ्कोत्तरत्वमाह । किमयमिति । न भवति किमित्यन्वयः । काकुरत्रानुसन्धेयाङ्गलक्षणाभावादनङ्गस्य तर्कस्य पूर्वोक्तमङ्गिफलेनैव फलवत्त्वं न युक्तमिति शङ्कितुराशयः । शेषः परार्थत्वादिति न्यायेनाङ्गत्वान्न पृथक् फलत्वमिति परिहर्तुराशयः ।

तर्हि तर्कं विना प्रमाणस्यापि तत्त्वाध्यवसायहेतुत्वाभावात् तर्कस्यैव स्वातन्त्र्यं किं न स्यादित्याशङ्क्याह ।

---

(१) तत्त्वाध्यवसायफलकत्वं–पा॰ B पु॰ ।

ङ्गमात्ररूपत्वान्न केवलमनुमानस्यैवानुग्राहकः । किं तु सर्वस्यापि प्रमाणस्येत्युक्तं प्रत्यक्षादेरिति । सर्वस्यापि प्रमां प्रति करणत्वात् करणानां चेतिकर्तव्यतापेक्षितत्वात् । यथाहुः ।

न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ इति ।

सर्वप्रमाणानुग्राहकत्वमात्मतत्त्वविवेके दर्शितम् । इतरदपि प्रमाणमनुमानच्छाययैव विचाराङ्ग

---

अनिष्टप्रसङ्गमात्ररूपत्वादिति । अनिष्टप्रसञ्जनमुखेन तत्सहकारिमात्ररूपत्वादित्यर्थः । कार्यान्यथानुत्पत्तिस्तु कारणत्वमात्रं प्रयोजयति न तु स्वातन्त्र्यमिति भावः । श्लोके प्रत्यक्षादेरिति विशेषणस्य फलमाह । न केवलमिति । सर्वस्यापि तर्कापेक्षत्वे हेतुमाह । प्रमां प्रतीति । ततः किमत आह । कारणानां चेति । तर्कस्यापीतिकर्तव्यतारूपत्वादिति भावः ।

इत्थमित्थं कर्तव्यमित्युपदिष्टाङ्गकलाप इतिकर्तव्यता करणमात्रस्येतिकर्तव्यतासापेक्षत्वे सम्मतिमाह । न हीति । लोके करणं कुठारादि वेदे दर्शपूर्णमासादि तयोरनुद्यमनादिति प्रयाजादिश्चेतिकर्तव्यता तत्साध्यानुग्रह उपकारः ।

इतरदपीति । अत्रानुमानस्य सतर्कस्यैव विचाराङ्गत्वं पूर्वोक्तं प्रमाणान्तरेऽप्यतिदिशति । तेन तर्कस्य सर्वप्रमाणानुग्राहकत्वं गम्यत इत्यर्थः । अनन्यथासिद्धिमनन्यप्रयुक्तत्वमित्यर्थः ।

भवतीति तत्र तर्कमनन्यथासिद्धिं च पुरस्कृत्य प्रवर्तत[1] इति । तर्कस्य शब्दप्रमाणानुग्राहकत्वं मीमांसाचार्यै[2]रप्युक्तम् ।

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ इति ।

भगवता मनुनापि ।

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ इति ॥ ७४ ॥

कोऽयं तर्कसाध्यः प्रमाणानुग्रहो यत्करणेना-

धर्मे इत्यादि । धर्मप्रतीतौ वेदः कारणं चोदनालक्षणोऽर्थो धर्म इत्युक्तत्वात् । तस्य च कृत्यं मीमांसाशास्त्रमितिकर्तव्यतानुग्राहकतर्कतया तत्प्रामाण्यनिर्वाहकमित्यर्थः ।

मनुनापीति । शब्दप्रमाणानुग्राहकत्वमुक्तमित्यनुषङ्गः । आर्षं ऋषिप्रोक्तम् धर्मोपदेशं मानवादिधर्मशास्त्रं च यस्तर्केणेत्यादि योज्यम् । चकारः

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशास्त्रमभीप्सता ॥ इति ।

पूर्वश्लोकोक्तप्रत्यक्षादित्रयसमुच्चयार्थः ॥ ७४ ॥

नन्वनुग्रह उपकार इत्यसन्दिग्धमेव तत् किमर्थमुत्तरार्द्धे व्याख्यायत इत्याशङ्क्य तद्विशेषजिज्ञासायामित्याह । कोऽयमिति । निष्प्रयोजनस्यापि अजिज्ञास्यत्वात्

(१) सिद्धं च पुरस्कृत्य प्रवृत्तेरिति–पा॰ C पु॰ ।

(२) मीमांसकै–पा॰ C पु॰ । मीमांसकाचार्यै–पा॰ D पु॰ ।

यमङ्गं भवति तत्राह ।

**पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्रहः ।**

उपलक्षणमेतत् । प्रमाणविषये तद्विपर्ययाश-ङ्काविघटनं तर्कसाध्योऽनुग्रह इत्यर्थः । अनुमाने ताव-च्छतशः प्रवृत्तेनापि भूयोदर्शनेन गृहीतेऽपि साहचर्ये कुत्रचिदुपाधिनिबन्धनत्वेन व्यभिचारदर्शनादन्यत्रा-प्युपाधिमाशङ्क्य तदायत्तव्यभिचारशङ्कया प्रतिब-न्धानिश्चयेन पक्ष एव विपक्षत्वेन जिज्ञासा जायते धूमवानपि पर्वतः किमनग्निर्न स्यादिति तत्र तर्क-प्रवृत्तेरवसरः । स ह्युपाधिकोटौ तदायत्तव्यभिचार-कोटौ वाऽनिष्टमुपजनयन्[१] विपक्षजिज्ञासां निवर्त-यति । अनग्निश्चेन्निर्धूमः प्रसज्येत इति । ततश्च तर्कसनाथेन भूयोदर्शनेन प्रतिबन्धनिश्चय इति । तद्-

---

प्रयोजनमाह । यत्करणेनेति ।

नन्वेवंविधानुग्रहस्यानुमानमात्रगामित्वात् पूर्वोक्तं सर्वप्रमाणानुग्राहकत्वं तर्कस्य न स्यादित्याशङ्क्याह । उप-लक्षणमेतदिति । अनुमानविषये तावद् विपर्ययशङ्कोत्था-नप्रकारं तर्केण तन्निवृत्तिप्रकारं च प्रपञ्चयति । अनुमाने तावदिति । यावत् प्रत्यक्षादौ च वक्ष्यत इति तावच्छ-ब्दार्थः । कुत्रचिदिति । हिंसात्वादावित्यर्थः । अन्यत्रा-पीति । धूमादावपीत्यर्थः । विपक्षजिज्ञासा साध्यराहित्य-शङ्केत्यर्थः । शङ्कास्वरूपं निरूपयति । धूमवानपीति । तर्कक्र-

(१) उपजननात्—पा॰ C पु॰ ।

द्वारेणानुग्राहकत्वं तर्कस्य । ननु यदि तर्कादेव प्रतिबन्धनिश्चयः सोऽपि तर्हि प्रतिबन्धापेक्ष इत्यनवस्थया भवितव्यम् । न भवितव्यम् कियन्तमप्यध्वानं गत्वा शङ्कास्वरूपस्यापि व्याघातापातेनानुत्थानात्[1] न ह्यनग्निरपि धूमवान् भवेदित्याशङ्कायामकारणककार्योत्पत्तिप्रसङ्गे ऽभिहिते तथा नाम भवेदितीयमपि शङ्कापिशाची सावकाशमासादयति । यथाहुः ।

---

त्यमाह । स हीति । तद्द्वारेणेति । प्रतिबन्धनिश्चयद्वारेणेत्यर्थः । एतदुक्तं भवति । धूमवत्त्वे ऽप्यनग्निमान् भवतु हिंसात्वादिवदस्यापि कदाचित् कस्यचिदुपाधेस्तदायत्तव्यभिचारस्य वा सम्भावितत्वादिति शङ्कायामनग्निमत्त्वे धूम एव न स्यादिति प्रामाणिकपरित्यागरूपानिष्टापादनमुखेन शङ्कामुच्छिन्दता तर्केण सहकृताद्भूयोदर्शनात् पूर्वपूर्वदर्शनजसंस्कारसध्रीचीनान्त्यदर्शनरूपाद् व्याप्त्यवधारणे निःशङ्कमनुमानप्रवृत्तेः सिद्धं तदङ्गत्वं तत्फलेनैव फलवत्त्वं च तर्कस्येति सर्वमवदातमिति । ननु तर्कादेव प्रतिबन्धावधारणे तस्यापि तदेकजीवितत्वात् तर्कान्तरापेक्षायामनवस्थापिशाच्याः को वारयितेत्याशङ्कते । नन्विति । नन्वस्या वराक्या महानयमुच्चाटनमन्त्रो व्याघात एवाचिन्त्यप्रभावो जागर्तीत्याह । न भवितव्यमित्यादि । व्याघातस्वरूपं व्यनक्ति । अकारणकेति ।

अत्रोदयनाचार्यसम्मतिमाह । यथाहुरिति । यत्-

---

(१) अननुभवात्--पा॰ B पु॰ ।

शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ इति ।

उपाधिविधूनने ऽप्येवं तर्कः प्रवर्तते । सर्वथा प्रमाणपथमनवतीर्णा एव केचिदुपाधित्वेन शङ्कनीयास्तमवतीर्णा वा । तत्रापि प्रत्यक्षयोग्याः प्रमाणान्तरविषया वा । तत्रापि(1) व्यापका अव्यापका वा । अव्यापकत्वे ऽपि नित्या अनित्या वा । अनित्यत्वे ऽपि उभयाव्यभिचारिण उभयव्यभिचारिणोऽन्यतराव्यभिचारि-

किञ्चित्कालान्तरभाविव्यभिचारशङ्काया दुर्वारत्वान्नास्त्येवानुमानमिति चार्वाकचोद्यं प्रत्युक्तम् । पूर्वार्द्धे शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तरामिति । शङ्का अस्ति चेद् यं कालमाश्रित्य व्यभिचारः शङ्क्यते तत्कालाकलनार्थमनुमानमवश्यमाश्रयणीयम् । अन्यथा तदाश्रितायाः शङ्काया एवानुत्थानात् । अथैतद्भयान्न शङ्क्यते तर्हि निःशङ्कत्वात् सुतरामनुमानसिद्धिरित्यर्थः । अथैवं स्थिते यदि सुहृद्भावेन परः पृच्छेत् अनुमानं मानमेव शङ्काच्छित्तिस्तु कथमिति तत्रेदमुपतिष्ठते तर्कः शङ्कावधिर्मत इति । अर्थक्रमानुसारात् व्यवहितग्रहः तर्क एवैतच्छङ्काच्छेदक इत्यर्थः । तथोक्ततर्कानवस्थाशङ्का तु व्याघातावधिकेत्याह । व्याघातावधिराशङ्केति ।

एवं व्यभिचारकोटौ तर्कप्रवृत्तिप्रकार उक्तः अथोपाधिकोटावपि तमाह । उपाधिविधूनने ऽपीत्यादि । तत्र परेण शङ्क्यमानमुपाधिं दशधा विकल्पयति । सर्वथेत्यादि । धूम-

(१) उत्तरत्रापि—पा॰ B पु॰ ।

णो वा । अन्यतराव्यभिचारे ऽपि धूममात्राव्यभिचारिणो वह्निमात्राव्यभिचारिणो वा । वह्निमात्राव्यभिचारे ऽपि व्याप्यमात्ररूपा व्यापकमात्ररूपा उभयरूपा वा । तत्र न प्रथमः । सर्वव्यवहारोच्छेदप्रसङ्गात् । प्रत्यक्षयोग्यत्वे ऽनुपलम्भबाधः । व्यापकानां नित्यानां चोपाधित्वे सर्वत्र सर्वदा वह्नेः सत्त्वप्रसङ्गः । उभयाव्यभिचारिणामुभयव्यभिचारिणां धूममात्राव्यभिचारिणां

मात्राव्यभिचारिण इति । साधनमात्राव्यभिचारिण इत्यर्थः । वह्निमात्राव्यभिचारिण इति । साध्यमात्राव्यभिचारिण इत्यर्थः । दृष्टान्तार्थं तु विशेषोपादानम् । एवमुत्तरत्रापि द्रष्टव्यम् । तत्राद्ये ऽनिष्टप्रसङ्गमाह । तत्रेति । अप्रामाणिकोपाधिशङ्कायाः सर्वत्र सुलभत्वात् स्वजनकादावपि सन्देहे पित्रादिव्यवहारा अप्युच्छिद्येरन्नित्यर्थः । द्वितीये ऽप्यनिष्टमाह । प्रत्यक्षेति । सोऽपि कदाचिदुपलप्स्यत इति शङ्कायास्तु पूर्वोक्तातिप्रसङ्ग एव निवारक इति भावः । तृतीयतुरीययो [1]रप्यनिष्टप्रसङ्गमाचष्टे । व्यापकानामिति । व्यापकानामुपाधित्वे सर्वत्र नित्यानामुपाधित्वे सर्वदेति च योज्यम् । अथ पञ्चमादिविकल्पचतुष्टयं युगपद्दूषयति । उभयेत्यादि । यद्येषामुपाधित्वमुच्यते तदा लक्षणाभावादाभासत्वं स्यादिति भावः । तत्राद्ये साधनाव्यापकत्वाभावात् द्वितीयचतुर्थयोः साध्यव्यापकत्वाभावात् तृतीये तूभयाभावाच्च लक्षणाभाव इति विवेकः । इत्थं क्रमा-

(१) व्यापकनित्यत्वपक्षयोः ।

वह्न्यव्यभिचारे ऽपि व्याप्यमात्ररूपाणां व्यापकमात्ररूपाणां चोपाधिलक्षणाभावः। उभयरूपास्तु सामग्री-तो नान्ये। सा च नोपाधिः। धूमस्य वह्निनेव तया व्याप्तेः साधनाव्यापकत्वाभावात्। न च कृतकत्वानुष्णात्वयोः सम्बन्ध इव साध्यधर्मिजातीयेतरत्वमिहाप्युपाधिः। तस्य प्रमाणबाधमात्रैकनियतत्वादिति। एवं प्रत्यक्षमपीह भूतले घटो नास्तीति भूतलवद् घटाभावे ऽपि प्रवर्तमानं यद्यभविष्यत् घटो भूतलमिवाद्रक्ष्यत्

द्विकल्पाष्टकं निरस्याथ नवमं व्युत्क्रम्य दशमं निरस्यति। उभयरूपास्त्विति। ततः किमत आह। सा चेति। कुत इत्यत आह। साधनाव्यापकत्वाभावादिति। तदभावे ऽपि हेतुमाह। धूमस्येति। कार्यस्य कारणेनेव कारणकारणेनापि व्याप्यत्वादित्यर्थः। अथ वह्निमात्राव्यभिचारे ऽपि व्यापकमात्ररूपा इति नवमः पक्षः। एवंलक्षणश्चोपाधिरत्र पक्षेतरत्वमस्त्येव बाधस्थले ऽङ्गीकृतश्च स च सर्वानुमानास्कन्दीति त्यज तामनुमानप्रामाण्यप्रत्याशामित्याशङ्कामुद्भाव्य विघटयति। न चेति। साध्यधर्मिजातीयेतरत्वं पक्षेतरत्वमित्यर्थः। पक्षीकृतसकलव्यक्तिसङ्ग्रहार्थं प्रकारवचनस्य जातीयरः प्रयोगः। कुतो नेदमिहोपाधिरत आह। तस्येति। अनुष्णं तेजः कृतकत्वाज्जलवदित्यादिबाधितविषयेष्वेव प्रयोगेषु पक्षेतरत्वस्य समव्याप्तेरुपाधिलक्षणस्य सम्भवादन्यत्रासम्भवात् तेष्वेव तस्योपाधित्वं नान्यत्रेत्यर्थः। अथ प्रत्यक्षे ऽपि तर्कप्रकारमाह। एवं प्रत्यक्षमपीति। अभावे ऽपि प्रवर्तमानं तद्ग्रहणाय व्याप्रियमाणमित्यर्थः। तर्केणानुज्ञायमानमनुगृहीतं सन्दिग्ध-

तस्य तेन सह तुल्यदर्शनयोग्यत्वादिति । न च दृश्यत इति तर्केणानुज्ञायमानं घटाभावं निश्चाययतीति । एवं स्वर्गकामो यजेतेत्यत्र समानपदोपात्तत्वाद्भाव्यत्वाच्च धात्वर्थः साध्यो भवतु भवतु वा पुरुषा-

र्थः । तर्कस्वरूपमाह । यदीत्यादि । अथ शब्दे ऽपि तर्कप्रवृत्तिप्रकारमाह । एवं स्वर्गेत्यादि अवधारयतीत्यन्तेन सन्दर्भेण । ननु व्युत्पन्नस्याकाङ्क्षासन्निधियोग्यतावत्पदकदम्बकश्रवणसमनन्तरमेव निर्विचिकित्सवाक्यार्थप्रतिपत्तौ कस्तर्कस्यावकाश इत्याशङ्क्य स्वर्गकामाधिकरणविचारोपन्यासेनावकाशं दर्शयति । स्वर्गकाम इत्यादि । तत्र स्वर्गकामो यजेत पशुकामो यजेतेत्यादौ प्रत्ययार्थभूताया भावनायाः किं धात्वर्थो भाव्यः उत स्वर्ग इति संशयः कुतः तत्र पूर्वपक्षवचनव्यक्तिमाह । धात्वर्थः साध्यो भवत्विति । साध्यो भाव्य इत्यर्थः । तत्र हेतुमाह । समानपदोपात्तत्वादिति । एकपदरूपश्रुतिगम्यत्वादित्यर्थः । स्वर्गस्तु पदान्तरोपात्तो वाक्यगम्यसम्बन्धः वाक्याच्च श्रुतिर्बलीयसीति भावः । हेत्वन्तरमाह । भव्यत्वाच्चेति । भवतीति भव्यो जन्यः कार्य इति यावत् । भव्यगेयेत्यादिना कर्तरि निपातनात् साधुः । तथाभूतं भव्यायोपदिश्यत इति न्यायात् स्वर्गेण यागं कुर्यादिति भव्ययागसिद्धये भूतस्वर्गादिद्रव्यं साधनत्वेनोपदिश्यते न तु यागेन स्वर्गं भावयेदिति भूतस्वर्गपश्वादिद्रव्यसिद्धये भव्ययागोपदेशो युक्तः । तदुक्तम् ।

भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे ।
विधीयते न भूताय भव्यकर्मोपदेशनम् ॥ इति ।

र्थत्वात् स्वर्ग इति संशये तर्कावतारः । यदि साध्यो धात्वर्थः स्यात् तदोपदेष्टुराप्तत्वं विधेश्चेष्टाभ्युपायत्वं प्रेक्षावतां प्रवृत्तिश्च व्याहन्येत । अस्ति चैतत् सर्वं प्रमाणतः सिद्धमिति तर्केणानुगृह्यमाणः शब्दः स्वर्गमेव

---

स्वर्गशब्दश्च लोके स्रक्चन्दनादिषु प्रयोगाद् द्रव्यवचनः कर्मिश्च साधनकामानुवादः । तेन भव्यत्वात् कार्यत्वाद् धात्वर्थ एव भाव्यो भावनायाः किमंशपूरक इति पूर्वपक्षवचनव्यक्त्यर्थः । पुस्तकेषु तु भाव्यत्वाद् दीर्घः पाठः प्रामादिकः उक्तार्थस्याकरस्थस्यैवानेनाभिधानात् साध्याविशिष्टत्वाच्चेति[१] । अथ सिद्धान्तवचनव्यक्तिं चाह । भवतु वेति । स्वर्गस्यैव भाव्यत्वे हेतुमाह । पुरुषार्थत्वादिति । तथाहि पदश्रुतेर्बलीयस्या विधिश्रुत्या प्रवर्तनात्मिकया प्रवृत्तिरूपा भावना धात्वर्थसम्बन्धात् प्रागेवावरुद्धा सती कथं कर्मियोगादवगलपुरुषार्थभावं प्रवृत्तियोग्यं स्वर्गमवधूय केवलक्लेशात्मकमपुरुषार्थं वा धात्वर्थं भाव्यत्वेनावलम्बिष्यत इति स्वर्ग एव भाव्य इति सिद्धवचनव्यक्त्यर्थः । एवं समानपदोपात्तत्वपुरुषार्थत्वाभ्यां भाव्यसन्देहे तदवधारणाय तर्कः शब्दे लब्धावकाशो भविष्यतीत्याह । इति संशय इति । तर्हि स तर्को वाच्य इत्यपेक्षायां तर्कत्रयमाह । यदीत्यादिना । यद्यपुरुषार्थो धात्वर्थो भाव्यः स्यात् तदोपदेष्टुराप्तत्वमाप्तोपदेशात्मकस्य विधेरिष्टसाधनज्ञानोपायत्वमात्मनः प्रेक्षावत्प्रवृत्तिविषयत्वं च व्याहन्यादित्यर्थः । तर्काणां विपर्यये पर्यव-

---

(१) साध्यभाव्ययोः पर्यायत्वाच्च ।

भावनाफलत्वेनावधारयति ज्योतिष्टोमेन स्वर्गं भावयेदिति । एवमन्यत्राप्यन्यथासिद्धिनिरसनादिरनुग्रह[1]स्तत्रतत्र दर्शयितव्यः । तस्मात् साधूक्तं प्रमाणानुग्राहकस्तर्क इति । अत एव प्रमाणानामनुग्राहकस्तर्कस्तत्त्वज्ञानाय कल्पत इति भाष्यम् । प्रमाणविषयविभागात् तु प्रमाणानुग्राहक इति च वार्त्तिकम् । अनुजानन्ननुगृह्णातीति टीकापि । अन्वयव्यतिरेकविषये भूयोदर्शनसाहाय्यकमाचरन्ननुग्राहकस्तर्क इत्यात्मतत्त्वविवेकश्च । ननु तर्कस्याहार्यलिङ्गजन्यत्वेन

सानमाह । अस्ति चेति । फलितमाह । इति तर्केणेति । भावनाफलत्वेन भाव्यत्वेनेत्यर्थः । अथोपमानादावपि तर्कानुग्राहकत्वमतिदिशति । एवमिति । पञ्चषादिप्रमाणवाद्यभिप्रायेण तत्रतत्रेति वीप्सा । उपमानफलस्य मानान्तरसाध्यत्वे तत्प्रकरणोक्तदोषापत्तिरिति तर्केणान्यथासिद्धिनिरासः । आदिशब्दाद् विषयाभ्यनुज्ञानसंग्रहः । परमप्रकृतमुपसंहरति । तस्मादिति । तर्कस्य प्रमाणानुग्राहकत्वे पक्षिलादिसम्मतिमाह । अत एवेत्यादि । विषयविभागाद् विषयविवेकादित्यर्थः । अनुजानन्ननुगृह्णातीति । विषयाभ्यनुज्ञानमेवानुग्रह इत्यर्थः । उदयनोक्तमानानुग्राहकत्वमप्युपलक्षणं मत्वाह । अन्वयव्यतिरेकेति । अनुमानजीवितव्याप्तिग्राहकप्रमाणोपयोगित्वमेव तदनुग्राहकत्वमित्यर्थः । स्वयमप्रमाणस्य कथं प्रमाणानुग्राह-

(१) रूपेणानुग्रह–पा० B पु० ।

विपर्ययरूपस्य कथं प्रमाणानुग्राहकत्वमिति चेत् । नैवम् । अनिष्टापादकत्वेनानियतेच्छाविच्छेदकत्वनियमात् । यथा सविषान्नभक्षणेच्छायां यदि भक्षयिष्यसि तदा मरिष्यसीत्यनिष्टापादनेन भक्षणेच्छाविच्छेद इत्यनुभवसिद्धमिति न सङ्कटं किञ्चिदत्रेति ।

निर्णयलक्षणमाह ।

**निर्णयस्तर्कमानाभ्यामर्थतत्त्वावधारणम् ॥ ७५ ॥**

---

कत्वमिति प्रत्यवतिष्ठते । नन्विति । ननु दुष्टेन्द्रियाद्यजन्यस्य कथं विपर्ययत्वमित्यत्राह । आहार्येति । बुद्धिपूर्वारोपोऽपि मिथ्येति भावः । न चायमनवधारणात्मकत्वात् संशय एवेति वाच्यम् अग्न्यभावे धूमो न स्यादेवेत्यवधारणात् समानधर्मादिकारणाभावाच्चेति सन्तोष्टव्यम् । कात्र कथं वा न हि दृष्टे ऽनुपपन्नं नामेति समाधत्ते । नैवमिति । अनिष्टप्रसञ्जनद्वारा सर्वत्रानियतेच्छाविच्छेदलक्षणानुग्रहनियमस्याप्यनुभवसिद्धत्वादित्यर्थः । कुत्रानुभूतस्तत्राह । यथेति । तस्माद्यथा स्वप्नदर्शनस्यायथार्थस्यापि यथार्थभाविशुभाशुभसूचकत्वं तथा तर्कस्यापि स्वयमप्रमाणस्यापि प्रमाणानुग्राहकत्वं नानुपपन्नमित्युपसंहरति । इति न सङ्कटं किञ्चिदत्रेति । इति तर्कपदार्थः ॥

ननूत्तरार्धे निर्णयस्तत्त्वावधारणमिति पर्यायकीर्तनं पुनरुक्तिरित्याशङ्क्य लक्ष्यलक्षणभावान्न दोष इत्याह । निर्णयेति । तर्कफलत्वात् तर्कानन्तर्यमस्येति चोक्तमेव स्मर्तव्यम् ।

प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालम्भविमर्शपूर्वको यथार्थाध्यवसायो निर्णयोऽत्राभिमतः । परीक्षासाध्यमर्थावधारणं निर्णय इत्याचार्याः । तदुक्तम् । विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति ॥ ७५ ॥

अथ कथालक्षणमाह ।

---

ननु तत्त्वावधारणमित्येतावदेव लक्षणमस्तु किं तर्कमानाभ्यामिति विशेषणेनेत्याशङ्क्य व्याचष्टे । प्रमाणतर्काभ्यामिति । यः प्रमाणतर्काभ्यां स्वपक्षसाधनपरपक्षोपालम्भपूर्वको विमर्शपूर्वकः संशयोपमर्दक इति यावत् यथा स्थाणुरेवायमित्यादि स एव निर्णयपदार्थाभिमतो नान्यो यथार्थोऽपीत्यर्थः । तेन घटाद्यवधारणव्युदासान्न विशेषणवैयर्थ्यमिति भावः । यथार्थेति सर्वायथार्थज्ञानव्युदासः । अर्थव्युदासाय प्रत्यय इति वक्तव्ये स्फुटार्थमध्यवसाय इत्युक्तम् । तद्व्यावर्त्यस्य यथार्थानध्यवसायस्य व्याघातहतत्वादिति । अत्रोदयनसम्मतिमाह । परीक्षासाध्यमिति । परीक्षा तर्कमानाभ्यां विचारो विमर्श इति यावत् । तत्साध्यमिति । अत्र सूत्रसम्मतिमाह । विमृश्येति । पक्षप्रतिपक्षाभ्यां स्वपक्षसाधनपरपक्षोपालम्भाभ्यामित्यर्थः । इति निर्णयपदार्थः ॥ ७५ ॥

ननूद्देशक्रमाद्वादलक्षणे वक्तव्ये किमन्यदनुद्दिष्टमेवोत्तरश्लोके कथ्यत इत्याशङ्क्य वादादीनां त्रयाणां कथात्वान्तरभेदत्वात् प्रथमं कथासामान्यलक्षणं कथयतीत्याह । कथेति । नन्वेवं चेत् कथैव त्रिविधाप्येकः पदार्थ इति पदार्थन्यूनत्वापत्तिः अन्यथा वादादिवत् प्रमाणादिपदार्थावान्तरभेदानामपि पृथक्पदार्थत्वे तदतिरेक इत्युभयथापि षोडशैव पदार्था इति नियमभङ्ग इति चेत् सत्यम्

**विचारविषयो नानावक्तृको वाक्यविस्तरः।**
**कथा तस्याः षडङ्गानि प्राहुश्चत्वारि केचन ॥७६॥**

विचारगोचरार्थविषयो नानावक्तृको वाक्यविस्तरः कथा। तस्याः कथायाः षडङ्गानि सङ्गिरन्ते। निरूप्यनिरूपकनियमः कथाविशेषव्यवस्था वादिप्रतिवादिनियमः सदस्यानुविधेय[1] संवरणम् निग्रहस्थानसामस्त्यासमस्त्योद्भावनप्रतिज्ञानम्

तथापि वादस्य निःश्रेयसौपयिकतत्त्वाध्यवसायहेतुत्वाज्जल्पवितण्डयोश्च तत्संरक्षणार्थत्वात् निःश्रेयसार्थिनां प्रत्येकमेव प्राधान्येनोपादेयत्वज्ञापनाय तेषां पृथक्पदार्थत्वेनोद्देशः प्रमाणादीनां त्वेतच्छेषत्वेनोपादेयत्वान्न तथात्वम् न च तद्विशेषवत्तच्छेषत्वमप्येकपदार्थत्वप्रयोजकमिति मन्तव्यम् तन्त्रान्तरे गुणादीनां द्रव्याभेदप्रसङ्गादिति सङ्क्षेपः।

ननु विचारो विमर्शस्तद्विषयत्वं कथायां न सम्भवतीत्यसम्भवि लक्षणमित्याशङ्क्य श्लोके विचारशब्दस्य विचार्यत इति कर्मसाधनव्युत्पत्त्या विचार्यार्थपरत्वान्नायं दोष इति व्याचष्टे। विचारगोचरार्थेति। क्रमात्पदत्रयेण कलहवाक्यपञ्चावयवप्रयोगकथावाक्यस्थपदानां व्युदासः। तत्र षडङ्गानि दर्शयति। निरूप्येत्यादि। निरूप्यं प्रतिपाद्यमात्मतत्त्वादिकं निरूपकं तत्प्रतिपादकं प्रमाणमनुमानादि तयोर्नियमः अनेनेदं साधयामीति प्रतिज्ञानं कथाविशेषो वादादिः तस्य व्यवस्था अनेन कथयिष्यामीति नियमकरणम् तथानयोरयं वादी प्रतिवादीति नियमो नियमनम् अनु पश्चाद्विधेयं निष्पन्नकथाफ-

(१) सभ्या-पा· B पु·।

कथापर्यवसानसंवित्तिरिति षडङ्गानि । अपरे तु चत्वारि । वादिप्रतिवादिनियमौ सदस्यानुविधेय[१] संवरणे चेति । लिपिकरणव्यवहारेषु लेखकोऽपि कश्चिदुभयसंमतो वरणीयः । अत्र कथकौ विद्यातः सम्भावितसाम्यौ स्याताम् । अन्यथा विशेषविज्ञानप्रयोजनायाः कथाया आनर्थक्यप्रसङ्गात् । वादमन्तरेणापि विशेषनिर्णयोपपत्तेः । सदस्यास्तु वादिप्रति-

लप्रतिपादनरूपमस्यास्त्यनुविधेयः सभापतिः तस्य सभ्यानां च संवरणमेते सभ्या अयमनुविधेय इति सम्परिग्रहः निग्रहसामस्त्यं जल्पवितण्डयोर्वादे त्वसामस्त्यमिति । एतच्च निग्रहान्ते स्फुटीभविष्यति। कथापर्यवसानस्य कथासमाप्तसंवित्तिपक्षादौ कचिदेकत्र समाप्तिरिति समयबन्धः । अथ चतुरङ्गानि दर्शयति । वादीत्यादि । वादिनियमः प्रतिवादिनियमः सभ्यसंवरणमनुविधेयसंवरणं चेति चत्वार्यङ्गानि । अन्यत् सर्वं तन्नान्तरीयकत्वान्न पृथग्वाच्यमिति भावः। अत्र पक्षद्वये ऽपि पाक्षिकमङ्गान्तरमाह । लिपिकरणेति। अथ वादिप्रतिवादिनोस्तुल्यबलत्वमावश्यकमित्याह । अत्रेति । ननु तुल्यत्वं दुर्ज्ञानमत आह । सम्भावितेति । अतुल्यत्वे बाधकमाह । अन्यथेति । कथमानर्थक्यं वादं विना निर्णयानुपपत्तेरित्याशङ्क्याह । वादमिति। पुरुषगौरवादेव श्रद्दधानस्य तदुपदेशमात्रादपि निर्णयसिद्धेरिति भावः। सभ्यलक्षणं तत्संख्यानियमं चाह । सदस्यास्त्विति । संख्यावैषम्यस्य प्रयोजनमाह । द्वैधेति ।

(२) सभ्यानुविधेय–पा· B पु· ।

वादिसम्मताः सिद्धान्तद्वयरहस्यवेदिनो रागद्वेषविरहिणः पराभिहितग्रहणधारणप्रतिपादनकुशला-स्त्र्यवरा विषमसंख्याः स्वीकार्याः। तथा च सति द्वैधे बहूनां संवादेन निर्णयः स्यात्। तथा च स्मरन्ति।

रागद्वेषविनिर्मुक्ताः सप्त पञ्च त्रयोऽपि वा।
त्रयोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा॥ इति।

द्वैधे बहूनां वचनमिति च। सदस्यानां तु प्रमेयविशेषस्य कथाविशेषस्य वादिप्रतिवादिनोश्च नियमनं पर्यनुयोज्योपेक्षणोद्भावनादिना कथकगुणदोषावधारणम् भग्नप्रतिबोधनं मन्दस्यानुभाष्य प्रतिपादन(१)मिति कर्माणि। सभापतिरपि वादिप्रतिवादिनोः सदस्यानां च सम्मतो रागादिरहितो निग्रहानुग्रहसमर्थः स्वीकरणीयः। तस्य च निष्पन्नकथाफलप्रतिपादनादिकं कर्म। वादे तु दैवादागताः सदस्या वादिप्रतिवादिभ्यां सम्प्रतिपत्त्या प्रामा-

अत्रोभयत्रापि संवादमाह। रागेत्यादि। यज्ञसदृशीति। यज्ञीयसभासदृशीत्यर्थः।

सभ्यकृत्यमाह। सदस्यानां त्विति। अथ सभापतिलक्षणमाह। सभापतिरपीति। तत्कृत्यं चाह। तस्येति। निष्पन्नकथाफलप्रतिपादनं वादिप्रतिवादिभ्यां मिथः पणीकृतद्रव्यदापनम्। आदिशब्दात् स्वयं छत्रचामरादिदानम्। वादे विशेषमाह। वादे त्विति। दैवादागतानां

(१) प्रमाण—पा॰ C पु॰। प्रदान—पा॰ B पु॰।

दिककथाभासशङ्काव्यावर्तनायाङ्गीक्रियन्ते न जल्पवितण्डयोरिव प्रमेयादिव्यवस्थापनार्थमङ्गत्वेनोपादीयन्ते । तथा च वार्त्तिकम् । न चायं नियमः प्राश्निकप्रत्यायनार्थ एवायं वाद इति । प्राश्निकानन्तरेणापि गुर्वादिभिः सह संवादो दृष्ट इति । अत्र टीका न वादे प्राश्निकानामुपादानं दैवादागतानां त्ववर्जनमिति[1] । यत्पुनः प्राश्निका वादे न सन्तीति तस्यैव वचनम् अङ्गतयोपादानं नास्तीति तस्यार्थः दैवादागतानामवर्जनस्य स्वयमेवोक्तत्वादिति ॥ ७६ ॥

वा किं प्रयोजनमत आह । प्रामादिकेति । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत इति न्यायादिति भावः । वादे सभ्यस्वीकारनियमाभावे वृद्धसंवादमाह । तथा चेति । ननु गुर्वादीनामेव प्राश्निकत्वात् कथं नियमाभाव इत्याशङ्क्य तेषामपि दैवादागतानामेव स्वीकारो न तु नियमादिति तात्पर्यटीकायां व्याख्यातं वाचस्पत्याचार्यैरित्याह । अत्र टीकेति । ननु दैवादागतास्तत्रैव प्रतीयन्ते इत्याशङ्क्याह । यत्पुनरिति । कथमयं टीकार्थो निश्चित इत्याशङ्कावर्जनवचनान्यथानुपपत्तेरित्याह । दैवादिति ॥ ७६ ॥

इह पदार्थानां सौत्रक्रमेणैवोद्देशक्रममाश्रित्य प्रमाणादिपदार्थाश्चेल्लक्ष्यन्ते इति लक्षणमात्रस्यैव प्रतिज्ञानत्वादुत्तरार्द्धे संग्रहकृतां वादादिपदार्थत्रयोद्देशः प्रतिज्ञाविरुद्धः सौत्रेण पुनरुक्तश्च इत्याशङ्क्य सत्यम् कथासामान्यलक्षणानन्तरं वादादीनां तदवान्तरभेदत्वाभिधानपरतोद्दे-

(१) न वर्जनमिति–पा॰ B पु॰ ।

कथावान्तरविधा दर्शयति ।

वादो जल्पो वितण्डेति तिस्रस्तस्या विधा मताः ।

तत्र वादस्य लक्षणं फलं च दर्शयति ।

तत्र प्रमाणतर्काभ्यां साधनाक्षेपसंयुता ॥ ११ ॥

वीतरागकथा वादस्तत्फलं तत्त्वनिर्णयः ।

प्रमाणतर्काभ्यामेव स्वपक्षसाधनपरपक्षोपालम्भौ करणीयावित्यभिमानमात्रमत्र विवक्षितं न[1] वस्तुतः उभयोरपि तथा कर्तुमशक्यत्वात् । यथाहुः । प्रामाणिकवचनमात्राभिप्रायपूर्विका कथा वाद इति ।

शपरमित्याशयेनाह । कथावान्तरेति । एवं पदार्थन्यूनताशङ्का तु प्रागेव निरस्तेत्यास्तां तावत् ।

उत्तरश्लोके पादत्रयेणैव वादलक्षणाच्चतुर्थपादवैयर्थ्यमाशङ्क्य फलाभिधानार्थत्वेन सार्थकत्वमाह । तत्रेति ।

ननु जल्पवितण्डयोरपि प्रमाणतर्कसम्भवाल्लक्षणमतिव्याप्तमित्याशङ्क्यावधारणस्य विवक्षितत्वान्नायं दोष इति व्याचष्टे । प्रमाणतर्काभ्यामेवेति । तेन छलादिनिवृत्तिः । तथा च प्रमाणतर्काभ्यामेव स्वपक्षसाधनपरपक्षोपालम्भवती कथा वाद इति लक्षणं द्रष्टव्यम् । ननु पक्षद्वयेऽपि कथं प्रमाणतर्कसम्भव इत्यत उक्तम् अभिमानमात्रमिति । अवास्तवत्वे हेतुमाह । उभयोरपीति । वस्तुनो द्वैरूप्यासम्भवादिति भावः । प्रामाणिकमात्रं प्रामाणिकमेवेदं वचनमित्यभिप्रायोऽभिमानः पूर्वो यस्याः सेत्यर्थः ।

(१) न तु-पा॰ C पु॰ ।

THE

# LAKṢAṆĀVALĪ

OF

# UDAYANĀCĀRYA

WITH THE COMMENTARY

## NYĀYAMUKTĀVALĪ

OF

## ÇEṢAÇĀRNGADHARA

EDITED BY

SURENDRALĀLA GOSVĀMIN
PROFESSOR, SANSKRIT COLLEGE, BENARES.



BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1900.

## BIBLIOGRAPHICAL NOTICE.

The Lakṣaṇāvalī is Udayanācārya's often quoted Manual of Vaiçeṣika Definitions. It appears to have been written in 984 A. D. (vide p. 72 *infra ;* where the second verse will be recognised as Udayana's *mudrā* found in most of his works.)

The present text of Çārṅgadhara's commentary is based on the only available MS.—No. 2076 of the India Office Library—kindly lent by the Right Honourable the Secretary of State for India. The I. O. MS. furnishes a satisfactory text when the obvious errors of the scribe have been corrected.

Çārṅgadhara's date is not known. His only reference to himself or, more strictly, to his family name is found on p. 72 *infra*, where he fancifully describes himself as "a Çeṣa in his destruction of the arrogance of arrogant opponents." He probably lived in the XVI Century. He could not have lived earlier than the beginning of the XV Century as he quotes (pp. 15. 23 *infra*) from the Tattvapradīpikā of Citsukhācārya and the Vedāntakalpataru of Amalānanda both of whom flourished *circ.* 1300—1352 A. D. (vide Praçastapādabhāṣya: Introduction p. 25, note : Vizianagram Sanskrit Series). On the other hand, it is not likely that he lived into the XVII Century; for a MS. of the Padārthacandrikā by Çeṣānanta (No. 2089 I. O. Cat.) bears Samvat 1658 as the date of its transcription, and this author declares in another of his works, the Nyāyasiddhāntadīpaprabhā, that his own guru was one Çeṣa Çārṅgadhara :—

सोऽयं शशधराचार्यकृतिव्याकृतिकैतवात् ।
शेषः शार्ङ्गधरादिष्टपुष्टधीरुपतिष्ठते ॥

At any rate, it is clear that our Çārṅgadhara could not have been the well—known Paddhati writer who lived in the XIV Century (cf. R. G. Bhandarkar's Report 1882—83 p. 43.)

Among the writers attacked by Çārngadhara is "the author of the Tarkasaṃgraha," a metrical treatise belonging to the Vedānta or Mīmāmsā school (cf. pp. 14. 18-20. *infra.*) If the author here intended be Annam Bhaṭṭa, whose works on the two Mīmāmsās are extant, the reference to him through his celebrated Nyāya-Vaiçeṣika Manual is emphasized by its indirectness and, as a piece of ironical courtesy, is quite in keeping with the polemical character of our text. But this identification is only conjectural. Annam Bhaṭṭa's other works are not available in Benares, and the notices of them in Catalogues are insufficient for the purpose in hand. Further, the title *Tarkasaṃgraha* could appropriately belong to a Mīmāmsā treatise now lost or extant under another name.

Annam Bhaṭṭa's date is uncertain. He has been assigned to the period between 1625 and 1700 A. D.* But the evidence for placing him after Gadādhara and for the suggestion that he borrowed from Raghunātha's Dīdhiti does not seem conclusive as against the evidence of a MS. of the Tarkasaṃgraha dated Samvat 1642† (1585 A. D.)

Another writer mentioned by our author is Vādīndra or Vādīça. As the name is not common (cf. Aufrecht's Cat. Catal), it may be permitted to identify this Vādīndra with the only Vādīndra known to philosophical bibliography as the guru of Rāghava Bhaṭṭa who composed the Nyāyasāravicāra in Çaka 1274.‡

The Daçaçlokīviḍambana is a work mentioned in our text (p. 6) but otherwise unknown.

A. V.

---

* Tarkasaṃgraha ed. M. R. Bodas: Preface p. IV. (1897).

† This MS. belongs to Pandit Vindhyeçvarīprasāda Dvivedin, Librarian of the Sanskrit College, Benares. Another MS. belonging to the same Pandit is dated Samvat 1744 and is therefore older than the MS. described by Bodas, p. IV.

‡ Not Çaka 1174 as read by Hall in his Bibliographical Index.

आपो निगदव्याख्याताः ॥

रसात्यन्ताभावसमानाधिकरणरूपाधिकरणं तेजः । करकावृत्तित्वरहितविद्युदाकरजवृत्तिजातिमद्वा । विद्युत्तेजः करकावृत्तित्वरहिताकरजवृत्तिजातिमती वा विद्युद्व्यतिरिक्ताकरजान्यत्वरहितत्वादाकरजवत् । आकरजं सुवर्णादि । ननु सुवर्णादिकं पार्थिवं नैमित्तिकद्रवत्वाधिकरणत्वाद्[1] घृतवत् । अनेन पार्थिवत्वसिद्धावाकरजवृत्तिजातिमत्त्वसाधने ऽपि विद्युत्तेजसो न तैजसत्वसिद्धिरिति चेत् । न । सुवर्णादिकमपार्थिवमत्यन्ताग्निसंयोगे ऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वादिति प्रत्यनुमानेनापार्थिवत्वसिद्धौ असांसिद्धिकद्रवत्वेन तत्सिद्धिः । अन्यथा पार्थिवत्वे द्रवत्वमत्यन्ताग्निसंयोगे उच्छिद्येतेति तर्कोऽनुसरणीयः । तच्च द्विविधं नित्यमनित्यं चेति । तेजस्त्वं नित्यवृत्ति विद्युदाकरजवृत्तिजातित्वात् सत्तावदिति नित्यत्वसिद्धिः । साधितं तेजस्त्वम् । अनित्यं त्रिविधं शरीरादिभेदेन । शरीरमादित्यलोके तस्यापि पूर्ववत् सिद्धिः । इन्द्रियं रूपोपलम्भकं चक्षुः । रूपोपलब्धिः करणसाध्या क्रियात्वा-

(१) नैमित्तिकद्रवत्वादिति प्रथममूलादर्शपुस्तके पाठः ।

च्छिदिक्रियावदिति तत्सिद्धिः। कर्त्रप्रेर्यं करणम्। धातुवाच्या क्रिया। चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वादालोकवत्। विषयस्तु भौमादिः। इति तेजःप्रकरणम्।

विद्युदिति। आकरजान्यत्वरहितत्वाभावे ऽपि विद्युद्व्यतिरिक्तत्वरहितत्वेन पक्षधर्मत्वं विद्युद्व्यतिरिक्तत्वरहितत्वाभावे ऽप्याकरजान्यत्वरहितत्वेन सपक्षसत्त्वं च बोद्धव्यम्। तेजः॥

रूपात्यन्ताभावाधिकरण[1]स्पर्शाधिकरणो वायुः। विप्रतिपन्नः स्पर्शो रूपरहितद्रव्यवृत्तिः स्पर्शत्वरहितशब्दान्यत्वरहितत्वाच्छब्दवदिति वायुसिद्धिः। स च द्विविधो नित्यानित्यभेदेन।

विप्रतिपन्न इति। अनुष्णाशीतापाकज इत्यर्थः। स्पर्शत्वाधिकरणत्वेन पक्षधर्मत्वम्। शब्दान्यत्वरहितत्वेन सपक्षसत्त्वम्।

वायुत्वं नित्यवृत्ति नित्यवृत्तित्वरहितवायुत्वान्यत्वरहितत्वात् पृथिवीत्ववदिति तत्सिद्धिः। कार्यं त्रिविधं शरीरादिभेदेन।

वायुपरमाणुं साधयति। वायुत्वमिति। यद्यपि नित्यवृत्तित्वरहितत्वं[2] सन्दिग्धं तथापि वायुत्वान्यत्वरहितत्वनिश्चयेन विशिष्टस्य पक्षधर्मत्वमुपपद्यते।

(१) रूपात्यन्ताभावसमानाधिकरणेति मूलादर्शप्रथमपुस्तके पाठः।
(२) रहितत्वरहितत्वमित्यादर्शपुस्तके पाठः।

वायुत्वं शरीरवृत्ति बाह्येन्द्रियवृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः। स्पर्शोपलम्भकमिन्द्रियं वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वाद् व्यजनपवनवदिति। विषयस्तु उपलभ्यमानस्पर्शाधिष्ठानभूतः प्राणस्तु शरीरादिप्रेरण[1]हेतुर्वायुः। इति वायुप्रकरणम्।

शरीरसाधने मनस्त्वे व्यभिचारो माभूदित्युत्पाद्यपदम्[2]। कथमस्य पृथिवीव्यतिरेक इति चेत् तत्र रूपासमानाधिकरणतया प्रतीयमानस्पर्शः क्वचिदाश्रितो गुणत्वाद् रूपवदिति भाष्यकाराः। पृथिव्याश्रित एव किं न स्यादिति चेत्। न। रूपासमानाधिकरणेत्युक्तत्वात्। ननु किमत्रानुपलम्भमात्रेण रूपासामानाधिकरण्यं योग्यानुपलम्भेन वा। न प्रथमः। शीतो वायुरुष्णो वायुरितिप्रतीयमानयोरुष्णशीतस्पर्शयोरपि रूपासमानाधिकरणत्वेन वायवीयत्वापत्तेः। सलिलतेजोगतरूपयोरनुद्भूतत्वेनायोग्यत्वादग्रहणमिति चेत्। न। अनुष्णाशीतस्पर्शाश्रयगतरूपस्याप्यनुद्भूतत्वेनाग्रहणस्य समानत्वादिति चेत्। उच्यते। त्वगिन्द्रियमपार्थिवं गन्धाग्राहकेन्द्रियत्वाच्चक्षुर्वत् नाप्यं रसाग्राहकेन्द्रियत्वात् न तैजसं रूपाग्राहकेन्द्रियत्वात् न नाभसं शब्दाग्राहकेन्द्रियत्वात् मनसोऽपि व्यतिरिच्यते बहिरिन्द्रियत्वात् तच्च ग्राह्यजातीयविशेषगुणवद् बहिरि-

(१) शरीरान्तःप्रेरणेति-मूलादर्शप्रथमपुस्तके पाठः।

(२) टीकाकारमते मूलादर्शप्रथमपुस्तके च उत्पाद्येन्द्रियवृत्तिजातित्वादिति मूलपाठः मुद्रितपुस्तके मूलादर्शद्वितीयपुस्तके च बाह्येन्द्रियवृत्तिजातित्वादिति मूलपाठो दृश्यते।

न्द्रियत्वात् । हन्त तर्हि शीतोष्णस्पर्शयोरपि तदधिकरणत्वमायातमिति चेत् । न । रूपरसाग्राहकेन्द्रियत्वेन तस्य निरस्तत्वादुभयाधिकरणत्वे सङ्करप्रसङ्गाच्च । एतेन स्पर्शस्य रूपासमानाधिकरणत्वं व्याख्यातम् । न चानुद्भूतत्वादग्रहः पार्थिवरूपस्पर्शयोः तुल्ययोगक्षेमत्वाच्छीतोष्णस्पर्शाश्रयगतरूपयोरनुद्भूतत्वेनाप्यग्रहोपपत्तेः । एतेनैतत् प्रत्युक्तम् । अयं स्पर्शोऽनुद्भूतरूपपृथिव्याश्रित उद्भूतरूपासमानाधिकरणानुष्णाशीतस्पर्शत्वाद् घ्राणस्पर्शवदिति । उद्भूतस्पर्शत्वाभावेन सोपाधिकत्वाच्चेति । किं च रूपासमानाधिकरणोऽयं स्पर्शो न पृथिवीस्पर्शः शीतस्पर्शसाक्षात्काराजनकत्वादात्मवदितिप्रमाणसद्भावाच्च । न चात्रानुष्णाशीतस्पर्शत्वाभाव उपाधिः घटस्पर्श एतदन्यपृथिवीसमवेतत्वरहितानुष्णाशीतस्पर्शान्यः स्पर्शत्वादन्यस्पर्शवदिति सिद्धे पृथिवीसमवेतत्वरहितानुष्णाशीतस्पर्शे साध्याव्यापकत्वादित्यास्तां विस्तरेण ।

**शब्दात्यन्ताभावानधिकरणं नभः । ( संयोगजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणं वा ।)[१] शब्दः क्वचिदाश्रितः गुणत्वाद्रूपवत् । न च शब्दस्य[२] स्पर्शवदाश्रयः स्पर्शासहकारित्वाद् बुद्धिवदिति । न च कालाद्याश्रयः बाह्येन्द्रियग्राह्यत्वाद् रूपवदिति परिशेषात्तत्सिद्धिः । इत्याकाशप्रकरणम् ।**

(१) ( ) एतच्चिह्नमध्यस्थः पाठो मूलादर्शप्रथमपुस्तके नास्ति ।
(२) शब्दस्येति मूलादर्शप्रथमपुस्तके नास्ति ।

परिशेषतस्तत्सिद्धिमुपक्रमते शब्द इत्यादिना । गुणत्वमसिद्धमिति चेत् । न । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्याचाक्षुषप्रत्यक्षत्वाद् गन्धवदिति वल्लभाचार्याः । तदेतत् स्पार्शनप्रत्यक्षे घटे कर्मणि चानैकान्तिकम् । अथाचाक्षुषपदेन चाक्षुषत्वानाधारत्वं विवक्षितं तथा च सामान्यवत्त्वे सत्यस्मदादिबाह्यप्रत्यक्षत्वे सति चाक्षुषत्वानाधारत्वं हेतुरिति चेत् । न । तथापि तिमिरोत्पन्नकर्मव्यक्तौ व्यभिचारस्य दुर्वारत्वात् । अथाचाक्षुषपदेन चाक्षुषवृत्तिजात्यनाधारत्वं विवक्षितं तथा च सामान्यवत्त्वे सत्यस्मदादिचाक्षुषवृत्तिजात्यनाधारत्वे सति बाह्यप्रत्यक्षत्वं हेतुरिति चेत् । न । अस्य प्रत्यक्षासमवेतनिरवयवेन्द्रियमात्रवेद्यान्यत्वोपाधिग्रस्तत्वादिति । तदप्यसत् ।

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥

तर्कश्चानुपदमाचार्यैरेव दर्शितः । यदि निरवयवद्रव्यं स्यादस्मत्प्रत्यक्षो न स्यादिति न च पक्षधर्मत्वासिद्धिः सत्त्वगुणत्वातिरिक्तत्वेन जातेर्विशेषणात् यदि वा सामान्यवत्त्वे सत्यचाक्षुषत्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वं हेतुरिति न किञ्चिदनुपपन्नम् । यद्वा अयं परमाणुः स्वातिरिक्तस्पर्शवत्त्वरहितज्ञानानाश्रयविशेषगुणवदन्यो मेयत्वात् । अयं वायुरेतदितरवायुत्वानधिकरणनीरूपबाह्येन्द्रियप्रत्यक्षगुणवदन्यो मेयत्वाद् घटवदित्याकाशसिद्धिरिति नवीनाः । स च नित्यो विभुश्च । मानाभावादसिद्धमेतदिति चेत् । मैवम् । अद्रव्यद्रव्यत्वानवयवद्रव्यत्वयोः सत्त्वात् । आत्मोपादानकत्वादुभयमप्यसिद्धमिति चेत् । न । अस्यैवासिद्धेः । उत्पत्तिश्रुतिबाधितत्वात् तत्सिद्धिरिति चेत् । न । तस्या मानान्तरविरोधेन स्वार्थे

प्रामाण्यानभ्युपगमादन्यथा आदित्यो यूप इत्यादीनामपि स्वार्थे प्रामाण्यप्रसङ्गाद् वायुश्चान्तरीक्षं चैतदमृतमिति प्रतिश्रुतिबाधितत्वाच्च । गगनादिकमनित्यमात्मान्यत्वे सति विभक्तत्वादित्यनुमानमनित्यत्वे प्रमाणमिति चेत् । मैवम् । व्यर्थविशेषणत्वात् । व्यभिचारपरिहारार्थत्वान्नैवमिति चेत् । न । व्यभिचारस्यैवासिद्धेः । आत्मनो नित्यत्वे ऽपि विभागित्वाद् व्यभिचारः सिद्ध इति चेत् । न । नित्यत्वविभागित्वयोरात्मन्यनभ्युपगमादभ्युपगमे वा तयोरात्मनि प्रमाणसिद्धत्वे द्वैतापत्तेः न हि स्वत एव कस्यचिद्विभागः सम्भवति नियतसावधितयैव तस्य प्रतीयमानत्वात् । नित्यत्वविभागित्वे ब्रह्मणि भ्रान्तिसिद्धे इति चेत् । न । भ्रान्तिः साधिका चेति व्याघातादात्मान्यत्वस्यैव वा प्रयोजकत्वे विशेष्यवैयर्थ्याच्च । आत्मनोऽप्यात्मान्यत्वस्य त्वयाभ्युपेतत्वाद् विभक्तत्वमुपादेयमेवेति चेत् । न । विशिष्टस्यापि मयाभ्युपेतत्वात् । आत्मत्वानधिकरणत्वमात्मान्यत्वमिति नैष दोष इति चेत् । न । तव व्यभिचारात् । आत्मन्यात्मत्वस्य त्वयानभ्युपगमादभ्युपगमे वा द्वैतापत्तेः आत्मत्वानधिकरणत्वस्यैव वा प्रयोजकत्वे विशेष्यवैयर्थ्यतादवस्थ्याच्च । अस्तु तर्हि आत्मत्वानधिकरणत्वमेव हेतुरिति चेत् । न । अविद्यास्तमये व्यभिचारात् । सोऽनित्य इति चेत् । न । मुक्तानामपि पुनः संसारित्वापत्तेः । नित्यत्वे ऽप्यात्मनो नातिरिक्त इति चेत् । मैवम् । अनतिरेके आतमनस्तुच्छत्वप्रसङ्गात् तस्य यावदात्मभावितया संसारोच्छेदप्रसङ्गाच्च । न ह्यविद्यास्तमये सत्यविद्या सम्भवति अत्ययस्य प्रतियोग्यसमानकालीनत्वेन व्याघातात् । न चाविद्यायामसत्यां तन्निबन्धनः संसारो घटते ऽकारणककार्यप्रसङ्गात् । अपि चास्तमयशब्देन

कोऽभावोऽभिधीयते न तावदविद्यात्यन्ताभावः तस्याविद्यासमानकालीनत्वेन संसारदशायामपि मुक्तिप्रसङ्गात्। कथमविद्यासमानकालीनत्वमिति चेदविद्याया जीवब्रह्मणोरन्यतराश्रितत्वाभ्युपगमे घटादावविद्यात्यन्ताभावस्य सुवचत्वादित्यवेहि। नान्योन्याभावः अत एव सत्यामप्यविद्यायामविद्यान्योन्याभावस्य सत्त्वात्। नापि प्रागभावः त्वयानभ्युपगमात् सर्वथा संसारोच्छेदप्रसङ्गाच्च अविद्यासम्बन्धाद्धि संसारः स च न शक्योऽभिधातुं प्रागेव मुक्तत्वादिति। तस्मादविद्याध्वंस एवाविद्यास्तमयशब्दार्थ इति वक्तव्यम्। ध्वंसश्च पूर्वकालासम्बन्धित्वे सत्युत्तरकालसम्बन्ध्यभाव इति स्थिते कथन्तरां चात्मानतिरेकः कथन्तरां च न व्यभिचार इति परिभावनीयम्। तर्हि तन्निवृत्त्यर्थं ××××××××(१)मेवेति चेत्। मैवं वोचः। विभागित्वस्यैव विविच्य वक्तव्यत्वात्। न तावद्विभागाधिकरणत्वं भागासिद्धताप्रसङ्गात् सलिलपरमाणुरूपादीनां पक्षकुक्षौ निक्षिप्तत्वात्। अथ विभक्तत्वं विकारित्वमिति यत् कल्पतरुणा व्याख्यातं तदेवास्माभिरप्यभ्युपेयत इति मन्यसे। तदपि न। तच्चेत् कार्यत्वमाश्रयासिद्धिप्रसङ्गात्। अन्यत्तु विविच्य वक्तुं न शक्यत इति यत्किञ्चिदेतत्। यदि भिन्नत्वं विभक्तत्वमभिधीयते तदा सैवाविद्यास्तमय एव व्यभिचारितेत्यलमतिप्रपञ्चेन। तथापि ब्रह्मैव निदानं कस्मान्न स्याद् विपक्षे बाधकाभावादिति चेत्। मैवं वोचः। विकल्पानुपपत्तेः। तन्मूर्त्तममूर्त्तं वा आद्यश्चेदपसिद्धान्तः द्वितीयस्तु कथं द्रव्योपादानतायामुपपद्यते न

(१) अत्रादर्शपुस्तके कतिपयपदानि लुप्तानि परन्तु पूर्वापरपर्यालोचनया हेतौ विभागित्वविशेषणादाने ग्रन्थकर्तुरभिप्रायो गम्यते।

हि द्रव्योपादानममूर्त्तं चेति सम्भवति द्रव्योपादानता वा कथं द्वितीय उपपद्यते न ह्यमूर्त्तं द्रव्योपादानं चेति सम्भवति व्याघातात् तस्मादन्यतरदभ्युपगच्छतावश्यमन्यतरद्वहेयमेव। तत्र द्रव्योपादानत्वं वाभ्युपगम्येतामूर्त्तं वा नोभयमप्यभ्युपगन्तुमुचितमपसिद्धान्तप्रसङ्गात्। तस्माद् द्रव्योपादानता हि मूर्त्ततया व्याप्ता सा चातो निवर्तमाना द्रव्योपादानतामादायैव निवर्तत इति प्रतिबन्धसिद्धिः। विजातीयारम्भप्रतिषेधाच्च सावयवत्वप्रसङ्गाच्च। न हि महद् द्रव्योपादानं निरवयवं चेति सम्भवति व्याघातादित्यास्तां विस्तरेण। तर्कसङ्ग्रहकारास्तु नभसोऽनिर्वचनीयतामेवमाचक्षते नाकाशत्वजातिमत्त्वमाकाशस्य लक्षणमनङ्गीकारात् नापि शब्दाधिकरणत्वम्।

धर्मसिद्धौ[१] कुतो धर्मस्तत्सिद्धौ स वृथा कथम्।
असिद्धेरन्यतः सिद्धेरुत्पत्त्यादेश्च सम्भवात्॥

सिद्धे हि देवदत्तादौ धर्मिणि विद्वत्त्वादिस्तद्धर्मो व्यपदिश्यते तथा प्रकृतेऽपि सिद्धे ह्याकाशस्वरूपे शब्दस्तस्य धर्मो वक्तव्यः तद्रूपस्यान्यतरसिद्धौ[२] च व्यर्थो धर्मोपन्यासः न चान्यत् तत्साधकमस्ति। गुणत्वेन शब्दस्य क्वचिदाश्रितत्वसिद्धौ तत्सिद्धिरिति चेत्। न। तस्याकाशत्वे नियमाभावात्। शब्दस्य स्वातन्त्र्ये क्वचिदाश्रितत्वव्याघातो हेत्वसिद्धिश्च पारतन्त्र्येऽपि परस्याकाशादेरर्थान्तरत्वे प्रकृतलक्षणातिव्यापकत्वमाकाशत्वे व्यक्तं परस्पराश्रयत्वं न च गुणत्वं शब्दस्येति वक्ष्यते। शब्दवतश्च शब्दवत्त्वे स्वाश्रयं तद्रहितस्य शब्दवत्त्वे विरुद्धत्वमिति यत्किञ्चि-

(१) धर्म्यसिद्धाविति सम्भाव्यते।
(२) अन्यतः सिद्धाविति सम्भाव्यते।

दैतदिति । तदेतत् प्रागुक्तरीत्यैव व्याख्यातम् । अपि चास्ति तावदबाधितः शब्दानुभव इति नासावपलापमर्हति न चासावनाश्रितः स्वसत्तां लभत इत्याश्रयेणापि भवितव्यं न च गुणत्वात् स्वातन्त्र्यमर्हति न चात्रैव विप्रतिपत्तिरिति वक्तुं युक्तमभिहितत्वात् प्रस्तावेऽभिधीयमानत्वाच्चेति कुतो धर्म्यसिद्धौ धर्मासिद्धिरित्यन्वेषणीयम् । नाप्यन्यतो धर्मिसिद्धौ धर्मसिद्धेः प्रयोजनशून्यता शङ्कनीया धर्मिसिद्धिवत्तत्सिद्धेरपि प्रयोजनवत्त्वावगमात् नो चेद्धर्मिसिद्धावप्येष पर्यनुयोगो दुर्वारः । नापि धर्मिसिद्धिरेव धर्मसिद्धिप्रयोजनं स्वस्यान्यतो व्यावृत्तेरपि प्रयोजनवत्त्वेनावगमात् । न ह्यनवगतप्रतियोग्यनुयोगिनो व्यावृत्तिबुद्धिर्भवत्यतिप्रसङ्गात् । अन्यतस्तु तदसिद्धिः सिद्धौ वा अन्यतोऽपि तत्सिद्धेरुक्तत्वात् । उत्पत्त्याद्यसिद्धिस्तु प्रागेवाभ्यधायि शब्दवतश्च शब्दाश्रयत्वमित्याद्यविद्यासम्बन्धवत्यविद्यासम्बन्धस्ततोऽन्यस्मिन् वेत्यनेन समानमित्यास्तां विस्तरेण । इत्याकाशसिद्धिः ॥

**अनियतपरत्वासमवायिसमवायित्वरहितपरत्वासमवायिसमवायिमूर्तत्वरहितः कालः ।**

कालं निरूपयितुमुपक्रमते । अनियतेति । रूपादावतिव्याप्तिपरिहारार्थमसमवायिसमवायीत्युक्तम् । आत्मादावतिव्याप्तिपरिहारार्थं परत्वेत्युक्तम् । दिशि व्यभिचारो माभूदित्यनियतेत्युक्तम् । अनियतपरत्वासमवायिसमवायित्वरहितः काल इत्युक्ते आत्मादावतिव्याप्तिस्तत्परिहारार्थं परत्वासमवायिसमवायीत्युक्तम् । तथापि पिण्डेऽतिव्याप्तिर्माभूदिति मूर्तत्वरहित इत्युक्तम् ।

**गगनमनियतपरत्वासमवायिसमवायित्वरहितमूर्तत्वरहितज्ञानसमवायित्वरहितद्रव्यान्यदमूर्तत्वादात्मवदिति तत्सिद्धिः। इति कालप्रकरणम्।**

तत्सत्त्वे प्रमाणमाह। **गगनमिति**। आत्मान्यत्वेन सिद्धसाधनता माभूदिति ज्ञानेत्याद्युक्तम्। मनोन्यत्वेन सिद्धसाधनता माभूदिति मूर्त्तत्वरहितेत्युक्तम्। दिगन्यत्वेन च सिद्धसाधनता माभूदित्यनियतपरत्वा(1)समवायिसमवायित्वरहितत्वे सतीत्युक्तम्। गगनान्यत्वेन दृष्टान्ते साध्यसिद्धिः। तर्कसङ्ग्रहकारास्त्वेवमाचक्षते।

परत्वादिधियां भावादन्यत्रापि न तद्गतिः।
विशेषणस्य चायोगान्न युक्ता कालकल्पना॥

परत्वापरत्वप्रत्ययनिमित्तं काल इत्ययुक्तम्। दिशि व्यभिचारात्। तत्कृतपरत्वादिव्यतिरिक्तपरत्वादिप्रत्ययनिमित्तत्वस्य विवक्षितत्वान्नैवमिति चेत्। न। धर्मादौ व्यभिचारात्। द्रव्यत्वे सतीति चेत्। न। ईश्वरे व्यभिचारात्। निमित्तासाधारण्यस्य विवक्षितत्वान्नैवमिति चेत्। न। यदि तत्रैव तस्य तथात्वं सर्वोत्पत्तिमन्निमित्तत्वाभ्युपगमविरोधः तस्यैव तत्र निमित्तत्वे चादृष्टादेस्तन्निमित्तत्वाभ्युपगमविरोध इति। तदेतत् समयमर्यादानभिज्ञस्य भाषितमिति वृद्धाः। तथाहि नियतपरत्वापरत्वप्रत्ययासाधारणनिमित्तत्वस्य काललक्षणत्वात्। न चैवमदृष्टादिषु व्यभिचारः। असाधारण्येनैव निरासात्। अत्रासा-

(1) नित्यपरत्वेत्यादर्शपुस्तके पाठः।

धारणनिमित्तत्वेऽन्यत्र च साधारणनिमित्तत्वे न सर्वोत्पत्तिमन्निमित्तत्वाभ्युपगमविरोधः । असाधारण्यं च तज्जनकतरणिपरिस्पन्दोपनायकत्वम् । न चैतदन्यत्र सम्भवति पृथिव्यादेस्तरणिपिण्डाभ्यामसंसर्गादेव निरासाद् विशेषगुणवत्त्वेन चाकाशादीनां निरासात् । न चाव्यापकत्वमुपाधिः तर्कानुगृहीतत्वात् । यदि च गगनमात्मा वान्यधर्मेणान्यमवच्छिन्द्यात् काश्मीरवर्तिना कुङ्कुमरागेण कर्णाटचक्रवर्त्तिललनाकरकमलमप्यवच्छिन्द्यात् । न चायं काले पर्यनुयोगः तस्यासिद्धावाश्रयासिद्धेः सिद्धौ वा नियतपरधर्मोपसङ्क्रामकत्वेनैव सिद्धेर्धर्मिग्राहकप्रमाणबाधः । दिगेवास्त्विति चेत् । न । तस्यासिद्धेः सिद्धौ वा तदहेतुत्वेनैव सिद्धेर्धर्मिग्राहकप्रमाणबाध इत्यस्त्वेतत् । एतेन यौगपद्यादिप्रत्ययनिमित्तता व्याख्याता । यदप्यत्र तर्कसङ्ग्रहकारैरभिहितम् ।

यौगपद्यादिबुद्धीनां न च कालनिमित्तता ।
पर्यायत्वादिदोषाच्च तत्क्लृप्तिरनिबन्धना ॥

यौगपद्यादिप्रत्ययानामन्यतमं निमित्तं काल इत्यपि न उक्तयुक्तेरत्रापि समानत्वात् । किं चैतेषामेकार्थत्वमनेकार्थत्वं वा । नाद्यः । लक्षणभेदायोगाद् व्यवहारविरोधाच्च । न द्वितीयः । लक्षणानां प्रत्येकमव्याप्तेः एतेषां च कालातिरिक्तार्थत्वे तल्लक्षणत्वायोगात् कालार्थत्वे च पर्यायत्वापातात् । तद्भेदार्थत्वे च तन्मात्रलक्षणस्य वक्तव्यत्वादिति । तदपि न । अदृष्टादिव्यभिचारस्यासाधारणपदेनैव निरस्तत्वादसाधारण्यस्य च निरूपितत्वाद् विकल्पेषु चानेकार्थत्वाभ्युपगमात् । न च प्रत्येकमव्याप्तिः यौगपद्यादिनिमित्तत्वेनैकस्यैवाभ्युपगमात् । एतेषां चेत्यादि तु विकल्पग्रासादयुक्तम् । किमिदं कालातिरिक्तार्थत्वं काला-

तिरिक्ताभिधेयत्वं वा कालातिरिक्तलक्षणत्वं वा कालातिरिक्तस्यैव लक्षणत्वं वा। नाद्यौ। कालातिरिक्ताभिधेयस्य कालातिरिक्तस्यापि लक्षणस्य द्रव्यत्वादेः काललक्षणत्वेन वृद्धैरभ्युपगमात्। न तृतीयः। काललक्षणत्वस्वीकारात्। न च कालार्थत्वे पर्यायत्वं सोपाधिसमयालम्बनत्वस्वीकारात्। वादीन्द्रास्त्वेवमाहुः। कालार्थत्वं त्वनाशङ्कनीयमेव गुणत्वेनैवैषामभ्युपगमात् परत्वापरत्ववत् तथाहि गुणशून्यत्वादद्रव्यत्वमेषां प्रसिद्धम्। नापि कर्माणि संयोगविभागाजनकत्वात्। न सामान्यविशेषसमवायाः कार्यत्वात् सत्तया तुल्यव्यक्तिकतापत्तेश्च। नाभावः परत्वादिवद्भावतया भासनात्। यौगपद्यमेककालता अयौगपद्यं भिन्नकालता चिरत्वं बहुकालता क्षिप्रत्वमल्पकालतेति कालविशेषा एव यौगपद्यादय इति चेत्। न। कालात्मत्वे भेदानुपपत्तेः। घटाद्युपाधिनिबन्धनाकाशभेदवत् सूर्यगत्युपाधिनिबन्धनो भेद इति चेत्। न। सूर्यगतीनां सूर्यनिष्ठत्वाद् यौगपद्यादीनां च देवदत्तादिनिष्ठत्वात् परत्वापरत्ववत्। अन्यथा व्यवहितसूर्यगत्यवच्छिन्नत्वं परत्वमिति परत्वापरत्वयोरप्युच्छेदापत्तेः। परत्वादिविशिष्टदेवदत्तादिप्रत्ययपूर्वक्षणे ऽननुसंहिताः देवदत्तादिसंयोगसमवायरहिताश्च सूर्यगतयः कथं देवदत्तादिविषया इति चेत् तुल्यं यौगपद्यादिविशिष्टप्रत्ययेष्वपि। नीलो देवदत्त इत्यत्र नीलत्वमिव सूर्यगतयोऽपि देवदत्तादीन् विशिंषन्तीति चेत्। न। नीलत्वस्य नीलगुणविशेषणत्वान्नीलस्य च द्रव्य वशेषणत्वात्। कथं तर्हि देवदत्तो नील इति चेत् नीलनीलिमसमारोपादिति ब्रूमः। न चैवं प्रकृते ऽपि यौगपद्यादिप्रत्ययानां बाधाभावेनाभ्रान्तित्वादन्यथा परत्वापरत्वप्रत्यये ऽपि भ्रान्तित्वापत्तेः। यौगपद्यादिप्रत्यय-

पूर्वक्षणे सूर्यगतयोऽनुसन्धीयन्त इति चेत्। न। गृहमध्यवर्तिनामिन्द्रियसन्निकर्षाभावेन प्रत्यक्षानुदयात्। लिङ्गाभावान्नानुमा। नापि स्मृतिः पूर्वानुभवकारणाभावादन्यथा परत्वापरत्वयोरप्युच्छेदापत्तेः। तस्माद्यौगपद्यादयो गुणाः द्रव्यकर्मसामान्यविशेषसमवायान्यभावत्वाद् द्रव्यत्वकर्मत्वानधिकरणत्वे सति कार्यभावत्वाद् रसवत्। न चैवं चतुर्विंशतित्वव्याघातोऽपरत्वे ऽन्तर्भावात् न परत्वमपरत्वमिति पर्युदासात् तेन च परत्वसदृशानामेव ग्रहणात्। किं सादृश्यं कालपिण्डसंयोगाद्यसमवायिकारणजन्यत्वमिति चेद् मूकीभव। यद्येकः कालः कथं तर्हि यौगपद्यादिना कालनानात्वमिति चेद् यौगपद्यादिकार्यभेदजनकतयोपचारादिति गृहाण। आह च भगवान् सूत्रकारः। कार्यविशेषेण नानात्वमिति। त एते परत्वादयः कालमनुमापयन्तीति भाष्यकाराः। तर्कसङ्ग्रहकारास्तु।

विकल्पनामयुक्तत्वादयुक्तत्वाद्विशेषणम्।
यतो न कल्प्यं कल्पेत कथमस्यानुमेयता॥

न तावत् समवायित्वेनानुमापकत्वम्। अनात्मत्वात्। नासमवायित्वेन तस्य द्रव्यत्वात्। निमित्तत्वपक्षेऽपि न विषयतया नित्यानुमेयत्वेनैन्द्रियकव्यवसायविषयत्वायोगात्। नाप्यविषयतया अदृष्टातिरिक्तकालासिद्धिप्रसङ्गादित्याहुः। तदेतदपरिशीलिततर्कवृत्तान्तभाषितमिति वृद्धाः। स्वासमवायिसमवायिद्वारा कालानुमापकत्वस्य तैरिष्टत्वात्। तथा च वार्त्तिकम्। परत्वादयोऽसमवायिकारणजन्या भावकार्यत्वाद् घटवत्। रूपादीनां च व्यभिचारात् संयोगासमवायिकारणका इति ज्ञायते पृथिव्यादिसंयोगस्यानुपपन्नत्वादिति परिशेषतः कालसिद्धिरिति। विस्तरस्त्वन्यत्रेत्युपरम्यते। कालः॥

**अनियतपरत्वासमवायिसमवायिनी मूर्तत्वरहिता दिक् ।**

दिशं लक्षयति । अनियतेति । रूपादावतिव्याप्तिपरिहाराय परत्वेत्यादि । कालं निवर्तयितुमनियतेति ।

**कालो विशेषगुणरहितामूर्तद्रव्यान्यः मूर्तत्वरहितत्वादाकाशादिवदिति तत्सिद्धिः । इति दिक्प्रकरणम् ।**

तत्र प्रमाणमाह । काल इति । परिकरशुद्धिस्तु कालवदूहनीयेत्यास्तां विस्तरेण ॥

**ज्ञानात्यन्ताभावरहित आत्मा ।** अव्याप्तिपरिहारार्थं विशेषणम् । **परत्वासमवायिसमवायित्वरहितशब्दासमानाधिकरणकार्याश्रयो वा ।** दिक्कालसर्वमूर्त्तव्यावर्तनाय प्रथमम् । आकाशं व्यावर्तयितुं द्वितीयम् ।

**ज्ञानं क्वचिदाश्रितं गुणत्वाद्रूपवदिति तत्सिद्धिः । न च शरीरेन्द्रियाणां तदाश्रयत्वं कार्यत्वाद् घटवदिति ।**

परिशेषतस्तत्सिद्धिमुपक्रमते । ज्ञानमित्यादिना ।

**कार्यस्य तदाश्रयत्वे स्वर्गाद्यर्थितया ज्योतिष्टोमाद्युपदेशो न स्यात् । न च मनसस्तदाश्रयत्वं करणत्वाच्चक्षुर्वत् ।**

शरीराश्रयत्वे बाधकाभावमाशङ्क्यानुकूलतर्कं दर्शयति । कार्यस्येति । ज्योतिष्टोमादिकर्तुरत्रैव विनष्टत्वात् स्वर्गफलोपभोग्यत्वानुपपत्तेरिति भावः । अन्योपभोग्यं स्यादिति चेत् कोऽसावन्य इति निरुच्य वक्तव्यम् । देह एव चेत् सोऽपि ज्योतिष्टोमादिकर्तृत्वेनाभिमतश्चेदभिधीयेत उक्तदोषान्न मुच्यसे । ज्योतिष्टोमादिकर्तृत्वेनाभिमतादन्य एवेति चेत् । न । तस्य स्वर्गफलोपभोग्यत्वस्य शङ्कितुमप्यशक्यत्वात् ज्योतिष्टोमादिजन्यस्यातिशयस्य तत्राभावादतिशये च स्वसमानाधिकरणस्यैवात्मविशेषगुणस्य जनकत्वं प्रमाणसिद्धं नापलपितुं शक्यं न हि चैत्रानुष्ठिताग्निहोत्रजनितमपूर्वं चैत्रसमवेतं मैत्रं स्वर्गफलभागिनं कर्तुमुत्सहते । पुत्रेष्टिपितृयज्ञवदेतत् स्यात् । न । तत्राप्यतिशयस्य पुत्रादिसमवेतत्वेनैवाभ्युपगमाद् व्युत्पादितं चैतदभियुक्तैस्तत्रतत्र । अथ देहातिरिक्त इति मतं तस्मिन्नपि मते कार्यो वा नित्यो वाभ्युपगम्यते प्रथमश्चेदुक्तदोषान्न मुच्यसे नित्यत्वे ऽपि ज्योतिष्टोमादिकर्तुरन्यः स एव वा । न प्रथमः । प्रागुक्तदोषात् स एव चेदायातोऽसि मार्गेण । आत्मैक्यमसहमानो द्वैविध्यमाह । स द्विविध ईशानीशभेदा[1]दिति ।

**अङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवदितीश्वरसिद्धिः ।**

नन्वीशे किं प्रमाणम् । प्रश्न एव तावद् न ह्ययमीशमनभ्युपगच्छता कर्तुं शक्यः न ह्ययं प्रमाणमात्रे किन्त्वीशत्वावच्छिन्ने प्रमाणे न च विशेषणाप्रतीतौ विशिष्टं शक्यं

(१) ईश्वरानीश्वरभेदादिति मुद्रितलक्षणावल्यां प्रथमद्वितीयमूलादर्शपुस्तकयोश्च पाठः ।

प्रतिपत्तुम्। न चाप्रतीते विवक्षापूर्वकवाक्यप्रयोग उपपद्यते प्रतीतौ च प्रमापक्षे प्रश्नानर्थक्यम्। सामान्यतः प्रतीतं न विशेषत इति चेत्। न। तत एव तत्सिद्धेः। भ्रान्तिप्रतीतमिति चेत्। न। तस्याप्यभ्रान्तिपूर्वकत्वाद् भ्रान्तिविषये प्रमाणानुपन्यासाच्च। परवाक्यात् प्रतीतमिति चेत्। न। तस्यागृहीतसमयत्वेनाप्रतिपादकत्वात् प्रतिपादकत्वे ऽपि वा सा प्रमा न वा प्रमा चेत् कुतस्तर्हि तदेव तत्र प्रमाणभावं न भजते। अप्रमा चेत् तर्हि अन्यथानुपपत्तिरेवास्तु तत्र प्रमाणमारोप्यस्यात्यन्तासत्त्वे आरोपानुपपत्तेरित्युक्तत्वात्। अथ प्रमात्वाप्रमात्वसन्देहात् प्रश्नः। न। एवं ब्रुवतः ××× [१] भ्युपगमापत्तेः। अथ जिज्ञासोः प्रश्नः। न। अनवसरदुःस्थत्वात्। इत्यस्त्वेतदिति स्थित एव दूषणे प्रमाणमाह। अङ्कुरादिकमिति। न चोपाध्यादिशङ्का कार्यकारणभावभङ्गस्य विपक्षबाधकस्य सत्त्वात् निरुपाधिकस्य च साध्यपरित्यागे स्वभावपरित्यागप्रसङ्गात्।

**द्वितीयस्त्वहंप्रत्ययवेद्यः।**

अनीशे प्रमाणमाह। **द्वितीय** इति।

**स च नाना व्यवस्थावचनादिति। इत्यात्मप्रकरणम्।**

नानात्वं प्रतिजानीते। **स चेति**। न च भेदाभावः भेदतदभावयोर्भिन्नत्वे भेदस्वीकारापत्तेः। अभिन्नत्वे ऽपि कथं भेदाभावः भेदाभावस्वीकारे भेदस्वीकारात्। न चाभि-

(१) बचादर्शपुस्तके ऽत्रत्यं लुप्तप्रायं (स्वभङ्ग) इति सम्भाव्यते।

न्त्वमपि भेदाभाव इत्यत्र भेदतदभावयोः सम्बन्धप्रतीतेः । न च राहोः शिर वदु[१]पचरितत्वं मुख्ये बाधकाभावात् । न चानिर्वचनीयत्वं भेदस्य तत्र प्रमाणाभावात्। सत्त्वे भ्रान्तिबाधावसत्त्वे ख्यातिबाधावनुपपद्यमानावनिर्वचनीयत्वं साधयत इति चेत् । नैतत्। विकल्पानुपपत्तेः । किं यत्र सत्त्वं तत्र भ्रान्तिबाधावनुपपन्नावित्यभिधीयते अन्यत्र वा । न प्रथमः । तत्र भ्रान्तिबाधयोरस्माभिरप्यनङ्गीकारात् । द्वितीये तु भ्रान्तिबाधावुपपन्नावेव न हि जातुचिदतद्वति तद्वत्त्वप्रतीतिरभ्रान्तिः तत्र च तदुत्तरकालभाविन्यतद्वत्त्वप्रतीतिर्वा । को ह्यस्वस्यात्मनोऽन्यः प्रमाणशून्यमभ्युपगच्छेत्। नाप्यसतः ख्यात्यनुपपत्तिः असतोऽपि शशशृङ्गादेः प्रतीयमानत्वात् । यदसत् तत् साक्षान्न प्रतीयत इति विवक्षितमिति चेत्। न। असतोऽपि शशशृङ्गादेः स्वप्ने साक्षात्कारोपलम्भात् शृङ्गवन्तः शशा धावन्तीति स्वप्नोपलम्भात् । नापि सदसद्विलक्षणत्वं भेदस्य अन्यतरनिषेधस्यान्यतरविधिनान्तरीयकतया परस्परविरुद्धयोः सदसत्त्वयोर्निषेधस्यैकत्रानुपपत्तेः । यथा चाहुः ।

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकतापि विरुद्धानामुक्तिमात्रविरोधतः[२] ॥ इति ।

नैकतरनिषेधोऽन्यतरविधिनान्तरीयकोऽनिर्वचनीयवादिनं प्रति व्याप्त्यसिद्धेरिति चेत् । न । न भाव इति निषेधमात्रेणाभावविधेर्नाभाव इति निषेधमात्रेण भावविधेरध्यक्षसिद्धतया दुरपह्नवत्वात् । मास्त्वर्थापत्तिः ।

(१) शिर इति वदिति सम्भाव्यते ।
(२) न्यायकुसुमाञ्जलौ तृतीयस्तबके ८ कारिका ।

अनुमानं तु भविष्यति विमतमनिर्वचनीयं बाध्यत्वाद् यन्नैवं तन्नैवं यथात्मेति चेत्। नैतदपि। बाध्यत्वहेतोरेव बाध्यत्वेनानिर्वचनीयत्वे भेदानिर्वचनीयत्वासिद्धेः निर्वचनीयद्वैतापत्तेः अनिर्वचनीयत्वाप्रसिद्धावप्रसिद्धविशेषणत्वापत्तेश्च।

एकालम्बनसंसर्गनिषेधे सदसत्त्वयोः।

धर्मत्वाद् रूपरसवत् सिद्धानिर्वचनीयता॥ इति

नाप्रसिद्धविशेषणः पक्ष इति चेत्। न। अभिधेयत्वादौ व्यभिचारात्। यस्तु अभिधेयत्वादीनां पक्षतुल्यत्वं मनुते। तं प्रत्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्व एवानैकान्तिकतोद्भावनीया तस्य धर्मत्वे ऽप्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वाभावात्। यद्यत्रापि धर्मत्वेनैकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वमनुमिनुयात् तर्हि यन्निष्ठात्यन्ताभावप्रतियोग्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रानैकान्तिकत्वमुद्भावनीयम्। न च तत्राप्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वं साधयितुं शक्यमेकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वसाधनविरोधापत्तेः। न च तेन धर्मेणैव भवितव्यमिति नायं नियम इति वाच्यम्। सर्वद्रव्याणामत्यन्ताभावप्रतियोगित्वस्याध्यक्षादिप्रमाणसिद्धत्वात्। यस्तु एकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वधर्मे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वमेवेति मनुते तं प्रति सिद्धसाधनत्वमुद्भावनीयम्। नन्वेकधर्मिनिष्ठोभयाप्रतियोगिकात्यन्ताभावद्वयप्रतियोगित्वमेव तत्त्वमिति न सिद्धसाधनतेति चेत्। न। एकस्मिन् बहुषु च व्यभिचारात्। धर्मद्वयत्वमेव धर्मत्वमिति न व्यभिचार इति चेत्। न। गोत्वतदभावयोः स्थितस्य तस्य निवृत्तेरशक्यत्वात्। न च पर-

स्परविरोधित्वरहितत्वेन हेतुविशेषणे ऽपि निस्तारः पक्षधर्मत्वासिद्धिप्रसङ्गात् । एतद्यतिरिक्तविशेषणात् तत्सिद्धिरिति चेत् । न । गोत्वाश्वत्वाभावयोर्व्यतिरेकासिद्धिप्रसङ्गात् । नाप्येतद्यतिरिक्तपरस्परविरोधित्वरहिताभावत्वरहितधर्मद्वयत्वादिति हेतुः सत्त्वं सत्त्वाभिन्नत्वे सत्यसत्त्वात्यन्ताभावसमानाधिकरणात्यन्ताभावप्रतियोगि न भवति धर्मत्वाद् धर्मान्तरवत् । असत्त्वं वा असत्त्वाभिन्नत्वे सति सत्त्वात्यन्ताभावसमानाधिकरणात्यन्ताभावप्रतियोगि न भवति धर्मत्वाद् धर्मान्तरवदितिसत्प्रतिपक्षग्रस्तत्वाद्धेत्वसिद्धश्च । न चाद्वैतश्रुतिर्बाधिका द्वैतश्रुतिपर्यालोचनया तद्बाध्यत्वस्यापि सम्भवात् । न चोपचरितार्थत्वमस्याः विपर्ययस्यापि वक्तुं शक्यत्वादुपजीव्यविरोधेन दुर्बलत्वाच्च । न च स्वतः प्रामाण्यमुपपद्यत इत्यास्तां विस्तरेण । तथाप्यात्मभेदे किं प्रमाणमिति चेत् तत्राह । **व्यवस्थावचनादिति** । आत्मा ॥

**स्पर्शरहितत्वे सति मूर्त्तं मनः । विशेषगुणात्यन्ताभावाधिकरणं मूर्त्तं मनः**(१) । कालादावतिव्याप्तिपरिहारार्थत्वेन मूर्त्तत्वम् । **पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितगुणत्वव्याप्यजातिमान् विशेषगुणः** । कथमनेन परममहत्परिमाणं व्यवच्छिद्यत इति परिभावनीयम् । महत्त्वस्य परिमाणत्वस्य वा गुणत्वव्याप्यत्वे ऽपि पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिपरिमाणवृत्तित्वेन तदवृत्तित्वानुपपत्तेः । अथ पर-

(१) विशेषगुणात्यन्ताभावाधिकरणत्वे सति मूर्त्तं वा—इति छिन्नलक्षणावलीपुस्तके पाठः ।

मसहत्परिमाणत्वाधिकरणत्वेन लक्षणयोगः कस्मान्न स्यात्। यद्यपि परममहत्त्वस्य पृथिवीत्वरहितवृत्तिवृत्तित्वेन तद्वृत्तित्वमनुपपन्नं तथापि पृथिवीवृत्तित्वे सति यत् पृथिवीत्वरहितवृत्ति तदवृत्तित्वमुपपद्यत एव परममहत्परिमाणस्य पृथिव्यपृथिवीनिष्ठत्वानुपपत्तेः। अथ गुणत्वव्याप्यत्वेन गुणत्वसाक्षाद्व्याप्यत्वस्य विवक्षितत्वात् परममहत्त्वस्य च गुणत्वसाक्षाद्व्याप्यत्वाभावान्नातिव्याप्तिरिति चेत् कथं तर्हि सांसिद्धिकद्रवत्वे भावनायां च नाव्याप्तिः। न च द्रवत्वसंस्कारत्वाभ्यां लक्षणयोगस्तत्र शङ्कनीयः। द्रवत्वसंस्कारत्वयोः पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वात्। अथ सांसिद्धिकद्रवत्वभावनात्वाभ्यां लक्षणयोग इति मन्यसे। तन्न। तयोर्गुणत्वसाक्षाद्व्याप्यत्वाभावात्। अथ पृथिवीवृत्तयश्च पृथिवीत्वरहितवृत्तयश्च पृथिवीवृत्तिपृथिवीत्वरहितवृत्तयः तद्वृत्तित्वरहितत्वस्याभ्युपेतत्वात् सांसिद्धिकद्रवत्वभावनात्वयोश्च पृथिवीत्वरहितवृत्तिवृत्तित्वरहितत्वाभावे ऽपि पृथिवीवृत्तिवृत्तित्वरहितत्वेन पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितत्वाद् गुणत्वव्याप्यत्वाच्च न सांसिद्धिकद्रवत्वे भावनायां चाव्याप्तिरिति मन्यसे। तर्हि परममहत्परिमाणत्वस्यापि पृथिवीत्वरहितवृत्तिवृत्तित्वरहितत्वाभावे ऽपि पृथिवीवृत्तिवृत्तित्वरहितत्वेन पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितत्वाद् गुणत्वव्याप्यत्वाच्च कुतो नातिव्याप्तिरित्यन्वेषणीयम्। अथ परममहत्परिमाणत्वं न जातिरिति मन्यसे। तन्न। गोत्वादिना तुल्यन्यायत्वादित्यास्तां विस्तरेण। लक्षणं तु सर्वान्योन्याभावसमानाधिकरणसमवेतत्वानधिकरणघ्राणग्राह्यजातिमान् विशेषगुण इति। न च रूपादावव्याप्तिः। रूपं सर्वान्योन्या-

भावसमानाधिकरणसमवेतत्वानधिकरणघ्राणग्राह्यजातिमान् रूपत्वरहितगन्धान्यत्वरहितत्वाद् गन्धवदितिप्रमाणसिद्धत्वात् । एवं रसादावव्याप्तिः परिहरणीया । तथा मूर्त्तत्वासिद्ध्या लक्षणासम्भव इति चेत् । मैवं वोचः । देवदत्तरूपसाक्षात्कारो देवदत्तचक्षुर्व्यतिरिक्तमूर्त्तेन्द्रियजन्यो रूपसाक्षात्कारत्वाद् यज्ञदत्तरूपसाक्षात्कारवदितिप्रमाणसिद्धत्वात् । यद्वा एतद्देवदत्तरूपसाक्षात्कारजनकं देवदत्तचक्षुरेतद्देवदत्तरूपसाक्षात्कारजनकदेवदत्तमूर्त्तेन्द्रियभि[१](न्नं चक्षुष्ट्वाद् यज्ञदत्तचक्षुर्वदिति । वादिवागीश्वरास्तु संसारी मूर्त्तसंयोगासमवायिकारणकविशेषगुणाश्रयो नित्यत्वे सत्यनित्यविशेषगुणवत्त्वात् पार्थिवद्[२] इत्याहुः । न चोपाध्यादिशङ्का अनुकूलतर्कसत्त्वात् । विस्तरस्त्वन्यत्रेत्युपरम्यते ।

आत्मप्रतीतिः करणसाध्या अपरोक्षप्रतीतित्वाद् रूपोपलब्धिवदिति तत्सिद्धिः । इति मनःप्रकरणम् । इति द्रव्यपदार्थः ॥

संयोगाजन्यसंयोगासमवायिसमवेतत्वरहितसंयोगासंयोगसमवेतवान् गुणः । संयोगाजन्यो यः संयोगः तदसमवायिनि समवेतत्वरहितमिति द्रष्टव्यं न तु संयोगाजन्यं यत् संयोगासमवायीति भ्रमितव्यम् । संयोगवृत्त्यवृत्तिभ्यां व्याघातापत्तेः । कर्मव्यावृत्त्यर्थं प्रथमम् । द्रव्यव्यावृत्त्यर्थं संयोगेति । विभागाजन्य-

(१) आदर्शपुस्तके ( ) एतच्चिह्नमध्यस्थपाठः [ ] एतच्चिह्नमध्यस्थपाठानन्तरं पश्चाल्लिखितः । परं तु पृष्ठावैपरीत्येन ग्रथितं पुस्तकमिति अर्थासङ्गतिदर्शनादनुमीयते ।

(२) पार्थिवपरमाणुवदिति पाठः सम्भाव्यते ।

**विभागासमवायिसमवेतत्वरहितविभागाविभागसमवेतवांश्चेति**[1] । एतदपि पूर्ववत् ।

**रूपं संयोगाजन्यसंयोगासमवायिसमवेतत्वरहित**[2]**संयोगसमवेतवद् रूपत्वरहितसंयोगान्यत्वरहितत्वात् संयोगवदिति गुणत्वसिद्धिः । चतुर्विंशतिप्रकारो रूपादिभेदेन ।**

गुणत्वं साधयति । रूपमिति । सामान्यगुणत्वेन दृष्टान्ते साध्यप्रसिद्धिः यदात्र संयोगपदं नास्ति तदा संयोगत्वेनैव साध्यप्रसिद्धिर्द्रष्टव्या ॥

**रसासमवेतनीलपीतसमवेतवद् रूपम्** । गुणत्वाधिकरणे रसादावतिव्याप्तिपरिहाराय रसासमवेतत्वे सतीत्युक्तम् । **गुणत्वे सति चक्षुर्मात्रग्राह्यं**[3] **रूपम्** । गुणत्वं चात्र विशेषगुणत्वमभिमतमन्यथा कालकृतपरत्वादावतिव्याप्तिः स्यात् । चक्षुर्मात्रग्राह्यमित्यत ऊर्द्ध्वं जातीयपदं द्रष्टव्यमन्यथा परमाणुरूपादावव्याप्तिप्रसङ्गात् ।

**तत् सप्तप्रकारम् । न च रूपग्राहकं चक्षुश्चक्षुर्मात्रग्राह्यं रूपमित्यन्योन्याश्रयत्वं नयनगोलकाधिष्ठानत्वेन चक्षुर्निरूपणात् ।**

रसासमवेतनीलपीतसमवेतवद् रूपमित्युक्तं तत्र रसासमवेतनीलपीतसमवेता ) [ सिद्धिमाशङ्क्य तत् साधयति ।

(१) समवेतवान् गुण इति मुद्रितलक्षणावलीपुस्तके पाठः ।

(२) संयोगसमवेतत्वरहितेत्यधिको मुद्रितपुस्तके मूलादर्शद्वितीयपुस्तके च पाठः ।

(३) ग्राह्यं वेति मुद्रितलक्षणावलीपुस्तके पाठः ।

शुक्ल इति। शुक्लो रसासमवेतनीलसमवेतवान् नीलत्वरहितशुक्लान्यत्वरहितत्वान्नीलवत् । इति रूपत्वसिद्धिः । तत्र च।

नीलाश्रितत्वस्येष्टत्वात् शुक्लत्वं विनिवार्यते ।
गुणत्वविनिवृत्तिस्तु रसनिष्ठत्ववारणात् ॥ १ ॥
शुक्लान्यत्वानाश्रयत्वं हेतुश्चेदभिधीयते ।
असाधारणता हेतोस्तदाशक्यनिवारणा ॥ २ ॥
नीलत्वराहितत्वं हि तस्मादभ्युपगम्यते ।
सपक्षे सत्त्वसिद्ध्यर्थं नैतदेवानुमन्यते ॥ ३ ॥

नीलत्वं साधयति। नील इति। नीलः स्वमात्रसमवेतवान् स्वमात्रसमवेतवत्त्वरहितघटान्यत्वरहितत्वाद्[1] घटवत् । इति नीलत्वजातिसिद्धिः ।

स्वमात्रसमवेतत्वरहितत्वं विशेषणम् ।
पक्षीकृतं हेतुशून्यं माभूदित्यभ्युपेयते ॥ १ ॥
घटान्यत्वानाश्रयत्वमबाधायाभिधीयते ।
स्वमात्रसमवेतं हि घटादावभ्युपेयते ॥ २ ॥

अत्र च ।

साध्यसाधननिष्ठेन स्व[2]शब्देनाभिधीयते ।
घटः किं स्विदयं नील उताभ्यामन्य उच्यते ॥ ३ ॥
बाधप्रसङ्गात् प्रथमश्चरीकर्ति न चातुरीम् ।
न हि तन्मात्रनिष्ठस्य युज्यते नीलनिष्ठता ॥ ४ ॥

(१) नीलं स्वमात्रसमवेतवत् स्वमात्रसमवेतत्वरहितनीलान्यत्वरहितत्वादिति मुद्रितलक्षणावलीपुस्तके पाठः ।
(२) आदर्शपुस्तके स्वपदं नास्ति ।

नीलाश्रयत्वे तन्मात्रनिष्ठता या न युज्यते ।
यदि नीलोऽभिधीयेत साध्यशून्यं निदर्शनम् ॥ ५ ॥
नीलमात्राश्रये यस्मान्नेष्यते घटनिष्ठता ।
निदर्शनगता हेतुशून्यताप्यनिवारणा ॥ ६ ॥
यदि त्यक्त्वैतदुभयमन्य एवाभिधीयते ।
नीलादावुक्तदोषाः स्युः सर्वे ऽशक्यप्रतिक्रियाः॥७॥
आश्रयासिद्धता हेतोरधिकात्र प्रसज्यते ।]
नीलत्वसाधनं तस्मान्नोपपन्नमिति स्थितम् ॥ ८ ॥

तदेतत् परिजिहीर्षुभिराचार्यैः स्वशब्दार्थः प्रदर्श्यते। **नीलत्वरहितघटत्वात्यन्ताभावरहितः स्वशब्दार्थ** इत्यनेन । रूपम् ॥

**गुणत्वे सति रसनग्राह्यो रसः । स च षोढा माधुर्यादिभेदेन । क्षीरेक्षुगुडसलिलेषु माधुर्यादिसाम्ये ऽप्यवान्तरजातिभेदस्य विद्यमानत्वाद् विशेषगुणत्वसिद्धिः ।**

रसो निगदव्याख्यातः ॥

**गुणत्वे सति घ्राणग्राह्यो गन्धः।** गन्धत्वे ऽतिव्याप्तिर्माभूदिति गुणत्वग्रहणम् । जलादौ गन्धोपलब्धेर्नासौ विशेषगुण इत्याशङ्क्य तत्र तत्प्रतीत्यौपचारिकत्वेन परिहरति। **जलादावौपाधिकी गन्धप्रतीतिर्न स्वभावत इति विशेषगुणत्वसिद्धिरिति ।** मुख्ये बाधकप्रमाणाभावमाशङ्क्य बाधकं प्रमाणमुपन्यस्यति। **जलं न गन्धाधिकरणमपाकजरूपाधिक-**

रणत्वात्[1] तेजोवदिति । न पाकजरूपाधिकरणम-पाकजरूपाधिकरणं पाकजरूपानधिकरणत्वादित्यर्थः । अत्र च पाकजरूपसमानाधिकरणद्रव्यत्वावान्तरजाति-रहितत्वादिति हेत्वर्थो विवक्षितः तथा च न घटादौ व्यभिचारः। वायावनैकान्तिकमेतदिति चेत् तत्राह। वायोः पक्षतुल्यत्वान्न तत्र[2] व्यभिचार इति ॥

गुणत्वे सति त्वगिन्द्रियमात्र[3]ग्राह्यः स्पर्शः। स्पर्शत्वे ऽतिव्याप्तिपरिहाराय गुणत्वग्रहणम् ।

स त्रिविधः । शीतोष्णानुष्णाशीतभेदात्। नन्वनुष्णाशीतस्पर्शस्य कथं विशेषगुणत्वं तस्य पृथिवीवायुसाधारणत्वात् ।

अनुष्णाशीतस्पर्शस्य विशेषगुणत्वाभावं शङ्कते । नन्विति ।

पाकजत्वापाकजत्वाभ्यामवान्तरजातिभेदेन विशेषगुणत्वे नैमित्तिकद्रवत्वस्याप्यत्यन्ताग्निसंयोगे सत्युच्छेदानुच्छेदाभ्यामवान्तरजातिसद्भावेन विशेषगुणता स्यात् ततश्च नैमित्तिकद्रवत्वस्य सामान्यगुणपाठो निरर्थकः स्यादनुष्णाशीतस्पर्शस्य वा पाठः स्यात्

(१) पाकजरूपानधिकरणत्वादिति मुद्रितलक्षणावलीपुस्तके पाठः ।
(२) तत्रेति नास्ति मुद्रितलक्षणावलीपुस्तके ।
(३) मात्रपदं नास्ति मुद्रितलक्षणावलीपुस्तके ।

**ततश्च वायोर्बाह्येन्द्रियग्राह्यविशेषगुणपाठो निरर्थकः स्यात् । सेयमुभयतः पाशारज्जुः ।**

अवान्तरजातिभेदेन विशेषगुणत्वमाशङ्क्यातिप्रसक्त्या परिहरति । **पाकजत्वेत्यादिना** ।

**मैवम् । अवान्तरजातिभेदस्य क्षीरेक्षुगुडमाधुर्यादिवदनुभवसिद्धत्वात् ।**

परिहरति । **मैवमिति** । प्रत्यक्षसिद्धावान्तरजातिभेदो दुरपह्नव इति भावः ।

**अन्यथा महान्धकारे स्पर्शोपलम्भमात्रेण वायुर्वातीति प्रत्ययो न स्यात् । न चैवं सति नैमित्तिकद्रवत्वस्यावान्तरजातिभेदानुभवः ।**

विपक्षे दण्डमाह । **अन्यथेति** । न च नैमित्तिकद्रवत्वे ऽप्येष न्यायः तत्रावान्तरजातिभेदे प्रमाणाभावात् ।

**वायुस्पर्शः पृथिवीवृत्तिवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहित[(१)]गुणत्वव्याप्यजातिमानपाकजस्पर्शत्वात् तेजःस्पर्शवदित्यनुमानात् ।**

अनुमानमाह । **वायुस्पर्श इति** । बाधपरिहारार्थं पृथिवीवृत्तिवृत्तिपदम् । सत्तया सिद्धसाध्यता

(१) पृथिवीवृत्तित्वरहितेति मुद्रितलक्षणावलीपुस्तके पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितेति मूलादर्शप्रथमपुस्तके पृथिवीवृत्तित्वरहितवृत्तिवृत्तित्वरहितेति तद्द्वितीयपुस्तके पाठः । परं तु टीकाकृता व्याख्यात एव पाठोऽत्रोपनिबद्धः ।

माभूदिति पृथिवीत्वरहितवृत्तिवृत्तित्वरहितेत्युक्तम् । तत्र पृथिवीत्वरहितवृत्तिवृत्तित्वरहिता जातिर्वायुस्पर्शे व्याघाताद्नुपपन्नेति पृथिवीवृत्तिवृत्तित्वरहिता सिध्यतीति जातिभेदसिद्धिः ॥

संख्यां लक्षयति । **पृथक्त्वासमवेतसर्वान्योन्याभावसमानाधिकरणैकद्रव्यसमवेतवती संख्या ।** अत्र सर्वान्योन्याभावसमानाधिकरणं यदेकद्रव्यमिति न भ्रमितव्यम् । सर्वान्योन्याभावसमानाधिकरणस्यैकद्रव्यत्वानुपपत्तेः । अपि तु सर्वान्योन्याभावसमानाधिकरणे एकद्रव्ये च यत् समवेतमिति द्रष्टव्यम् । एकं द्रव्यमाश्रयो यस्येति समासः । सर्वान्योन्याभावसमानाधिकरणत्वं च सर्वेषां ये ऽन्योन्याभावाः तत्समानाधिकरणत्वम् । न तु यावदन्योन्याभावसमानाधिकरणत्वं रूपधर्मिकरसप्रतियोगिकान्योन्याभावस्य संयोगादिसामानाधिकरण्यानुपपत्तेः । समवेतवती संख्येत्युक्ते समवेतद्रव्यत्वसामान्यवति द्रव्ये ऽतिव्याप्तिस्तदर्थमेकद्रव्येत्युक्तम् । द्रव्यत्वस्य समवेतत्वे ऽपि नैकद्रव्ये समवायः असमवायिकारणाभावेनैकद्रव्यद्रव्यानुपपत्तेः नो चेदकारणककार्यप्रसङ्गो दुर्वारः । एतावत्युच्यमाने कर्मत्वजातिमति कर्मण्यतिव्याप्तिः कर्मत्वस्यैकद्रव्ये कर्मणि समवायादिति सर्वान्योन्याभावसमानाधिकरणेत्युक्तम् । कर्मणः सर्वान्योन्याभावसमानाधिकरणत्वाभावात् कर्मत्वस्य वा कर्मव्यतिरिक्तसर्वान्योन्याभावसमानाधिकरणसमवेतत्वाभावान्नातिव्याप्तिः । एवमपि पृथक्त्वे ऽतिव्याप्तिः तस्य सर्वान्योन्याभावसमानाधिकरणद्विपृथक्त्वाद्येक-

द्रव्यैकपृथक्त्वे समवेतपृथक्त्वसामान्याश्रयत्वात् ततः पृथक्त्वासमवेतत्वेन विशेषणम्। संयोगादावतिव्याप्तिर्माभूदित्येकद्रव्यपदम्। शेषं सुगमम्।

द्वित्वप्रक्रियां कारिकया सङ्गृह्णाति। आदाविति।

**आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधीरेकत्वोभयगोचरा मतिरतो द्वित्वं ततो जायते। द्वित्वस्य प्रमिति[१]स्ततोऽपि परतो द्वित्वप्रमानन्तरं द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया॥**

स्यादयमुत्पत्तिप्रकारः यदि द्वित्वैकत्वे स्तः ते एव नावगच्छामः प्रमाणाभावात्। स्पर्शरहितद्रव्यं स्पर्शवद्गुणासमवायिकारणाद्विष्ठगुणयोराश्रयः द्रव्यत्वाद् गुणवत्त्वाद्वा पटारम्भकतन्तुवदित्यस्त्वेकत्वे प्रमाणमिति चेत्। नैतत्। नभसः स्पर्शवद्भेरीगुणसंयोगासमवायिकारणकाद्विष्ठगुणशब्दाश्रयत्वेन तदंशे सिद्धसाधनत्वात् स्पर्शवत्त्वेन सोपाधिकत्वाच्च। स्पर्शवत्त्वस्योपाधित्वे स्पर्शवतां घटादीनामपि तथाविधगुणाश्रयत्वं प्रसज्येतेति चेत्। न। स्पर्शोपाधिपरिहारस्य विविच्य वक्तव्यत्वात्। यदि स्पर्शवत्त्वमेवंविधगुणवत्त्वे प्रयोजकं स्यात् तर्हि घटादीनामप्येवंविधगुणाश्रयत्वं प्रसज्येत स्पर्शवत्त्वान्न चैवं तस्माद्व्याप्तिविरहान्नोपाधिरिति टीकाकारैरेव विविच्योक्तमिति चेत् सत्यमुक्तं तथापि त एव पर्यनुयोक्तव्याः घटादिषु स्पर्शवद्गुणासमवायिकारणाद्विष्ठगुणा-

(१) द्वित्वत्वप्रमितिरिति मुद्रितलक्षणावलीपुस्तके मूलादर्शप्रथमद्वितीयपुस्तकयोश्च पाठः।

अयत्वं किं वादिना नाभ्युपगम्यते उत प्रतिवादिनेति। यदि वादी नानुमनुते कथं तर्हि तस्य नापसिद्धान्तो नाप्यनैकान्तिकत्वमिति परिभावनीयम्। अथ प्रतिवादिना नानुमन्यत इति मनुषे। तन्न। अस्यैवार्थस्य प्रतिवादिनाभ्युपगमात् तेन हि स्पर्शवत्कपालादिगुणरूपाद्यसमवायिकारणकरूपादीनामद्विष्ठानां घटादिष्वभ्युपेतत्वात्। मास्त्वेकत्वे प्रमाणं द्वित्वे तु भविष्यति द्रव्याजनकः संयोगः स्वतोऽधिकवृत्तिकार्यैकार्थसमवेतत्वार्हः संयोगत्वाद्विद्विनुका(1)रम्भकसंयोगवदिति चेत्। न। अत्रापि रूपैकार्थसमवायेन सिद्धसाधनत्वादस्ति हि रूपादीनां व्याप्यवृत्तितया संयोगाधिकवृत्तित्वं कार्यत्वं च। विवक्षितकार्यस्य व्यासज्यवृत्तित्वाभ्युपगमान्न रूपादिना सिद्धसाधनमिति चेत् तथापि कथं द्वित्वसिद्धिः त्रित्वादिनैव चरितार्थत्वादित्यास्तां विस्तरेणेति। उच्यते। न तावदेकत्वसाधकाभावः शङ्कितस्यैव सत्त्वात्। न चांशे सिद्धसाधनत्वं स्पर्शवद्गुणस्यासमवायिकारणमित्यभ्युपगमात्। न च घटादावनैकान्तिकत्वं तेषां पक्षतुल्यत्वात्। यदि घटादिपक्षतुल्यत्वं ग्रन्थकृदाशयस्थं कथं तर्हि उपाधिनिराकरणपरः स्पर्शवतां घटादीनामपि तथाविधगुणाश्रयत्वं प्रसज्येतेत्युत्तरो ग्रन्थ इति चेच्छ्रूयतामवधानेन। येन हि विवक्षितगुणाश्रयत्वं प्रति स्पर्शवत्त्वं प्रयोजकमित्यभिधीयते तेन वै स्पर्शवत्सु विवक्षितगुणाश्रयत्वं वक्तव्यं नो चेत् कथं प्रयोजकतामभिदध्यात् तथा च कथं विवक्षितगुणाभावं प्रतिजानीयात् स्पर्शवत्सु स्वयमेवाभ्युपगतत्वादितरत्र चानुमानस्य सुकरत्वाद्

(1) द्व्यणुकेति सम्भाव्यते।

विवक्षितगुणाश्रयत्वद्रव्यत्वयोः स्पर्शवत्त्वेव व्याप्यव्यापकभावावधारणादिति । यद्येवं तर्हि टीकाकारकृताशयविवरणस्य गतिरिति चेद् भ्रान्तिरिति ब्रूमः । यदपि टीकाकारेण घटादिव्यभिचारपरिहारार्थमन्त्यावयविव्यतिरिक्तत्वे सतीति विशेषणीयमित्युक्तं तदपि तेषां पक्षतुल्यतयैव निरस्तम्। नापि द्वित्वसाधकाभावः शङ्कितस्यैव सत्त्वात् । न च रूपाद्येकार्थसमवेतत्वेन सिद्धसाधनं संयोगसमानाश्रयत्वे सति संयोगाधिकदेशत्वस्य संयोगाधिकवृत्तित्वेनेष्टत्वादिति यत्किञ्चिदेतत् । अस्तु वैवं द्वित्वसाधनप्रयोगः । अयं घटः कर्मसंयोगविभागाजन्यपृथक्त्वातिरिक्तबहुत्वा[1]नधिकरणानेतन्निष्ठगुणाधिकरणं द्रव्यत्वात् पटवत् । यद्वा आकाशं पृथक्त्वातिरिक्तबहुत्वानधिकरणकालनिष्ठगुणाधिकरणं द्रव्यत्वात् पटवत् । यद्वा अयं घटः बहुत्वानधिकरणानेतन्निष्ठसंख्याधिकरणं द्रव्यत्वात् पटवदिति। अथ भवतु द्वित्वैकत्वसिद्धिरुक्तप्रमाणात् तथापि कथं द्वित्वोत्पत्तिप्रकारः सम्भवी द्वित्वस्यैकत्वजन्यत्वे प्रमाणाभावादिति मन्यसे । तन्न । द्वित्वमेकत्वजन्यं कार्यसंख्यात्वाद् घटैकत्ववदितिप्रमाणसिद्धत्वात् । त्रित्वादीनां च पक्षतुल्यत्वान्न तत्र व्यभिचारः शङ्कनीयः । द्वित्वं नैकत्वजन्यमनेकनिष्ठत्वात् संयोगविभागवदिति सत्प्रतिपक्षत्वमिति चेत्। न। परमाणुः शब्दासमवायित्वरहितपृथक्त्वातिरिक्तबहुत्वानधिकरणैकत्वजन्यानेतन्निष्ठगुणाधिकरणं द्रव्यत्वाद् घटवदितिप्रमाणसिद्धस्य गुणस्यापि धर्मित्वे धर्मिग्राहकप्रमाणबाधात् तद्व्यतिरिक्तस्य धर्मित्वे धर्मिग्राहकप्रमाणबाधात् । द्वित्वस्यापेक्षाबुद्धि-

(१) बहुत्वत्वेति सम्भाव्यते एवमग्रे ऽपि ।

जन्यत्वे च प्रमाणम् । अहं घटपटद्वित्वजनकघटपटैकत्वगोचरसाक्षात्कारवानात्मत्वादीश्वरात्मवदिति । यद्वा द्वित्वसामान्यमेकत्वज्ञानजन्यवृत्ति द्वित्वाव्यावृत्तत्वात् सामान्यवदिति । सत्तायां चैकत्वज्ञानजन्यैकत्वगोचरसंस्कारनिष्ठत्वेन साध्यप्रसिद्धिः । यद्वा द्वित्वमेकत्वगोचरज्ञानजन्यं कार्यत्वादेकत्वज्ञानजन्यैकत्वविशिष्टद्रव्यज्ञानवत् । न च ज्ञानत्वमुपाधिः एकत्वज्ञानजन्यसंस्कारे साध्याव्यापकत्वात् । न च घटादावनैकान्तिकत्वं तस्याप्येकत्वगोचरेश्वरज्ञानजन्यत्वात् । न च संख्यात्वेनैकत्वज्ञानजन्यत्वाभावोऽनुमातुं शक्य एकत्व एव व्यभिचारात् तस्यापि स्वगोचरेश्वरज्ञानजन्यत्वात् । विस्तरस्त्वन्यत्रेत्युपरम्यते । संख्या ॥

परिमाणं लक्षयति । **संख्यासमवेतत्वरहितसंख्यासमवायिसमवेतवत् परिमाणम्** । संख्या असमवायिनी यस्येति विग्रहः । संख्यायामतिव्याप्तिपरिहारार्थं संख्यासमवेतत्वरहितपदम् ॥

पृथक्त्वं लक्षयति । **शब्दासमवायिकारणसमवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतपरिमाणासमवायिसमवेतत्वरहिताधिकरणं पृथक्त्वम्** । संख्यापरिमाणप्रचयेष्वतिव्याप्तिपरिहारार्थं परिमाणासमवायिपदम् । यद्यपि संख्यादौ पटाद्यसमवेतसंख्यात्वाद्यधिकरणत्वादतिव्याप्तिः तथापि संख्याद्यसमवेतस्यानधिकरणत्वान्नातिव्याप्तिः । तथापि संख्यादौ संख्यापरिमाणप्रचयान्यतमधर्मिप्रतिप्रतियोगिकानामन्योन्याभावानां परिमाणासमवाय्यसमवेतानां सत्त्वादतिव्याप्तिः रूपादावपि संख्याद्यसमवेतरूपत्वाद्यधिकरणत्वा-

दतिव्याप्तिस्तत्परिहारार्थं सर्वान्योन्याभावसमानाधिकरणसमवेतपदम् । रूपादेः सर्वान्योन्याभावसमानाधिकरणत्वासम्भवेन रूपत्वादेस्तत्समवेतत्वानुपपत्तेः । संयोगादावतिव्याप्तिपरिहारार्थं शब्देत्यादि । संयोगादेः शब्दासमवायिकारणत्वान्नातिव्याप्तिः ॥

संयोगं लक्षयति । **कालावृत्त्यवृत्ति[1]विभागासमवायिसमवेतत्वरहित[2]प्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वानधिकरणगुणत्वसाक्षाद्व्याप्यजात्यधिकरणं संयोगः ।** रूपादावतिव्याप्तिपरिहारार्थं प्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वानधिकरणेत्युक्तम् । रूपत्वादीनां प्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वान्नातिव्याप्तिः । न च विभागे ऽतिव्याप्तिः विभागासमवायिसमवेतत्वरहितपदेन तस्य निरस्तत्वात् । न च गन्धे ऽतिव्याप्तिः कालावृत्त्यवृत्तित्वेन विशेषणात् । अस्तु तर्हि कालावृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजात्यधिकरणत्वमेव संयोगलक्षणमिति चेत् । न । परिमाणादावतिव्याप्तेः । तदर्थं प्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वानधिकरणत्वमप्युपादीयत एवेति चेत् । न । विभागातिव्याप्तिपरिहारार्थं विभागासमवायिसमवेतत्वरहितत्व-

(१) कालावृत्त्यवृत्तीति नास्ति मुद्रितलक्षणावलीपुस्तके प्रथमद्वितीयमूलादर्शपुस्तकयोश्च ।

(२) विभागासमवेतत्वाभावाविरोधिसमवेतेति मुद्रितलक्षणावलीपुस्तके विभागासमवेतत्वाभावाविरोधिसमवेतेति मूलादर्शप्रथमपुस्तके ऽन्यथिकेतरेतराभावाविरोधिसमवेतेति मूलादर्शद्वितीयपुस्तके पाठः ।

स्यावश्योपादेयत्वादिति सर्वं सुस्थम् । अक्षणिकेतरेतरा-भावाविरोधिसमवेतेति क्वचित् पाठः । तत्राक्षणिकपदम-धिकरणविशेषणं विभागव्युदासपरम् । अक्षणिकत्वं च नेह स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसाप्रतियोगित्वमपि तु द्वित्रिक्षणमात्रावस्थायित्वरहितजातीयत्वमन्यथातिव्याप्तिप्रसङ्गात् । द्वितीयमाश्रयेतरेतराभावविरोधिगुणव्युदासपरम् ।

लक्षणान्तरमाह । **सर्वान्योन्याभावसमानाधिकरणासमवेतविभागासमवायिसमवेतत्वरहितशब्दासमवायिसमवेतवान् संयोगः**[(१)] । तत्र च विभागासमवायिसमवेतत्वरहितपदं पूर्वलक्षणगतमनुषञ्जनीयम् ॥

विभागं लक्षयति । **संयोगासमवेतसर्वान्योन्याभावसमानाधिकरणासमवेतशब्दासमवायिसमवेतवान्**[(२)] **विभागः**। अत्र च शब्दसंख्ये निवर्तयितुं क्रमेण शब्दसंयोगनिवर्तनाय च व्युत्क्रमेण विशेषणानि द्रष्टव्यानि ॥

**विशेषणतया परप्रत्ययनिमित्तं परत्वम् ॥**

**विशेषणतया अपरप्रत्यय[(३)]निमित्तमपरत्वम् ॥**

---

(१) विभागासमवेतसर्वान्योन्याभावसमानाधिकरणासमवेतशब्दासमवायिसमवेतवान् वा संयोगः—इति त्रिषु पुस्तकेषु पाठः ।

(२) शब्दासमवेतवान्—इति मूलादर्शप्रथमपुस्तके पाठः ।

(३) अपरत्वप्रत्ययेति मूलादर्शद्वितीयपुस्तके पाठः ।

अर्थप्रकाशो बुद्धिः ॥
यस्मिन् सत्यनुरागस्तत् सुखम् ॥
यस्मिन् सति द्वेष[१]स्तद् दुःखम् ॥
प्रार्थना इच्छा ॥
ज्वलनात्मको द्वेषः ॥
उत्साहः प्रयत्नः ॥
आद्यपतनासमवायिकारणं गुरुत्वम् ॥
आद्यस्यन्दनासमवायिकारणं द्रवत्वम् ॥

परत्वादेर्द्रवत्वान्तस्य लक्षणानि निगदव्याख्यातानि ॥

ननु न समवायिकारणमसमवायिकारणमिति यद्युच्येत तर्हि निमित्तमपि तथा स्यात्। न तत् समवायिकारणप्रत्यासन्नमिति चेत् तत् किमेतावदेव अन्यदपि वा विवक्षितमस्ति प्रथमे प्रत्यासत्तिः समवाय एवेति यदि तर्हि घटत्वस्य घटरूपं प्रति कपालरूपस्य घटं प्रत्यसमवायिकारणत्वं प्रसज्येत। न चानवधृतसामर्थ्यान्न तथेति वाच्यम्। अवधृतसामर्थ्यता यदि तदन्वयव्यतिरेकानुविधायिता सास्त्येवेति न व्यतिरेकः। नान्या निरूच्य वक्तुमशक्यत्वात्। कथं च कपालरूपस्य घटरूपं प्रत्यसमवायिकारणता स्यात्। समवायिकारणकारणसमवायादिति चेत् कपालगुणान्तराणां घटरूपं प्रत्यसमवायिकारणत्वप्रसङ्गात् तन्तुसंयोगस्य पटं प्रत्यसमवायिकारणत्वाभाव-

(१) सत्यनुद्वेष—इति मुद्रितलक्षणावलीपुस्तके मूलादर्शद्वितीयपुस्तके च पाठः।

प्रसङ्गाच्च । न च गुणासमवायिकारणताया एतल्लक्षणमिति युक्तम् । एकत्वे पाकजेषु च तदभावात् । न चान्यतरत्वविवक्षायां यथायथमुभयमपि प्रयोजकमस्त्वित्युक्तेऽपि निस्तारः । उक्तदोषात् घटादावतिव्यापकत्वाच्च घटादीनामपि घटरूपादिकारणकारणघटावयवसमवेतत्वेन तद्गतरूपादिवत् प्रत्यासन्नत्वादित्याशङ्क्यासमवायिकारणस्य स्वरूपमाह । **द्रव्यनिष्ठत्व**[१]**रहितात्मविशेषगुणनिष्ठत्वरहितपरत्वापरत्वनिष्ठात्यन्ताभावप्रतियोगिजाति**[२]**मदसमवायिकारणमिति** । यदसमवायिकारणं तदेवंविधमेवेति भावः । निगदव्याख्यातम् । लक्षणं तु **द्रव्यत्वरहितध्वंसान्यात्मविशेषगुणमात्रनिमित्तत्वरहितात्मविशेषगुणत्वरहितरसस्पर्शस्नेहसंयोगविभागविशेषव्यतिरिक्त**[३]-**भावत्वमिति** द्रष्टव्यम् । द्रव्यत्वरहितविशेषणेन द्रव्यव्युदासात् । आत्मविशेषगुणानां चात्मविशेषगुणत्वरहितग्रहणेन निराकरणात् । अणुद्व्यणुकाकाशादिपरिमाणान्त्यावयविरूपगन्धपरिमाणानेकत्वानेकपृथक्त्वपरत्वापरत्वाविनश्यदवस्थद्रव्यसंयोगविभागवेगकर्मान्त्यशब्दसामान्यविशेषसमवायानां ध्वंसान्यात्मविशेषगुणमात्रनिमि-

(१) द्रवत्वनिष्ठत्वेति मूलादर्शद्वितीयपुस्तके पाठः ।

(२) परत्वापरत्वात्यन्ताभावप्रतियोगिसत्तावान्तरजातीति मूलादर्शद्वितीयपुस्तके पाठः ।

(३) रसस्पर्शस्नेहसंयोगविभागविशेषव्यतिरिक्तेति नास्ति मूलादर्शद्वितीयमुद्रितपुस्तकयोः । पाठार्थश्चात्र चिन्तनीयः ।

त्त्वरहितविशेषणेन निरासात् । अण्वाकाशादिपरिमाणसामान्यविशेषसमवायानां चान्यपदेन निराकरणात् । शिष्टं स्पष्टम् ॥

स्नेहलक्षणमाह । **स्नेहः सङ्ग्रहहेतुः**[1] । **पृथिवीवृत्त्यवृत्तिरससमानाधिकरणवृत्ति**[2]**गुणत्वसाक्षाद्व्याप्यजातिमान् स्नेह**[3] इत्यपि द्रष्टव्यम् । गुणत्वसाक्षाद्व्याप्यजातित्वमेव लक्षणं किं न स्यात् सुखत्वे ऽतिव्याप्तेः । अभ्युपगम्यतां तर्हि रससमानाधिकरणवृत्तित्वम् । एतावतापि नालम् । पृथिवीवृत्त्यवृत्तित्वस्यापि रूपादावतिव्याप्तिपरिहारार्थत्वेनावश्याभ्युपेयत्वात् । अस्तु तर्हि पृथिवीवृत्त्यवृत्तिरससमानाधिकरणवृत्तिजातिमत्त्वमेव लक्षणम् । मैवम् । शीतस्पर्शे ऽतिव्याप्तेः शीतत्वस्य पृथिव्यवृत्तिरससमानाधिकरणशीतस्पर्शवृत्तित्वात् ततो गुणत्वसाक्षाद्व्याप्यजातिमत्त्वमप्युपादेयमेवेति सर्वं सुस्थम् ॥

संस्कारं लक्षयति । **गगनसमवेतसमवेतत्वरहितमूर्त्तामूर्त्तसमवेतसमवेतवान् संस्कारः** । संयोगादिव्यावृत्त्यर्थं गगनसमवेतसमवेतत्वरहितेत्युक्तम् । रूपव्यावृत्त्यर्थं मूर्त्तामूर्त्तसमवेतसमवेतवानिति ॥

(१) सङ्ग्रहादिहेतुरिति मुद्रितपुस्तके मूलादर्शद्वितीयपुस्तके च पाठः ।

(२) पृथिवीवृत्तिवृत्तित्वरहितात्मगुणावृत्तिशब्दावृत्तीति मूलादर्शप्रथमपुस्तके पाठः ।

(३) एतत् स्नेहलक्षणं मुद्रितलक्षणावलीपुस्तके ऽसमवायिकारणलक्षणतः पूर्वं दृश्यते ।

विहितक्रियासाध्यः[1] पुङ्गुणो धर्मः ॥

निषिद्धक्रियासाध्यः पुङ्गुणोऽधर्मः ॥

गुणत्वे सति श्रोत्रग्राह्यः[2] शब्दः ॥

इति गुणपदार्थः ॥

संयोगासमवेतसंयोगासमवायिकारण[3]समवेतवत् कर्म । रूपादौ व्यभिचारपरिहाराय संयोगासमवायिकारणसमवेतवदित्युक्तम् । संयोगे ऽतिव्याप्तिपरिहाराय संयोगासमवेतपदम् ।

तच्च पञ्चविधम् । उत्क्षेपणादिभेदेन । तत्राधोदेशविभागोर्द्ध्वदेशसंयोगजनकं कर्मोत्क्षेपणम् । ऊर्द्ध्वदेशविभागाधोदेशसंयोगजनकं कर्मापक्षेपणम् । अग्रदेशविभागमूलदेशसंयोगजनकं कर्माकुञ्चनम् । मूलदेशविभागाग्रदेशसंयोगजनकं कर्म प्रसारणम् । उत्क्षेपणाद्याकुञ्चनं च प्रयत्नजमिष्टं[4] न चेद् गमनस्यापि प्रसङ्गात् । अप्रयत्नजं कर्म गमनम् । ननु पञ्चैव कर्माणीति नोपपद्यते

(१) क्रियया साध्यः-इति मुद्रितलक्षणावलीपुस्तके मूलादर्शद्वितीयपुस्तके च पाठः । एवमधर्मलक्षणे ऽपि ।

(२) श्रोत्रग्राह्यो गुणः-इति मूलादर्शप्रथमपुस्तके पाठः ।

(३) कारणपदं नास्ति त्रिषु पुस्तकेषु ।

(४) प्रयत्नजनिष्ठमिति मुद्रितमूलादर्शप्रथमपुस्तकयोः पाठः ।

भ्रमणादीनां सत्त्वादिति चेन्न । भ्रमणादयोऽपि गमनविशेषा[१] इत्युक्तं शास्त्रकृद्भिरिति ॥

कर्मपदार्थः ॥

समवेतरहितसर्वान्योन्याभावसमानाधिकरणसमवेतं[२] सामान्यम् । नैतत् । मनस्त्वादावव्याप्तेः मनआदेः सर्वान्योन्याभावसमानाधिकरणत्वासम्भवेन मनस्त्वादेः तत्समवेतत्वानुपपत्तेः । तस्मान्न जानीमो वयमतिरिक्तमाचार्याशयमित्याचार्याशयवेदिनां परिहारो गवेषणीयः । वयं तु बुध्यामहे । सर्वान्योन्याभावसमानाधिकरणं यत् समवेतमिति व्युत्पादनान्नाव्याप्तिरिति । समवेतवत्त्वरहितानेकसमवेतं सामान्यमित्यपि लक्षणं द्रष्टव्यम् । संख्यासमवायिसमवाय्यनेकसमवेतमिति तु तत एव निरस्तम् । पटादावतिव्याप्तिश्च तस्यापि संख्यासमवायिसमवायित्वादिति । सामान्यम् ॥

समवेतवत्त्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतत्वरहितसमवेता[३] विशेषा इति । एतन्मनस्त्वेऽतिव्यापकत्वेन प्रतिभाति मनस्त्वस्यापि जातिशून्यत्वे सति संयोगादिनिष्ठत्वरहितत्वे सति सम-

(१) कर्मविशेषा–इति मुद्रितमूलादर्शद्वितीयपुस्तकयोः पाठः ।

(२) समवेतरहितं सर्वान्योन्याभावसमानाधिकरणं समवेतमिति मूलादर्शप्रथमपुस्तके पाठः । एतत्पाठे टीकाकारकृतशङ्कैव नोदेतीति ज्ञेयम् ।

(३) सर्वान्योन्याभावसमानाधिकरणत्वरहिताः समवेता इति मूलादर्शप्रथमपुस्तके पाठः ।

वेतत्वात् । लक्षणं तु समवेतवत्त्वरहितत्वे सत्येकैकसमवेतो विशेष इति । यद्वा समवेतवत्त्वरहितसर्वान्योन्याभावसमानाधिकरणत्वरहितः समवेतो विशेष इति । सर्वान्योन्याभावसमानाधिकरणं यत् समवेतं तत्र तत्त्वं धर्मः तदनधिकरणत्वस्याभ्युपेतत्वान्नातिव्याप्तिरिति पूर्वमपि रमणीयम् । विशेषसिद्धिस्तु कालः कालनिष्ठसमवेतवत्त्वरहितजातित्वरहितसमवायाश्रयो द्रव्यत्वाद् घटवत् । कालः कालनिष्ठगुणत्वरहितजातित्वरहितसमवायाश्रयो द्रव्यत्वाद् घटवदिति । विशेषः ॥

समवायं लक्षयति । **नित्यः सम्बन्धः समवाय** इति । न च नित्यप्रतियोगिकविशेषणविशेष्यभावेन व्यभिचारः । सम्बन्धत्वं भावमात्रवृत्ति वृत्तित्वे सत्यसम्बन्धावृत्तित्वात् संयोगत्ववदिति तत्सम्बन्धत्वस्यैव प्रतिक्षिप्तत्वात् । न च तस्य भावत्वबाधो युक्तिर्युक्तिमती भावान्तरत्वस्य शङ्कितुमशक्यत्वादन्यथा तु संयोगसमवायान्यतरत्वप्रसङ्गे बाधादाद्यप्रतिषेधे चरम एव पर्यवस्यतीति कथं व्यभिचार इत्यन्वेषणीयम् । न च भावत्वमपि अभाववृत्तित्वादिति ध्येयम् । कथं तर्हि अभावग्रहणमिति चेत् सम्बन्धमन्तरेणैवेति गृहाण । न चासम्बन्धिग्रहणे ऽतिप्रसङ्गः । प्रतियोग्यन्तर(१)प्रतियोगिग्राहककारणकलापस्य नियामकत्वात् । न च मानाभाव एते तन्तव एतत्पटसम्बन्धा एतदाश्रयत्वाद् भूतलवत् इह गवि गोत्वमित्यादिप्रत्ययो वा एतज्जनकसंयोगत्वरहितसम्बन्धजन्य एतदिहेतिप्रत्ययत्वादिह कुण्डे बदराणीतिप्रत्ययवदिति । न च संयोगकार्यत्वमुपाधिः साधनव्याप-

(१) प्रतियोग्यन्येति सम्भाव्यते ।

कत्वात् चक्षुर्मनःसंयोगजन्यत्वस्य बाधाभावेन साधयितुं शक्यत्वात् । न चेह भूतले घटो नास्तीत्यादौ व्यभिचारः तस्यापि चक्षुर्भूतलसंयोगात्ममनःसंयोगादिजन्यत्वस्येष्टत्वात् । विपर्यये किं बाधकमिति चेत् सम्बन्धकारणाभावे तत्कार्यस्येहप्रत्ययस्यैवाभावप्रसङ्ग इति सन्तोष्टव्यम् । वल्लभाचार्यास्तु जात्यादिगोचरो विशिष्टव्यवहारः सम्बन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् सघटं भूतलमितिव्यवहारवत् सामानाधिकरण्यज्ञानमबाधितसम्बन्धज्ञानपुरःसरमबाधितसामानाधिकरण्यज्ञानत्वात् दण्डकुण्डले देवदत्तसंसृष्टे इतिज्ञानवदित्याहुः । न च समवायिनावित्यत्र व्यभिचारः तत्रापि सम्बन्धप्रतिभासनात् । न चानवस्था तत्र सम्बन्धप्रतीतेरारोपितत्वात् । जात्यादावप्यारोपितास्त्विति चेत् । न । तथा सत्यारोपस्यैवानुपपत्तेरारोप्यसम्बन्धस्यैवाभावात् । न च संयोगारोपः युतसिद्धभावलक्षणविशेषधर्मदर्शनात् । सिध्यतु वा तत्राप्यनारोपितः सम्बन्धः । न चानवस्था दोषाय तस्य नित्यतया परस्परानपेक्षवित्तितया चोत्पत्तिज्ञप्त्योरप्रतिबन्धात् । एतेन समवायः स्वतन्त्रः परतन्त्रो वेति यौक्तिको बाधः प्रत्युक्तः । विस्तरस्तु शास्त्र इत्युपरम्यते ।

**समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणाभावो वा ॥** समवायः ॥

**नञर्थप्रत्ययविषयो**(१)**ऽभावः । स चतुर्धा**

(१) नञर्थविषयप्रत्ययविशेष इति मुद्रितपुस्तके मूलादर्शद्वितीयपुस्तके च पाठः ।

भिद्यते प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ।

अभावं लक्षयति । नञर्थेति । न च नञर्थानिरुक्तिः द्रव्यादिषड्लक्षणषडत्यन्ताभाववत्त्वस्य तत्त्वात् ॥

उत्तरैकावधिरभावः(१) प्रागभावः । उत्तरत्वं च स्वाधिकरणकालानन्तरकालसंसर्गित्वं तथा च स्वाधिकरणकालानन्तरकालसंसर्ग्येवावधिर्यस्याभावस्य स प्रागभाव इत्यर्थः ॥

पूर्वैकावधिरभावः(२) प्रध्वंसाभावः । पूर्वत्वं च स्वानधिकरणकालत्वानधिकरणयावत्कालाव्यवहितप्राक्कालसंसर्गित्वम् ॥

तादात्म्यप्रतियोगिकोऽभावो(३)ऽन्योन्याभावः । तादात्म्यप्रतियोगिकत्वं च तादात्म्यावच्छिन्नप्रतियोगिताकत्वमिति न तादात्म्यप्रतियोगिके तादात्म्यात्यन्ताभावे ऽतिव्याप्तिः ॥

उभयावधिरहितः संसर्गाभावोऽत्यन्ताभावः । अत्र च संसर्गाभावत्वं न संसर्गप्रतियोगिकाभावत्वमपि तु संसर्गावच्छिन्नप्रतियोगिताकाभावत्वम् । तेन पटः संसर्गो नेति संसर्गप्रतियोगिके ऽन्योन्याभावे नातिव्याप्तिरिति सर्वमनवद्यम् ॥

---

(१) तत्रोत्तरकालावधिरभावः–इति मूलादर्शप्रथमपुस्तके पाठः ।

(२) पूर्वकालावधिरभावः–इति मूलादर्शप्रथमपुस्तके पाठः ।

(३) तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः–इति मूलादर्शप्रथमपुस्तके पाठः ।

तर्काम्बराङ्कप्रमितेष्वतीतेषु (९०६) शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥
विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै कस्मैचिद्विश्वतस्त्विषे ॥

इति श्रीमदुदयनाचार्यविरचिता लक्षणावली समाप्ता ॥

सगर्वगर्वदलनशेषः शार्ङ्गधरः सुधीः ।
चकार लक्षणावल्या विवृत्तिं कृतिनां मुदे ॥

इति श्रीशेषशार्ङ्गधरविरचितायामुदयनलक्षणावलीटीकायां न्यायमुक्तावल्यामभावपदार्थः समाप्तः ॥

श्रीगोपालाय नमः ॥



॥ श्रीः ॥

# लक्षणावलीमूलग्रन्थस्य सूचीपत्त्रम् ।

## न्यायमुक्तावलीटीकायाः सूचीपत्रम् ।

॥ श्रीः ॥

# न्यायमुक्तावलीटीकासहितायाः लक्षणावल्याः शुद्धिपत्त्रम् ।

| पृष्ठाङ्काः | पङ्क्त्यङ्काः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २० | तत्सत्त्वे | तदसत्त्वे |
| १० * | १ | चेत् | केचित् |
| १० * | १७ | नन्वात्म | तथात्म |
| १० * | २४ | गस्यात्मप्रतिबि | गस्याकाशे प्रतिबि |
| १३ * | १ | बोध्यत्वं | बाध्यत्वं |
| १४ | २६ | स्यावरं | स्यावश्यं |
| १५ | २१ | रूपवद्द्या | रूपवदद्या |
| १५ | २३ | नस्यैघो | नस्यैवो |
| १६ | ८ | प्रसङ्गात् | प्रसङ्गात् । |
| १७ | ८ | सम्भवात् । | सम्भवात् |
| २० | २३ | दिति सत्म | दितिसत्म |
| २७ | २२ | पाडया | पीडया |
| २७ | २५ | शरार | शरीर |
| ३४ | २४ | शब्दस्यति | शब्दस्येति |
| ४५ | १७ | एव बा | एव वा |
| ४६ | २३ | स्वाकारात् | स्वीकारात् |
| ४७ | २ | शिर वद्ध | शिरवद्ध |
| ४७ | २२ | व्याप्यसिद्ध | व्याप्यसिद्धे |
| ४७ | २५ | शिर इति वदि | शिरइतिवद्धि |

* एतच्चिह्नयुक्तपत्त्रसंख्यीयशुद्धपाठाः आदर्शपुस्तके ऽसत्त्वे ऽपि सम्भावनीयत्वेनादृताः ।

# सिद्धान्ततत्त्वं नाम वेदान्तप्रकरणम् ।



मीमांसाधुरन्धरश्रीमदापदेवसूनुना विद्वद्वरेण
श्रीमदनन्तदेवेन निरूपितम् ।



वाराणसेयराजकीयसंस्कृतप्रधानपाठशालायाम्
साहित्यशास्त्राध्यापकेन मानवल्ल्युपाह्वतैलङ्ग-
रामशास्त्रिणा परिशोधितम् ।



वाराणस्याम्
ई. जे. लाजरसकम्पन्याख्येन मेडिकल् हाल् नाम्नि
यन्त्रालये मुद्रयित्वा प्रकाशितम् ।

वैक्रमसंवत् १९५७ ।

## सिद्धान्ततत्त्वभूमिका ।

अथेदानीं प्रस्तूयते सिद्धान्ततत्त्वं नाम वेदान्तप्रकरणं संमुद्र्य प्रकाशयितुम् । अस्य किल प्रणेता स्मृतिकौस्तुभसंस्कारकौस्तुभाद्यनेकग्रन्थकरणप्रख्यातनामा अनन्तदेवो नाम । अयं च पूर्वमीमांसातत्त्वप्रकाशकस्याऽद्यत्वे पठनपाठनादिषु सुतरां प्रचलितस्य आपदेवी (न्यायप्रकाशः) इति प्रसिद्धाभिधानस्य ग्रन्थरत्नस्य प्रणेतुर्विचक्षणचूडामणेः श्रीमदापदेवस्य सूनुरिति एतद्ग्रन्थान्ते "इति श्रीसकलदिङ्मण्डलविश्रान्तयशोमण्डलनिखिलश्रुतिशिरस्तत्त्वपरिशीलनमर्यादाधुरन्धरश्रीमदापदेवसूनुना अनन्तदेवेन कृतं सिद्धान्ततत्त्वं नाम प्रकरणं संपूर्णम्" इति लेखदर्शनान्निश्चीयते । ग्रन्थादौ—

"यच्छ्रीमद्रामतीर्थेभ्यः संप्रदायसमागतम् ।
श्रुतं सत्तर्कसचिवं विविच्य तदिहोच्यते" ॥ इति,

अन्ते च—

"इत्थं परिव्राजकपूज्यपादश्रीरामतीर्थानुस्मृतिप्रसादात् ।
सिद्धान्ततत्त्वं गतवाग्विवादमनन्तदेवेन मुदा न्यरूपि"॥

इति लेखदर्शनादयं श्रीरामतीर्थयतेरन्तेवासीति व्यक्तमेव । अन्तिमो ऽयं श्लोकः अनन्तदेव एवास्य प्रणेतेत्यत्रापि दृढं प्रमाणीभवति । अनेनैवाऽनन्तदेवेन एतद्ग्रन्थस्य टीका स्वयं विरचिता । यत्रादौ—

"सर्वशास्त्रार्थमर्यादापरीक्षणविचक्षणान् ।
वन्दे श्रीतातचरणान् श्रीकान्तचरणाश्रयान् ॥

श्रीरामतीर्थचरणस्मरण ( स्य ) प्रसादतः ।
प्रस्थानत्रयसिद्धान्तसंप्रदायः प्रदर्श्यते ॥

सिद्धान्ततत्त्वव्याख्यानव्याजेन विशदीकृतम् ।
वेदान्तसंप्रदायार्थं गृह्णन्तु ज्ञानकामिनः ॥

सम्यङ्निरूपितमिदं यदि नाद्रियन्ते
दुष्टा निकृष्टमतयो हृदि मत्सरेण ।
किं तावता ज्वरवतामरुचेर्न जातु
दुग्धस्य शुद्धमधुरस्य विदूषणं स्यात् ॥

चिकीर्षितं प्रतिजानीते 'सर्ववेदान्ते' ति" एवं लेखः समुपलभ्यते । तेनास्या व्याख्याया अनन्तदेवेन प्रणीतत्वं स्पष्टमेव । अस्या व्याख्यायाः किं नाम?

अत्र डाक्तर् पि. पिटर्सन् महाशयः *—

"सम्प्रदायनिरूपणम् अनन्तदेवेन कृतम् । आपदेवसूनुः अनन्तदेवः ।

आरम्भः—

श्रीगणेशाय नमः । श्रमद्गोपालाय नमः ।
सर्ववेदान्तसिद्धान्तसंप्रदायानुसारतः ।
नमस्कृत्य गुरून् वक्ष्ये प्रक्रियां ———— ॥ १ ॥
यच्छ्रीमद्रामतीर्थेभ्यः संप्रदायसमागतम् ।
श्रुतं सत्तर्कसचिवं विविच्य तदिहोच्यते ॥ २ ॥

अखण्डमानन्दैकरसं स्वप्रकाशं चैतन्यमेव जगतस्तत्त्वम्" इति ।

अन्तः—

* Sixth Report, by P. Peterson, Bombay, 1899, p. 23, No 308.

धर्मावधीनां करुणानिधीनां श्रीमद्गुरूणां चरणावलम्बात् ।
यत्संप्रदायश्रुतिमप्रहाय निरूपितं तुष्यतु तेन विष्णुः ॥१॥
इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥ २ ॥
इति श्रीमदापदेवसूनुना अनन्तदेवेन कृतं संप्रदायनिरूपणं समाप्तम् । शुभमस्तु" इति निर्दिश्य संप्रदायनिरूपणं नाम मूलग्रन्थं मन्यते । अग्रे च ३०९ पुस्तकवर्णनावसरे *

"सिद्धान्ततत्त्वम् अनन्तदेवेन कृतम् आपदेवसूनुः अनन्तदेवः ।

आरम्भः—

सर्वशास्त्रार्थमर्यादापरीक्षणधुरन्धरान् ।
वन्दे श्रीतातचरणान् श्रीकान्तचरणाश्रयान् ॥ १ ॥
श्रीरामतीर्थचरणस्मरण (स्य) प्रसादतः ।
प्रस्थानत्रयसिद्धान्तसंप्रदायः प्रदर्श्यते ॥ २ ॥
सम्यङ् निरूपितमिदं यदि नाद्रियन्ते
दुष्टा निकृष्टमतयो हृदि मत्सरेण ।
किं तावता ज्वरवतामरुचेर्न जातु
दुग्धस्य शुद्धमधुरस्य विदूषणं स्यात् ॥ ३ ॥
चिकीर्षितं प्रतिजानीते सर्ववेदान्तेति" ।

अन्तः—

इत्थं प———पाद श्रीरामतीर्थानुस्मृतिप्रसादात् ।
सिद्धान्ततत्त्वं गतवाग्विवादमनन्तदेवेन———।
इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥

* Sixth Report, Peterson, 1899, p. 22, No. 309.

इति श्रीसकल ——— विश्रान्तयशोमण्डलनिखिलश्रुतिशिरस्तत्त्वपरिशीलनमर्यादाधुरन्धरश्रीमदापदेवसूनुना अनन्तदेवेन कृतं ——— म प्रकरणं समाप्तम्'' इति निर्दिश्य सिद्धान्ततत्त्वं नाम संप्रदायनिरूपणाख्यग्रन्थस्य टीकां मन्यते ।

आदौ ग्रन्थकृत्सूचीपत्रे चैतदनुरोधात् ''संप्रदायनिरूपणं नाम स्वतन्त्रो ग्रन्थः, सिद्धान्ततत्त्वं तद्व्याख्यानं चैककर्तृक'' मिति वदति । बर्नेल्महाशयश्च संप्रदायनिरूपणं नाम तत्त्वप्रक्रियानामकग्रन्थस्य व्याख्यां मन्यते * । पिटर्सन्महाशयश्चैतत् खण्डयति † । एवं च मूलटीकाग्रन्थयोर्नाम्नि वैमत्ये समुपस्थिते किं तावत्तत्त्वमिति विचारणीयम् । यत्तावद् बर्नेल् (Burnell) महाशयेन संप्रदायनिरूपणाख्यस्य ग्रन्थस्य टीकात्वमुपवर्णितं तदेवाऽस्माकमप्यनुमतम् । तथा हि । अस्मदुपलब्धे प्राचीने शुद्धे पुस्तके एतद्ग्रन्थमुद्रणाय मातृकारूपेण धृते ऽन्ते 'इति श्री'त्यादिलेखे सिद्धान्ततत्त्वं संपूर्णमिति लेखस्य स्पष्टत्वात् अस्य च ग्रन्थस्यादिश्लोके 'सिद्धान्तसंप्रदायानुसारतस्तत्त्वसंश्रयां वक्ष्ये' इत्युक्ते सिद्धान्ततत्त्वं वक्ष्ये इत्यर्थस्य सुखं लाभादुपान्तिमश्लोके च 'सिद्धान्ततत्त्वं न्यरूपी'ति दर्शनात्तदेकवाक्यतया ऽस्य ग्रन्थस्य सिद्धान्ततत्त्वमित्येव नामेति सिध्यति । पिटर्सन्महाशयोपलब्धे च सिद्धान्ततत्त्वपुस्तके ''सिद्धान्ततत्त्वव्याख्यानव्याजेन विशदीकृतम् । वेदान्तसंप्रदायार्थं गृह्णन्तु ज्ञानकामिन'' इत्युपलभ्यते । यदि च सिद्धान्ततत्त्वमिति टीकाया नाम स्यात् तर्हि तत्र ''सिद्धान्ततत्त्वव्याख्यानव्याजेने''त्युक्तिरसङ्गता

* See Burnell, p. 94.

† Index Sixth Report, Peterson, 1899.

स्यात्; न खलु सिद्धान्ततत्त्वनाम्न्यां टीकायां 'सिद्धान्ततत्त्वव्याख्यानव्याजेने' त्युक्तिरविरोधमावहति। किंच तत्रैव "वेदान्तसंप्रदायार्थं गृह्णन्तु" इत्युक्त्या च टीकायाः संप्रदायनिरूपणमित्येव नामेत्यतिस्फुटम्। न तावदस्मदुपलब्धे सिद्धान्ततत्त्वपुस्तके य उपान्त्यः श्लोकः समुपलभ्यते स एव पिटर्सन्महाशयोपलब्धे सिद्धान्ततत्त्वपुस्तके (अस्माभिः संप्रदायनिरूपणत्वेन व्यवस्थाप्यमाने) अप्युपलभ्यते, तत्र च सिद्धान्ततत्त्वमिति नामदर्शनाट्टीकायाः सिद्धान्ततत्त्वमिति नामेति शङ्क्यम्। मूलटीकयोरन्ते लेखकप्रमादेन श्लोकद्वयव्यत्ययस्य संभवात्। कथमन्यथा पूर्वोक्तस्याऽसामञ्जस्यस्य परिहारः स्यात्। एवं च पिटर्सन्महाशयोपलब्धे सिद्धान्ततत्त्वपुस्तके य उपान्त्यः श्लोकः स एव सम्प्रदायनिरूपणस्योपान्तिमः श्लोकः, यश्च तदुपलब्धे संप्रदायनिरूपणपुस्तके उपान्तिमः श्लोकः स एव सिद्धान्ततत्त्वस्योपान्तिमः श्लोकः, लेखकप्रमादात्सटीकपुस्तकालेखनसमये परमेतच्छ्लोकद्वयसंनिवेशविपर्यासो जात इति कल्प्यमाने पूर्वोक्तहेतुभिः बर्नेल्महाशयसंवादेन च संप्रदायनिरूपणनामकस्य ग्रन्थस्य टीकात्वं पारिशेष्यात् पूर्वोक्तहेतुभिश्च सिद्धान्ततत्त्वस्य मूलत्वं स्थिरीभवति। यत्तावद् बर्नेल्महाशयः संप्रदायनिरूपणं नाम तत्त्वप्रक्रियायाः टीकां मन्यते तत् तु पिटर्सन्महाशयेन परिहृतम्।

पिटर्सन् महाशयोपलब्धे व्याख्यापुस्तके अन्ते इति श्रीत्यादिलेखे "प्रकरणं" समाप्तमिति लेखो दृश्यते एतदपि विरुद्धमिव। न खलु व्याख्यां प्रकरणं वदन्ति विपश्चितो ऽपि तु स्वतन्त्रमेव ग्रन्थम्। यथाहुः—

शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः॥ इति।

एवं चाऽवश्यमेवोपान्तिमश्लोकस्याऽन्तिमे 'तिश्री'-त्यादिलेखस्य च व्यत्यासे कल्पनीये मूलग्रन्थस्य सिद्धान्ततत्त्वमिति नाम, व्याख्यानस्य च संप्रदायनिरूपणमिति नामेति निर्विवादं सिध्यति।

एतद्ग्रन्थस्य च कर्ता अनन्तदेवः स्वकृते ग्रन्थे स्मृतिकौस्तुभनाम्नि कूर्माचलदेशाधिपतेः बाजबहादुरचन्द्रस्य आश्रितमात्मानं लिखति। बाजबहादुरनृपश्च १६४४-१६६४ ईशवीयसमये (1644—1664 A. D.) जात * इति स एवास्य अनन्तदेवस्य समय इति स्फुटम्। अलमनेन प्रासङ्गिकेन प्रकृतमनुसरामः।

अस्य च ग्रन्थस्य संक्षेपतो वेदान्तसिद्धान्तबोधकतया परमोपकारित्वं विचार्य तन्मुद्रणाय कृतमतिना वाराणसेयराजकीयसंस्कृतपाठालयाऽध्यक्षेण श्रीमदार्थरवेनिससाहेबमहाशयेनैतत्परिशोधनायादिष्टो ऽहमस्य ग्रन्थस्य दुर्लभतया काशिकराजकीयसंस्कृतपुस्तकालये प्रयत्नसंगृहीतं शुद्धं प्राचीनमेकमेव पुस्तकमवलम्ब्य यथामति परिशोध्य विषयसूचीं ग्रन्थक्रमेणाऽकारादिक्रमेण च द्विविधां संयोज्य ग्रन्थमध्ये ग्रन्थान्तरधृतानां प्रमापकवाक्यानां यथासंभवमुपलब्धाऽनुपलब्धस्थलप्रदर्शिकां चापरां सूचीं संयोज्य प्राकाशयमिदं ग्रन्थरत्नं काशीविद्यासुधानिधिनामके मासिके पण्डितपत्रे, तद्ग्रहणाऽक्षमाणां चोपकाराय पृथगपि।

अनुपलब्धपुस्तकान्तरस्यैकमेव पुस्तकमाश्रित्य कृतमुद्रणसाहसस्य मे तत्र तत्र संभावितानि स्खलितानि सौ-

* See Julius Jolly's "Recht und Sitte" in the "Grundriss," p. 40.

जन्येन सन्तुपेद्यात्र नयनाऽर्पणाऽऽयासपरिग्रहेणाऽनुग्रही-ष्यन्ति मां निर्मत्सरा विपश्चिद्वरा इति निश्चिन्वन् प्रसादयाम्यनेन व्यापारेणाऽन्तरात्मानमिति निवेदयति । शम् ।

वाराणसेयराजकीयप्रधान-
संस्कृतपाठशालायाम्
संवत् १९५७ ।

मानवल्ल्युपाह्वस्तैलङ्ग-
रामशास्त्री ।



# वर्णक्रमानुसारिविषयसूची ।

## अ.



## आ.

## ई.



## उ.



## ए.



## घ.



## च.



## ज.



## त.

## द.



## न.



## प.



## ब.



## भ.



## म.



## र.



## ल.

## व.



## श.



## स.



## ह.

# सिद्धान्ततत्त्वनामकग्रन्थे धृतानां ग्रन्थान्तरवाक्या-नामुपलब्धाऽनुपलब्धस्थलानां सूचीपत्त्रम् ।

# सूचीपत्रम् ।

श्रीः ।

# सिद्धान्ततत्त्वं नाम वेदान्तप्रकरणम् ।

श्रीमदापदेवसूनुना अनन्तदेवेन कृतम् ।

---

श्रीगणेशाय नमः ।

सर्ववेदान्तसिद्धान्तसम्प्रदायाऽनुसारतः ।
नमस्कृत्य गुरून्वक्ष्ये प्रक्रियां तत्त्वसंश्रयाम् ॥ १ ॥
यच्छ्रीमद्रामतीर्थेभ्यः सम्प्रदायसमागतम् ।
श्रुतं सत्तर्कसचिवं विविच्य तदिहोच्यते ॥ २ ॥

अखण्डमद्वितीयमानन्दैकरसं स्वप्रकाशं चैतन्यमेव जगतस्तत्त्वमनिर्वचनीयस्येव सर्पस्य रज्जुः । कथं तर्हि जीवेश्वरविभागप्रतिपत्तिरिति चेत्, अज्ञानरूपादुपाधेरिति । यथा हि एकस्यैव मुखस्य दर्पणोपाधिसम्बन्धाद्बिम्बप्रतिबिम्बभावः एवं चिन्मात्रस्योपाधिसम्बन्धाज्जीवेश्वरभावो न तत्त्वान्तरमस्ति । अज्ञानं त्वनाद्यनिर्वचनीयं मायाऽविद्यादिशब्दाऽभिधेयं चिन्मात्राश्रयविषयं जीवाश्रयं ब्रह्मविषयं वेति वर्णयन्ति । तच्चैकेनैवोपपत्तावनेककल्पनाऽनवकाशादेकमेवेत्येके । बद्धमुक्तव्यवस्थानिरूपणाय नानेत्येके । तदवस्था अपि तूलाज्ञानानि व्यवहारसौकर्य्याय निरूपयन्ति । तत्रैव मायाऽविद्याशब्दद्वयनिमित्तं शक्तिद्वयम् । विक्षेपशक्तिरावरणशक्तिश्च । कार्यजननशक्तिर्विक्षेपशक्तिः । तिरोधानशक्तिरावरणशक्तिः । यथा ऽवस्थारूपस्य रज्ज्वज्ञानस्य सर्पजननशक्तिः रज्जुतिरोधानशक्तिश्च एवं मूलाज्ञानस्याऽद्वितीयपूर्णाऽऽनन्दैकरसचिदावरणशक्तिराकाशादिप्रपञ्चजननशक्तिश्चेति । तत्रैवाऽज्ञाने प्रप-

ज्ञस्य परमार्थव्यवहारप्रतिभाससत्यत्वप्रतीत्यनुकूलास्तिस्रः शक्तयः । तत्राऽऽद्या शक्तिः श्रवणाद्यभ्यासपरिपाकतः प्रागविच्छिन्ना ऽनुवर्तते । तत्परिपाके तु तत्त्वज्ञानतः प्राग्द्वितीया । तत्त्वज्ञानोत्पत्तौ यावत्प्रारब्धं तृतीया ऽनुवर्तते । प्रारब्धक्षये ऽन्तिमतत्त्वज्ञानेन सह शक्त्या ऽज्ञाननिवृत्तिः । अत एव श्रुतिः 'तस्याऽभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति । निवृत्ते चाऽज्ञाने तन्निमित्ते च जीवेश्वरादिप्रपञ्चे ऽपगते चिन्मात्रमवशिष्यते । अज्ञाननिवृत्तिस्वरूपं चाग्रे वक्ष्यामः ।

जीवस्त्वज्ञानप्रतिबिम्बितं चैतन्यमज्ञानाऽवच्छिन्नमित्यन्ये । आभासवादिनस्तु दर्पणादौ मुखान्तरोत्पत्तिं स्वीकुर्वाणाश्चैतन्याऽऽभासमज्ञाने ऽभ्युपगच्छन्तस्तत्तादात्म्यापन्नं चैतन्यं जीवमाहुः । प्रतिबिम्बवादे तु मुखान्तरोत्पत्तिरिति भेदः । स चाऽज्ञानबहुत्ववादिनां हिरण्यगर्भविराडादिभेदेन नानाऽज्ञानैक्ये ऽपि तच्छक्तिभेदात्तज्जाऽन्तःकरणभेदाद्वा नानेत्यपि वदन्ति ।

तत्र तत्त्वज्ञानेन शक्तेरन्तःकरणस्य वा निवृत्तिरिति बद्धमुक्तव्यवस्था । जीवभेदे क्रममुक्तिफलानां हिरण्यगर्भाद्युपासनावाक्यानां 'न तस्य प्राणा' इत्यादीनाञ्चाञ्जस्येनोपपत्तिः । तथा हि । कश्चिज्जीवो वेदवेदार्थाऽभिज्ञो नित्यनैमित्तिकाद्यनुतिष्ठन्नामरणमभ्यस्यमानः केवलहिरण्यगर्भोपासनायाः परिपाके मरणकाले 'अहं हिरण्यगर्भ' इति प्रत्ययोद्रेके देहं विसृज्याऽर्चिरादिमार्गेण ब्रह्मलोकं गतो हिरण्यगर्भसायुज्यं गच्छति ।

किमिदं हिरण्यगर्भसायुज्यम् ? तत्र केचित् सयुजो भावः सायुज्यमिति वदन्तो भूताऽऽवेशन्यायेन हिरण्यग-

भंशरीरे चतुर्मुखे उपास्योपासकयोरवस्थानं सायुज्यमिति वदन्ति । तन्न । सायुज्यशब्दस्य तादात्म्ये रूढत्वात् । रूढियोंगमपहरतीति न्यायात् 'सो ऽग्निरभवत्' इति तादात्म्यश्रवणाच्च चतुर्मुखस्य विराड्भोगशरीरत्वात्, समष्टिलिङ्गात्मकस्य हिरण्यगर्भस्य स्थूलावच्छेदेन भोगनियमाऽभावाच्च । तदेतदग्रे निरूपयिष्यामः ।

अन्ये तु परिच्छिन्नलिङ्गोपासकस्याऽपरिच्छिन्नलिङ्गोत्पाद इत्याहुः । तेषामपि न सायुज्यशब्दो मुख्यार्थः । सारूप्यलक्षणा तथा सति स्यात्, नाशे मानाऽभावाच्च । यत्त्वपरिच्छिन्नमेकमेव समष्टिलिङ्गं पाप्मासङ्गादिदोषेण भ्रान्त्या परिच्छिन्नतां गतमुपासनायां पाप्मादिनिवृत्तौ स्वरूपेणाऽवतिष्ठते, तेन जीवस्य ब्रह्मभावाद्धिरण्यगर्भसायुज्यमिति वदन्ति । तदपि न । लिङ्गस्यैकत्वे उपासनावाक्यप्रामाण्येन क्रमेणैव मुक्तिः स्यात् । ततश्च मनुष्याणां श्रवणादिप्रवृत्त्यनुपपत्तिः । 'ऐहिकमप्रस्तुतप्रतिबन्धे' इत्याद्यधिकरणविरोधश्च । अपरिच्छिन्नलिङ्गाऽनेकत्वे सायुज्यशब्दस्य सारूप्ये लक्षणापत्तिः । परिच्छिन्नस्याऽपरिच्छिन्नेन तादात्म्यमिति चेत्, न । पूर्वरूपे स्थिते नष्टे वा ऽन्यस्याऽन्यात्मताऽनुपपत्तेः, नाशे प्रमाणाऽभावाच्च । सङ्कोचविकासपक्षस्त्वत्यन्ताऽप्रामाणिकः । तस्माद्देहादावात्मतादात्म्यमाभिमानिकमिव यथावस्थितलिङ्गस्यैवोपासकस्यैवोपासनाफलं समष्टिलिङ्गे हिरण्यगर्भे आभिमानिकं तादात्म्यं सायुज्यमित्याचार्य्याः । प्रकृतमनुसरामः ।

अन्यस्तूपासनाया अपरिपाके हिरण्यगर्भसालोक्यादि गच्छति । परस्तु इहैव श्रवणादिपरिपाकोत्पन्नज्ञानो मुच्यते । अपरस्तु श्रवणादिपरिपाके ऽपि प्रारब्धप्रतिबन्धेनाऽनुत्पन्नज्ञानतन्नाशे शरीरनाशाद्योन्यन्तरगतो गर्भे

स्थदेहाऽभिव्यक्तौ प्रथममेवाऽहं ब्रह्मास्मीति प्रत्ययं लभते वामदेववत् ।

अन्यः पुनः साधनसम्पन्नः श्रवणाद्यभ्यासे क्रियमाणे मध्ये मृतः श्रवणाद्यभ्याससामर्थ्याद्दृढपूर्वशुभकर्मफलानि बहुकालं भुक्त्वा शुचीनां श्रीमतां योगिनां वा कुले उत्पन्नः पूर्वाऽभ्यासवशेन पुनः प्रारब्धश्रवणाद्यभ्यासपरिपाकलब्धज्ञानो विमुच्यते । तदुक्तं गीतासु 'पार्थ नैवेह नामुत्र' इत्युपक्रम्य 'पूर्वाऽभ्यासेन तेनैव ह्रियते ह्यवशो ऽपि स' इत्यन्तेन ग्रन्थेन । एवं विराडाद्युपासकानां विराडादिसायुज्यप्राप्तिः प्रतीकोपासकानां विद्युल्लोकप्राप्तिश्च व्याख्येया ।

अपरे पुनराचार्य्या अज्ञानैक्यात्तदुपहितं जीवमेकमेवाऽङ्गीकुर्वन्ति । तेषामुपासनानां क्रममुक्तिफलश्रवणमर्थवादमात्रम् । क्रमेणैव मुक्त्यङ्गीकारे क्रममुक्तिफलानामुपासनानां बहुत्वेनैकस्य फलवत्त्वे ऽपीतरेषु एतच्छ्रवणस्याऽर्थवादत्वस्याऽऽवश्यकत्वात् । चित्तैकाग्र्यं तु फलं जनयन्त्युपासनानि कर्माऽनुष्ठानवशाच्छ्रवणाद्यधिकारे उपयुज्यते । प्रमातृभेदाङ्गीकारात् । तत्तत्फलभोगोत्तरकालं वा ऽनुपासका मानवान्तरे आवर्तन्ते, 'इमं मानवमावर्त्तं नावर्तन्त' इति श्रुतेः । यदैव श्रवणाद्यभ्यासपरिपाकतो ज्ञानोदयस्तदैव मुक्तिरिति न बन्धमोक्षव्यवस्था ऽस्ति । वामदेवादीनां मुक्तत्वश्रवणं काल्पनिकाभिप्रायं, नित्यमुक्तत्वाऽभिप्रायं वा । न चाऽनाश्वासः । श्रुतेः प्रामाण्यात् । तदेवं निरूपितमेकाऽनेकवादिनां जीवस्वरूपम् ।

तत्र चान्तःकरणमध्यस्यते अहमिति, रज्ज्वामिव सर्पः । अहमज्ञ इति तु अहङ्काराऽज्ञानयोः एकचैतन्या-

ऽध्यासात् । एकवह्निसम्बन्धाद्दग्धृत्वायसोरिवाऽयो दहतीति प्रत्ययः ।

तच्चाऽन्तःकरणं स्मृतिप्रमाणवृत्तिसङ्कल्पविकल्पाऽहंवृत्त्याकारेण परिणतं चित्तबुद्धिमनोऽहङ्कारशब्दैर्व्यवह्रियते ।

इदमेवाऽऽत्मतादात्म्येनाऽध्यस्यमानमात्मनि सुखदुःखादिस्वधर्माध्यासे उपाधिः । स्फटिके जपाकुसुममिव लौहित्याऽवभासे । एवं प्राणादयस्तद्धर्माश्चाऽशनायापिपासादयः तथा श्रोत्रादयो वागादयश्च तद्धर्माश्च बधिरत्वाऽन्धत्वादयो ऽध्यस्यन्ते । तथा देहस्तद्धर्माः स्थूलत्वादयश्चात्मन्यध्यस्यन्ते । तत्रेन्द्रियादीनां न तादात्म्याध्यासः, अहं श्रोत्रमित्यप्रतीतेः । देहस्तु मनुष्यो ऽहमिति प्रतीतेस्तादात्म्येनाध्यस्यते । अन्धो ऽहमिति प्रतीतिस्त्वनिन्द्रियविकलानां विद्यमाने ऽपि श्रोत्राद्यध्यासे ऽज्ञायमानतादात्म्याध्यासोपपादिका ।

अन्ये त्वाचार्या अहमिति सकलः कार्य्यकारणसङ्घातस्तादात्म्येनात्मन्यवभासतइत्याहुः ।

ननु कथमज्ञानादीनामध्यस्ततया प्रतीतिः ? न तावदपरोक्षा, इन्द्रियाजन्यत्वात् । नाप्यनुमितिः, लिङ्गाद्यननुसन्धाने ऽपि भावात् । उच्यते । चिदात्मा ह्यज्ञानोपहितो भासकतया साक्षीति व्यपदिश्यते । स च भास्यसंसर्गमात्रमपेक्षमाणो ऽज्ञानादीनामाध्यासिकसंसर्गाद्भासकः । तेन यावद्विषयसत्त्वमहमज्ञः सुखी दुःखी मनुष्य इति भासमानत्वान्न कदा चित्सन्देहः । स चाऽपरोक्षस्वभावः । अपरोक्षत्वं च न परेषामिवाऽपरोक्षज्ञानविषयतया, मुक्तौ ब्रह्मणः परोक्षत्वाऽऽपत्तेः । अत एव श्रुतिः 'यत्साक्षा-

दपरोक्षाद्ब्रह्म' इति । अत्र ह्यपरोक्षज्ञानविषयत्वेन प्रसज्यमानमपरोक्षत्वं निराकर्तुं साक्षादिति विशेषणम् । किं तु संविदभिन्नत्वम् । तदुक्तम् 'संविदभेदो ऽपरोक्षता नामे'ति । तच्च साक्षिणि स्फुटं चिद्रूपत्वात्, अज्ञानादेर्देहपर्यन्तस्य तु तत्राध्यस्तत्वात् अध्यस्यमानाधिष्ठानयोश्चाऽभेदात् अपरोक्षत्वम् । अत एव शब्दादपरोक्षधियमङ्गीकुर्वते, विषयस्यापरोक्षत्वात् । घटः कथमपरोक्ष इति चेच्छृणु । ब्रह्मणस्तावदपरोक्ष एव घटः । संविद्रूपे ब्रह्मणि अभेदेनाऽध्यस्तत्वात् । अत एव न जीवस्यापरोक्ष इति चेच्छृणु । अन्तःकरणं चित्तादात्म्येनाध्यस्तं चिद्रूपम् । तस्याऽदृष्टेन्द्रियार्थसन्निकर्षादिनोत्पद्यमानः परिणामो ऽपि घटादिपर्यन्तं लम्बमानो ऽवश्यं चित्खचित एवोत्पद्यते घट इवाकाशव्याप्तः । तदुक्तम् ।

वियद्वस्तुस्वभावाऽनुरोधादेव न कारकात् ।
वियत्सम्पूर्णतोत्पत्तौ कुम्भस्यैवं दृशा धियाम् ॥ इति ।

स एवान्तःकरणवृत्तिरिति गीयते । तथा च घटाऽवच्छिन्नचैतन्यावरणाऽज्ञाननिवृत्तौ आवरणाभिभवे वा ऽसति घटावच्छिन्नं ब्रह्मचैतन्यं प्रमातृचैतन्यं चैकान्तःकरणवृत्त्युपाधिसम्बन्धादभेदेनाऽभिव्यज्यते । तादृशं तद्घटं विषयीकरोतीति घटस्य फलव्याप्यत्वमुच्यते । विषये ऽभिव्यक्तं चैतन्यं फलं वृत्त्यवच्छिन्नं प्रमाणम् । अत एव प्रमाणव्यवधानेनाऽज्ञानव्यवधानेन चाऽसाक्षिवेद्या अपि घटादयो न केवलसाक्षिवेद्याः । तदुक्तम् । 'सर्वं वस्तु ज्ञाततया ऽज्ञाततया वा साक्षिचैतन्यस्य विषय' इति । एवं च प्रमातृचैतन्यस्य विषयचैतन्याऽभेदाद्घटादेरपरोक्षतेति । अत एव वन्ह्यादौ प्रमातृचैतन्यनिष्ठाऽज्ञानमात्रनिवृत्तावप्युभयचैतन्याऽभेदाभिव्यक्त्यभावाद्वृत्तेश्चान्तरेवोत्पादा-

त्परोक्षता । तदप्युक्तम् ‘सुषुप्तिव्यावृत्तिमात्र’मिति । भ्रमविषयस्य कथमपरोक्षत्वमिति चेत्? नास्माकं परेषामिव देशान्तरीयरजताद्यवभासो भ्रमेषु किं तु शुक्त्यज्ञानसमुत्पन्नमनिर्वचनीयं रजताद्यवभासते। तत्रेदंवृत्त्या इदमंशस्य घटादिन्यायेनापरोक्षत्वम् । रजतं तु प्रमातृचैतन्याभिन्ने इदमंशचैतन्ये ऽध्यस्तं सुखादिवदपरोक्षम् । इदमंशतादात्म्येनोत्पन्नत्वाच्चेदं रजतमिति प्रत्ययः । अपरोक्षत्वादेवाऽनिर्वचनीयस्य कथं सत्ताऽवभास इति शङ्कायां, शुक्तिसत्ताऽवभास इति समाधाने पुनरन्यथाख्यातिप्रसङ्गे शङ्किते तत्संसर्गस्याऽनिर्वचनीयत्वेन च परिहृते तर्हि देशान्तरीयरजतसम्बन्धमात्राऽनिर्वचनीयत्वेनान्यथाख्यातिपरिहार इति मास्तु रजतोत्पादो भ्रमाऽनुमित्यादाविवाऽनिर्वचनीयसंसर्गोत्पत्त्या वन्ह्युत्पत्तिरिति शङ्का निराक्रियते। तथा सति रजतस्य वन्हेरिव परोक्षत्वापत्तेः। शुक्तिसत्तायास्त्वपरोक्षत्वं प्रमाणवृत्त्यैवेदमंशवत् ।

अन्ये तु तत्रापि वन्ह्यंशे शुक्तिसत्तांशे चाऽन्यथाख्यातिप्रसङ्गो मा भूदिति वन्ह्युत्पत्तिं रजते सत्तान्तरोत्पत्तिं चाऽऽचक्षते । तदुक्तम् ‘अथ वा त्रिविधं सत्त्व’मिति ।

नन्वेवं सुखादिवदपरोक्षत्वे रजताकारवृत्तिर्न स्यात्। वृत्तिर्हि नाऽज्ञाननिवृत्त्यर्था। सुखादिवद्रजतस्य यावत्सत्त्वं साक्षिणा भासनात् । नापि सम्बन्धार्था । तत्रैवाध्यस्तत्वात् । नापि सुषुप्तौ अज्ञानसुखसाक्ष्याकारवृत्तिवत्संस्कारार्था । रजतनाशादेव विशिष्टसाक्षिनाशात्संस्कारोत्पत्तेः । यत्त्ववस्थानाशादेव विशिष्टसाक्षिनाशात् तदुत्पन्नसंस्कारेण सुखमहमस्वाप्समिति स्मरणोपपत्तेर्न

संस्कारार्था सुषुप्तिरपि वृत्तित्वमिति तन्न । तत्तत्संस्कारविशिष्टाज्ञानसाद्यतिरिक्तावस्थाया असत्त्वात् । तस्मान्न रजते वृत्तिरिति ।

अत्राहुः । साक्षिचैतन्यं हि स्वतः स्फुरदपि सर्वगतमपि असङ्गतया तत्तद्विषयाऽवभासनायाऽसमर्थं ज्ञानसंश्लिष्टवृत्तिप्रतिबिम्बितं विषयाऽवभासकं भवति वृत्त्यवभासकं च । यथा हि परेषां घटत्वादि सर्वगतमपि घटाद्यसम्बद्धं घटादावेवाऽभिव्यज्यते सामर्थ्यविशेषात्, एवं चैतन्यमपि वृत्त्यतिरेकेणाऽसङ्गि वृत्त्या संसृज्यते । प्रकाशसंसर्गश्च प्रकाशमानता । तेन वृत्त्याकारवृत्त्यन्तरमन्तरेणाऽपि वृत्तिविषययोः प्रकाशमानता । एवं चाऽज्ञानसुखादीनामपि तदाकाराविद्यावृत्तिप्रतिफलितचिद्भास्यत्वमेव । केवलसाक्षिवेद्यत्वं प्रमाणवृत्त्यनपेक्षत्वात् । ततो वक्तव्यैव रजतवृत्तिः । अन्यथा हि घटाद्यज्ञानानां साक्षिणि साक्षादध्यस्तत्वेनाऽज्ञानानां तद्विशेषणतया च घटादिसर्वपदार्थानां सर्वदा ऽवभासप्रसङ्गः । न हि साक्षिणा अज्ञानमित्यज्ञानप्रतीतिः । विषयविशिष्टतया ऽवभासात् । न चेष्टापत्तिः । तथा ऽननुभवात् । तदाकाराऽविद्यावृत्तिप्रतिफलितचिद्भास्यत्वे तु नायं दोषः । वृत्तेरसदातनत्वात् । अत एवेश्वरस्याऽपि सर्वज्ञता सर्वाकारमायावृत्त्यैव । किं च सुप्तोत्थितस्य परामर्शजनकसंस्कारार्था सुषुप्ताविवाहङ्कारादिधर्माणां संस्कारजन्यत्वार्था ऽपि वृत्तिः सर्वत्राङ्गीकार्या, साक्षिणो नित्यतया संस्कारजनकत्वाभाववत्तज्जन्यत्वाऽनुपपत्तेः । अर्थस्य भावनाजन्यत्वं तु न सम्भवति । ज्ञानजनकत्वेन भावनायाः क्लृप्तत्वात् । अन्यथा नित्यस्यैव साक्षिणः संस्कारस्मरणजनकत्वोपपत्तौ तत्राऽपि वृत्तिर्न स्यात् ।

नित्यज्ञानस्य संस्कारजन्यत्वमक्लृप्तमिति तत्र वृत्त्यङ्गीकारे भावनाया अर्थजनकत्वमप्यक्लृप्तमित्यङ्गीकर्तव्या सर्वत्र वृत्तिः ।

नन्वेवं घटादिवद्वृत्तिवेद्यत्वे ऽज्ञानान्तःकरणरजतादीनामपि अन्तःकरणवृत्तिवेद्यत्वमेवास्तु । अस्तु नाम तथेति केचित् । अत एव स्वप्नस्य मनोवृत्तित्वं वदन्ति केचिद् ग्रन्थकाराः ।

अपरे सुषुप्तावन्तःकरणाऽभावादज्ञानसुखाद्याकाराऽविद्यावृत्तेरावश्यकत्वेन तथैव साक्षिवेद्यत्वकल्पनया न प्रमाणसापेक्षो ऽन्तःकरणपरिणामः । अन्यथा सुप्तोत्थितस्य परामर्शाऽनुपपत्तेरिति सिद्धा रजतवृत्तिः ।

अपरे पुनराचार्याः वृत्तौ तादृशसामर्थ्ये मानाभावाद्वृत्तिभानप्रयोजकाऽऽध्यासिकसम्बन्धस्यैवाऽज्ञानादिभानप्रयोजकत्वे वृत्तिकल्पनाऽनवकाशाद् नाज्ञानाद्याकारा वृत्तिर्भानार्था । अज्ञानविशेषणतया सदा घटादिभानं तु इष्टमेव, मनुष्यत्वाद्यभिमानवत् । अत एव स्वसत्तायामव्यभिचारिप्रकाशत्वमहङ्कारादीनामुक्तं ग्रन्थकारैः । रजतवृत्तिस्त्ववश्यं स्वीकर्तव्या । तथा हि उक्तं घटस्याऽपरोक्षत्वं सुखादिवन्नान्तरवच्छेदेन तत्र तस्याविद्यमानत्वात् । किं तु बहिरवच्छेदेन । अन्तर्घटप्रतिभासस्तु वृत्तिविशेषणतया । एवं च रजतस्याऽप्युक्तरीत्या इदमंशावच्छेदेनाऽपरोक्षत्वं नान्तराऽवच्छेदेन । अन्तःप्रतिभासस्तु वृत्तिविशेषणतया । तदभावे ऽन्तःप्रतिभासो न स्यात् । तदुक्तम् 'साक्षिचैतन्यस्य रजताऽवच्छेदहेतुज्ञानाभासाकारेणे' ति । न चेदं वृत्तिविशेषणतया ऽन्तःप्रतिभासः । तस्यास्तदाकारत्वाऽभावात् ।

ईश्वरस्याऽपि मायावृत्तिरवश्यमङ्गीकर्तव्या । न तु सर्वथा तदभावः । अन्यथा जगत्कर्तृत्वाऽनुपपत्तेः । तथा हि । यदि तावत्परेषामिव कार्याऽनुकूलज्ञानादिमत्त्वं कर्तृत्वं, यदि वा तादृग्ज्ञानवत्त्वमात्रं, सर्वथाऽपि मायावृत्तिसिद्धिः । स्वरूपज्ञाने भेदाऽभावेनाऽऽधाराधेयभावाऽसम्भवात् । न चाधाराधेयभाव औपचारिकः । तथा सति जगत्कर्तृत्वस्याप्यौपचारिकत्वापत्तेः । न च मुख्ये सम्भवति तद्युक्तम् । अथौपाधिक आधाराधेयभावः । तथा हि । स्वरूपज्ञानमेवाऽव्याकृतनामरूपात्मकप्रपञ्चाऽवच्छिन्ननामधेयम् अनाद्यनिर्वचनीयाऽविद्यावच्छिन्नमाधार इति । सत्यमौपाधिकत्वोक्त्यैव पारमार्थिकस्य तस्याऽसम्भवात्सांव्यवहारिकत्वमभ्युपेतव्यम् । न तु प्रातिभासिकत्वं, जगत्कर्तृत्वश्रुतेस्तदालम्बनत्वाऽयोगात् ।

स चायं सांव्यवहारिक आधाराधेयभावस्तादृशभेदमन्तरा ऽनुपपन्नः । 'यस्य ज्ञानमयं तपः' 'तपसा चीयते ब्रह्मे'त्यादिश्रुतेश्च सांव्यवहारिको भेदः । न चौपचारिको भेदप्रत्ययः । मुख्ये बाधकाऽभावात् । गौरवं बाधकमिति चेन्न । श्रुतौ शक्तितः प्रतीयमानानामर्थानां गौरवादिना निराकरणे देवताविग्रहादिन्यायानामुन्मूलनप्रसङ्गात् । न च सांव्यवहारिकभेदाद्यङ्गीकारे स्वरूपव्याघातः । 'स्वे महिम्नि प्रतिष्ठित' इत्यादौ तु प्रकृतस्य परिच्छेदत्रयशून्यस्य वस्तुनो लक्षणया प्रतिपिपादयिषितत्वान्न सांव्यवहारिकेणाऽऽधाराधेयभावेन कृत्यम् ।

तदेवं जीवेश्वरयोरिव कार्यानुकूलज्ञानस्येश्वरस्य च तत्रापि सिद्धः सांव्यवहारिको भेद आधाराधेयभावश्च । तस्य च कार्याऽनुकूलज्ञानस्य भवदुक्तयुक्त्योपाधितः

सांव्यवहारिकभेदभिन्नस्य जीववदनादित्वे प्रसक्ते, 'तदैक्षत' 'स ईक्षाञ्चक्रे' इत्याद्यया श्रुत्या 'यस्य ज्ञानमय'मिति मयट्श्रुत्या च विकारत्वप्रतीतेः सिद्धे जन्यत्वे नौपाधिकत्वं भेदादेः कल्पयितुं शक्यं, गौरवात् । जन्यज्ञानत्वेनैव च श्रुतिप्रतिपन्नभेदादेः प्रतिपादयितुं शक्यत्वात् । किं चाऽव्याकृतनामरूपप्रपञ्चस्योपाधित्वे तस्य प्रलयकालेऽपि सत्त्वात् प्रलयकालस्य च स्थितिकालवन्महत्त्वात्तावत्यपि काले कार्याऽनुकूलस्येक्षणस्य सत्त्वापत्तिः । न चैतत्सम्भवति । श्रुतिस्वारस्येन सृष्ट्यादौ प्रतीयमानत्वात् । व्याकृतनामरूपप्रपञ्चस्योपाधित्वं तु न सम्भवति । तदानीं तस्याऽभावात् । 'बहु स्या'मितीक्षणाकाराऽनुपपत्तेश्च । अत एव सर्वज्ञानवति प्रसिद्धेन सर्वज्ञशब्देन श्रुतिवृत्त्या प्रतीयमानं सर्वज्ञानवत्त्वं वृत्त्यैवोपपाद्यते । श्रुत्यन्तरप्रसिद्धजन्यज्ञानेनैव सर्वज्ञानवत्त्वोपपत्तौ औपाधिकभेदकल्पनाया अन्याय्यत्वात् । सर्वज्ञानात्मकत्वे च सर्वज्ञशब्दस्य तद्वत्सु योगिषु प्रसिद्धस्य शक्तिग्रहाऽसम्भवात् । किं च सर्वविषयज्ञानस्य ईश्वरस्य चौपाधिकं भेदमाधाराधेयभावं च वदतां सदा सर्वज्ञत्वश्रुतेः पूर्वोक्तविधया सांव्यवहारिको भेदादिः सदा वक्तव्यः । तथा च जीवे ईश्वराद्भिन्नं सर्वविषयं ज्ञानं व्यवहारत इति स्वरूपज्ञानेन सर्वज्ञत्वमिति वाचोयुक्तिर्जीवेश्वरयोरिव ईश्वरसर्वविषयज्ञानयोः पारमार्थिकाभेदाऽभिप्राया व्याख्येया । न च जीवत्वे आवरणशक्तिप्रधानाऽज्ञानस्योपाधित्ववत् सर्वविषयज्ञानत्वे सर्वमुपाधिः । सदा सर्वस्याऽभावात् । अविद्यमानस्य चोपाधित्वायोगात् । अन्यस्य चासम्भवात् । तस्मान्मायापरिणाम एव सर्वविषयः प्रलयेऽन्यदा च भेदेन विद्यमानः

सर्वविषयज्ञानवत्त्वे उपाधिः स्वीकर्तव्यः । तदिदमुच्चैः श्रावितं संप्रदायविद्भिरिति लाघवमनुसृत्य श्रुतिं सङ्कोचयतामुपचारेण च व्याकुर्वतां समीचीनो न्यायदर्शने एव प्रवेशः, अर्धजरतीयन्यायस्याऽतिजघन्यत्वादित्युपरम्यते ।

तदेवं केवलसाक्षिवेद्यत्वे तुल्ये ऽपि रजतादौ वृत्तिरपेक्षिता नाऽज्ञानादौ देहपर्यन्ते । ननु कथं देहस्य केवलसाक्षिवेद्यत्वं ? यावता घटादिवच्चक्षुर्ग्राह्यत्वेन प्रमाणवेद्यत्वात् । न च स्वप्नवच्चक्षुर्ग्राह्यत्वं, तथा सति घटादेरपि तथा प्रसङ्गात् । इष्टापत्तिरिति चेद् ? व्यवहारोच्छेदप्रसङ्गात् ।

अस्तु तर्हि प्रमाणवेद्यो देहः ? मैवं, तथा सति अज्ञानविषयत्वेन कदा चिदहं मनुष्यो न वेति संदेहापत्तेः । किञ्चाऽयं ब्रह्मण्यध्यस्तो जीवचैतन्ये वा ? आद्ये घटादिवन्न केवलसाक्षिवेद्यत्वं, द्वितीये सुखादिवदन्याऽपरोक्षत्वभङ्गप्रसङ्गः ।

अत्राहुः । एक एवाऽयं देहो देहत्वेन ब्रह्मण्यध्यस्तो न जीवे, अहं देह इत्यप्रतीतेः । तादात्म्याऽभिनिविष्टमनुष्यत्वेन जीवे ऽध्यस्तो न ब्रह्मणि, अहं मनुष्य इति प्रतीतेः । तेनैव च रूपेण केवलसाक्षिवेद्यत्वं प्रमाणवृत्त्यनपेक्षत्वात् । देहत्वेन तु प्रमाणवेद्यत्वम् । एवमेवमन्तःकरणादिरपि तत्त्वादिना ब्रह्मण्यध्यस्तो ऽहंत्वादिना ऽज्ञजीवे ऽध्यस्त इति ध्येयम् । तत्सिद्धमज्ञानोपहितचैतन्यरूपसाक्षिवेद्यत्वं देहस्य । ननु नाऽज्ञानं साक्षित्वे उपाधिः । तथा हि । सुषुप्ते ऽज्ञानसुखसाक्षिस्फूर्तेः पुरुषान्तरस्य सुखमहमस्वाप्समिति स्मरणप्रसङ्गः । अज्ञानसुखसाद्याकारवृत्त्या हि उत्पन्नः संस्कारः साक्षिणि । तत्र प्रमातुरभावात् । स च एक इति पुरुषान्तरे ऽपि स्मरणं स्यात् । तस्मादन्तःकरणोपहितः साक्षी, यदन्तःकरणोपहिते

संस्कारः तस्यैव स्मरणमिति नाऽतिप्रसङ्गः । सुषुप्ते ऽपि च संस्कारात्मना ऽन्तःकरणसत्त्वात् अवस्थात्रये ऽपि च स एव व्यवहाराङ्गमिति ।

अत्रेदं विवेचनीयम् । किमिति स्थूलदेहोपाधिको न साक्षीति? सुषुप्ते तदभावादिति चेत्? अहो विस्मृतं संस्कारात्मना तत्सत्त्वम् । प्रमाणाऽभावादिति चेत्? किमन्तःकरणस्योपाधित्वे ऽस्ति वेदः? अज्ञानस्योपाधित्वे ऽपि नास्ति वेद इति चेत्? नास्त्येवेति ब्रूमः । किं तर्हि विनिगमकमिति चेत्? शृणु । अन्तःकरणतद्धर्मसुखादिदेहतद्धर्मादिकार्याणामानन्त्येन विनिगमकाऽभाव एव कारणस्यैकस्योपाधित्वे विनिगमकः । अतिप्रसङ्गस्य कः समाधिरिति चेत्? अयं समाधिः । सुषुप्तौ तावदज्ञानाद्याकारा वृत्तिरवश्यं वक्तव्या, अन्यथा स्मरणानुपपत्तेः । सा च न साक्षिणमुक्तस्वरूपमभिव्याप्योत्पद्यते किं तु परिच्छिन्नैव अन्तःकरणादिसंस्कारावच्छेदेन चोत्पद्यते । उत्पन्ना च नश्यन्ती तदवच्छेदेन संस्कारमाधत्ते । ततश्च तदवच्छेदेनैव स्मरणमिति न पुरुषान्तरस्य स्मरणप्रसङ्गः । किञ्च को ऽयं संस्कारः, अज्ञानं वा अन्तःकरणं वा तद्भिन्नो वा? आद्ये सुषुप्ते ऽज्ञानस्योपाधित्वापत्तिः । द्वितीये जाग्रत्सुषुप्तयोरभेदापत्तिः । तृतीये सुषुप्ते संस्कारः साक्षित्वोपाधिः, जागरे ऽन्तःकरणमित्यननुगमः । अज्ञानोपाधित्वे तु नायं दोषः, ईश्वरे तदसम्भवाच्च । उक्तं च सांप्रदायिकैः 'मोहसंक्रान्तमूर्तिः साक्षी'ति । सुखादिव्यवस्था तु प्रमातृभेदेनैवेति न प्रतिशरीरं साक्षिभेदः । अनेकाऽज्ञानवादे च साक्षिभेदः स्फुट एवेति सिद्धमज्ञानोपहितः साक्षीति ।

अयमेव प्राज्ञ इति आनन्दमय इति च गीयते ।

सुषुप्ते प्रकर्षेणाऽज्ञत्वात् आनन्दप्रचुरत्वाद्वा न किञ्चिदवेदिषमिति सुखमस्वाप्समिति परामर्शात् । तत्राऽन्तःकरणाद्युपाधिविरहाज्जागरापेक्षया ऽऽनन्दाभिव्यक्तेः । न त्वानन्दमयः शुद्धः । प्रियशिरस्त्वादिसंकीर्तनात् । तत्प्रतिष्ठारूपस्य च ब्रह्मणः पृथग् 'ब्रह्मपुच्छं प्रतिष्ठे'ति संकीर्तनाच्च । मयटो विकारार्थत्वात्, अनात्मत्वेन निर्णीताऽन्नमयप्राणमयमनोमयविज्ञानमयप्रायपाठाच्च । स्थूलदेहसंबन्धादन्नमय इति प्राणपञ्चककर्मेन्द्रियपञ्चकसम्बन्धात्प्राणमय इति मनःसम्बन्धान्मनोमय इति बुद्धिज्ञानेन्द्रियसम्बन्धाद्विज्ञानमय इति च स एवानन्दमयो ऽभिधीयते । प्राणमयादिकोशत्रयस्यैव तैजसत्वव्यपदेशः । तत्रैव च विज्ञानमयो ज्ञानशक्त्या कर्तेत्युच्यते । मनोमय इच्छाशक्त्या करणं प्राणमयः क्रियाशक्त्या कार्यम् । एतेन परेषामिव नाऽस्माकं प्रयत्नः, कोशद्वयनिष्ठज्ञानेच्छयोरनन्तरं प्राणक्रियाशक्त्यैव शरीरचेष्टासम्भवात् इष्टपदार्थज्ञानस्येष्टं मे स्यादितीच्छायाश्चाऽनुभववत् प्रयत्नानुभवाऽभावाच्च । अहं प्रयते इति चेष्टाविषयत्वात्प्रतीतेः, शब्देन च तदभिधानात् । एतेन जीवनयोनिः प्रयत्नो निरस्तः ।

इदमेव कोशत्रयं लिङ्गशरीरम् । तच्च द्विविधं समष्टिव्यष्टिभेदात् । तत्र समष्टिर्नाम व्यापकं सूत्रमिव मणिषु सर्वलिङ्गशरीरेषु स्थूलेषु चाऽनुस्यूतं हिरण्यगर्भाख्यं लिङ्गशरीरं, तच्चोपासनाविशेषफलभूतं प्रभूतपुण्यस्य भोक्तुः उत्कर्षगतस्याऽऽनन्दविशेषस्याऽऽयतनं 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इति श्रुतेः । एतस्यैवात्र ब्रह्मशब्देन व्यपदेशः । मुख्यब्रह्मणि शतगुणोत्कर्षाऽनुपपत्तेः ।

एतस्य च हिरण्यगर्भस्योक्तविधाऽऽनन्दभोगे निय-

मेन न स्थूलशरीरापेक्षा, ब्रह्माण्डाद्बहिरपि भोगश्रवणात् । एतदुपासकानां चोक्तविधसायुज्यं गतानां जगद्व्यापार-वर्जं तादृशमेव भोगादि । एवं च वृक्षसमूहो वनमिव सर्वलिङ्गशरीरसमूहो हिरण्यगर्भ इति प्रलापः श्रुत्यनभिज्ञानात् । एवमग्न्यादिसमूहो हिरण्यगर्भ इत्यपि भ्रमः, तेषां परिच्छिन्नत्वात्, श्रुतौ तद्रूपत्वस्य सर्वात्मकत्वस्यैवोपासनार्थमभिधानात् ।

व्यष्टिर्नाम परिच्छिन्नम् । तच्च बहुविधं विराडादिपिपीलिकापर्यन्तम् । तत्र विराज अस्मदादिवत्परिच्छिन्नस्यैव सतः प्रभूतपुण्यस्य भोक्तृविशेषस्य सकलस्थूलाऽभिमानिनः सत्यलोकाऽधिपतेश्चतुर्मुखभोगशरीराऽवच्छेदेन हिरण्यगर्भाच्छतगुणाऽपकृष्टाऽऽनन्दविशेषान् भुञ्जतः प्रजापतिर्वैश्वानर इत्यादयो व्यपदेशा भवन्ति । सकलस्थूलाऽभिमानित्वाच्च स्थूलसमष्टिरिति व्यपदिश्यते । अत एव स्थूलसमूह एव विराडिति केषांचिद्भ्रमः ।

यत्तु हिरण्यगर्भस्यैव स्थूलसंबन्धाद्विराट्संज्ञा तैजसस्यैव विश्वसंज्ञेति, तदयुक्तं, जीवान्तरे मानाभावात्, कल्पनागौरवप्रसङ्गाच्च । ततो न विराट् व्यष्टिलिङ्गरूप इति । तदप्यशुद्धम् । हिरण्यगर्भे हि न प्रत्यक्षादिप्रसरोऽस्ति । किं तूपासनाविधिशेषेभ्यो देवताविग्रहन्यायेन तत्सिद्धिः । एवञ्च ततो जीवान्तरतया प्रतीयमानस्य विराजोऽपि सिद्धिः । 'तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्सोऽश्राम्यत तस्य श्रान्तस्य तेजो रसो निरवर्तताऽग्नि'रिति श्रुतेः ।

अत्र ह्याचार्यैः पूर्वं मृत्युशब्दाऽभिहितं हिरण्यगर्भं सोऽश्राम्यदिति तच्छब्देन व्याख्याय 'सोऽण्डस्याऽन्तर्वि-

राट् प्रजापतिः प्रथमजः कार्यकारणसङ्घातवान् जातः स वै शरीरी प्रथम' इति स्मरणादिति ग्रन्थेन । अग्निशब्देन विराड् व्याख्यातः । एकजीवत्वे हि अण्डस्यान्तरिति कार्यकारणसङ्घातवानिति शरीरीति चाऽनुपपन्नम् । तथा 'सो ऽकामयत द्वितीयो मआत्मा स्या'दित्यादिश्रुतौ 'तत्तत्र मिथुने यद्रेत आसीत् प्रथमशरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतोबीजं ज्ञानकर्मरूपं यद् दृष्टवानासीज्जन्मान्तरकृत'मित्यादिभाष्येण हिरण्यगर्भस्य विराडुत्पादकज्ञानकर्मालोचनपूर्वकं तत्स्रष्टृत्वमभिधाय तमेव कुमारं जातमग्निं प्रथमशरीरिणमशनायावत्त्वान्मृत्युरभिव्याददात् । स च कुमारो भीतः सन् स्वाभाविक्या विद्यया युक्तो भाणित्येवं शब्दमकरोत् । एवं भीतं कुमारं कृतरवं दृष्ट्वा मृत्युरैक्षत । यदि कदा चिदिमं कुमारमभिमंस्ये हिंसिष्ये कनीयोऽन्नं करिष्य इत्यादिबह्वसमञ्जसं स्यात् । 'स प्रजापतिलोकमागच्छति स ब्रह्मलोकमागच्छती'ति लोकभेदाम्नानं 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इति चानन्दशतगुणोत्कर्षः स्वरसतो जीवभेदं गमयति । स्थूलसूक्ष्मोपाधिभेदमात्रेण लोकभेदाद्युक्तौ जीवभेदप्रायपाठो भज्येत । तस्माद्धिरण्यगर्भतो जीवान्तरं विराडिति सांप्रदायिकाः । एवमग्न्यादयो ऽप्यस्मदादिवागाद्यभिमानिन्यो देवताः परिच्छिन्नसप्तदशलिङ्गात्मिकाः पृथक् पृथक् स्वस्वलोके तिष्ठन्ति ।

यत्तु समष्टिसप्तदशस्यैकैको ऽवयवो वागादिरेवाऽऽग्न्यादिर्न तु स्वतन्त्रं सप्तदशं तेषामस्तीति, तदशुद्धम् । अग्न्यादीनां हि पृथग्भोक्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । न च केवलेन वागादिना भोगः सम्भवति । न वा ऽस्मदा-

दिवागाद्यभिमानः । अदृष्टत्वादश्रुतत्वाच्च । समष्ट्यन्तः-करणाद्यात्मकचन्द्रादिना ऽन्यादेर्भोग इति चेन्न । तत्कल्पनायाः कपोलमूलत्वात् । किं चाऽग्नेर्भोक्तुः समष्टिवाचीव समष्ट्यन्तःकरणादिष्वभिमानो ऽस्ति न वा ? आद्ये कथं न तस्य सप्तदशात्मकत्वम् ? अस्मदादीनामपि सप्तदशात्मत्वं तदभिमानित्वमेव । द्वितीये कथमग्नेः समष्ट्यन्तःकरणपरिणामात्मकसुखदुःखादिभानम् ? अनध्यस्तत्वात् । सुखदुःखादिकमत्राध्यस्तमिति चेन्न । समष्टिमनःपरिणामसुखादेरत्रा ऽध्यासे ऽन्यथाख्यातिप्रसङ्गात् । तत्संसर्गाऽनिर्वचनीयत्वे रजतादावपि तथा प्रसङ्गात् । सुखाद्यन्तरोत्पत्तौ तद्वाचः परिणाम इति वक्तव्यमग्नेरप्यन्तःकरणम् । अनध्यस्तस्यैव भोग इति वदतां न्यायमनप्रवेश एव वरम् । चन्द्रस्य च समष्ट्यन्तःकरणतादात्म्यं गतस्य तत्परिणामाऽग्निसुखभानप्रसङ्गः । ‘वियत्सम्पूर्णतोत्पत्तौ कुम्भस्यैवं दृशा धियाम्’ इति न्यायात् । ततस्तयोस्तुल्यभोगापत्तिः । किञ्च पृथग्भोक्तॄणां सप्तदशानां पुण्यविशेषात्सृष्ट्यादावग्न्यादिभावं गतानां केवलवागादिरूपत्वे पूर्वं तत्तत्सप्तदशानामश्वमेधोपासकसप्तदशस्य च संस्कारेभ्य एकं सप्तदशं जायतइत्यत्यन्ताऽपूर्वकल्पनाप्रसङ्गः । एकेन च सप्तदशेनाऽष्टादशानां भोग इति चाऽत्यन्तमप्रसिद्धं कल्पनीयम् । अथैकमेव समष्टिलिङ्गं न लिङ्गान्तरमस्ति । तत्र च स्वाभाविकाऽसङ्गपाप्मादिना परिच्छिन्नत्वं कल्पितं, ततश्च नोक्तदोषः । अत एव हिरण्यगर्भसायुज्यं जीवस्य ब्रह्मसायुज्यं तत्परिच्छिन्नाऽभिमाननिवृत्तिरेवेति चेन्न । पूर्वं दूषितत्वात् । किञ्च हिरण्यगर्भस्याऽप्यस्मदादिभोगप्रसङ्गः । समष्टिलिङ्गपरिणामस्य तदात्मन्यध्यस्तत्वात् । न हि सम्भवति सम-

ष्टिलिङ्गमध्यस्तं तत्परिणामो नाऽध्यस्त इति । तादात्म्याऽध्यासे धर्माऽध्यासस्याऽऽवश्यकत्वात् । किञ्च जीव एको ऽनेको वा? आद्ये कथमग्न्यादीनां परस्परोपकारेण भोक्तृत्वमुपपाद्येत ? अद्वितीये समष्टिलिङ्गैकत्वे ऽनेकजीवस्याऽप्रसिद्धत्वात् । एकस्य तत्त्वज्ञानोत्पत्तौ लिङ्गनाशाऽनाशयोः क्लिष्टकल्पनाप्रसङ्गात् । लिङ्गैकत्वे प्रमातृभेदस्याऽप्यनुपपत्तेः । अपि च समष्टिलिङ्गैकत्वे व्युत्क्रमणशास्त्रं मार्गद्वयं चाऽनुपपन्नं स्यात् । हिरण्यगर्भसायुज्यं तु पूर्वं व्याख्यातमेव । 'स त्रेधा ऽऽत्मानं व्यकुरुत' इति विराजो ऽग्न्याद्युत्पत्तिश्रवणाच्च । 'न हिरण्यगर्भवागग्निः' इति भाष्यविरोधाच्च । क्व चित्तु श्रुतावग्निशब्देन विराडभिधानवद्धिरण्यगर्भवागभिधीयते 'सो ऽग्निरभव'दित्यादौ, अत एव भ्रमः । हिरण्यगर्भवागग्निरिति क्व चिदुपासनार्थमभिधानाच्च भ्रमः । तस्मादग्न्यादयो व्यष्टिलिङ्गात्मका भिन्ना एव जीवाः ।

एतेषां च हिरण्यगर्भादीनां सहजसिद्धज्ञानवैराग्यादिश्रवणाज्जीवत्वम् । भयाऽरत्यादिश्रवणाच्च । पुराणेष्वीश्वरावतारत्वसंकीर्तनमन्तर्याम्यभिप्रायेण । केषां चिदीश्वरोपाधित्वभ्रमो जीवधर्माणामल्पत्वात्, अल्पत्वं च प्रभूतपुण्यत्वाज्जीवन्मुक्तत्वाच्च । भोगैश्वर्यादि तु प्रारब्धवशात् । तदुक्तम् । 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति । तदुपासनया तत्सायुज्यं गता अपि तेन सह यावदधिकारमवस्थाय श्रवणाद्यभ्यासलब्धज्ञाना मुच्यन्ते । तदुक्तम् ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ इति ।

एतच्च व्यष्टिसमष्टिलिङ्गशरीरं पञ्चीकृतेभ्यो भूतेभ्य उत्पद्यते । कथमपञ्चीकृतानामुत्पत्तिः कथं वा तेभ्यो लिङ्गशरीरोत्पादः ? उच्यते । मायाशबलाच्चिदात्मन आकाशस्तस्माद्वायुर्वायोरग्निरग्नेरापो ऽद्भ्यः पृथिव्येतानि सूक्ष्माणि व्यापकानि च । सूक्ष्मत्वं विरलावयवत्वम् । एतान्येव तन्मात्रा इति ।

एतेभ्यश्च व्यस्तेभ्यः क्रमेण श्रोत्रादिपञ्चकं वागादिपञ्चकं च समस्तेभ्यो ऽन्तःकरणं प्राणश्चोत्पद्यते । अत एव श्रोत्रं न परेषामिव कर्णशष्कुल्यवच्छिन्नं नभः, किं तु तत्कार्यं व्यष्टिसमष्टिरूपम् । तेन नाऽऽवश्यमन्तरेवोत्पन्नः श्रोत्रेण शब्दो गृह्यत इति नियमः । चक्षुर्वद्बहिर्गत्वा तेन बहिष्ठस्यापि शब्दस्य ग्रहणसम्भवात् । ततश्च एक एव शब्दो यथाप्रतीति बहुभिः पुरुषैर्गृह्यत इति युक्तं समाश्रयितुम् । ततश्च न प्रतिपुरुषं शब्दान्तरग्रहणकल्पना नापि शब्दैकत्वप्रतीतेः सजातीयत्वनिमित्तकभ्रमत्वकल्पना ।

एतानि च श्रोत्रादीनि पञ्चभूतकार्यान्तःकरणात्मकान्येव न स्वतन्त्राणीति केचित् । तथा हि । तत्तद्गोलकाऽवच्छिन्नमन्तःकरणं श्रोत्रादिव्यपदेशं भजते । क्रियाविशेषवत्त्वाच्च प्राणाऽपानादिसंज्ञां लभते । तदतिरिक्तश्रोत्रादिस्वीकारे मानाऽभावाद् गौरवाच्च । 'स मनसा पश्यति मनसा शृणोति मनसा विजानाती'ति श्रुतेः । 'पश्यन्ती चक्षुरुच्यते जिघ्रन्ती घ्राणमुच्यत' इत्यादिस्मृतेश्च । अत्र च बुद्धिशब्दाभिप्रायं स्त्रीलिङ्गम् ।

अपरे पुनः श्रुतिस्वारस्येनाऽन्तःकरणाद्भेदेन प्रतीयमानत्वाद्विना हेतुं संकोचाऽनाश्रयणात्प्रमायाः सिद्धौ गौरवस्याऽदोषत्वाद्भिन्नान्येव श्रोत्रादीनि । श्रुतिश्च 'इमाः षोडशकला' इत्याद्याः ।

एवमुत्पन्नलिङ्गशरीरेभ्योऽपञ्चीकृतभूतेभ्यः पञ्चीकृतभूतोत्पत्तिरिति केचित् ।

पञ्चीकरणं तु पञ्चानामर्धदशकं विधाय पञ्चानामर्धपञ्चके इतरार्धपञ्चकस्य प्रत्येकं चतुर्धा विभक्तस्य भागचतुष्टयानां स्वस्वाऽर्धपरित्यागेन योजनम् । अत्र चेश्वरस्यैव कर्तृत्वम् । 'तासामेकैकां त्रिवृतं त्रिवृतं करवाणी'ति श्रुतेः। पृथिव्यादिभागानां बहुत्वात्तु पृथिव्यादिव्यपदेशः ।

सांप्रदायिकास्तु पञ्चीकृतानां न कार्यान्तरत्वमिच्छन्ति मानाभावात् । आकाशादिभ्यो वाय्वादिजन्मश्रवणवदपञ्चीकृतेभ्यः पञ्चीकृतजन्मश्रवणाऽभावात् । 'तासामेकैकां त्रिवृतं त्रिवृतं करवाणी'ति श्रुतेः साधारण्यात् । किञ्च नाऽस्माकं नैयायिकानामिव कारणमहत्त्वात्कार्ये महत्त्वं किं तु आकाशादिकारणेषु महत्त्वं सूक्ष्मत्वं च कार्येषु अल्पत्वं स्थूलत्वं च । एवञ्चाऽपञ्चीकृतेभ्यो भूतेभ्यः पञ्चीकृतभूतान्तरोत्पत्तौ पृथिव्यादिचतुर्थांशेभ्यो ऽल्पेभ्य एव स्थूलाकाशस्य महत उत्पत्तिरित्यपसिद्धान्तापत्तिः । तस्मात्तान्येव संयोगविशेषाऽवस्थानि पञ्चीकृतान्युच्यन्ते । अत एव सिद्धान्ते न पटो नाम तन्तुभ्यः कार्यान्तरं किं तु संयुक्तावस्थास्तन्तव एव पट इति । न चैवं वैशेषिकसिद्धान्तप्रवेशः यत्किञ्चित्साम्ये भवतामपि प्रसङ्गः, सर्वसाम्यस्य ममाप्यभावात् । तस्मात्पटवत् पञ्चीकृतानि । क्वचित्तेषामपञ्चीकृतेषु लयाऽभिधानं विश्लेषाऽभिप्रायम् ।

एतेभ्यः पञ्चीकृतेभ्यः पञ्चभ्यो ऽपि ब्रह्माण्डभूरादिचतुर्दशभुवनचतुर्विधस्थूलशरीराणां चोत्पत्तिः। कथं विजातीयेभ्य एककार्योत्पत्तिरित्याक्षिपतां तन्तुभ्यः पटकार्योत्पत्तिं स्वीकुर्वतां तन्तुकेशपट्टसूत्रादिभ्यः प्रतीयमानाऽऽस-

नादिविचित्रकार्याऽभावमङ्गीकुर्वतां कोशपानमेवैकं शरणम्। चतुर्विधानि जरायुजाऽण्डजस्वेदजोद्भिज्जानि। तदेवं निरूपितो हिरण्यगर्भादिरुद्भिज्जान्तो जीवस्य संसारः ।

अथ कथमेतस्य निवृत्तिः ? शृणु । कश्चित् खलु पुरुषधुरन्धरो नित्याऽध्ययनविधितो ऽधीतवेदो ऽतः साङ्गाध्ययनबोधाच्च वेदान्तवाक्यानामापाततो ऽर्थमवगच्छति।

ननु कथमध्ययनविधेर्नित्यत्वम् ? स्वाध्यायाऽध्ययनस्य फलवदर्थाऽवबोधफलकत्वाऽवधारणात् । तथा हि । अध्ययनस्य तावन्नाऽवघातादिवदुत्तरक्रत्वङ्गत्वम् । श्रुत्यादीनामसत्त्वात् । येन फलकल्पनाऽनवकाशः स्यात् । तदवश्यं फले कल्पनीये न विश्वजिद्वत्स्वर्गः कल्पनीयः, तस्य स्वर्गोपस्थितिकल्पनायां प्रकृतकर्मफलताकल्पनायां च गौरवग्रस्तत्वात् । अत एव हिरण्यधारणादौ अनारभ्यविहिते व्यभिचरितक्रतुसम्बन्धाभावेन च पर्णतान्यायाऽनवसरे सति फलाकाङ्क्षायां न तत्कल्पना । अर्थवादोपस्थितभ्रातृव्यदुर्वर्णताया हिरण्यधारणफलतामात्रकल्पनात् । अस्तु तर्हि तद्वदेवाऽऽर्थवादिकमध्ययनस्य फलम् । 'यदृचो ऽधीते पयसः कुल्या अस्य पितॄन्स्वधाभिर्वहन्ती'ति पितॄणां पयःकुल्याप्राप्त्यादीति चेत्, न । तस्य ब्रह्मयज्ञार्थवादत्वात् । दृष्टे संभवत्यदृष्टकल्पनाऽनुपपत्तेश्च । अर्थाऽवबोधस्यैव फलत्वात् । न च विधिवैयर्थ्यं, नियमविधित्वात् । अर्थाऽवबोधे उपद्रष्ट्रादीनां साधनत्वेनाऽध्ययनस्य पक्षप्राप्तेः । अध्ययनविधेरर्थाऽवबोधफलकत्वादेव च नोत्तरक्रतुविधीनां तदाक्षेपकत्वम् । अन्यतःसिद्धतद्ग्रहणादेवोत्तरक्रतुविधिप्रवृत्तौ आक्षेपशक्तिकल्पनाया गौरवग्रस्तत्वात् । वेदार्थविचारस्य चाऽनेकक्रतुविधिप्रयुक्तत्वापत्तेः । न चैक-

स्वाध्यायविधिप्रयुक्तत्वे ऽनेकविधिप्रयुक्तत्वं संभवति । अन्यथा च शूद्रस्यापि स्वर्गकामादेः कर्माऽधिकारप्रसङ्गः । अध्ययनविधिसिद्धार्थाऽवबोधग्रहणेन कर्मविधिप्रवृत्तौ तु शूद्रस्य तदभावात् कर्मविध्यप्रवृत्तिः । नन्वध्ययनविधेः काम्यत्वे शूद्रस्याप्यर्थावबोधकामस्य तत्राऽधिकारप्रसङ्गः । तत्सिद्धार्थाऽवबोधस्य च तस्य स्वर्गकामादेः कर्माऽधिकारस्तुल्य इति चेत्, न । तस्योपनीताऽधिकारत्वात् । उपनयनस्य च त्रैवर्णिकमात्रे विहितत्वात् । तदेवं काम्यत्वे सति नाध्ययनविधेर्नित्यत्वमिति ।

अत्रोच्यते । काम्यत्वे ऽपि फलतो नित्यत्वं तस्य न विरुध्यते । अध्ययनस्य धर्माऽवबोधफलत्वात् । तस्य चाऽऽवश्यकत्वान्नित्यत्वम् । ऋणश्रुतेश्च । तदुक्तं 'ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगा'दिति । अत एव 'यो ऽनधीत्ये'त्यादिस्मरणमुपपद्यते । ननु किमित्येवं फलतो नित्यत्वमभिधीयते ऋणश्रुत्या उक्तस्मृत्या चाग्निहोत्रादिवत् स्वरूपनित्यत्वात् । न च स्वरूपनित्यस्य प्रत्यक्षबोधितकाम्यत्वव्याघातः, अग्निहोत्रादेस्तथा दर्शनादिति चेन्न । किमिदं स्वरूपनित्यत्वं? यदि तावदवश्यकर्तव्यता, तदुच्यतएव फलतो ऽस्माभिः । अथाऽकरणे प्रत्यवायः, सो ऽपि इष्यतएव, अध्ययनाऽकरणे धर्मानवबोधेनोत्तरकर्माभावात् । अथ नैमित्तिकत्वं, तदयुक्तम् । अग्निहोत्रादिवन्निमित्ताऽश्रवणात् । फलतो नित्यत्वेन ऋणश्रुतेरर्थवादरूपाया उक्तस्मृतेश्चोपपत्तौ निमित्तकल्पनाऽनवकाशात् । अत एव नाऽध्ययनस्याऽकरणनिमित्तः प्रत्यवायः । यद्वा तदकरणेनापि प्रत्यवायः । विहितस्याननुष्ठानादिति हि फलतो नित्यस्य नैमित्तिकस्य चावश्यकत्वेनानुगतीकृतस्याऽननुष्ठानात्प्रत्यवायो गम्यते । अत एवाधानाऽध्ययनयोर-

नैमित्तिकयोरपि फलतो नित्यत्वेनानुष्ठानात्प्रत्यवायोत्पत्तिः अनाहिताग्नितादेरुपपातकेषु पाठादवगम्यते । यदा तु 'विहितस्याऽननुष्ठानादिति' निमित्ते, विहितस्येति व्याख्यायते तदा आधानाऽध्ययनादेस्तदभावान्नैवाऽकरणात्प्रत्यवायः । उपपातकेषु पाठस्तु तदा चिन्त्यः । सर्वथाऽध्ययनस्य न नैमित्तिकत्वं किं तु फलत एव नित्यत्वमिति सिद्धम् ।

यच्चोक्तमर्थावबोधः फलमिति, तन्न सहन्ते वेदान्तिनः । तथा सति हि पूर्वकीयार्थविचारस्येव वेदान्तविचारे ऽपि तन्मात्राऽधिकारत्वप्रसक्तौ साधनचतुष्टयसम्पन्नाऽधिकारिकपृथक्श्रवणविध्याद्यनुपपत्तिः । नन्वभिहितः सिद्धान्तो, युक्तिरभिधीयताम् । तदुच्यते । न तावदर्थाऽवबोधः फलत्वेन श्रूयते दृष्टत्वेन तत्कल्पनायां किमित्यवाप्तिरुपेक्ष्यते । अथ तस्याः स्वरूपेणाऽपुरुषार्थत्वान्न फलत्वम्, तुल्यमर्थावबोधे ऽपि । अथ तस्य पश्वादिवत्फलत्वं तुल्यम् अवाप्तावपि, विधिवैयर्थ्यपरिहारो ऽप्यावयोः समानः । किं तर्हि विनिगमकमिति चेत्, अर्थावबोधात्पूर्वभावित्वमेव । किं चाऽध्येतव्य इति स्वाध्यायस्य कर्मत्वं प्रतीयते तच्चाऽवाप्यत्वेनेति तदवाप्तिरेव फलमर्थावबोधस्य, फलवत्त्वाभाव्यत्वे हि अध्ययनकरणिकाया भावनायाः श्रूयमाणफलवत्स्वाध्यायभाव्यकत्वं हीयेत, अश्रूयमाणार्थाऽवबोधभाव्यकत्वं च परिकल्प्येत । अपि चाऽङ्गीक्रियत एवाऽर्थावबोधवादिभिरपि अध्ययनजन्या स्वाध्यायाऽवाप्तिः । अन्यथा ब्रह्मयज्ञाद्यनधिकारप्रसङ्गः, कर्मणां मश्रवतामननुष्ठानप्रसङ्गश्च । विस्मरणे निषेधस्मरणाच्च । अवाप्त्यभावे हि विस्मरणनिषेधयोर्निर्विषयत्वात् । न च प्रत्य-

नविधिना ऽवाप्तिं परित्यज्याऽवाप्तिबोधकवाक्यान्तरकल्पना युक्ता ततश्चाऽऽवश्यिकया फलवत्या ऽवाप्त्यैव विध्यर्थसम्भवे नाऽर्थावबोधफलकल्पनाक्लेशः । किं च त्रैवर्णिकस्य निषादेष्ट्यादिवाक्याऽध्ययने नाऽर्थावबोधः फलं प्रयोजनाभावात् । तत्र ब्रह्मयज्ञाद्यनुष्ठानफलावाप्तिः फलमिति चेत् । अस्तु तर्हि सैव सर्वत्र फलमनुगतत्वात् । एवं चाऽध्ययनविधेरर्थाऽवबोधपर्यन्तत्वाभावे युक्तमेवोत्तरक्रतुविधिप्रयुक्तो विचार इति । इष्यतएव च निषादेष्ट्यादिवाक्यानां विचारप्रयोजकत्वं निषादादेरध्ययनविधिसिद्धार्थावबोधाभावात् । शक्यतएव च शूद्रानधिकारो वक्तुं कर्मणां हि स्मारकतया अवाप्तमन्त्राऽपेक्षाणां मन्त्ररहितानामपि अवाप्तवाक्यापेक्षाणामध्ययनविधिसिद्धावाप्तिग्रहणेन विधिप्रवृत्तौ शूद्रस्य तदभावान्नाऽधिकारः । उपनयनस्य त्रैवर्णिकाधिकारत्वादध्ययनविधेश्चोपनीताधिकारत्वात् । तस्मात्सुष्ठूक्तं नित्याऽध्ययनविधिना ऽधीतवेदो वेदान्तानामापाततो ऽर्थमवगच्छतीति ।

ननु केयमापातता ? उच्यते । वेदान्तजन्यज्ञानस्य निःसामान्यविशेषब्रह्माऽवधारणरूपस्यापि संशयाऽविरोधितैव । ननु निश्चयस्य संशयप्रतिबन्धकत्वेन क्लृप्तत्वाद्वेदान्तजन्यज्ञानस्याऽवधारणरूपस्य कथं संशयाऽविरोधित्वम् ? तस्मात्तदनवधारणमेककोटिकमिति चेत्, न । संशयस्याऽनेककोटिकत्वेन क्लृप्तत्वात् । अथैककोटिकमपि अनिश्चयां कया चियुक्त्या कल्पयिष्यामः । तर्हि निश्चयस्यैव सतः कस्य चित्संशयाऽविरोधित्वं कल्प्यताम् । युक्तं चैतत् । वेदवाक्यानां स्वविषये निश्चितप्रमाजनकत्वात् । कुशमयं बर्हिरित्यादीनां तद्रहितविकृतिषु आहवनीये जुहोती-

त्यादीनां पदहोमादिषु भ्रान्तिजनकत्वे ऽपि स्वविषये प्रमाजनकत्वनियमात् । कुशादिशास्त्रस्य हि तद्रहितं विकृत्यादि वस्तुतो न विषयः । यस्तु विषयः प्रकृत्यादिः न तत्र भ्रमं संशयं वा जनयति शास्त्रम् । तस्माद्वेदान्तवाक्यानामपि स्वविषये ब्रह्मणि निश्चयजनकत्वमेवाऽभ्युपगन्तव्यम् । अन्यथा वेदवाक्यस्यात्यन्ताऽप्रसिद्धं स्वविषये संशयजनकत्वं संशयस्यैककोटिकत्वं धर्मिणि अविद्यमानार्थाऽनवगाहिनः प्रत्ययस्य संशयत्वं च कल्प्येत । अस्माकं तु निश्चयस्यापि सतः सति दोषविशेषे संशयाविरोधित्वमात्रं कल्प्यमग्रे संशयदर्शनादिति लाघवम् । अत एव काशीस्थस्यार्द्रमरीचप्रत्यक्षप्रमायामपि पुरुषदोषात्संशय इति संशयाविरोधितैवाऽऽपातता । तर्हीदं संप्रदायविद्भिरप्युक्तमिति नाधिकं कल्प्यते । प्रकृतमनुसरामः ।

तदयमापातज्ञानवानिह जन्मनि जन्मान्तरे वा ऽनुष्ठितकर्मभिर्विशुद्धाऽन्तःकरणो नित्यानित्यविवेकादिकं लभते । ननु कथं कर्मणां तत्तत्फलसाधनानामन्तःकरणशुद्धिहेतुत्वम् ? उच्यते । नित्यानां तावत्कर्मणां पापक्षयफलकत्वं परैरप्यभ्युपेयते तथा ह्यहरहः संध्यामुपासीतेत्यादीनां विश्वजिन्न्यायेन स्वर्गो न भाव्यतया कल्पयितव्यः । स्वर्गकामनायाः सर्वदा सर्वेषामसत्त्वेनाऽहरहःकर्तव्याऽवबोधे बाधप्रसङ्गात् । अत एव विश्वजिति स्वर्गभाव्यत्वकल्पनायां न किं चिद्बाधकं, नित्यकर्तव्यताऽप्रतीतेः । नापि विहिताकरणप्रत्यवायप्रागभावपरिपालनं भाव्यम् । संध्योपासनानुष्ठानेपि कदा चित्प्रत्यवायोत्पत्तौ प्रागभावपरिपालनानुपपत्तेः । अनुत्पत्तौ प्रागभावत्वसिद्धेः । न हि वायौ रूपाऽनुत्पत्तौ रूपप्रागभावो वक्तुं शक्यः । अथ

प्रागभावपरिपालनगिरा ऽत्यन्ताऽभावो ऽभिधीयते न तर्हि तस्य नित्यकर्मफलत्वं युक्तं कल्पयितुम् । तस्य सर्वदा विद्यमानत्वेन संध्योपासनादेर्वैयर्थ्यापत्तेः । अत एव प्रायश्चित्तस्य न दुःखाऽनुत्पादः फलम् । परस्पराश्रयसिद्धे विहितत्वे तदकरणे प्रत्यवायाऽनुत्पादकस्य भाव्यत्वकल्पनमविहिताऽकरणे प्रत्यवायाऽभावात् । सिद्धे चोक्तविधे भाव्ये विहितत्वाऽसिद्धिः । भाव्याऽसिद्धौ कर्मणां विहितत्वाऽसिद्धेः । विधिविषयत्वं विहितत्वम् । विधिविषयत्वं च लिङादिबोधितशब्दभावनाभाव्यपुरुषप्रवृत्तिविषयत्वम् । तच्च न भाव्यविशेषाऽसिद्धौ सिद्ध्यति । न हि वाय्वादिवत् प्रवर्तको विधिः । अत एव विश्वजिति स्वर्गकल्पना । अत एव षष्ठाऽध्ये समानपदोपात्तं धात्वर्थमुपेत्य भिन्नपदोपात्तस्यापि स्वर्गस्य भाव्यत्वमभिहितम् । अन्यथा विधिश्रुत्यनुपपत्तेः । किं च एतदकरणजन्यप्रत्यवायप्रागभावपरिपालनं न भाव्यम् । एतदकरणजन्यप्रत्यवायस्य खपुष्पवदसत्त्वात् । सत्त्वे वा कर्मवैयर्थ्यात् । कर्मान्तराऽकरणजन्यप्रत्यवायाऽनुत्पादस्य फलत्वमनाशङ्क्यमेव । तस्मान्न विहिताऽकरणप्रत्यवायाऽनुत्पादः फलम् । नाप्यफलवत्त्वं नित्यानां वक्तुं शक्यम् । उक्तहेतोः विश्वजिन्न्यायोच्छेदप्रसङ्गाच्च । तस्मात् ज्ञानाऽज्ञानकृतानां सर्वपापानां पुरुषेषु सत्त्वात्तत्क्षयस्य च सर्वदा सर्वाऽभीप्सितत्वाद्दुःखवत्पापस्यापि द्वेष्यतया तन्निवृत्तेः काम्यत्वात् । अहरहःकर्तव्येनाऽवगतानां नित्यानां तेनैव फलवत्त्वं कल्प्यते । सिद्धे च पापक्षयफलकल्पने यदि नाम तदकरणे प्रत्यवायः स्मृतिवशात्प्रतीयते ऽस्तु नाम तथेति तच्चरणादौ नित्यानां पापक्षयहेतुत्वमभिहितम् । तस्माद्युक्तमुक्तं कर्मणामन्तःकरणशोधकत्वम् । 'धर्मेण पापमपनुदति'

'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इत्यादिशास्त्राच्च । यद्वा 'तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने'त्यादिश्रुत्या तत्तत्फलसंयुक्तानामपि कर्मणां संयोगपृथक्त्वन्यायेन विविदिषासंयोगस्य ज्ञानसंयोगस्य वा विधानात् । तत्राऽन्तःकरणशुद्धिर्द्वारम् । कथं पुनरत्र प्रकरणान्तरन्यायेन कर्मान्तरत्वं न प्रसज्यते । 'प्रकरणान्तरे प्रयोजनान्यत्व'मित्यत्र ह्येतत्सिद्धं यत्र प्रकरणान्तरमनुपादेयस्याहवनीयादेर्विधेयत्वमिति न कर्मान्तरविधिः । 'सायंप्रातर्जुहोती'त्यादौ च सत्यप्यनुपादेयगुणे प्रकरणान्तराऽभावान्न कर्मान्तरविधिः । 'मासमग्निहोत्रं जुहोती'त्याग्नेयं निर्वपेत् रुक्काम' इत्यादौ तूभयसत्त्वात्कर्मान्तरविधिरिति । विविदिषन्तीत्यादावपि प्रकरणान्तरमनुपादेयफलं चाऽस्तीति कर्मान्तरमापद्येतेत्युच्यते । न तावदत्र यज्ञादिसंबद्धो विधिर्जुहोतीतिवच्छ्रूयते । येनापूर्वं यज्ञादि विधीयेत तत्कल्प्यतइति चेन्न । कल्पनायां लाघवानुप्रवेशे सति प्रसिद्धानामाख्याताऽसमानाधिकरणव्यवहितपरामर्शसमर्थसुबन्तपरामृष्टानां कर्मणां फलसम्बन्धमात्रविधानोपपत्तौ कल्पनाऽन्तराऽनुपपत्तेः । अत एव सर्वेभ्यो दर्शपूर्णमासाविस्त्यादौ सत्यपि प्रकरणान्तरे अनुपादेयफलसम्बन्धे च न कर्मान्तरत्वम् । उक्तविषयाऽव्यवहितपरामर्शेन वाक्यस्य फलसम्बन्धमात्रपरत्वात् । तस्मान्न कर्मान्तरत्वम् ।

अत्र च यज्ञादीनामेकवाक्यगतत्वेन दर्शादिवत्समुच्चयः । न चैकप्रयोगत्वं, भिन्नप्रयोगाणामेवोपस्थितत्वादिति केचित् । तत्र कथमेकवाक्यतेति चिन्त्यते । अर्थैकत्वादेकं वाक्यं यथा ऽग्निहोत्रं जुहोतीति । 'अरुणयैक-

हायन्ये'त्यादौ सत्यप्यारुण्याद्यर्थभेदे विशिष्टक्रियाविधानादेकवाक्यत्वम् । सत्यपि च विशिष्टविधानस्य गौरवग्रस्तत्वे ऽगत्या तदाश्रयणं क्रियायाः प्रकारान्तराऽप्राप्तौ विशेषणमात्रविधानं यथा 'दध्ना जुहोती'ति । तत्राप्येकमेव विशेषणं विधातुं शक्यते नाऽनेकं, वाक्यभेदप्रसङ्गात् । अप्राप्ता हि क्रिया ऽनेकविशेषणान् उपसंगृह्णन्ती विशिष्टा विधातुं शक्या । प्राप्तायान्तु तस्यामनेकार्थविधाने विधिप्रत्ययाऽऽवृत्तिलक्षणो वाक्यभेदः प्रसज्यते, यथा पौर्णमास्यधिकरणे 'य एवं विद्वान् पौर्णमासीं यजत' इत्यत्र 'समिधो यजती'त्यादिवदभ्यासाधिकरणन्यायेन कर्मान्तरत्वे प्राप्ते 'प्रकरणं तु पौर्णमास्यां रूपावचना'दिति सूत्रेण द्रव्यदेवतयोरभावेन सिद्धान्तिते ऽस्तु तर्हि 'यदाग्नेयो ऽष्टाकपाल' इत्यादिभिः पौर्णमासीवाक्यविहिते कर्मणि रूपविधानमिति शङ्कायां वाक्यभेदो दूषणम् । पौर्णमासीकर्माऽनुवादेनाऽग्निदेवताविधाने ऽप्यष्टाकपालस्याऽविधानात्पुनस्तद्विधानाय विध्यावृत्तेः । अष्टाकपालविधाने ऽपि वा ऽग्निदेवताया अविधानाद्विध्यावृत्तेः । तदुक्तं 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण' इति । यदग्नये च प्रजापतये च सायं जुहोतीत्यत्र मन्त्रवर्णात्प्राप्तत्वादग्नेः प्रजापतिमात्रविधानात् । जातपुत्रः कृष्णकेशो ऽग्नीनादधीतेति पदद्वयोपलक्षितावस्थाविशेषस्याधानानुवादेन विधानाच्च वाक्यभेदः । अत्र च कर्मणीत्युपलक्षणम्प्राप्तमात्रमुद्दिश्यानेकविधानस्याशक्यत्वात् । अत एव ग्रहं संमार्ष्टीत्यत्र ग्रहोद्देशेन एकत्वसंमार्गयोर्विधाने वाक्यभेदः । एकोद्देशेनाऽनेकविधानवदनेकोद्देशेनैकविधानमप्यशक्यम् । यथा तत्रैव एकत्वग्रहोद्देशेन संमार्गविधानम् । तदश्च विविदिषन्तीति

न तावदरुणादिवाक्यवदेकविशिष्टक्रियाविधायकम्। असम्भवात् अनङ्गीकृतेश्च । येन तद्वदेकवाक्यत्वम्, नापि दध्ना जुहोतीतिवत् कस्याञ्चित्क्रियायामेकविशेषणविधानम्, उक्तहेतोरेव । यज्ञदानादीनि तूद्दिश्य विविदिषाफलसम्बन्धविधाने एकत्वग्रहोद्देशेन संमार्गविधानवत् वाक्यभेदः । विविदिषां फलं चोद्दिश्य यज्ञदानादिविधाने ग्रहोद्देशेन एकत्वसंमार्गविधानवद्वाक्यभेदः । अथ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेदित्यत्र एकस्वर्गोद्देशेन दर्शपूर्णमासात्मकानेकयागविधानवद्विविदिषोद्देशेन यज्ञदानाद्यनेकविधानमिति चेदुचितं तत्। वाक्यभेदाऽभावात् । तथा हि । तत्प्रत्याख्यानाय सिद्धनामधेयत्वदर्शपूर्णमासपदसमानाधिकरणैकयजिपदाभिहितानां षण्णामपि यागानां फलोद्देशेन विधाने न वाक्यभेदः । यथा ह्येकपदोपात्तानां व्रीहीणां यागोद्देशेन विधाने 'व्रीहिभिर्यजेत' इत्यत्र हि प्राप्ते कर्मणि व्रीहितद्बहुत्वविशिष्टैककारकविधानम् 'चित्रया यजेत' इत्यत्र तु सम्भवत्यपि चित्रत्वस्त्रीत्वविशिष्टैककारकविधाने गौरवात् नामधेयतया गतिसम्भवाच्च नाश्रीयते एवं दर्शपूर्णमासपदसमानाधिकरणयजिपदस्य स्वर्गभावनाकरणसमर्पकत्वाद् व्रीहिभिर्यजेतेति वाक्यतुल्यत्वम् । तेन 'व्रीहिभिर्यजेत' इतिवद्दर्शपूर्णमासाभ्यां 'स्वर्गकामो यजेत' इत्यत्र न वाक्यभेदः । विविदिषन्तीत्यत्र तु भिन्नपदोपात्तानां यज्ञादीनां भिन्नकारकवतां च व्रीहिवाक्यतुल्यत्वाभावेन वाक्यभेद एव। 'ये मध्यमास्तानग्नये दात्र' इत्यादौ तु सत्यपि पदभेदे सामानाधिकरण्येन पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकमेवेति न वाक्यभेदः । 'यज्ञेन दानेन' इति तु न सामानाधिकरण्यमस्ति । तस्माद्विविदिषाफलोद्देशेन वेदनोद्देशेन वा यज्ञविधाने न दानादि-

विधानं दानादिविधाने वा न यज्ञादिविधानमिति विध्यावृत्तिलक्षणो वाक्यभेदः स्यादेव । तेन एकस्यात्मपदस्य श्रोतव्यादिवाक्येष्वनुषङ्गवदेकस्य विविदिषन्तिपदस्याऽनुषङ्गः कल्पनीयः, यज्ञेन विविदिषन्ति दानेन विविदिषन्तीति । कथं तर्हि समुच्चयः ? उच्यते । भिन्नवाक्यविहितानामपि सोमप्राप्त्यर्थानां क्रयाणामिव सम्भवत्समुच्चयो यज्ञादीनां परिकल्पितान्तःकरणशुद्धिद्वाराणां भविष्यति। अत एव यज्ञानधिकारिणां ब्रह्मचारिणां वेदान्तवचनेन केवलेनाप्यन्तःकरणशुद्धिद्वारा विविदिषादिसिद्धिः । तथा च स्मृतिः 'जप्येनैव तु संसिद्धेत्' इति । सम्भवति चाधिकारिविशेषस्य विविदिषाद्युद्देशेन वेदानुवचनाद्यनुष्ठानमिति । न च स्वर्गकामाग्निहोत्रवत् सकृदनुष्ठाननियमः । यज्ञाद्यनुष्ठानस्यान्तःकरणशुद्धिपर्यन्तत्वात् । तस्याश्च साधनचतुष्टयसम्पत्तिगम्यत्वात् । तेन यस्य सकृदनुष्ठानादन्तःकरणशुद्धिर्न तस्यावृत्तिरितरस्यावृत्तिः । अथ वा 'जातपुत्रः कृष्णकेशो ऽग्नीनादधीत' इतिवद्यज्ञादिपदैः प्रसिद्धं कर्मसामान्यमुपलक्ष्य विविदिषादि फलोद्देशेन विधीयते । ततो न वाक्यभेदः । सम्भवत्समुच्चयश्चैवं भविष्यति । तदुक्तम् । 'यज्ञेनेत्यादिवाक्यं शतपथविहितङ्कर्मवृन्दं गृहीत्वा स्त्रोत्पत्त्याज्ञातसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ती'ति । यद्वा ईश्वरार्पणबुद्ध्याऽनुष्ठितानाङ्कर्मणामन्तःकरणशुद्धिः फलम् 'यत्करोषि' इत्यादिस्मृतेः । सर्वथा सुष्ठूक्तं कर्मभिः शुद्धान्तःकरणो नित्यानित्यविवेकादि लभतइति । तत्र नित्यानित्यविवेके इदं सर्वमनित्यं दृष्टश्रुताभ्यामेतस्याधिष्ठानं किञ्चिन्नित्यमित्येवमालोचनात्मकस्तत ऐहिकपारलौकिकफलेच्छाविरोधिचेतोवृत्तिविशेषात्मको विरागः । ततः शमादि-

षट्कं शमदमोपरतितितिक्षासमाधानश्रद्धाः । अन्तःकरणनिग्रहः शमः, बाह्येन्द्रियनिग्रहो दमः, उपरतिः संन्यासः, द्वन्द्वसहिष्णुत्वं तितिक्षा, श्रवणादिप्रावण्यं समाधानं, साम्प्रदायिके विश्वासः श्रद्धा, ततो मोक्षेच्छा मुमुक्षा, तदेतत्साधनचतुष्टयं श्रवणादिष्वधिकारिविशेषणम् ।

यत्तु मुमुक्षैवाधिकारिविशेषणङ्कामाधिकारे कामनाया एव निरपेक्षाधिकारनिमित्तत्वादिति । तन्न । कामाधिकारे सामर्थ्यादेरप्यधिकारनिमित्तत्वात् । अथ सामर्थ्यादिकं कामनासापेक्षमधिकारनिमित्तम् । कामनापि सामर्थ्यादिसापेक्षैव । न हि कामिनो ऽप्यसमर्थस्याधिकारः । अथ कामनाऽऽर्थिकं सामर्थ्याद्यपेक्षते न श्रुतमन्यत् । तत्किं श्रुतिलिङ्गयोर्लिङ्गं बलवत् ? अपि च राजसूयादौ स्वाराज्यकाममात्रस्य समर्थस्याधिकारः प्रसज्येत । अथ 'राजा राजसूयेन यजेत' इति श्रुतेर्बलीयस्त्वाद्राजत्वमप्यधिकारिविशेषणं तर्हि विवेकादिश्रुतं साधनान्तरमप्यधिकारिविशेषणम् । अथ विवेकादिश्रवणं मुमुक्षानुमानेनार्थवदिति चेत्, राजत्वश्रवणमपि सामर्थ्यानुमानेनार्थवत्स्यात् । अथ श्रुतहानिर्मा भूदिति राजत्वापरित्यागेन सामर्थ्यादेरधिकारिविशेषणत्वं, तर्हि विवेकाद्यपरित्यागेन मुमुक्षा ऽधिकारिविशेषणम् । अन्यथा श्रुतहानेः । अथ साधनान्तरस्य मुमुक्षाजननसामर्थ्यं दृष्टम्, अदृष्टं श्रवणं प्रति साक्षाद्धेतुत्वं, न च दृष्टे सम्भवत्यदृष्टकल्पना, तर्हि सामर्थ्यस्यापि राजसूये हेतुत्वं दृष्टम् अदृष्टं राजत्वस्येति समानम् । अथ श्रुतिवशात्तत्प्रतिपत्तिः, तुल्यं साधनान्तरे ऽपि । अथ लाघववशेनावश्यकत्वाच्च मुमुक्षैवाधिकारिविशेषणं, राजसूये ऽपि तर्हि लाघवादावश्यकत्वाच्च साम-

ध्यमेवाधिकारिविशेषणम् । अथ प्रसज्यप्रतिषेधप्रसङ्गान्मुमुक्षैवाधिकारिविशेषणम् । तथा हि । विवेकादीनि हि साधनानि न सर्वत्र सर्वाणि श्रूयन्ते किन्तु क्वचित्किञ्चित्, तथा च तत्तच्छाखापर्यालोचनेन एकैकसाधनविशिष्टस्य श्रवणकर्तव्यताप्रतीतिः पूर्वं जायते । सर्ववेदान्तप्रत्ययन्यायेन च सर्वसाधनविशिष्टस्य श्रवणकर्तव्यताप्रतीतिर्वक्तव्या । ततश्चैकैकशाखावाक्यात्प्रसक्ता धीर्बाध्येतेति । मुमुक्षानुमाने तु सर्वशाखासु मुमुक्षोरेव श्रवणकर्तव्यताप्रतीतिरिति नायं दोष इति चेत् । अत्रेदं विवेचनीयम् । कीदृशी एकैकशाखा वाक्यात्प्रथमतो बुद्धिर्जायतइति विवेकवता श्रवणङ्कर्तव्यमिति वा, इतरसाधनाभावसहितविवेकवता श्रवणङ्कर्तव्यमिति वा, या सर्ववेदान्तप्रत्ययन्यायजन्यप्रतीत्या बाध्यते । नाद्यः । सर्ववेदान्तप्रत्ययन्यायेन हि साधनान्तरमुपसंह्रियते न प्रतीतिसाधनाभावो बोध्यते, येनप्रसज्यप्रतिषेधः स्यात् । न द्वितीयः । इतरसाधनाभावस्य शब्दानुपस्थितत्वात् । अर्थादितरसाधनाभावप्रतीतिरिति चेन्न । अनुपपत्त्यभावात् । विवेकवता श्रवणङ्कर्तव्यमित्युक्ते ऽविवेकिनः श्रवणकर्तव्यता नेत्यर्थात्प्रतीयते, न तु साधनान्तरसम्पन्नेन विवेकिना ऽपि न श्रवणङ्कर्तव्यमिति । साधनान्तराभावे ऽपि विवेकिनः श्रवणकर्तव्यताप्रतीतिर्बाध्यतइति चेत्समानो भवतामप्ययम्प्रसज्यप्रतिषेधः । एकैकशाखावाक्यालोचनेन हि एकैकसाधनस्य श्रवणाधिकारिविशेषणत्वं राजत्वन्यायेन प्रसक्तं मुमुक्षानुमानेन बाध्यते इति । किञ्चैवम्प्रसज्यप्रतिषेधेन सर्वसाधनानां सर्ववेदान्तप्रत्ययन्याया-ऽविषयत्वे तस्य न्यायस्यैव निर्विषयत्वप्रसङ्गः । सर्वत्र हि पूर्वपक्षे ऽन्यथा प्रसक्तं सिद्धान्ते ऽन्यथा क्रियते । तस्मा-

द्वश्यं साधनचतुष्टयसम्पन्नो वेदान्तश्रवणाधिकारीति वक्तव्यम् । तदुक्तम् ।

प्रशान्तचित्ताय जितेन्द्रियाय
प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सततं मुमुक्षवे ॥ इति ।

नन्वेवमुपरतिशब्दवाच्यस्य संन्यासस्याप्यधिकारिविशेषणत्वापत्तिः । न चेष्टापत्तिः । असम्भवात् । तथा हि । संन्यासस्य हि न श्रवणाङ्गत्वं श्रुत्यादीनामसत्त्वात् । प्रकरणादिति चेन्न । आत्मनः प्रकरणात् । सन्निधानादिति चेन्न । वैपरीत्यस्यापि सम्भवात् । श्रवणस्य फलवत्त्वात्तत्सन्निधेः संन्यासो ऽङ्गमिति चेत्, न । श्रवणस्य विध्युद्देशे फलाश्रवणात् । अथ हिरण्यधारणवदार्थवादिकं फलं श्रवणस्य कल्प्यतइति चेन्न । संन्यासे ऽप्यार्थवादिकफलकल्पनात् । उभयत्र फलश्रवणाभावे सत्यार्थवादिकफलकल्पने च सत्यङ्गाङ्गिभावे नियामकाभावात् । नित्यानित्यविवेकादीनां तु श्रवणाद्यङ्गत्वमेव, दृष्टत्वात् । न च वस्तुत आर्थवादिकं फलम् । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' 'त्यजतैव हि तत् ज्ञेयं त्यक्तुः प्रत्यक् परं पद'मित्यादिफलश्रवणात् । तस्मात्संन्यासस्य श्रवणेन समप्राधान्यमेव । किञ्च, 'शान्तो दान्त' इत्यादिवाक्येन न तावत् ज्ञानं विधेयं, तस्य फलत्वेन विध्यगोचरत्वात् । नापि ज्ञानोद्देशेन शान्त्याद्यनेकगुणविधानं, वाक्यभेदप्रसङ्गात् । नाप्यरुणादिवाक्यवद्विशिष्टविधिः, विधेयक्रियाया असत्त्वात् । तस्मादुपरतिपदाभिधेयस्य संन्यासस्य शान्त्यादिपदोपस्थिततद्वत्कर्तृकविचारस्य च ज्ञाने समुच्चयो विधीयते । कथं

पुनः शान्त्यादिपदैस्तद्वत्कर्तृकविचारोपस्थितिः, अव्यभिचरितक्रतुसम्बन्धाज्जुहूपदेन क्रतूपस्थितिवत् ।

ननु 'वेदानिमँल्लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्' इत्यादिवाक्यादङ्गं संन्यासः श्रवणे सिध्येत्, देवस्यत्वादिपदानामिव निर्वापाङ्गता । मैवम् । युक्तं देवस्यत्वादीनामफलानां वाक्यादङ्गत्वमिति, श्रवणसंन्यासयोस्तूक्तविधया श्रुत्या फलवत्त्वसिद्धौ अनुक्तवाक्यस्य 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिवत्कालसंयोगपरत्वात् । एवञ्च

त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिहासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥

इत्यभियुक्तोक्तिभिः कालसंयोगाभिप्राया व्याख्येया । न तु श्रवणाद्यधिकारिविशेषणत्वाभिप्राया । उक्तविधया संन्यासस्य ज्ञानाङ्गत्वसिद्धेः । स चायं जन्मान्तरीयोऽप्युपयुज्यते । ज्ञानप्रतिबन्धकदुरितनिवृत्तेर्द्वारस्य निष्पन्नत्वात् । अत एव जनकादीनां गृहस्थानामपि ज्ञानश्रवणमुपपद्यते । 'यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्' इत्यापत्संन्यासविधानाच्च । न चायं संन्यासो न ज्ञानार्थः, प्रव्रजेदिति संन्यासं प्रक्रम्या'ऽद्रोही भैक्षणो ब्रह्मभूयाय भवती'ति संन्यासफलं ब्रह्मभावापत्तिं श्रावयित्वा पूर्वप्रसिद्धस्यैव संन्यासस्य दशाविशेषे गृहमेधीये विकृतौ 'आज्यभागौ यजति' इतिवन्मनसा वाचेति शब्देनतराङ्गव्यावृत्त्यभिप्रायेण विधानात् । 'एष पन्था ब्रह्मणा ह्यनुवित्त' इत्युत्तरवाक्येन तस्यापि परामर्शाच्च । न च स्वस्थातुरसंन्यासयोरेककर्मत्वे कथमेकत्राल्पाङ्गता ऽन्यत्र सर्वाङ्गतेति वाच्यम् । नित्येषु शक्त्यपेक्षया तथात्वस्य दर्शनात् ।

आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत् ॥

इति स्मृतेश्च न सर्वाङ्गानुष्ठानम् । 'संन्यासाद्ब्रह्मणः स्थानम्' इति स्मृतेश्च कर्मणा पितृलोक इतिवदानुषङ्गिकफलसमर्पकत्वात् । तस्मात्संन्यासो ज्ञानाङ्गमेव न श्रवणाङ्गमिति न श्रवणाद्यधिकारिविशेषणत्वं संन्यासस्य युक्तमुत्पश्याम इति ।

अत्रोच्यते । श्रवणं तावद्दृष्टार्थत्वाद्दृष्टमेवार्थवादिकं फलमासाद्य फलवदिति निर्णीयते । संन्यासस्य ज्ञानाङ्गत्ववादिनापि तदङ्गीकाराच्च । तेन निर्णीते श्रवणस्य फलवत्त्वे तत्सिद्धौ श्रुतस्याफलस्य संन्यासस्य प्रयाजादिवदङ्गत्वमेवाश्रयणीयं नार्थवादिकफलकल्पना । किमत्र प्रमाणमिति चेत् । संन्यासस्य श्रवणाङ्गत्वे तावत्प्रयाजादिवत् प्रकरणमेव प्रमाणम् । नन्वात्मनः प्रकरणं न श्रवणस्येति चेत्, सत्यम् । उपक्रमोपसंहारादिलिङ्गैरात्मनः प्रतिपाद्यत्वप्रतीतेरात्मनः प्रकरणमित्यभिधीयते । अङ्गत्वावेदकं तु प्रकरणमन्यदेवोभयाकाङ्क्षारूपं यथा प्रयाजानाम् । ते ह्युपकार्याकाङ्क्षाः, प्रधानयागोऽप्युपकारकाकाङ्क्षः । एवं संन्यासोऽप्युपकार्याकाङ्क्षः, श्रवणमप्युपकारकाकाङ्क्षमिति प्रकरणेन संन्यासस्य श्रवणार्थत्वम् । एवं सत्यार्थवादिकफलकल्पनायाम्प्रयाजादेरपि 'वर्म वा एतद्यज्ञस्य' इत्यार्थवादिकफलकल्पनाप्रसङ्गात् । तथा च 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवाद' इत्यधिकरणविरोधः । का पुनस्तत्र युक्तिरिति चेत् । शृणु । प्राकरणिकीनां क्रियाणां विश्वजिन्न्यायेन फलकल्पने रात्रिसत्रन्यायेनार्थवादिकफलकल्पने वा ऽन्यतराकाङ्क्षया फलसम्बन्धः कल्प्येत ।

फलस्याकाङ्क्षाराहित्यात् । अङ्गत्वकल्पने तूक्तयोभयाकाङ्क्षया सम्बन्ध इति अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलवती । तदुक्तम् । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम्' इति । तस्मात्प्रयाजादिष्विव संन्यासे फलश्रुतिरर्थवादः । अपि च, लिङ्गवाक्यप्रकरणस्थानैरवगताङ्गत्वानां शमादीनां प्रायेण संन्यासस्य पाठो ऽप्यङ्गत्वमवगमयति । यथा 'शिरो वा एतद्यज्ञस्य यदाग्नेयः हृदयमुपांशुयाज' इति प्रधानप्राये पाठादुपांशुयाजस्य प्रधानत्वम् । तदुक्तम् । अग्र्यप्राये लिखितं दृष्ट्वा वदन्त्ययमग्र्य इति । शक्यते च वक्तुम् अनग्र्यप्राये लिखितं दृष्ट्वा वदन्त्ययमनग्र्य इति तुल्यन्यायत्वात् । यदप्युक्तम् । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति 'त्यजतैव हि तज्ज्ञेय'मित्यादिकफलश्रवणान्नैवार्थवादिकं फलमिति । तन्न । एतच्छब्दसमानाधिकरणभावव्युत्पन्नलोकशब्दस्य प्रकृतात्मपरामर्शित्वात् । आत्मनश्च फलत्वासम्भवात् । तज्ज्ञानस्य फलत्वं कल्प्यतइति चेन्न । प्रकरणावगतश्रवणाङ्गत्वे संन्यासे ज्ञानफलत्वकल्पनायोगात् । अत एव प्रयाजादावार्थवादिकस्य फलत्वकल्पना न क्रियतइत्युक्तम् । 'त्यजतैव हि तज्ज्ञेय'मित्यत्रापि त्यजच्छब्दवाच्यस्य संन्यासिनो ज्ञानकर्तव्यता ज्ञानस्येष्टसाधनता वा प्रतीयते न तु 'यजेत स्वर्गकाम' इतिवत्संन्यासस्य ज्ञानसाधनत्वं, यावच्चास्मिन् वाक्ये ज्ञानफलकत्वं कल्प्येत तावत्प्रकरणेन कृतः श्रवणसम्बन्ध इति कृता ऽपि कल्पना भ्रान्तिरित्यध्यवसीयते, यथा प्रयाजादावार्थवादिकस्य फलत्वकल्पना । न च ज्ञानकामः संन्यसेदिति वाक्यमसन्दिग्धार्थं क चिच्छ्रूयते । तस्मात्तत्र तत्र फलश्रवणमर्थवादः । यदप्युक्तं 'शान्त' इत्यादिवा-

क्ये यथाश्रुते वाक्यभेदप्रसङ्गाच्छान्त्यादिपदोपस्थापितश्रवणस्योपरतिपदाभिधेयसंन्यासस्य च ज्ञाने समुच्चयो विधीयतइति, तदयुक्तम् । युक्तं 'यस्य पर्णमयी जुहूर्भवति' इत्यादावानर्थक्यभयात्फलकल्पनाभयाद्वा जुहूपदेन लक्षणया क्रतूपस्थितिः । न चैवं किञ्चिद्दूषणं, येन शान्त्यादिपदैः श्रवणं लक्ष्येत, शक्तेरभावात् । शान्तपदेनैव तदुपस्थितिसम्भवे पदान्तरवैयर्थ्याच्च । वाक्यभेदो दूषणमिति चेन्न । कृते ऽपि स्वार्थपरित्यागे श्रवणलक्षणया ऽपि वाक्यभेदस्यापरिहारात् । एकज्ञानोद्देशेन शान्त्याद्यनेकगुणविधाने वाक्यभेदः, न त्वेकज्ञानोद्देशेन संन्यासश्रवणयोरपि विधाने वाक्यभेदात् । न हि बहूनां विधाने वाक्यभेदो न द्वयोरिति नियामकमस्ति । एकः समुच्चयो विधीयतइति चेत्, को ऽयं समुच्चयो द्वयं वा तदतिरिक्तं वा? आद्ये वाक्यभेद एव । द्वितीये मानाभावः । संन्यासश्रवणयोः समप्राधान्यासिद्धेश्च । तद्वाचकपदाभावाच्च । अथ द्वयमेव समुच्चयो, न च वाक्यभेदः, एकस्वर्गोद्देशेनानेकदर्शपूर्णमासयागविधानदर्शनात् । मैवम् । एवं हि शान्त्याद्यनेकगुणविधानस्याऽपि वक्तुं शक्यत्वात् । न श्रवणलक्षणा । युक्तञ्च तत्र बहूनामप्येकयजतिपदोपसङ्ग्रहाद् व्रीहिभिर्यजेतेतिवन्न वाक्यभेदः । न चाऽत्र ज्ञानमुद्देश्यं येन वाक्यभेदः स्यात् । न तर्हि श्रवणसंन्यासयोर्ज्ञानाऽर्थतया समप्राधान्यसिद्धिः । परस्परनिरपेक्षोभयविधाने वाक्यभेदाऽपरिहाराच्च । कस्तर्हि वाक्यभेदपरिहारः? नाऽस्ति चेत्किं कुर्मः । न तु तावता शान्त्यादिपदं श्रवणलक्षकम् । 'सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषण'मिति वृद्धोक्तेः । ततश्च शमादयो ऽत्र वाक्ये विधीयन्ते । ये तु तेषु विधिरेव नास्तीति वदन्ति तेषां कथं

शमादीनां श्रवणाङ्गत्वम्, विहितत्वात् । तदुक्तं 'न चाऽविहितमङ्गं भवती'ति । आर्थिको विधिरिति चेन्न । 'ब्राह्मणो निर्वेदमायात्' इत्यादिविधिश्रवणानां फलकल्पनाप्रसङ्गात् । सम्भवन्ति चाऽत्र वाक्यभेदप्रकाराः । एकस्तावत् 'ये मध्यमास्तानग्नये दात्रे' इत्यत्र सामानाधिकरण्यान्मध्यमोद्देशेन दातृत्वविशिष्टाऽग्निदेवताविधानवच्छान्तो दान्त' इत्यत्राऽपि सामानाधिकरण्याच्छान्तत्वादिविशिष्टैककर्तृत्वविधानं न दोषायेति । यद्वा 'जातपुत्रः कृष्णकेशो ऽग्नीनादधीत' इत्यत्र पदद्वयोपलक्षिताऽवस्थाविशेषविधानवच्छान्त्यादिपदोपलक्षिताऽवस्थाविशेषविधानं भविष्यतीति । तदा शान्त्यादेरार्थिको विधिः, सर्वथा न श्रवणसंन्यासयोः समुच्चयविधिः । वस्तुतस्तु पश्येदित्यत्र ज्ञानस्य विध्ययोगात्प्रकृतिस्तत्साधनं श्रवणं लक्षयति, ततश्च शान्त्यादिविशिष्टैकश्रवणक्रियाविधानात् 'सोमेन यजेत' इतिवन्न वाक्यभेदः । शारीरकब्राह्मणे तद्तिरिक्तश्रवणविध्यभावान्न पौनरुक्त्यम् । एवञ्च फलवत्त्वे दुर्लभे 'वेदानिमं लोकममुञ्च परित्यज्याऽऽत्मानमन्विच्छे'दिति फलवच्छ्रवणसमभिव्याहारात्मकं वाक्यमपि संन्यासस्याऽङ्गत्वे मानम् । यथा देवस्यत्वादिपदानां निर्वापपदसमभिव्याहारो निर्वापाङ्गत्वे मानम् । 'संन्यस्य श्रवणं कुर्या'दिति चोदाहार्यम् । एवं च यत्राऽपि संन्यासं विधाय श्रवणं न श्रूयते तत्राऽप्युक्तवाक्येन संन्यासस्य श्रवणसंयोग एव । अनारभ्याधीतस्य प्रवर्ग्यस्यैव 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति वाक्येन ज्योतिष्टोमसंयोगो न तु फलान्तरकल्पना युज्यते । यदुक्तं 'जन्मान्तरीयो ऽप्युपयुज्यते' इति, तन्नाऽनिष्टं, द्वारस्य निष्पन्नत्वात् । ननु श्रवणाङ्गत्वे जन्मान्तरीयप्रयाजवज्जन्मान्तरीयः संन्यासो

नोपयुज्यतइति चेन्न । प्रयाजादिषु जन्मान्तरीयेषूपकारकत्वाऽदर्शने ऽपि संन्यासे जन्मान्तरीये उपकारकत्वङ्कल्प्यते, द्वारस्य निष्पन्नत्वात् । यथा हि दृष्टार्थेष्वध्ययनादिषु जन्मान्तरोपकारकत्वाऽदर्शने ऽपि श्रवणादिषु तथाभूतेषु तत्कल्प्यते, तद्वत् । द्वारनिष्पत्तेरुभयत्र तुल्यत्वात् । न त्वेतावता गृहस्थस्याऽपि श्रवणाऽधिकार इति भ्रमितव्यं, विवेकादिवत्संन्यासस्याऽप्यधिकारिविशेषणत्वात् , जन्मान्तरीयस्य चाऽनिश्चयात् । सर्वो हि स्वस्मिन्नधिकारं बुद्ध्वा कर्मणि प्रवर्तते, गृहस्थस्य ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयकर्मव्यग्रतया श्रवणकर्तव्यताऽनुपपत्तेश्च । जनकादीनां गृहस्थानां श्रवणं श्रूयतइति चेन्न । 'अन्त्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्' इत्यादिश्रुत्या हि संन्यासिनामपि तच्छ्रवणात् । अस्तु तर्ह्युभयेषामप्यधिकार इति चेन्न । 'वेदानिमं लोकममुं च परित्यज्य'-त्यादिविधिविरोधे अर्थवादलिङ्गस्य बाध्यत्वात् 'ब्राह्मणो यजेत' इत्यादिविधिविरोधे इव देवानां यागादिश्रवणं जनकस्य श्रूयतइति श्रद्धावन्तो मैत्रेय्याः श्रूयतइति स्त्रीणामधिकारङ्कल्पयेयुः । संन्यासस्य ज्ञानाङ्गत्ववादिना ऽपि गृहस्थस्याऽधिकारो न वक्तुं युक्तः । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिव 'द्वेदानिमँल्लोक'मित्यादिना फलवतोरपि संन्यासश्रवणयोः क्रमबोधनात् । तस्मात्संन्यासिन एवाऽधिकारः । गृहस्थस्य तु प्रवृत्तस्य दृष्टार्थत्वाच्छ्रवणस्य प्रमाणसंभावनादि दृष्टं निष्पद्यतएव । नियमादृष्टं तु नोत्पद्यते, विधेरप्रवृत्तेः । यथा श्रद्धाऽनुष्ठितयागान्तरगताऽवघातात् । तदिदं संप्रदायविद्भिरुच्चैरभिहितमिति नाऽसाम्प्रदायिकम् ।

यत्त्वातुरसंन्यासस्य ज्ञानाऽर्थत्वमभिहितम् । तत्रे-दन्तावद्विचारणीयं, किमत्र वाक्ये विधीयतइति । न ताव-त्संन्यासः । तस्य पूर्ववाक्यविहितत्वाभिधानात् । नापि दशाविशेषे तद्विधानम् । अविरक्तस्य संन्यासाऽनधिका-रात् । विरक्तस्यातुरस्याऽपि पूर्ववाक्येनैव संन्यासप्राप्तेः । नाऽपि मनोवाचोर्विधानं, तयोरपि पूर्वविधिनैव श्रुतितो ऽर्थतो वा प्राप्तत्वात् । नाप्यातुरस्य मनोवाग्विधानम्, अनातुरे तत्प्रापकेणैव प्राप्तेः । अत एव न फलतः परिस-ङ्ख्या । अथ प्राप्तं पुनः सङ्कीर्तनमितराङ्गपरिसङ्ख्याऽर्थम्, एतद्वाक्यासत्त्वे हि विरक्तस्याऽऽतुरस्याऽपि पूर्ववाक्यप्राप्तः संन्यासः स्वच्छस्येव सकलाङ्गसहित एव स्यात् । अनेन वाक्येनेतराङ्गव्यावृत्तिः क्रियतइति चेन्न । परिसङ्ख्याया-स्त्रिदोषत्वात् । स्वार्थहानिः, पराऽर्थकल्पना, प्राप्तबाधश्चेति त्रयो दोषाः । अत एवा 'ऽऽज्यभागौ यजती'ति गृहमेधीये न परिसङ्ख्यापक्षः सिद्धान्ते समाश्रितः । किन्तु यद्यपि विकृतौ पठितानामङ्गानां प्रत्यक्षविहितानामप्यक्लृप्तोपका-रकत्वेन न प्रथमं सम्बन्धः, आनुमानिकानामपि प्रयाजा-दीनां तद्वैपरीत्यात्प्रथमं सम्बन्धः, तथाऽपि गृहमेधीये प्रत्यक्षविहितानां क्लृप्तोपकाराणाम् आज्यभागादीनां कथं-भावाऽऽकाङ्क्षापूरकत्वाद् न चोदकप्रवृत्तिरित्यपूर्वत्वम् । ततश्च गृहमेधीये न विकृतित्वमिति भ्रमितव्यम् । तस्मा-'द्यद्यातुरः स्यान्मनसा वाचा वा संन्यसे'दित्यभ्यासाधि-करणन्यायेन कर्मान्तरमेव विशिष्टं विधीयते । तस्य च कर्मान्तरस्य न पूर्वसंन्यासप्रकृतिकत्वम् । मानाभावात् । स्ववाक्ये क्लृप्तोपकारयोर्मनोवाचोरभिधानाच्च । यावदुक्तं गृहमेधीयवत्कर्तव्यं, न चान्ये धर्मा विहिताः, अत एव

स्मृतिः । 'आतुराणाञ्च सन्यासे न विधिर्नैव च क्रिया' इति । तच्च कर्मान्तरं न पूर्वसंन्यासफलेन फलवत् । चोदकप्रवृत्त्यभावात् । फलस्य चोदकाविषयत्वाच्च । पूर्वसंन्यासस्याङ्गत्वेन निष्फलत्वावेदनाच्च । नाऽपि पूर्वसंन्यासवच्छ्रवणाङ्गं, वाक्याद्यपेक्षया बलवतः सामर्थ्यात् । तदवश्यं फले कल्पनीये केचिदाहुः । 'संन्यस्तमिति यो ब्रूयात्' इत्यादिस्मृतिमूलभूतायाः

'वेदान्तविज्ञानसुनिनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले
परामृतात्परिमुच्यन्ति सर्वे' ॥

इति श्रुतेः 'प्राप्य पुण्यकृतान् लोकान्' इत्यादिशास्त्रपर्यालोचनया श्रवणाङ्गसंन्यासविषयाया नष्टाऽश्वदग्धरथन्यायेनाऽऽतुरसन्यासविषयत्वं कल्प्यते । न त्वनया प्रसिद्धस्यैव संन्यासस्याऽवान्तरफलदर्शनम्, ब्रह्मलोके मुक्त्यभिधानात् । 'प्राप्य पुण्यकृतान्' इत्यादिना च पुनरावृत्तिविधानात् । तथा च ते ब्रह्मलोके वेदान्तविज्ञानसुनिश्चितार्थाः परिमुच्यन्तइति श्रुतेरर्थः । उक्ताऽनङ्गीकारे श्रुतेर्निर्विषयत्वापातात् । न हि हिरण्यगर्भान्तभोगेभ्यो नरकादिव विरक्तानां संन्यासिनामत्यन्तं संसारजिहासूनां तत्राऽपि वेदान्तविज्ञानेन सुतरां निश्चितार्थानां ब्रह्मलोके यावद्धिरण्यगर्भमवस्थानं वक्तुमुचितम् । उचितन्तु तेषां 'प्राप्य पुण्यकृता'मित्यादि वक्तुं, शीघ्रं मुक्त्यभिधानात् । सुनिश्चितार्थानां ब्रह्मणा सह मुक्तिः, असुनिश्चितार्थानान्तु 'प्राप्य पुण्यकृता'मित्यादिना शीघ्रं मुक्तिरिति त्वत्यन्तं व्याहतमेव । अत एव परिपक्वयो-

गस्य न तत्र गमनं नाऽपि 'प्राप्य पुण्यकृताम्' इत्यादेरातुरसंन्यासविषयत्वं, 'योगाच्चलितमानसः' इत्युपक्रान्तश्रवणादिविषयत्वेन प्रतीतेः । नाऽपि कृतपापसंन्यासिविषयत्वं, तथा प्रतीत्यभावात्' कल्याणाऽभिधानाच्च । तस्मात्साधनसम्पन्नस्योत्पन्नश्रवणादिप्रत्ययस्याऽपरिपक्वस्य 'प्राप्य पुण्यकृताम्' इत्यादिवचनविषयत्वम् । आतुरस्य शमाद्यसम्पन्नस्याऽकृतश्रवणत्वेनानुत्पन्नप्रत्ययस्य संन्यासिनो 'वेदान्तविज्ञानसुनिश्चितार्था' इत्यादिवचनविषयत्वम् । परिपक्वयोगस्य तु नोभयविषयत्वम् । तस्मादातुरसंन्यासः कर्मान्तरं फलवच्चेति ।

यदा तु वेदान्तविज्ञानेत्यादिश्रुतेरुत्पन्ननिर्गुणब्रह्मविद्याविषयत्वेन योगाद्याश्रयणेन व्याख्यानं क्रियते, तदा ऽपि

'संन्यस्तमिति यो ब्रूयात् प्राणैः कण्ठगतै रपि ।
सो ऽक्षयान् लभते लोकान् पुनर्जन्म न विद्यते' ॥

इत्यादिस्मृत्या आतुरसंन्यासी ब्रह्मलोकं गतस्तत्रोपदेशे सति उत्पन्नज्ञानो मुच्यते । तथा चोपदेशादिद्वारा मुक्तिसाधनब्रह्मलोकगमनकामः आतुरः संन्यसेदिति विधिर्विपरिणम्यतइति । अथ वा 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति वाक्यं 'यस्याऽहिताग्नेर्गृहानग्निर्दहेत्सो ऽग्नये क्षामवते ऽष्टाकपालं निर्वपे'दितिवद् वैराग्यनिमित्ते संन्यासे विधायकम्, उत विरक्तस्याधिकारिणः संन्यासं तत्फलकामस्य विधत्ते । नाद्यः । निमित्ते विधानादेवाङ्गेष्वसमर्थस्याऽऽतुरस्य निरङ्गसंन्यासप्राप्तेः 'यद्यातुरः स्या'दित्यादिवाक्यवैयर्थ्यापत्तेः । न हि यावज्जीवनिमित्ते विहितस्याग्निहोत्रस्याऽसमर्थं प्रति अङ्गाभावबोधकं वच-

नान्तरमपेक्षितं, षष्ठोक्तयथाशक्तिन्यायेनैव तत्सिद्धेः । अकरणे प्रत्यवायाऽश्रवणाच्च । न द्वितीयः । अङ्गवाक्यपर्यालोचनया ऽङ्गेषु समर्थं प्रत्येवोक्तवाक्यस्य प्रवृत्तेः । न चाङ्गेष्वसमर्थं प्रति स्वर्गकामाग्निहोत्रवाक्यं प्रवर्तते । अन्यथा ऽङ्गानुरोधेन प्रधानबाधाऽयोगादङ्गविकलस्याऽप्यधिकारापत्तिः । न चैतत्संभवति । तिर्यगधिकरणविरोधात् । तथा च प्रकृते ऽप्यङ्गसमर्थमातुरं प्रति प्रव्रजेदिति पूर्ववाक्यैकवाक्यतापन्नस्याऽप्रवृत्तेः । 'यद्यातुरः स्या' दित्यादिवाक्यमङ्गसमर्थस्यातुरपदवाच्यस्य संन्यासस्य कर्तव्यताविधायकं तावदेषितव्यम् । तद्विधिसामर्थ्यादेव चाङ्गाभावः । न ह्यङ्गोपसंहारसमर्थ आतुरः शक्यो वक्तुम् । ततश्च गृहमेधीये आज्यभागसङ्कीर्त्तनवद् वाङ्मनसयोः पुनः परामर्शादितराङ्गव्यावृत्तिरिति न भ्रमितव्यम् । न त्वेतावता स एव संन्यास आतुरस्य विधीयते । वाचा मनसा वेत्यस्याऽपि विधेयस्य दर्शनात् । न चार्थप्राप्तानुवादः । अर्थप्राप्त्यपेक्षया श्रुतेः पूर्वप्रवृत्तत्वात् । तदुक्तम् 'अप्राप्तविधिरेवाऽयमतो मन्त्रस्य निश्चित' इति ।

ततश्च प्राप्ते संन्यासे अनेकविधानमशक्यमिति 'ग्रीष्मे राजन्य' इत्यत्राऽऽधानान्तरवत् संन्यासान्तरं विधीयते । यदिशब्दश्च यदि ब्राह्मणो यजेद् बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा ऽभिघारयेदितिवद्योज्यः । तस्य च बलवता ऽऽतुरत्वसामर्थ्येन विरोधात् न प्रकरणेन वाक्येन वा श्रवणसंबन्ध इति फलाकाङ्क्षायां पापक्षयः फलं कल्प्यते । 'संन्यासेन द्विजन्मना'मित्यादिस्मृतिषु तत्सङ्कीर्तनात् । यदि तु संन्यासं कृत्वा जीवितस्तदा श्रवणाधिकारिविशेषणत्वबोधकवाक्यप्रकरणबा-

धकं सामर्थ्यमपगतमिति अधिकारिविशेषणत्वमेव संन्यासस्य भवति । यथा दर्शपूर्णमासयोराज्यावेक्षणादिषु अध्वर्युसंबन्धबोधकाऽऽध्वर्यवसमाख्याबाधिका याजमानसमाख्या प्रोषिते यजमाने अपगतेति अध्वर्युसंबन्ध एवाऽवशिष्यते, बाधकाभावे बाध्यस्य निरपवादत्वात् । न तु संन्यासस्य ब्रह्मलोकादिगमनं मुख्यमानुषङ्गिकं वा फलम्, 'संन्यासाद् ब्रह्मणः स्थान'मित्यादेर्ब्रह्मलोकान्तभोगाऽविरक्तसंन्यासविषयत्वात् । सर्वभोगविरक्तस्य तत्र गमनाऽनुपपत्तेः । 'प्राप्य पुण्यकृता'मित्यादिकमपि संन्यासपूर्वकाऽनुष्ठितश्रवणादिसामर्थ्याद्बुद्धपूर्वशुभकर्मफलमेव न तु संन्यासस्य श्रवणादेर्वा ऽवान्तरफलं, विनिगमनाभावात् । अत एव तदभावे 'अथ वा योगिनामेव कुले भवति धीमता'मित्येवकारेण 'प्राप्य पुण्यकृता'मित्यादि निराक्रियते । आतुरस्याऽपि सर्वतो विरक्तस्य तुल्यन्यायतया कदा चित्तत्सामर्थ्याद्बुद्धपूर्वशुभकर्मफलानि भुक्त्वा पुनर्जातस्य श्रवणादिना शीघ्रं मुक्तिरेव । न तु क्रममुक्तिः । यथा श्रवणार्थं संन्यासिनो दैवादर्वाक् श्रवणान्मृतस्य न क्रममुक्तिः शक्यते वक्तुं, विलम्बितत्वात् । 'संन्यासाद् ब्रह्मणः स्थान'मिति सामान्योक्त्या सर्वसंन्यासनान्तरीयकफलाङ्गीकारे वैराग्यात्प्रकृतौ लय इत्यस्याऽपि प्रसङ्गात् । परिपक्वयोगस्याऽपि तत्प्रसङ्गाच्च । तत्सिद्धं संन्यासः श्रवणार्थ एवेति । तदिदं श्रुत्यर्थव्याख्यानपूर्वकं स्मृतिकर्तृभिरप्युक्तम् । 'त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्या विधीयत' इति । तस्माद्युक्तमुक्तं साधनचतुष्टयसंपन्नः श्रवणाधिकारीति ।

सोयमधिकारी श्रोत्रियं ब्रह्मनिष्ठं गुरुमनुसृतः श्रवणादि संपादयति । श्रवणादिकं तु श्रवणं मननं निदिध्या-

सनं चेति । श्रवणं नाम देवतानां शक्तितात्पर्थाऽवधारणानुकूलो विचारः । श्रुतस्याऽर्थस्य युक्तितो ऽनुसन्धानं मननम् । विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम् । एतेषां श्रवणं प्रधानम्, इतरे फलोपकार्यङ्गे, श्रोतव्यादिवाक्येषु प्राथमिकत्वात् । श्रवणविधेरेवार्थवादिकफलकल्पनया इतरयोः फलकल्पनाक्लेशनिवृत्तेः । श्रवणस्य तत्त्वज्ञाने प्रधानभूतशब्दप्रमाणस्वरूपनिर्वाहकतया च प्राधान्यम्, असति श्रवणे प्रमाणाऽसम्भावनया तत्त्वज्ञानाऽनुदयात् ।

ये तु श्रवणादिषु विधिरेव नास्तीति मनसैव च तत्त्वज्ञानोत्पत्तिं मन्यन्ते, तेषां निदिध्यासनस्य मनःसहकारितया श्रवणादेश्च निदिध्यासनार्थतया न श्रवणे प्राधान्यादरः । ननु ये ऽपि विधिं मन्यन्ते न तेषां श्रवणादावपूर्वविधिः । षड्जादौ तथा दृष्टत्वात् । ना ऽपि नियमविधिः । दृष्टादृष्टार्थत्वाभावात् । अदृष्टकल्पनायामपि तत्प्रयोजनाभावात् । नाऽपि परिसंख्या । तत्त्वज्ञाने श्रवणातिरिक्तस्याऽप्राप्तेः, त्रिदोषत्वाच्च । तस्मान्नाऽस्ति विधिः ।

अथ नियमविधिरेवायम् । दृष्टादृष्टार्थत्वात् । अदृष्टस्याऽपि तत्त्वज्ञानोपयोगित्वात् । न च नियमविधिस्थले ऽपि फले साधनान्तरस्याऽपि पक्षप्राप्तिर्वक्तव्या । निर्विशेषात्मज्ञाने च श्रवणातिरिक्तस्याप्राप्तेर्न नियमविधिरिति वाच्यम् । अपूर्वीयव्रीहितुषविमोके व्रीहितुषविमोकत्वपुरस्कारेणाऽवघाताऽतिरिक्तस्येव निर्विशेषात्मज्ञाने आत्मज्ञानत्वपुरस्कारेण प्रत्यक्षादेः प्रसरादिति चेन्न । नियमविधिप्रयोजकपाक्षिकप्राप्तेर्वास्तवत्वात् । अत एवाऽपूर्वीयव्रीहितुषविमोको ऽपि दलनादिना कर्तुं शक्यत इत्यवघातो

नियम्यतइत्युक्तम् । नैवं निर्विशेषात्मज्ञानं प्रत्यक्षादिना कर्तुं शक्यम्, असामर्थ्यात् । भ्रान्त्या साधनान्तरप्राप्तेर्नियमविधिप्रयोजकत्वे 'यजेत स्वर्गकाम' इत्यादेरपि तथा प्रसङ्गः । अथ निर्विशेषात्मज्ञाने साधनान्तराऽप्राप्तावप्यात्मज्ञानमात्रे प्रत्यक्षादिप्रसरान्नियमविधिः । तर्हि सुखमात्रे साधनान्तरप्राप्तेः 'यजेत स्वर्गकाम' इत्यादेरपि नियमविधित्वप्रसङ्गः । तस्मात्प्रत्यक्षयोग्यवस्त्वावेदकवाक्यश्रवणस्य लोके तज्ज्ञानहेतुत्वदर्शनात् आत्माऽऽवेदकवेदान्तश्रवणस्याऽपि तन्न्यायेनैव तथात्वाद्विधिरेवाऽयं न सम्भवतीति विध्यनङ्गीकारपक्ष एव समीचीनः ।

अत्रोच्यते । निर्विशेषात्मबोधे ऽपि पुराणप्राकृतवाक्यश्रवणादेः प्राप्तत्वाद्वेदान्तश्रवणं नियम्यते । सम्भवति हि शूद्रादेः शमादिसम्पन्नस्य पुराणश्रवणादिना तत्त्वबोधः । ब्राह्मणस्य तु न स्वातन्त्र्येण पुराणश्रवणमिति नियमविधेः फलम् । केषाञ्चिदाचार्याणां परिसंख्याभिधानं फलतः परिसंख्येत्येवं नेयम् । अन्यथा त्रिदोषत्वापरिहारात् । एतच्च श्रवणादि आवृत्तं तत्त्वधीहेतुः, दृष्टार्थत्वात् । तदुक्तम् 'आवृत्तिरसकृदुपदेशा'दिति । 'बहूनां जन्मनामन्ते' इत्यादि च ।

तदेवं बहुजन्मलब्धपरिपाकवशादसौ तत्त्वमस्यादिवाक्यार्थविशुद्धं प्रत्यगभिन्नं परमात्मानं साक्षात्कुरुते । न च प्रामाण्यस्योत्पत्तौ स्वतस्त्वभङ्गः । श्रवणादेः प्रतिबन्धनिवर्तकत्वात् । ननु न विद्मस्तत्त्वमस्यादिवाक्यार्थम्, पदार्थानवबोधात् । शृणु । त्वंपदवाच्यार्थस्तावत्प्रसिद्धः, उक्तश्च । तत्पदवाच्योर्थस्तु योयमीश्वरः श्रुतिस्मृतीतिहासादिषु प्रसिद्धः स एव । ईश्वरस्तु प्रतिबिम्बस्य जीवस्य बिम्बचैतन्यमिति केचित् । विक्षेपशक्तिप्रधानाज्ञानप्रति-

बिम्बितं चैतन्यमित्यपरे । जीवनिष्ठाऽज्ञानविषयीभूतं चैतन्यमित्यपरे ।

यस्तु वनवृक्षावच्छिन्नाकाशवदेकाज्ञानावच्छिन्नं जीवमङ्गीकुर्वाणाः अज्ञानसमष्ट्यवच्छिन्नं चैतन्यमीश्वर इति वदन्ति, तत्राऽज्ञानसमष्टिर्नाम यदि समूहस्तदा वृक्षातिरिक्तवनाभावात् प्रत्येकवृक्षावच्छिन्नाकाश एव वनावच्छिन्नाकाशः, न तु स्वतन्त्रो ऽस्ति, एवमेकैकाज्ञानावच्छिन्नचैतन्यानामेव समूहावच्छिन्नचैतन्यत्वाज्जीवसमूह एव ईश्वर इत्यापद्येत, अतिरिक्तोपाधेरभावात् ।

यच्च अविद्यावच्छिन्नं चैतन्यं जीवो मायावच्छिन्नमीश्वर इति। तत्रा ऽपि यदि अज्ञानतो ऽतिरिक्ता माया न तत्र प्रमाणं, तस्मादावरणशक्तिप्रधानाऽज्ञानावच्छिन्नं जीवः, विक्षेपशक्तिप्रधानाऽज्ञानावच्छिन्नमीश्वर इति । स चायं सदा सर्वज्ञ इति प्रागेवोपपादितम् । सर्वज्ञत्वादेव सर्वकर्त्ता 'इदं सर्वमसृजते'त्यादिश्रुतेः ।

यस्तु हिरण्यगर्भस्य ईश्वरः कर्त्ता तत्कार्यं तद्द्वारा, एवं घटादावपि कुलालादिद्वारेति । तत्रेदं जिज्ञास्यते । हिरण्यगर्भादिद्वारेत्यस्य को ऽर्थः? स्वकार्यं हिरण्यगर्भादिरेव कर्ता न ईश्वर इति चेन्न । श्रुतिविरोधात् । हिरण्यगर्भरूपेणैव कर्ता न स्वातन्त्र्येणेति चेन्न । ईश्वरस्य हिरण्यगर्भत्वाभावात् । जीवेश्वरयोर्व्यावहारिकभेदाङ्गीकारात् । परमार्थतो ऽभेद इति चेन्न । जीवेश्वरपदवाच्ययोस्तस्याभावात् । अन्यथा तत्त्वमस्यादिवाक्ये लक्षणानुपपत्तेः । लक्ष्ययोरभेदे ऽपि ईश्वरपदवाच्यस्य कर्तृत्वं हिरण्यगर्भरूपेणेति कथमुपपादितम्, लक्ष्ये कर्तृत्वाभावात् । किं च घटाकाशमठाकाशयोरिव बिम्बप्रतिबिम्बयोरिव वा

जीवेश्वरयोरुपाधिपरिकल्पितभेदत्वाद् धर्मसाङ्कर्याभावं वदता कथं हिरण्यगर्भादिनिष्ठं कर्तृत्वमीश्वरस्येति वक्तुं शक्येत? ईश्वरस्य तत्त्वज्ञानवत्त्वात् । जीवरूपेण मयैव कृतमिति जानातीति चेत्, एवं तर्हि जीवरूपेण मयैव भुक्तमित्यपि जानात्येवेति भोक्तृत्वनिषेधानुपपत्तिः, सर्वकर्तृत्वस्य वा निषेधापत्तिः । न चेष्टापत्तिः । सर्वकर्तृत्वस्य भोक्तृत्वनिषेधस्य च श्रवणात् । 'इदं सर्वमसृजत' 'अनश्नन्न्य' इति वा जीवरूपेण भोक्तृत्वे ऽपि स्वातन्त्र्येण तदभावात् । भोक्तृत्वनिषेधे सर्वकर्तृत्वमपि निषिध्येत । अपि च ईश्वरस्य हिरण्यगर्भकर्तृत्वं किंरूपमिति विवेचनीयम् । अन्यव्यापारासंभवात् तदनुकूलज्ञानवत्त्वमात्रमि चेत्, एवं तर्हि हिरण्यगर्भकार्ये ऽपि स्वातन्त्र्येण कर्तृत्वं सिद्धमेव । न हि वक्तुं शक्यम् । ईश्वरज्ञानं हिरण्यगर्भानुकूलं न जगदनुकूलमिति, मानाभावात् । तदावेदकमानसत्त्वाच्च । गौरवान्नाङ्गीक्रियतइति चेत्, न । श्रुतिसिद्धे तस्याऽदोषत्वादित्युक्तम् । उपचारे सङ्कोचे वा मानाभावात् । किं चैवं सङ्कोचे सर्वज्ञत्वमपि सङ्कोचमियात् । शक्यते हि वक्तुं हिरण्यगर्भद्वारा सर्वतत्कार्याभिज्ञ ईश्वर इति । सर्वोपादानत्वं तर्हि कथमिति चेत्, किं तत्? न तावत्समवायिकारणत्वम् । अनङ्गीकारात् । नाऽपि परिणममानत्वम् । ईश्वरस्य तदभावात् । माया हि परिणमते नेश्वरः । सुखाद्याकारेणाऽपि अन्तःकरणं परिणमते न जीवः । परिणममानाधिष्ठानत्वं परिणामाधिष्ठानत्वं वेति चेत्, तदीश्वरस्य साक्षादेव, सर्वकारणानां सर्वकार्याणां चेश्वरे ऽध्यस्तत्वात्, अत एव सर्वज्ञत्वम् । एतावांस्तु विशेषः, परिणममाना माया ऽऽकाशाद्याकारेण परिणता वाय्वाद्याकारेण परिणमते । एवमुक्तोपाधौ ईश्वरे

आकाशो ऽध्यस्तः, आकाशावच्छिन्ने तस्मिन्नेव वायुरित्यादि, यथा ऽन्तःकरणावच्छिन्ने जीवचैतन्ये सुखादेरध्यास इति । न त्वेतावता ईश्वरस्य सर्वोपादानत्वव्याघातः । अथ आकाशाद्यवच्छिन्नेश्वरस्य वाय्वधिष्ठानत्ववत् हिरण्यगर्भाद्यवच्छिन्नेश्वरस्य तत्कार्यकर्तृत्वमिति चेत्, नैतन्निराक्रियते । न त्वेतावता हिरण्यगर्भस्यैव कर्तृत्वसिद्धिः । तदन्तर्यामितया ईश्वरस्याऽपि पृथक् सत्त्वात् । तेन हिरण्यगर्भकार्ये कुलालादिकार्ये ऽपीश्वरः कर्तेति सिद्धम् ।

कारणान्तरापेक्षावत् ईश्वरस्य कर्त्रन्तरापेक्षा न प्रतिबन्धिका ।

तदेवं सर्वकर्ता सर्वज्ञः सर्वोपादानं सर्वान्तर्यामी ईश्वरः, मायानिष्ठसत्त्वगुणोपहितो विष्णुः, रजोगुणोपहितो ब्रह्मा, तमोगुणोपहितो महेश्वर, इति गीयते । एते सत्त्वरजस्तमोगुणा अनादिभूता इति विष्णवादयो ऽप्यनादय इत्येतेषु व्यावहारिको भेदः । एतेषु विष्णवादीनां भौतिकमभौतिकं वा तं तं लीलाविग्रहमङ्गीकुर्वतां रामकृष्णादिपदवाच्यत्वम् । ते च सर्वज्ञा व्यापकाश्च । तत्र विष्णुः पालकः । ब्रह्मा स्रष्टा । महेशः संहर्ता । एतदुपासका अपि सत्यलोकप्रदेशेषु वैकुण्ठादिषु विष्णवादिसायुज्यं तादात्म्यादिरूपं गता भोगान् भुञ्जानाः क्रमेण मुच्यन्ते । एवमव्याकृतोपासका अपि क्रमेण मुच्यन्ते । अव्याकृतं पूर्वोक्त ईश्वरः । तदुपासकास्तत्सायुज्यं गताः भोगान् भुक्त्वा ब्रह्माण्डनाशे मुच्यन्ते । विष्णुमहेशयोर्लीलाविग्रहौ वैकुण्ठे कैलासे वा यावत्कल्पं वर्तेते । ब्रह्मणस्तु उत्सर्गतो न लीलाविग्रहः श्रूयते । एतत्सर्वं पुराणवाक्येभ्यो देवताविग्रहन्यायेन सिद्ध्यति ।

सो ऽयं तत्पदार्थो निरूपितः । वाक्यार्थं संक्षेपतो निरूपयामः । तत् त्वमिति पदयोः पृथगर्थवाचकयोः सामानाधिकरण्यं श्रूयते । तच्च न सिंहो देवदत्त इतिवद्गौणं, मुख्ये सम्भवति तस्याऽन्याय्यत्वात् । नाऽपि मनो ब्रह्मेतिवदुपासनार्थम् । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । मुख्यत्वे ऽपि न नीलोत्पलादिवत्सामानाधिकरण्यं, गुणगुणिभावाद्यसम्भवात् । निर्गुणाऽस्थूलादिवचनविरोधाच्च । नाऽपि यः सर्पः सा रज्जुरितिवद्बाधो ऽयम्, उभयोश्चिद्रूपतया बाधाऽयोगान्मुक्त्यभावप्रसङ्गाच्च । न हि स्वबाधार्थं जीवप्रवृत्तिरुपपन्ना ।

तस्मात्पदार्थयोः परस्परभेदव्यावर्तकतया विशेषणविशेष्यभावप्रतीत्यनन्तरं लक्षणया सो ऽयं देवदत्त इतिवद्विशुद्धप्रत्यगभिन्नाऽखण्डपरमात्मप्रतीतिः । सा च लक्षणा पदद्वये ऽपि, अन्यथा ऽखण्डार्थप्रतीत्यनुपपत्तेः । लक्षणाबीजविरोधाऽसमाधानाच्च । लक्ष्यं तु पदद्वयस्य परस्परपदार्थद्वयं न वक्तुं शक्यं, तद्वाचकपदसत्त्वाद्विरोधासमाधानाच्च । अखण्डार्थप्रतीत्यनुदयाच्च । तस्मात् परोक्षत्वादिविशिष्टचैतन्यवाचकस्य तत्पदस्य वाच्यैकदेशं वैशिष्ट्यांशं परित्यज्य वाच्यैकदेशे वृत्तिः । एवं त्वंपदस्याऽपि । सैषा जहदजहल्लक्षणा भागलक्षणेति च गीयते ।

नन्वेवं चैतन्याद्वैतसिद्धावपि कथं प्रपञ्चस्य पारमार्थिकत्वाभावः ? शृणु । यदि हि त्वंपदार्थे भोक्तृत्वादि पारमार्थिकं कथं तत्पदार्थैक्यसिद्धिः ? एवं तत्पदार्थे ऽपि यदि परोक्षत्वादि पारमार्थिकं कथं त्वंपदार्थैक्यसिद्धिः ? तदेवं भोक्तृत्वादेः कल्पितत्वे भोग्यादि कल्पितमेव । एवं जगत्कर्तृत्वादेः कल्पितत्वे जगतः कल्पितत्वम् । तेन

तत्त्वमस्यादिवाक्यसामर्थ्येनैव निरस्तसमस्तप्रपञ्चात्मैक्यसिद्धिः । तत्त्वंपदार्थपरिशोधकवाक्येषु तत्र तत्र प्रतीयमानप्रपञ्चनिषेधाच्च । न च तैरेव वाक्यैः निष्प्रपञ्चात्मप्रतीतेर्महावाक्यवैयर्थ्यम् । महावाक्योत्थबोधमन्तरेण भेदभ्रमाऽनिवृत्तेः । यथा स इति अयमिति वा देवदत्तस्वरूपमात्रविवक्षया प्रयुक्तपदजन्यबोधान्न भेदभ्रमनिवृत्तिस्तद्वत् । स चाऽयं वाक्यार्थबोधः फलरूपत्वान्न विधेयः । भाव्यान्तरासम्भवाच्च । तथा हि ।

न तावत् ज्ञाने ऽपूर्वविधिमङ्गीकृत्याऽज्ञाननिवृत्तेर्भाव्यत्वम्, लोके दृष्टत्वात् । अन्यस्याऽप्राप्तेश्च । न नियमविधिपरिसङ्ख्ये सति च प्रमाणे विधिमन्तरेणाऽपि ज्ञानसम्भवात् । असति च प्रमाणे तदनुदयात् । श्रवणादिविधिनैव ज्ञानसंभवे विध्यन्तरकल्पनावैयर्थ्याच्च । परेषामपि तत्त्वज्ञानस्य मिथ्याज्ञाननिवर्तकत्वं दृष्टमिति न विधिना कृत्यम् । तदिदमात्मज्ञानमुत्पन्नमात्रमेवाऽनेकजन्मार्जितकर्मराशिं विनाशयति । 'क्षीयन्ते चास्य कर्माणी' ति श्रुतेः । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेर्जुने' ति स्मृतेश्च । तेन कर्मक्षयार्थं न कायव्यूहकल्पनाक्लेशः । 'स एकधा भवति स त्रेधे 'त्यादिवाक्यानामुपासकविषयत्वात् । न च देहपातप्रसङ्गः । प्रारब्धस्याऽविनाशात् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये 'इति श्रुतेः । कर्मविपाकेन प्रारब्धनिवृत्तावप्युक्तशास्त्रेण ज्ञानाऽनिवर्त्यत्वात् । ततश्च ज्ञानेन तदानीमेवाऽज्ञाने सर्वात्मना निवर्तयितव्ये प्रारब्धप्रतिबन्धादनिवृत्तिः । स चायं प्रारब्धफलं भुञ्जानः सकलसंसारं बाधितानुवृत्त्या पश्यन् स्वात्मारामो विधिनिषेधादिशून्यः संस्कारमात्रात्सदाचारः प्रारब्धक्षयं प्रतीक्षमाणो जीवन्मु-

क इत्युच्यते । किं पुनरस्य प्रारब्धतो जन्मान्तरमप्येवमेवेति केचित् । अत एव सप्तजन्मविप्रत्वप्रदे कर्मणि प्रारब्धे उत्पन्नतत्त्वज्ञानस्य पुनर्देहान्तरं जायतएव । प्रारब्धस्य ज्ञानेनाऽनिवृत्तेः । आचार्यास्तु तदपि नेच्छन्ति । कर्म हि नैकमेव प्रारब्धतामश्नुते । किन्तु तत्तत्क्षणवर्तिबह्वल्पसुखदुःखहेतुगुरुलघुकर्मणामनेकेषां प्रायणकालोद्बुद्धवृत्तिकाणां प्रारब्धता। एकेन कर्मणा भोजनादिक्षुधादिजन्यसुखदुःखभोगाऽनुपपत्तेः । यत्तु भोजनादिजन्यसुखादौ न कर्मजन्यता, तस्य स्वाभाविकत्वादिति, तन्न। कर्मणां हि न साक्षात्सुखादिहेतुत्वं क्वचिदपि दृष्टम् । दृष्टन्तु हेतुनिष्पादकतया ऽग्निहोत्रादिकर्माण्यपि स्वर्गसुखहेतुदेवशरीरादिकमजनयित्वा भोगदायीनीति न कैरपि स्वीक्रियते। ततश्चाऽग्निहोत्रकर्माभावे उक्तदृष्टहेतोरभावात् सुखाभाववत्कर्मविशेषाभावे भोजनाद्यनिष्पत्त्या तज्जन्यसुखाभाव इति भोजनादिसुखमपि कर्मजन्यमेव। ततश्चोत्पन्नतत्त्वज्ञानस्याऽपि पुरुषस्य देहान्तरे तत्तत्क्षणवर्तिबह्वल्पसुखदुःखवति स्वीक्रियमाणे 'क्षीयन्ते चाऽस्य कर्माणी'त्यवगतं संचितकर्मनाशकत्वं ज्ञानस्य बाध्येत । ज्ञानोत्पादकदेहनाशकाले हि देहान्तरभोग्यतत्तत्क्षणवर्तिबह्वल्पसुखदुःखहेतुगुरुलघुकर्मणां प्रारब्धतापत्तिर्वक्तव्या न पूर्वं, तेन ज्ञानोत्पत्तिकाले संचितावस्थानां तेषां कर्मणां नाशाभावे उक्तश्रुतिबाधः । नाशे वा कथं मनुष्यदेहान्तरोत्पत्तिः? मनुष्यदेहस्य प्रतिक्षणवर्तिक्षुधादिदुःखबहुलत्वात् । तस्मात्सर्वेषां संचितानां नाशात्सप्तजन्मप्रदस्याऽपि कर्मणो ऽन्तिमेन तत्त्वबोधेनाऽज्ञानतत्कार्यनिवृत्तौ निवृत्तिरिति नोत्पन्नज्ञानस्य देहान्तरमिति । इन्द्रादीनां देहान्तरं तु प्रारब्धेनैव, तद्देहनाशाभावात् । अस्तु तर्हि एतस्याऽपि सन्धेव देव-

देहे प्रारब्धभोगाय देहान्तरम् । न । उत्पन्ने ज्ञाने ऽस्य देहान्तरभोग्यप्रतिक्षणभोगप्रदतत्तत्कर्मणां प्रारब्धत्वे मानाभावात् । इन्द्रादीनां तु देहान्तरश्रवणमेव मानम् । कल्प्यते तेषां प्रारब्धत्वमिति चेन्न । कल्पकाभावात् । एकस्य प्रारब्धत्वं कल्पकमिति चेन्न । अतिप्रसङ्गात् । देहान्तरस्य तादृशसामर्थ्यस्य च कल्पनायां गौरवाच्च । तस्माद् ज्ञानेनाऽज्ञाननिवृत्त्या सप्तजन्मप्रदकर्मनिवृत्तिरेव युक्ता, लाघवादिति ।

ज्ञानदेहारम्भकेष्वनेकेषु सुकृतदुष्कृतेषु सत्स्वपि न जन्मान्तरमेतस्य वक्तुं शक्यम् । तथा हि । सति देहे देहान्तरमुत तन्नाशानन्तरम् ? नाद्यः । लिङ्गस्य परिच्छिन्नत्वात्, तादृक्सामर्थ्यकल्पने देहान्तरकल्पने च गौरवादित्युक्तत्वात् । न द्वितीयो ऽपि । 'यं यं वापि स्मरन् भाव'मिति स्मृतेर्देहान्तरविषयान्तिमप्रत्ययत्वं प्रारब्धत्वमिति लक्षणात् । ज्ञानिदेहारम्भकाणां च जन्मान्तरभोगप्रदत्वावच्छेदेनाऽप्रारब्धत्वात्तज्जन्मभोगप्रदत्वावच्छेदेन च प्रारब्धत्वात् । प्रारब्धस्य चाज्ञाननिवृत्तौ प्रतिबन्धत्वमिति तज्जन्मभोगसमाप्तावज्ञाननिवृत्तिरेव । ज्ञानिनो ऽपि देहान्तरं कल्पयितुं प्रारब्धलक्षणान्तरं कुर्वतां विना मूलप्रमाणमभिनिवेश एवाऽवशिष्यते । देहान्तरस्याऽश्रवणात् । उत्क्रमस्याऽऽवश्यकत्वेन 'न तस्य प्राणा उत्क्रामन्ती'ति श्रुतिसङ्कोचापत्तेश्च । तस्मान्न ज्ञानिनो जन्मान्तरं, किन्तु प्रारब्धक्षये ऽज्ञाननिवृत्तिरेव ।

तदेतदात्मज्ञानं वृत्तिपदवाच्यं सन्न घटादिज्ञानवद्विषयावभासकं तस्य स्वतः स्फुरद्रूपत्वात् । अज्ञाननिवर्तकत्वं तु घटादिज्ञानवदस्त्येवाऽसति प्रारब्धप्रतिबन्धे

घटादिज्ञानानामपि प्रमानिष्ठज्ञानानिवर्तकत्वात् । ननु न घटादिज्ञाननिवर्त्यान्यज्ञानानि प्रमातृनिष्ठानि, विषयावच्छिन्नचैतन्यनिष्ठत्वात् । मैवम् । जीवनिष्ठाऽज्ञानवादिनां तु नाऽत्र विवादः । इतरेषामपि तूलाज्ञानानि प्रमातृनिष्ठान्येव । समानाश्रयविषयत्वभङ्गप्रसङ्ग इति चेन्न । विषयनिष्ठत्वे ऽपि ज्ञानाऽज्ञानयोः समानाश्रयत्वभङ्गप्रसङ्गस्य तुल्यत्वात् । प्रमातृनिष्ठस्य हि विषयचैतन्यविषयत्वेनात्यन्तविरोधः । अन्यनिष्ठज्ञानेनाऽन्यनिष्ठाऽज्ञाननिवृत्तौ त्वत्यन्तविरोधो, ऽतिप्रसङ्गात् । तदज्ञानमेतस्येति चेत्, एतन्निष्ठत्वाभावे षष्ठ्यर्थाऽनिरूपणात् । विषयचैतन्यनिष्ठमज्ञानं प्रमातरि भ्रमादिकार्यं जनयतीति तस्याज्ञानमित्युच्यतइति चेन्न । यस्याऽज्ञानं भ्रमस्तस्येत्यज्ञानभ्रमसम्यग्ज्ञानानां समानाश्रयत्वात् ।

किं चाऽत्यन्तव्यवहितविषयचैतन्यनिष्ठानामज्ञानानां प्रमातरि भ्रमजनकत्वानुपपत्तेश्च तेषां प्रमातृनिष्ठतैव । तादृशशक्तिविशेषकल्पने मानाभावात् । अपि च सर्वं वस्तु ज्ञाततया ऽज्ञाततया वा साक्षिविषय इति प्रसिद्धं, न च विषयनिष्ठमज्ञानं साक्षिणा ऽपरोक्षं सम्भवतीति कथं तद्विशेषणतया घटादेः साक्षिविषयत्वम् । न च मूलाज्ञानविषयतया घटादेः साक्षिविषयता, तस्याऽखण्डवस्तुविषयत्वेन घटचैतन्याऽविषयत्वात् । घटमहं न जानामीति प्रतीतिगोचरत्वाऽभावात् । घटचैतन्यस्याऽपि पूर्णानन्दत्वादिना मूलाज्ञानविषयत्वात् । घटं न जानामीति प्रतीतौ घटबोधकाले ऽपि तत्प्रसङ्गः । तदा ऽपि घटचैतन्यस्य पूर्णानन्दत्वाप्रतीतेः । सुखादावपि तत्प्रसङ्गाच्च । चैतन्यांशस्य च भासकस्याऽनावृततया विषयत्वायोगात् ।

अपरिच्छिन्नस्याऽज्ञानस्य परिच्छिन्नघटचैतन्याऽविषयत्वाच्च न घटं न जानामीति मूलाज्ञानप्रतीतिः । तस्माद्धटं न जानामीति तूलाज्ञानविशेषणतया घटभानमपि तस्य प्रमातृनिष्ठतामावेदयति । रजतोत्पत्तिस्तु प्रमातृचैतन्ये इदमंशचैतन्याऽभेदेनाऽभिव्यक्ते इति बहिः प्रतीतिः । प्रमातृनिष्ठस्याऽपि विषये विक्षेपजनकत्वाच्च । अत एव वन्ह्यभावाज्ञानात्पर्वतादौ वन्ह्युत्पत्तिः । एवं च नानुभवविरोधो, नाऽप्यन्यथाख्यातिप्रसङ्गः । एवं तर्हि मूलाज्ञानमपि जीवनिष्ठं विषये विक्षेपजनकमिति चिन्मात्रनिष्ठत्वं भज्येत । मैवम् । न हि विषये विक्षेपजनकत्वाभावात् चिन्मात्रनिष्ठत्वम् । किं तु चित्त्वस्य लाघवेन स्वाश्रयतावच्छेदकत्वात् । बन्धमुक्त्योः सामानाधिकरण्यानिष्ठत्वाच्च । न च तूलाज्ञानमपि चिन्मात्रनिष्ठं जीवनिष्ठं वा, अभिज्ञाऽनभिज्ञव्यवहारानुसारेण परिच्छिन्नत्वाङ्गीकारात् । घटमहं न जानामीति प्रतीतेश्च प्रमातृनिष्ठत्वम् । कथं तर्हि प्रमातृनिष्ठाऽज्ञाननिवर्तकत्वे तुल्ये ऽपि घटस्याऽपरोक्षता न वन्हेरिति ? शृणु । घटे वृत्तेर्बहिर्निस्सरणेन उभयचैतन्याभेदाभिव्यक्तेः । इतरत्र तदभावात् । क्वचिद्विषयचैतन्यनिष्ठत्वाभिधानं तद्विषयत्वाऽभिप्रायम् ।

एवं च प्रमानुमितौ वृत्तिरप्यवश्याङ्गीकर्तव्या । अन्यथा वह्न्यादिभानानुपपत्तेः । सा च प्रमातृनिष्ठाऽज्ञानपरिणाम इति तद्विशेषणतया वह्निभानम् । विषयविशिष्टतया वृत्तिभानात् । तस्मात्सर्वं तूलाज्ञानं प्रमातृनिष्ठं चेति युक्तं घटादिज्ञानस्य प्रमातृनिष्ठाऽज्ञाननिवर्तकत्ववद् ब्रह्मज्ञानस्य मूलाज्ञाननिवर्तकत्वमिति ।

अथ केयमज्ञाननिवृत्तिः ? न सती, नाप्यसती, नापि सदसती, ज्ञानजन्यत्वात्, द्वैतप्रसङ्गाद्दृश्यत्वविरोधेभ्यश्च,

अथ जन्यत्वादेव मायिकत्वमिति, तदुक्तं 'जन्यत्वमेव जन्यस्य मायिकत्वसमर्पक'मिति, तन्न। अनिर्वचनीयस्य ज्ञाननिवर्त्यत्वनियमेन निवृत्तिपरम्पराप्रसङ्गात्। यत्तु सदसद्द्वैताव्याकोपमङ्गीकृत्य तस्याऽसत्त्वाभिधानं, तत्रापि विना प्रमाणेन अद्वैतसङ्कोच एव दूषणम्। पञ्चमप्रकारत्वाश्रयणं तु अत्यन्ताप्रसिद्धम्। अस्तु तर्हि चैतन्यात्मिकेति चेत्, न। जन्यत्वादेव। नाऽस्त्येव जन्यत्वमिति चेन्न। अज्ञानानर्थक्यप्रसङ्गात्। चैतन्यस्य सदा सत्त्वेन प्रयत्नविशेषानुपपत्तेश्च।

अत्र केचित्। तत्त्वज्ञानोपलक्षितचैतन्यमेवाज्ञाननिवृत्तिः। तच्च न तत्त्वज्ञानतः प्रागस्ति। उपलक्षणत्वस्य सम्बन्धाऽधीनत्वात्। काकसंबन्धे हि गृहस्य काकोपलक्षितत्वात्। रूपीतरपरिणतोपादानस्यैव तद्रूपत्वात्। घटो हि चूर्णाकारेण परिणता मृदेव। तदपि न। ज्ञानोपलक्षितत्वस्याऽपि सत्त्वे अद्वैतव्याघातात्। असत्त्वे उद्देश्यत्वाऽनुपपत्तेः। मिथ्यात्वे ज्ञाननिवर्त्यत्वापत्तेः। चिन्मात्रत्वे उक्तदोषानतिवृत्तेः। ततश्च दुर्वचस्वरूपेयमज्ञाननिवृत्तिः।

अत्रोच्यते। नाऽज्ञानस्य निवृत्तिर्नाम ध्वंसः। रूपान्तरपरिणतोपादानस्यैतद्रूपत्वात्। घटध्वंसो हि चूर्णाकारपरिणता मृदेव। न च चैतन्यस्य रूपान्तरमस्ति। तस्मान्नास्त्येव ज्ञानध्वंसः। किं तु अज्ञानस्य कल्पितत्वात्तदत्यन्ताभाव एव तन्निवृत्तिः। किं तर्हि तत्त्वज्ञानस्य साध्यमिति चेत्? नास्त्येवाऽज्ञानात्यन्ताभावबोधात्मकव्यतिरेकेण। तदुक्तम्।

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति॥ इति।

स चाऽयमधिष्ठानात्मक एव । कथं तर्हि सर्वदा सत इच्छा तदर्थं प्रयत्नविशेषो वा? शृणु । नास्माकं परेषामिव मुक्तिर्भिन्ना किं तु चिद्रूपैव नित्यावाप्तैव । इच्छाप्रयत्नविशेषौ तु कण्ठगतचामीकरन्यायेनाऽनवाप्तत्वभ्रमात् । तन्निमित्तं चाज्ञानमेव । ततश्च श्रवणाद्यभ्यासपरिपाकजन्मना ज्ञानेनाऽज्ञानादिसकलप्रपञ्चबाधे चिन्मात्रमखण्डानन्दैकरसमवशिष्यते ।

कथं पुनर्दृष्टिसृष्टिवादे श्रवणादिपरिपाकजन्मना ज्ञानेनाऽज्ञानादिबाधः? तथा हि । तस्मिन्मते चैतन्याऽतिरिक्तपदार्थानामज्ञातसत्त्वं नास्ति, मिथ्यात्वस्य स्वप्नादिदृष्टान्तेन सिद्धत्वात् । तादृशस्यैव सत्त्वस्याङ्गीकारात् । एवं च घटादीनां यदा प्रतीतिस्तदा सत्त्वं नान्यदेति न दण्डादिजन्यत्वं, किं तु अज्ञानमात्रजन्यत्वं, स्वप्नवच्च दण्डाद्युपादानम्, अज्ञानदेहादिकं तु भासमानमेव तिष्ठति, अभावनिश्चयाभावाच्च पुत्राद्यभावकृतरोदनाद्यप्रसङ्गः, प्रत्यभिज्ञानमपि भ्रम एव, ततश्च आकाशादिक्रमेण सृष्टिः, पञ्चीकरणं ब्रह्माण्डाद्युत्पत्तिः, इत्यादिकं मतान्तरे देवताविग्रहन्यायसिद्धमपि नास्मिन्मते दृष्टिव्यतिरेकेण सिद्ध्यति । अत एव सर्वानात्मनां न प्रमाणवेद्यत्वं, चक्षुषा रूपं पश्यामीत्यादिव्यवहारस्य स्वप्नतुल्यत्वात् । किं तु सुखादिवत्केवलसाक्षिवेद्यत्वम् । कथं तर्हि घटादेरपरोक्षत्वं वन्ह्यादेश्च परोक्षत्वम्? अज्ञानजन्यत्वस्य साक्षिण्यध्यस्तत्वस्य च तुल्यत्वात् । सत्यम् । वह्न्यादौ परोक्षत्वस्याऽप्यध्यस्तत्वात् उक्तविशेषसिद्धिः ।

न च बौद्धमतप्रवेशः । अधिष्ठानस्य स्थायित्वात् । अबाधितत्वाच्च । अज्ञानस्याऽप्यनादेः सकलदृष्टिहेतोरङ्गी-

कारात् । तदेवमज्ञानातिरिक्तस्य कारणस्याऽभावात् कथं श्रवणादिजन्यं तत्त्वज्ञानमिति । अत्रोच्यते । सत्यम्, लोके अज्ञानातिरिक्तम् अनात्मदृष्टिकारणं नास्तीति, वेदे तु यागस्वर्गादौ कार्यकारणभावः स्वीक्रियतएवेति । अथ दण्डघटादौ कार्यकारणभाववदेव यागस्वर्गादौ कार्यकारणभावः स्वमतुल्यः, न वस्तुतो ऽस्ति, सत्यं न वस्तुतो ऽस्ति, किन्तु घटादेरज्ञानमात्रजन्यत्ववत्स्वर्गनरकादेर्नाज्ञानमात्रजन्यत्वम् अपि तु यागहिंसादिजन्यत्वमपि । किमित्येवं वैषम्यमिति चेत्? वेदस्य प्रामाण्यात् । ननु न यागस्वर्गादिसाध्यसाधनभावे वेदस्य प्रामाण्यं, प्रत्यक्षादेरिव घटादिसाध्यसाधनभावे अज्ञानमात्राद्दण्डघटाद्युत्पत्तिवच्च यागस्वर्गाद्युत्पत्तिः । अर्धजरतीयन्यायस्याऽयुक्तत्वात् । नैवम् । यागादेः स्वर्गाद्यनुत्पत्तौ अगम्यागमनादेश्च नरकाद्यनुत्पत्तौ वेदान्तवादिनां यथेष्टाचरणपर्यवसानप्रसङ्गात् । यजेत स्वर्गकाम इत्यादेः प्रामाण्याभावे वेदान्तानां प्रामाण्यानाश्वासप्रसङ्गाच्च । अनात्मदृष्टिसृष्टेरनवसानप्रसङ्गाच्च । अधिष्ठानज्ञाने तदवसानमिति चेन्न । तस्य हेत्वभावात् । अज्ञानं तद्धेतुरिति चेन्न । अज्ञानतो ऽसत्यपि दण्डादौ घटाद्युत्पत्तिवत् शमादिश्रवणाद्यसत्त्वे ऽपि तत एवाऽधिष्ठानज्ञानोत्पत्तिः प्रसज्येतेति शमाद्यननुष्ठानप्रसङ्गः । भ्रान्त्या शमाद्यनुष्ठानमिति चेत्, न । असकृद्वेदान्तार्थश्रवणवतां तदभावप्रसङ्गः । किं च भ्रमाणामज्ञानमात्रहेतुत्वं युक्तम्, अधिष्ठानस्य तु न तद्युक्तम्, न हि शुक्त्यज्ञानाद्रजतभ्रमस्तत एव शुक्तिज्ञानमिति । तदवश्यं दृष्टिसृष्टिपक्षे लोके ऽज्ञानातिरिक्तकारणाभावे ऽपि वेदे स्वर्गादिसाधनता संमतैव । ततश्च यागादेः स्वर्गादिसाधनत्वं प्रतीत्य यागमनुतिष्ठताम् उत्पन्नस्य स्वर्गसूक्ष्मरू-

पस्य यागसूक्ष्मरूपस्य वा ऽपूर्वस्य साक्षिसिद्धस्य स्वर्गजनकत्वम् । अन्यथा ऽव्यवस्थाप्रसङ्गादित्युक्तम् । स्वप्नकृतादपि तर्हि यागात्स्वर्गोत्पत्तिप्रसङ्ग इति चेन्न । स्वप्नयागस्वर्गयोः साध्यसाधनभावे वेदस्याप्रामाण्यात् । अपूर्वस्य साक्षिसिद्धत्वं नाऽनुभूयतइति चेन्न । अज्ञानकारणता ऽपि साक्षिसिद्धा नाऽनुभूयते । न हि घटादिप्रतीतिकाले अज्ञानकारणता ऽनुभूयते । भासमानसत्त्वानङ्गीकाराच्च अज्ञानकारणतायाः साक्षिसिद्धत्वं वाच्यमेव । अज्ञानस्य कारणता ऽप्यभासमाना नास्त्येवेति चेन्न । 'अविद्यायोनयो भावाः सर्वे ऽपि बुद्बुदा इव' इत्याद्यभ्युपगमो विरुध्येत । तस्मादज्ञानकारणत्वादिवदपूर्वस्य संस्काररूपस्य साक्षिसिद्धत्वं वक्तव्यमेव । संस्काराणां साक्षिगम्यत्वं वार्तिककारैस्तत्र तत्रोक्तम् ।

'सुप्ते ऽस्मिन् करणग्रामे यो ऽसुप्तो ऽलुप्तदृष्टितः ।
वासनारूपकान् पश्यन् प्राणान् प्राणिति वायुना ॥
भावनाकारकेक्षित्वादात्मैकः कारकायते' ।

इत्यादौ, ततश्च यागादेः स्वर्गादिजन्मवच्छ्रवणमननादिसहकृतवेदान्तवाक्यात्तत्त्वज्ञानोत्पत्तिः । वाक्यानां च ज्ञानजनकत्वं शक्तिलक्षणादिना दृष्टमेवेति वेदान्तवाक्यस्यापि तत्त्वमस्यादेर्लक्षणया तत्त्वज्ञानजनकत्वं न विरुध्यते । दृष्टिसृष्टिवादे ईश्वरो नास्त्येवेति कथं तदभेदप्रतीतिरिति चेत्? कुत इदमवगतम् । सर्वदा ऽप्रतीतेरिति चेत्, तर्हि जीवो ऽपि नास्त्येवेति स्यात् । असौ चिद्रूपतया भासमान एवाऽस्तीति चेत्, ईश्वरे ऽपि तुल्यम् । ईश्वरत्वं सदा न भासतइति चेत्, जीवत्वे ऽपि तुल्यमेतत् । चिन्मात्रे ऽज्ञानकल्पितं जीवत्वं भासतइति चेत्, ईश्वरत्वे ऽपि तुल्य-

म् । उभयमपि तर्हि नास्तीति चेत्, साक्षित्वं तावदस्ति । अन्यथा भानानुपपत्तेः ।

अज्ञानोपहितश्च साक्षी । अज्ञाने शक्तिद्वयमावश्यकम् । तच्च चित्सम्बद्धं, जडत्वात् । ततश्च विक्षेपशक्तिसम्बद्धं चैतन्यमीश्वरः, आवरणशक्तिसम्बद्धं चैतन्यं जीव इति जीवेश्वरयोरनादित्वम् । ततस्तयोरभेदानुपपत्तेर्लक्षणया ऽद्वितीयचिन्मात्रप्रतीतिर्वक्तव्या । तस्माद् दृष्टिसृष्टिवादे ऽपि नित्यनैमित्तिकानुष्ठानशुद्धान्तःकरणस्य शमादिसम्पन्नस्य गुरुमनुसृतस्य श्रवणादिपरिपाकसमुत्पन्नतत्त्वज्ञानस्याऽज्ञानतत्कार्यबाधे सत्यज्ञानाऽऽनन्दाऽखण्डाऽद्वितीयं वस्तुमात्रमवशिष्यते नान्यत् ।

इत्थं परिव्राजकपूज्यपाद-
श्रीरामतीर्थानुस्मृतिप्रसादात् ।
सिद्धान्ततत्त्वं गतवाग्विवादम्
अनन्तदेवेन मुदा न्यरूपि ॥ १ ॥

इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥ २ ॥

इति श्रीसकलदिङ्मण्डलविश्रान्तयशोमण्डलनिखिलश्रु-
तिशिरस्तत्त्वपरिशीलनमर्यादाधुरन्धरश्रीमदाप-
देवसूनुना अनन्तदेवेन कृतं सिद्धा-
न्ततत्त्वं नाम प्रकरणं
संपूर्णम् ।

---

शुभमस्तु ।

॥ श्रीः ॥

# तर्कभाषा ।

## न्यायप्रदीपाख्यटीकासहिता ।



**बालोऽपि यो न्यायनये प्रवेश-**
**मल्पेन वाञ्छत्यलसः श्रुतेन ।**
**संक्षिप्त[1]युक्त्यन्वित तर्कभाषा**
**प्रकाश्यते तस्य कृते मयैषा ॥**

प्रणम्य विघ्नहर्तारं गुरुं दामोदरं तथा ।
टीकेयं तर्कभाषायास्तन्यते विश्वकर्मणा ॥

विशिष्टशिष्टाचारानुमितवेदबोधितकर्तव्यताकं प्रारिप्सितविघ्नविघातकं परमेश्वरनमस्कारलक्षणं मङ्गलं मेघदूतादाविव मनसा कृत्वा तत्र प्रेक्षावत्प्रवृत्तिविषयादि प्रतिजानीते । बालोऽपीति । अत्र निबन्धाकरणं दृष्ट्वा मङ्गलं न कृतमिति न भ्रमितव्यम् । समाप्त्या लिङ्गेन तदनुमानात् । ननु मङ्गले समाप्तिकारणताबोधकस्य प्रमाणस्याभावात् कथमिदमनुमानम् । अथ विशिष्टशिष्टाचारानुमितो वेद एव तत्र तत्कारणताबोधक इति चेत् । न । कृतेऽपि मङ्गले कादम्बर्यादौ समाप्त्यभावादकृतेऽपि मङ्गले प्रमत्तनास्तिकानुष्ठितसमाप्तेरन्वयव्यतिरेकाभ्यां व्यभिचारात् तत्र कारणतैव नास्तीति कथं वेदेनापि तद्बोधनमिति । अत्रैवं स्थितिः । मङ्गलं वेदबोधितकर्तव्यताक-

(१) संक्षिप्य-पा॰ २ पु॰ ।

मलौकिकाविगीतशिष्टाचारविषयत्वाद् दर्शवदिति वेदानुमानम् । अत्र हेतावलौकिकश्चासावविगीतश्चासौ शिष्टाचारश्चेति स तथा तस्य विषयत्वादिति समासः । तत्राचारविषयत्वादित्युक्ते चैत्यवन्दनादौ व्यभिचारः स्यात् चैत्यं नाम बौद्धानां देवतालयः तस्मिन्नपि बौद्धप्रयत्नविषयत्वमस्ति वेदबोधितकर्तव्यताकत्वं च नास्तीत्यतो विशेषणं शिष्टेति । शिष्टास्तु स्वीकृतवेदप्रमाणभावाः । अत्र यद्यपि स्वीकृतयावद्वेदप्रमाणभावत्वं किञ्चिद्वेदाज्ञानात् तत्प्रमाणभावमस्वीकुर्वत्यपरसकलवेदप्रमाणभावं स्वीकुर्वत्यपि दुर्लभं स्वीकृतयत्किञ्चिद्वेदप्रमाणभावत्वं तु न हिंस्यात् सर्वा भूतानीत्यादि(१) मास्थीयते । मयैषा सङ्क्षिप्तयुक्त्यन्वितस्तर्कभाषा प्रकाश्यते । तर्काः षोडशपदार्थास्ते भाष्यन्ते यत्रेति तर्कभाषा युक्तिभिरन्विता युक्त्यन्विता सङ्क्षिप्ता चासौ युक्त्यन्विता चेति सङ्क्षिप्तयुक्त्यन्विता सा चासौ तर्कभाषा चेति विग्रहः । सङ्क्षिप्येति पाठे तु सुगमा योजना । यद्वा हे अन्वित शिष्य सङ्क्षिप्तयुक्ति यथा स्यात्तथैषा तर्कभाषा मया प्रकाश्यत इति योजना । सङ्क्षिप्तयुक्त्या अन्वितेति तत्पुरुषे कर्तव्ये तु पूर्वपदार्थस्याप्राधान्ये ऽलसव्युत्पत्त्यर्थाया सङ्क्षिप्तयुक्तेरेव विधेयांशभूतत्वेनाविमृष्टविधेयांशो दोषः स्यात् । सङ्क्षिप्तत्वमत्र शब्दतो नार्थत इति ज्ञेयम् । किमर्थं प्रकाश्यत इत्यत आह । **तस्य कृत इति** । कृत इत्यव्ययं तादर्थ्यवाची तदर्थमित्यर्थः । तस्य कृत इत्यत्र तच्छब्दो यच्छब्दमपेक्षत इत्याह । **य इति** । विशेष्यं निर्दिशति । **बाल इति** । यो बालोऽपि प्रमाणादिषोडशपदार्थज्ञानशून्योऽपि न्याय-

(१) अत्रादर्शपुस्तके कश्चिदंशः पतितः ।

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता-
वयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छ-

---

नये न्यायशास्त्रे प्रवेशं वाञ्छति । वाञ्छतिः सकर्मक इति कर्माकाङ्क्षायां प्रवेशमिति कर्म तच्चोत्पाद्यम् । ननु तत्र प्रवेशं वाञ्छन्नपि चिरन्तनग्रन्थानभ्यस्य ज्ञास्यति किमेतद्ग्रन्थनिर्माणप्रयासेनेत्यत आह । अलस इति । अल्पेन श्रुतेनेति । य आलस्ययुक्तश्चिरन्तनग्रन्थपाठाशक्तोऽल्पेन श्रुतेन श्रवणेन व्युत्पत्तिमिच्छति तदर्थं मदीयप्रयास इत्याशयः । श्रुतेनेत्यत्र नपुंसके भावे क्त इति भावे निष्ठा । अस्य ग्रन्थस्य न्यायशास्त्रप्रकरणत्वात् तच्छास्त्रस्य यद्विषयप्रयोजनसम्बन्धाधिकारिरूपं प्रवृत्त्यौपयिकमनुबन्धचतुष्टयं तदेवास्यापीत्याकलनीयम् । अथ शास्त्रस्यापि किं विषयप्रयोजनादि येन तद्विषयप्रयोजनादिनास्यापि विषयप्रयोजनादिमत्त्वं सिध्यतीति चेत् शृणु । तत्र प्रमाणादयः पदार्थाः प्रतिपाद्यत्वेन विषयाः । तत्त्वज्ञानं मोक्षसाधनत्वात् प्रयोजनम् । तत्कामोऽधिकारी । शास्त्रस्य पदार्थानां च प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । शास्त्रतत्त्वज्ञानयोश्च कार्यकारणभावः । तत्त्वज्ञानस्य पदार्थानां च विषयविषयिभाव इत्यादि । अवान्तरविषयप्रयोजने तु बालोऽपीतिश्लोकेनोक्ते । प्रकाश्यमाना तर्कभाषा विषयः । प्रमाणादिपदार्थज्ञानशून्यं प्रति तत्प्रबोधनं प्रयोजनम् ।

विषयप्रयोजनादिप्रतिपादनपरं न्यायशास्त्रस्याद्यं सूत्रमाह । प्रमाणेति । बह्वर्थसूचनात् सूत्रम् । तथोक्तम् ।

लजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्यायस्यादिमं सूत्रम्। अस्यार्थः। प्रमाणादिषोडशपदार्थानां तत्त्व[1]ज्ञानान्मोक्षप्राप्तिर्भवतीति। न च प्रमाणादीनां तत्त्वज्ञानं

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः[2] ॥ इति।

प्रमाणानि च प्रमेयं च संशयाश्च प्रयोजने च दृष्टान्तौ च सिद्धान्ताश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलानि च जातयश्च निग्रहस्थानानि चेति द्वन्द्वः। यद्यप्यत्र समस्यमानपदार्थयोः प्रमाणप्रमेययोरभेदाद् भेदप्रतिपादकद्वन्द्वानुपपत्तिस्तथापि पदार्थतावच्छेदकभेदादेव द्वन्द्वस्य साधुत्वम्। न्यायस्येति। न्यायशास्त्रस्येत्यर्थः। शास्त्रशब्दार्थस्तु

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥[3]

इत्यनेन ज्ञेयः। सूत्रे निःश्रेयसेत्यत्र निश्चितं श्रेयो निःश्रेयसमिति कर्मधारये ऽचतुरेत्यादिसूत्रेणादन्तत्वं निपात्यते तच्चात्र मोक्षरूपं ग्राह्यम्। तत्त्वज्ञानान्मोक्षप्राप्तिरिति। अनारोपितरूपत्वं तत्त्वशब्दार्थः। तदप्यनारोपः

(१) पदार्थतत्त्व-पा॰ २ पु॰।

(२) अयं श्लोकः पराशरोपपुराणे १८ अध्याये वर्तते। स्वल्पाक्षरमित्यपि केचित् पठन्ति। मुग्धबोधटीकायां दुर्गादासेन शिशुपालवधटीकायां मल्लिनाथेनाप्ययं श्लोक उद्धृतः।

(३) मीमांसाश्लोकवार्त्तिके शब्दपरिच्छेदे ४ कारिका। पृ॰ ४०६

प्रमा तद्विषयत्वम् । न त्वारोपाविषयत्वं सर्वस्यैवारोपविषयत्वात् । इदं च तस्य भावस्तत्त्वमित्यवयवार्थमनपेक्ष्यैवोक्ते ऽर्थे तत्त्वपदस्य रूढ्याश्रयणेनेति ज्ञेयम् । तदुक्तम् ।

लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी ।
कल्पनीया तु लभते नात्मानं योगबाधतः ॥(१) इति ।

अत्र तत्त्वज्ञानस्य मोक्षजनकत्वं प्राप्यते न शास्त्रस्येति शास्त्रस्य तल्लाभार्थं तत्त्वं ज्ञायते ऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमिति गृह्यते । शास्त्रादित्येव वक्तव्ये तत्त्वज्ञानादितिपदं शास्त्रेणानुमितिरूपमननजनकलिङ्गज्ञानजनकेन तत्त्वज्ञानमुत्पाद्य मोक्ष उत्पाद्यत इत्यर्थं बोधयितुमित्याशयः । तत्त्वज्ञानादिति च पञ्चमी प्रयोजकत्वे न हेतौ शब्दात्मकस्य तस्याशुतरविनाशित्वेन कालान्तरभाविमोक्षजनकत्वासम्भवात् नापि द्वारद्वारिभावेन द्वारं हि श्रवणं वा मननं वा निदिध्यासनं वा तत्त्वसाक्षात्कारो वा मिथ्याज्ञानध्वंसो वा । नाद्यः । श्रवणस्य श्रुतिवाक्यसाध्यत्वेन शास्त्रासाध्यत्वात् । न द्वितीयः । मननस्यानुमितिरूपत्वेन शब्दात्मकशास्त्रासाध्यत्वात् । न तृतीयः । निदिध्यासनस्य स्मृतिरूपत्वेन संस्कारमात्रसाध्यत्वात् । न चतुर्थः । तस्य साक्षात्कारत्वादेव शास्त्रासाध्यत्वात् । नापि पञ्चमः । मिथ्याज्ञानध्वंसस्यापि मोक्षवत् कालान्तरभावित्वेन शास्त्राजन्यत्वात् । इष्टप्रयोजकताज्ञानमेव प्रवर्तकं लाघवात् न तत्साधनताज्ञानं गौरवात् । तृप्त्य-

(१) इयं कारिका कुमारिलभट्टोक्ता । यतः मलमासतत्त्वे मासलक्षणप्रकरणे तदुक्तं भट्टपादैरित्यादिना स्मार्तरघुनन्दनभट्टाचार्यैरियं कारिका उद्धृता ।

सम्यग् ज्ञानं तावद्भवति यावदेषामुद्देशलक्षण-
परीक्षा न क्रियन्ते । यदाह भाष्यकारः । त्रि-
विधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं
परीक्षा चेति । उद्देशस्तु नाममात्रेण वस्तुसङ्की-

र्थिनस्तण्डुलक्रयणादौ प्रवृत्तिर्न स्याच्च । प्रयोजकत्वे च पञ्चम्या न लक्षणा गौरनित्य इतिवदेकदेशमादायान्वयोपपत्तेः तत्र गोत्वरूपविशेषणांशे बाधात् स्वतश्चोपस्थितायां व्यक्तावेकदेशभूतायामनित्यत्वान्वयः प्रकृते च नियतपूर्ववर्तित्वरूपप्रयोजकत्वांशे शास्त्रान्वय इति तु भेदः । शास्त्रप्रयोज्यं तत्त्वज्ञानमपि न साक्षान्मोक्षं जनयति किं तु मिथ्याज्ञानध्वंसादिक्रमेणेति ज्ञेयम् । तदुक्तं गौतमेन । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञान[redacted] तदनन्तरापायादपवर्ग[1] इति । त्रिविधा चेति । तिस्रो विधा यस्याः सा त्रिविधा । अस्येति । अस्यैव शास्त्रस्येत्यर्थः । प्रवृत्तिर्व्यवहारः । त्रैविध्यमेव दर्शयति । उद्देश इति । यद्यप्युद्देशो विभागो लक्षणं परीक्षा चेति प्रवृत्तिचातुर्विध्यकथनमुचितं तथापि विशेषनाममात्रसङ्कीर्तनरूपं विभागमुद्देश एवान्तर्भाव्य त्रैविध्योक्तिः । प्रथमोद्दिष्टमुद्देशं प्रथमं लक्षयति । उद्देशस्त्विति । कीर्तनमुद्देश इत्युच्यमाने समुद्रघोषादावतिव्याप्तिस्ततः सङ्कीर्तनमिति । एतावत्युच्यमाने शशविषाणमित्यादावतिव्याप्तिस्ततो वस्तुसङ्कीर्तनमिति ।

(१) न्यायसूत्रम् । अ· १ आ· १ सू· २ । तदनन्तराभावादपवर्ग इत्यादर्शपुस्तके राधामोहनगोस्वामिभट्टाचार्यकृतन्यायसूत्रविवरणे च पाठः ।

र्तनम् । तच्चास्मिन्नेव सूत्रे कृतम् । लक्षणं त्वसा-

एतावत्यप्युच्यमाने घट इत्यादावतिव्याप्तिस्ततो नामेति । इयत्यप्युच्यमाने प्रमाकरणं प्रमाणमित्यादौ लक्षणवाक्ये गतं तत्रापि प्रमाणमिति लक्ष्यभागस्य वस्तुभूतस्य नाम्ना सङ्कीर्तनादत उक्तं नाममात्रेणेति । अथ लक्ष्यभागस्य लक्षणेनानभिधानात् नाममात्रेण लक्ष्यमभिधीयत इति पुनस्तत्रैवातिव्याप्तिरिति चेत् । न । सामानाधिकरण्यबलेन लक्षणभागेनापि लक्ष्याभिधानाद् भवति मात्रपदेन तद्व्यावृत्तिः । ननु पृथिव्या गन्धो लक्षणमिति व्यधिकरणे तद्वाक्ये तथाप्यतिव्याप्तिस्तत्र केवलेन नाम्ना लक्ष्याभिधानादिति चेन्नाम्ना वस्तुसङ्कीर्तनमात्रमुद्देश इति भिन्नक्रमेण मात्रपदतात्पर्यात् । ननु लक्ष्यपदेन लक्ष्यमुद्दिश्य लक्षणविधानात् लक्षणात्मकशास्त्रे लक्ष्यभागस्यापि सङ्ग्राह्यत्वात् किमर्थं तत्रातिव्याप्तिवारणमिति चेत् । न । लक्षणाद्यन्तर्गतोद्देशात् पृथगुद्देशस्य प्रणयनान्न तस्य सङ्ग्राह्यता । ननु मौनिकृतग्रन्थोद्देशे सङ्कीर्तनमव्यापकमिति चेत् । न । ज्ञायमानलक्षणवाक्याद्यसमभिव्याहृतं नाम उद्देश इति तदर्थं विवक्षान्तरकरणात् सर्वं सुस्थम् । लक्षणस्य दूषणत्रयमस्ति अव्याप्तिरतिव्याप्तिरसम्भवश्चेति । तत्र लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः क्वापि लक्ष्ये ऽवर्तनमसम्भवः । इदं च त्रयं सर्वत्र परिहर्तव्यम् । लक्षणात्मकं शास्त्रं लक्षयति । लक्षणं त्विति । लक्षणं लक्षणवाक्यमित्यर्थः । लक्षणस्य लक्षणकथने तु असाधारणधर्म इत्येव लक्षणस्य

धारणधर्मवचनम् । यथा गोः सास्नादिमत्त्वम् । लक्षितस्य लक्षणमुपपद्यते न वेतिविचारः परीक्षा । तेनैते लक्षणपरीक्षे प्रमाणादीनां तत्त्वज्ञानार्थं कर्तव्ये[1] ।

तत्रापि प्रथममुद्दिष्टस्य प्रमाणस्य ताव-

---

लक्षणं वचनग्रहणं तु प्रामादिकं समानासमानजातीयव्यवच्छेदो लक्षणार्थः स च साधारणधर्मेण न भवतीत्यसाधारणेत्युक्तम् । यन्न सर्ववृत्तीत्यसाधारणशब्दार्थः । यद्यप्याकाशमप्यसर्ववृत्तीति तत्रातिव्याप्तिस्तथापि तद्वारणाय धर्मवचनमिति वा धर्मो धर्मशब्दो वचनं वाचको यस्येति तत् तथा । आकाशं तु न धर्मपदवाच्यमित्याशयः । सास्नादिमत्त्वमिति । अत्रादिशब्देन लाङ्गूलककुदखुरविषाणानि गृह्यन्ते । परीक्षां लक्षयति । लक्षितस्येति । तेनेति । येन कारणेन प्रथमसूत्रे उद्देशमात्रं कृतं लक्षणपरीक्षे त्ववशिष्टे तेन कारणेनेत्यर्थः ।

तत्रापीति । प्रमाणादीनां लक्षणादौ कर्तव्ये ऽपीत्यर्थः । प्रथममित्यादि । मानाधीना मेयसिद्धिरिति[2] न्यायेन प्रमाणस्य सकलसाधकत्वेन प्राधान्यात् सूत्रकारेण प्रथममुद्देशे कृते तदनुसारेण प्रथमं तल्लक्षणमुच्यत इत्यर्थः ।

---

(१) तत्त्वे ऽवश्यकर्तव्ये-पा० १ पु० ।

(२) मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् ।
तच्चाध्यक्षादिमानेषु गीर्वाणैरप्यवारणम् ॥ इति ।
सम्पूर्णा कारिका विवरणप्रमेयसङ्ग्रहे १ सूत्रे १ वर्णके २५ पृष्ठायां धृता ।

लक्षणमुच्यते । प्रमाकरणं प्रमाणम् । अत्र च[1] प्रमाणं लक्ष्यं प्रमाकरणं[2] लक्षणम् । ननु प्रमायाः करणं चेत् प्रमाणं तर्हि तस्य फलं वक्तव्यं करणस्य फलवत्त्वनियमात् । सत्यम् । प्रमैव फलं साध्यमित्यर्थः । यथा छिदाकरणस्य परशोश्छिदैव फलम् । का पुनः प्रमा

प्रमाकरणं प्रमाणमिति । अत्र प्रमाणशब्दः करणव्युत्पन्नः प्रमीयतेऽनेनेति प्रमाणं न तु भावव्युत्पन्नः प्रमितिः प्रमाणमिति तथा सति बोधस्वभावस्य निर्विकल्पकस्यैव प्रमाणत्वं स्यान्न त्वबोधस्वभावस्य चक्षुरादेः इष्यते चोभयत्र तस्मात् करणव्युत्पत्तिरिति । नन्वेवं प्रमाकरणं प्रमाकरणमित्यनन्वयदोषः स्यादिति चेत् । न । प्रमाकरणं प्रमाणपदवाच्यमित्यर्थकरणात् सर्वं समञ्जसमिति । सत्यमिति । सत्यमित्यव्ययमङ्गीकारे । यद्यत् करणं तत्तत् फलवदिति व्याप्त्यपरपर्यायो नियमोऽङ्गीक्रियते वक्तव्यत्वं नाङ्गीक्रियते फलस्योक्तत्वादित्याशयः । प्रमैव फलमिति । फल् निष्पत्तावित्यस्य रूपं फलमिति । अत्रानुरूपं दृष्टान्तमाह । यथा छिदेति । छिदा द्वैधीभावः । प्रमां पृच्छति । का पुनरिति । प्रमा कीदृशीत्यर्थः । उत्तरं वक्तुं प्रतिजानीते ।

(१) तत्र—पा॰ २ पु॰ ।
(२) करणत्वं—पा॰ १ पु॰ ।

यस्याः करणं प्रमाणम् । उच्यते । यथार्थानुभवः प्रमा । यथार्थ इत्ययथार्थानां संशयविपर्ययतर्कज्ञानानां निरासः । अनुभव इति स्मृतेर्निरासः । ज्ञातविषयं ज्ञानं स्मृतिः ।[१] अनुभवो नाम स्मृतिव्यतिरिक्तं ज्ञानम् । किं पुनः करणम् । साधकतमं करणम् । अतिशयितं साधकं साधकतमं प्रकृष्टं कारणमित्यर्थः । ननु साधकं

उच्यत इति । प्रमां लक्षयति । यथार्थेति । यथार्थश्चासावनुभवश्चेति समासः । यथार्थत्वं तद्वति तत्प्रकारताकत्वं तद्वतीति सप्तम्यर्थो विशेष्यत्वं तथा च तद्विशेष्यताकत्वं तदर्थ इत्यर्थः विशेष्यत्वं भासमानवैशिष्ट्यानुयोगित्वम् । प्रकारत्वं भासमानवैशिष्ट्यप्रतियोगित्वम् । वैशिष्ट्यं सम्बन्धः । प्रतियोगित्वमनुयोगित्वमपि स्वरूपसम्बन्धविशेषः । यथार्थपदस्य कृत्यमाह । यथार्थेत्यादि । एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः संशयः मिथ्याध्यवसायो विपर्ययः व्याप्यारोपे व्यापकारोपस्तर्कः । अनुभवपदस्य व्यावर्त्यमाह । अनुभव इतीति । अनुभवपदार्थमाह । अनुभव इति । अनुभवत्वं जातिरित्यन्ये । प्रमास्वरूपे ऽवगते ऽपि करणस्वरूपं नावगतमिति पृच्छति । किं पुनरिति । पाणिनिसूत्रेणोत्तरयति । साधकतममिति । प्रकृष्टमिति । प्रकृ-

(१) इदं स्मृतिलक्षणं नास्ति १ । २ पु० ।

कारणमिति पर्यायस्तदेव न ज्ञायते किं तत् कार-

णत्वं प्रकर्षवत्त्वं फलाव्यवहितपूर्ववर्तिव्यापारवत्त्वमिति यावत् । तदुक्तम् ।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणत्वं तदा स्मृतम्(१) ॥ इति ।

इदं च यद्यपि व्यासङ्गदशायां व्यापारे सत्यपि प्रमानुत्पत्तेरिन्द्रियादौ दुर्लभं तथाप्यव्यासक्तदशाभिप्रायमेतत् । व्यासङ्गदशायां तु विवक्षान्तरं कर्तव्यमिति द्रष्टव्यम् । न च भगवति पुरुषधौरेये लक्षणमिदमव्यापकमिति वाच्यम् । तस्यात्रालक्ष्यत्वात् । ग्रन्थान्तरे तु ।

नित्यानित्यतया द्वेधा प्रमा नित्यप्रमाश्रयः ।
प्रमाणमितरस्यास्तु करणस्य प्रमाणता ॥(२)

इत्यादिना ईश्वरस्यापि लक्ष्यत्वमस्तीति ज्ञेयम् । एतेनैव सामग्र्यामतिव्याप्तिरपि परास्ता । तस्या निर्व्यापारत्वात् । तथाहि प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षण एव सामग्री । न त्वेकक्षणावच्छिन्नानि यावन्ति कारणानि यागादेश्चिरातीतत्वेन स्वर्गादिसामग्र्यामव्याप्तेः कालोपाध्यव्यापकः कालोपाधिः क्षणः । ननु साधकशब्दार्थं यो न जानाति तं प्रति कारणशब्देनार्थः कथ्यते तच्चासङ्गतं साधकशब्दवत् कारणशब्दस्याप्यज्ञातार्थकत्वादिति हृदि निधाय शङ्कते ।

(१) इयं कारिका वाक्यपदीये भर्तृहरिणोक्ता । वैयाकरणभूषणसारे सुबर्थनिरूपणप्रकरणे ऽपीयमुद्धृता ।

(२) तार्किकरक्षायां प्रमाणप्रकरणे तृतीयकारिका ।

णमिति। उच्यते। यस्य कार्यात् पूर्वभावो नियतोऽनन्यथासिद्धश्च तत् कारणम्। यथा तन्तुवेमादिकं पटस्य कारणम्। यद्यपि पटोत्पत्तौ दैवादागतस्य रासभादेः पूर्वभावो विद्यते तथापि नासौ नियतः। तन्तुरूपस्य तु नियतः पूर्वभावोऽस्त्येव किं त्वन्यथासिद्धः पटरूपजननोपक्षीणत्वात् पटं प्रत्यपि कारणत्वे कल्पनागौरवप्रसङ्गात्। तेनानन्यथासिद्धनियतपूर्व-

---

नन्विति। कारणं लक्षयति। यस्येति। अनन्यथासिद्धश्चेति। प्रकारान्तरेणोपयुक्तो न भवतीत्यर्थः। तेनेति। येन कारणेन रासभादावतिव्याप्तिवारणाय नियतेतिपदं दातव्यं तन्तुरूपादावतिव्याप्तिवारणाय चानन्यथासिद्धमितिपदं तेन कारणेनेत्यर्थः। अनन्यथासिद्धश्चासौ नियतश्चासौ पूर्वभावश्च सोऽस्यास्तीत्यनन्यथासिद्धनियतपूर्वभावि तस्य भावस्तत्त्वमनन्यथासिद्धत्वमन्यथासिद्ध्यभाववत्त्वम्। अन्यथासिद्धिश्च पञ्चतयी तथाहि अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतत्वमन्यथासिद्धत्वमित्येका। अन्यत्र घटान्तरे क्लृप्ता ये नियतपूर्ववर्तिनश्चक्रादयस्तैरेव तद्घटसम्भवे चक्रादिसहभूतत्वं रासभस्यान्यथासिद्धत्वमित्यक्षरार्थः। इदं च यत्र घटे नियतपूर्ववर्ती रासभस्तद्घटत्वेन कार्यत्वे रासभत्वेन कारणत्वे ऽङ्गीक्रियमाण इति द्रष्टव्यम्। अन्यं प्रति पूर्ववर्तित्वे गृहीत एव यत्रान्यं प्रति

पूर्ववर्तिता गृह्यते तदन्यथासिद्धमित्यन्या । अन्यं शब्दं प्रति पूर्ववर्तित्वे गृहीत एव यत्राकाशे ऽन्यं घटादिकं प्रति पूर्ववर्तिता गृह्यते तदाकाशमन्यथासिद्धमित्यक्षरार्थः । इदं च शब्दकारणत्वस्वरूपेणाकाशत्वेन घटादिकं प्रति कारणत्वे स्वीक्रियमाणे शब्दकारणत्वस्य पूर्ववर्तिताघटिततया शब्दं प्रति पूर्ववर्तित्वे गृहीत एव घटादिकं प्रति पूर्ववर्तित्वग्रहात् सर्वं सुयोजं भवतीति ज्ञेयम् । अत्र शब्दं प्रति शब्दकारणत्वेनाकाशस्य कारणतायामात्माश्रय इत्यपृद्रव्यातिरिक्तद्रव्यत्वेन वाच्या तथा च तेनैव रूपेण घटादिकं प्रत्यपि भवत्वविशेषादिति यश्चोदयेत् तं प्रत्येवं ब्रूयाद् यदन्यत्र क्लृप्तनियतेत्यत्रान्तर्भाव एतस्या इति । यं पुरस्कृत्य यस्य पूर्ववर्तित्वं गृह्यते तत् तेनान्यथासिद्धमित्यपरा । यं तन्तुं पुरस्कृत्य यस्य तन्तुरूपस्य पूर्ववर्तिता गृह्यते तत् तन्तुरूपं तेन तन्तुनान्यथासिद्धमित्यक्षरार्थः । यमादायैव यस्य पूर्ववर्तित्वं गृह्यते तदन्यथासिद्धमित्यपि यं दण्डत्वलक्षणं धर्ममादायैव यस्य दण्डस्य पूर्ववर्तित्वं गृह्यते तद् दण्डत्वमर्थाद् दण्डेनान्यथासिद्धमित्यक्षरार्थः । जनकं प्रति पूर्ववर्तित्वे गृहीत एव यत्र जन्यं प्रति पूर्ववर्तित्वं गृह्यते तदन्यथासिद्धमिति चरमा । कुलालपितुः कुलालपितृत्वेन घटं प्रति कारणत्वे वाच्ये घटजनककुलालं प्रति पूर्ववर्तित्वे गृहीत एव जन्यं घटं प्रति पूर्ववर्तित्वग्रहात् कुलालपिता अन्यथासिद्ध इत्यक्षरार्थः । कुलालत्वेन रूपेण तु सोऽपि कारणमेवेति शास्त्ररहस्यम् । कारणता च द्विविधा फलोपधानलक्षणा स्वरूपयोग्यत्वलक्षणा च । तत्राद्या फलोपधायके द्वितीया तु सहकारिविरहप्रयुक्तकार्याभाववत्त्वादिरूपा फलानुपधायके ऽपीति विवेकः । यस्य कार्यात् पूर्वभावो नियत इति कारणलक्षणे ऽवधित्वेन

भावित्वं कारणत्वम् । अनन्यथासिद्धनियतपश्चाद्भावित्वं कार्यत्वम् । यत्तु कश्चिदाह । कार्यानुकृतान्वयव्यतिरेकि कारणमिति । तद[1]युक्तम् । नित्यविभूनां व्योमादीनां कालतो देशतश्च व्यतिरेकासम्भवेनाकारणत्वप्रसङ्गात् । तच्च कारणं त्रिविधम् । समवाय्यसमवायिनिमित्तभेदात् । तत्र यत्समवेतं कार्यमुत्पद्यते तत् समवायिकार-

प्रविष्टस्य कार्यस्य ज्ञानार्थं तल्लक्षणमाह । अनन्यथासिद्धेति । पश्चाद्भावित्वमात्रं दैववशात् पश्चाद्भाविनि रासभादौ गतमत उक्तं नियतेति । तावत्यपि तन्त्वपेक्षया नियतपश्चाद्भाविनि पटरूपे गतमत उक्तमनन्यथेति । परोक्तं कारणलक्षणं दूषयितुमुपन्यस्यति । यत्त्विति । कार्येति । कार्येणानुकृतावनुविहितावन्वयव्यतिरेकौ यस्येति कार्यानुकृतान्वयव्यतिरेकि घटलक्षणं कार्यं हि कपाललक्षणकारणान्वयव्यतिरेकावनुविधत्ते तस्मिन् सति तत्सत्त्वमन्वयः तस्मिन्नसति तदसत्त्वं व्यतिरेक इत्यर्थः । दूषयति । तदयुक्तमिति । यत्त्वयोक्तमिति शेषः । नित्यविभूनामिति । नित्यत्वं कालिकव्यतिरेकाभावे हेतुः । विभुत्वं च दैशिकव्यतिरेकाभावे हेतुरित्याकलनीयम् । कारणं विभजते । तच्चेति । समवायिकारणं लक्षयति । तत्र यत्समवेतमिति । तत्र तेषु कारणेषु यत्समवेतं यस्मिन् समवेतमि-

(१) तद--पा० २ पु० ।

णम् । यथा तन्तवः पटस्य समवायिकारणम् । यतस्तन्तुष्वेव पटः समवेतो जायते न तुर्यादिषु । ननु तन्तुसम्बन्ध इव तुर्यादिसम्बन्धोऽपि पटस्य विद्यते तत् कथं तन्तुष्वेव पटः समवेतो जायते न तुर्यादिषु । सत्यम् । द्विविधः सम्बन्धः संयोगः समवायश्चेति । तत्रायुतसिद्धयोः सम्बन्धः समवायः । अन्ययोस्तु संयोग एव । कौ पुनरयुतसिद्धौ । ययोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । तदुक्तम् ।

तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः ।
अनश्यदेकमपराश्रितमेवावतिष्ठते ॥

यथा अवयवावयविनौ गुणगुणिनौ क्रिया-

---

त्यर्थः । अर्द्धाङ्गीकारेण परिहरति । सत्यमिति । तदेव स्पष्टयति । द्विविधः सम्बन्ध इत्यादि । सम्बन्धलक्षणं तु मूलकार एवाग्रे वदिष्यति सम्बन्धो हीत्यादिना । सम्बद्धत्वं समानमङ्गीक्रियते न तु समानेन सम्बन्धेन सम्बद्धत्वमित्यर्द्धाङ्गीकार इत्याशयः । अन्ययोस्त्विति । अन्ययोः युतसिद्धयोः पृथक्सिद्धयोरिति यावत् । यु मिश्रणामिश्रणयोरित्यस्य धातोरयुतसिद्धेत्यादिशब्दे कतरोऽर्थो विवक्षित इत्याशयेन पृच्छति । कौ पुनरिति । अमिश्रणार्थत्वमत्र विवक्षितमित्याह । ययोरिति । अयुतसिद्ध-

क्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति। अवयव्यादयो हि यथाक्रममवयवाद्याश्रिता एवावतिष्ठन्ते ऽविनश्यन्तः। विनश्यदवस्था-स्त्वनाश्रिता एवावतिष्ठन्ते ऽवयव्यादयः(१)। यथा तन्तुनाशे सति पटः। यथा वा(२) आश्रय-नाशे सति गुणः। विनश्यत्ता तु विनाशकार-णसामग्रीसान्निध्यम्। तन्तुपटावप्यवयवा-

युग्मान्युदाहृत्य दर्शयति। यथेति। अवयव्यादयो हीत्यादि। अत्रादिपदाद् गुणक्रियाजातिविशेषा ग्राह्याः। अवयवाद्याश्रिता इत्यत्र तु गुणिक्रियावद्व्यक्तिनित्यद्र-व्याणि ग्राह्याणि। विनश्यदवस्थास्त्विति। विनश्य-न्ती अवस्था येषां ते तथोक्ताः। अनाश्रिता एवेति। क्षणमात्रमिति शेषः। उदाहरति। यथेत्यादि। यत्र सम-वायिकारणनाशाद् द्रव्यनाश इत्यर्थः। यथा वा आश्र-येत्यादि। गुणस्य समवाय्यसमवायिनिमित्तकारणवि-नाशविरोधिगुणेभ्यो नाश इति स्थितौ यत्र समवायिकार-णनाशाद् गुणनाश इत्यर्थः। विनश्यत्तेत्यादि। विनश्यतो भावः विनश्यत्ता विनाशे ध्वंसे यानि कारणानि तेषां सामग्रीसाकल्यम्। न तु सकलकारणसमवधानमत्र सामग्री

(१) अवयव्यादयः—इति नास्ति २। ३ पु०।

(२) यथवा—पा० २ पु०।

वयविनौ तेन तयोः सम्बन्धः समवायोऽयुत-सिद्धत्वात् । तुरीपटयोस्तु न समवायोऽयुतसि-द्धत्वाभावात् । न हि तुरी पटाश्रितैवावतिष्ठते नापि पटस्तुर्याश्रितोऽतस्तयोः सम्बन्धः संयोग एव । तदेवं तन्तुसमवेतः पटः । यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणमतस्तन्तु-रेव समवायिकारणं पटस्य न तु तुर्यादि । पटश्च स्वगतरूपादेः समवायिकारणम् । एवं मृत्पिण्डोऽपि घटस्य समवायिकारणं घटश्च स्वगतरूपादेः समवायिकारणम् । ननु यदैव घटादयो जायन्ते तदैव तद्गतरूपादयोऽपि अतः समानकालीनत्वाद् गुणगुणिनोः सव्येतर-विषाणवत् कार्यकारणभाव एव नास्ति पौर्वा-पर्याभावादतो न समवायिकारणं घटादयः स्वगतरूपादीनां कारणविशेषत्वात् समवायि-कारणस्य । अत्रोच्यते । न गुणगुणिनोः समान-

तथात्वे कारणपदसान्निध्यपदयोर्वैयर्थ्यं स्यात् । साकल्यस्य सन्निधिरेव सान्निध्यं चातुर्वर्ण्यमितिवत् स्वार्थे प्रत्ययः । एवं मृत्पिण्डोऽपीति । समवायिकारणलक्षणाक्रा-न्तत्वान्मृत्पिण्डोऽपि घटं प्रति समवायिकारणमित्यर्थः ।

कालीनं जन्म किं तु द्रव्यं निर्गुणमेव प्रथममुत्पद्यते पश्चात् तत्समवेता गुणा उत्पद्यन्ते । समानकालोत्पत्तौ तु गुणगुणिनोः समानसामग्रीकत्वाद् भेदो न स्यात् कारणभेदनियतत्वात् कार्यभेदस्य। तस्मात् प्रथमे क्षणे निर्गुण एव घट उत्पद्यते गुणेभ्यः पूर्वभावीति भवति गुणानां समवायिकारणम्। तदा कारणभेदोऽप्यस्ति घटो

समानकालोत्पत्ताविति । गुणगुणिनोः समानकालोत्पत्तावुच्यमानायां समानसामग्रीकत्वात् समानसमवायिकारणकत्वात् कपालरूपघटरूपयोः भेदो न स्यादिति योजना। अयमर्थः। गुणगुणिनोः समानकालोतपत्तौ यद्गुणिनो घटस्य समवायिकारणं तदेव रूपादेर्गुणस्य वाच्यं न तु गुणी घटः तस्य पौर्वापर्याभावादेवं च कपालरूपस्य घटरूपस्य च कपालमेव समवायिकारणं विवक्षितं तथा चानयोः समानसमवायिकत्वाद् भेदो न स्यादेकदा रूपभेदे समवायिकारणभेदस्य प्रयोजकत्वादिति। ननु सामग्रीशब्दो यथाश्रुत एवास्त्वति चेत्। न। गुणगुणिनोः समानकालोत्पत्तिकत्वे ऽपि तत्प्रागभावादिभेदकृतः सामग्रीभेदो भविष्यति तथा च गुणगुणिनोः समानकालोत्पत्तिकत्वं न समानसामग्रीकत्वे प्रयोजकं समानसमवायिकारणकत्वे तु तत् प्रयोजकमेवेत्युक्तं प्राक्। कारणभेदेति। समवायिकारणभेदेत्यर्थः। कार्यभेदस्येति। रूपलक्षणकार्यभेदस्येत्यर्थः। कारणभेदोऽपी-

हि घटं प्रति न कारणमेकस्यैव पौर्वापर्याभावात् । न हि स एव तमेव प्रति पूर्वभावी पश्चाद्भावी चेति । स्वगुणान् प्रति तु पूर्वभावित्वाद्भवति गुणानां समवायिकारणम् । नन्वेवं सति प्रथमे क्षणे घटोऽचाक्षुषः स्यादरूपिद्रव्यत्वाद् वायुवत् तदेव हि द्रव्यं चाक्षुषं यन्म-

ति । घटरूपकपालरूपयोरित्यर्थः । ननु कपालरूपस्य कपालरूपमेव समवायिकारणं घटरूपस्य घटरूपमेव तथा च समवायिकारणभेदो बरीवर्त्तीत्यत आह । घटो हीत्यादि । यथाऽत्रा भेदे कार्यकारणभावो नास्ति एवं कपालरूपस्यापि न कपालरूपं कारणमभेदादेवेत्याशयः । नन्वेवं सतीति । घटस्य निर्गुणत्वे सतीत्यर्थः । अचाक्षुषः स्यादिति । चक्षुर्जन्यज्ञानविषयो न स्यादित्यर्थः । अरूपिद्रव्यत्वादिति । द्रव्यत्वादित्युक्ते घटादौ व्यभिचारोऽत उक्तमरूपीति । अरूपित्वादित्युक्ते रूपादौ व्यभिचारोऽत उक्तं द्रव्यत्वादिति । अत्र दृष्टान्तमाह । वायुवदिति । द्रव्यचाक्षुषत्वे प्रयोजकमाह । तदेव हीति । उद्भूतरूपवत्त्वमात्रं यद्युच्येत तदा परमाणुद्व्यणुकयोश्चाक्षुषत्वं स्यादत उक्तं महत्त्वे सतीति । एतावन्मात्रोक्तौ तु व्योमादेश्चाक्षुषत्वं स्यादत उद्भूतरूपवदिति । महत्त्वे सति रूपवत्त्वमित्युक्ते तप्तवारिस्थवह्नेश्चाक्षुषत्वं स्यादत उद्भूतेति । घटस्य निर्गुणत्वे ऽचाक्षुषत्वं दोषमुक्त्वा दोषा-

हत्वे सत्युद्भूतरूपवत् । अद्रव्यं च स्याद् गुणाश्रयत्वाभावाद् गुणाश्रयो द्रव्यमिति हि द्रव्यलक्षणम् । सत्यम् । प्रथमे क्षणे घटो यदि[1] चक्षुषा न गृह्यते तदा का नो हानिः । न हि सगुणोत्पत्तिपक्षेऽपि निमेषावसरे घटो गृह्यते । तेन व्यवस्थितमेतन्निर्गुण एव प्रथमं घट उत्पद्यते द्वितीयादिक्षणेषु[2] चक्षुषा गृह्यते न च प्रथमे क्षणे गुणाश्रयत्वाभावादद्रव्यत्वापत्तिः समवायिकारणं द्रव्यमिति द्रव्यलक्षणयोगाद् योग्यतया गुणाश्रयत्वाच्च (योग्यता च गुणात्यन्ताभावाभावः)[3] । असमवायिकारणं तदुच्यते ।

न्तरमाह । अद्रव्यं चेति । अचाक्षुषत्वमद्रव्यत्वं चेति दोषद्वयं भवतोरुं तत्राद्यो दोष एव न भवतीत्याशयेन परिहरति । सत्यमिति । आशयं विवृणोति । प्रथमे क्षण इति । द्वितीयादिक्षणेष्विति । ननु द्वितीयक्षणे घटे रूपोत्पत्तावपि चक्षुषा ग्रहणं न स्यात् तत्र रूपस्यापि कारणत्वात् कारणं च पूर्ववृत्त्यपेक्षितमित्याक्षेपे द्वितीयादीत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा तृतीयादिक्षणो गृह्यत

(१) परमसूक्ष्मो यदि घटादिः—पा० २ । ३ पु० ।
(२) क्षणे तु—पा० २ । ३ पु० ।
(३) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति १ । २ पुस्तकयोः ।

यत् समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यं तदसमवायिकारणम् । यथा तन्तुसंयोगः पटस्यासमवायिकारणं तन्तुसंयोगस्य गुणस्य पटसमवायिकारणेषु तन्तुषु गुणिषु समवेतत्वेन समवायिकारणप्रत्यासन्नत्वादनन्यथासिद्धनियतपूर्वभावित्वेन पटं प्रति कारणत्वाच्च । एवं तन्तुरूपं पटरूपस्यासमवायिकारणम् । ननु पटरूपस्य पटः समवायिकारणं तेन तद्गतस्यैव कस्यचिद्धर्मस्य पटरूपं प्रत्यसमवायिकारणत्वमुचितं तस्यैव समवायिकारणप्रत्यासन्नत्वान्न तन्तुरूपस्य तस्य समवायिकारण-

---

इति समाधानं ज्ञेयम् । गुणाश्रयत्वं त्विति[१] । गुणाश्रयत्वयोग्यतावच्छेदकं त्वित्यर्थः । तत्र गुणप्रागभावसत्त्वेन तदत्यन्ताभावासत्त्वादित्यर्थः । असमवायिकारणं लक्षयति । यत् समवायीति । समवायिकारणप्रत्यासन्नं समवायिकारणसमवेतम् । अवधृतं निश्चितं सामर्थ्यं कारणत्वं यस्य तदवधृतसामर्थ्यम् । समवायिकारणप्रत्यासन्नमसमवायिकारणमित्युक्ते तन्तुरूपादावतिव्याप्तमत उक्तमवधृतेत्यादि । तावत्युक्ते तन्त्वादौ गतमत उक्तं

---

(१) अयं पाठः चतुर्षु मूलपुस्तकेषु न दृश्यते ।

प्रत्यासत्त्यभावात् । नैवम् । तत्समवायिकारणासमवायिकारणप्रत्यासन्नस्यापि परम्परया[१] समवायिकारणप्रत्यासन्नत्वात् । निमित्तकारणं तदुच्यते । यन्न समवायिकारणं नाप्यसमवायिकारणमथ च कारणं तन्निमित्तकारणम् । यथा वेमादिकं पटस्य निमित्तकारणम् । तदेतद्भावानामेव त्रिविधं कारणमभावस्य तु निमित्तमात्रं[२] तस्य क्वचिदप्यसमवायात् समवायस्य तु भावद्वयधर्मत्वात् । तदे-

समवायिकारणेत्यादि । तत्समवायिकारणासमवायिकारणेति । अयमर्थः । समवायिकारणेन सह प्रत्यासत्तिर्द्वेधा क्वचित् कार्यैकार्थसमवायलक्षणा यथा पटासमवायिकारणस्य तन्तुसंयोगस्य स्वकार्येण पटेन सहैकस्मिन् तन्तुरूपे ऽर्थे प्रत्यासत्तिः क्वचित्तु कारणैकार्थसमवायलक्षणा यथा पटगतं रूपं प्रत्यसमवायिकारणस्य तन्तुरूपस्य कारणेन पटेन सहैकस्मिन् तन्तुलक्षणे ऽर्थे प्रत्यासत्तिः । कार्यकारणभावलक्षणसम्बन्धनिरूपकसम्बन्ध्येकार्थसमवायित्वेन अनुगतत्वान्नाननुगमः । कार्यकारणभावनिरूपकौ तन्तुपटौ तन्मध्ये कार्येण पटेन सहैकार्थे तन्तुषु समवायवान् तन्तुसंयोगः । एवं कार्य-

(१) तन्तुरूपस्येत्यधिकं १ पु० ।
(२) निमित्तकारणमात्रम्–पा० २ पु० ।

तस्य त्रिविधस्य कारणस्य मध्ये यदेव कथमपि सातिशयं तदेव करणम् । तेन व्यवस्थितमेतल्लक्षणं प्रमाकरणं प्रमाणमिति । यत्त्वनधिगतार्थगन्तृ प्रमाणमिति लक्षणम् । तन्न । एकस्मिन्नेव घटे घटोऽयंघटोऽयमिति धारावाहि-

कारणभावनिरूपके पटतद्गतरूपे तन्मध्ये कारणेन पटेन एकार्थे तन्तुषु समवायवत्तन्तुरूपमित्यर्थः । नन्वात्मसुखे कार्यकारणभावनिरूपके तन्मध्ये कार्येण सुखेनैकार्थसमवायी धर्म इति तत्रासमवायिकारणत्वं स्यादिति चेद् यस्य निरुक्तैकार्थसमवायित्वेन रूपेण कारणता तस्यासमवायिकारणत्वं धर्मस्य तु धर्मत्वेनैव सुखकारणत्वमिति नातिव्याप्तिः । भाट्टोक्तं प्रमाणलक्षणं दूषयितुमुपन्यस्यति । यत्त्विति । अनधिगतार्थस्य गन्तृ बोधकमनधिगतार्थगन्तृ । ननु गन्तृशब्दस्य तृन्प्रत्ययान्तत्वे न लोकाव्ययनिष्ठाखलर्थतृनामिति(१) षष्ठीनिषेधात् तत्समासानुपपत्तिः तृजन्तत्वे तु कर्तरीति षष्ठीसमासस्यैव निषेध इति चेत् । न । न लोकेतिसूत्रे कृद्योगलक्षणायाः षष्ठ्या निषेधे कर्तरि चे(२)त्यत्र च कृद्योगलक्षणषष्ठीसमासस्य निषेधेऽप्यत्र शेषलक्षणायास्तस्याः समास उपपन्न इति । अगृहीतविषयकयथार्थज्ञानं प्रमा तत्करणं प्रमाणमिति निष्कृष्टोऽर्थः । तन्नेति यदुक्तं तदुपपादयति । एकस्मिन्निति ।

(१) पाणिनिसूत्रम् । अ· २ पा· ३ सू· ६९ ।

(२) पाणिनिसूत्रम् । अ· २ पा· २ सू· १६ ।

कज्ञानानां गृहीतग्राहिणामप्रामाण्यप्रसङ्गात् । न चान्यान्यक्षणविशिष्टविषयीकरणादनधिगतार्थगन्तृता। प्रत्यक्षेण सूक्ष्मकालभेदानाकलनात् कालभेदग्रहे हि क्रियादि[1]संयोगान्तानां चतु-

धारावाहिकज्ञानानामिति । धारारूपेण वहन्तीति धारावाहीनि धारावाहीन्येव धारावाहिकानि स्वार्थे कप्रत्ययः तानि च तानि ज्ञानानि तेषामित्यर्थः । अप्रामाण्येति । अप्रमात्वप्रसङ्गादित्यर्थः । तथा च तत्करणं प्रमाणं न स्यादिति भावः । क्षणलवादीनां विशेषणानां भेदात् तद्विशिष्टो घटोऽपि भिद्यत इति भविष्यत्यनधिगतार्थगन्तृत्वमित्याशङ्कामुपन्यस्य निराकरोति । न चेति । तत्र हेतुमाह । प्रत्यक्षेणेत्यादि । क्रियादिसंयोगान्तानामिति । क्रिया क्रियातो विभागो विभागात् पूर्वसंयोगनाश उत्तरसंयोगोत्पत्तिरितिन्यायेन प्रसिद्धकालभेदानां क्रियादिसंयोगान्तानां चतुर्णां शतपत्त्रपत्त्रशतं मया कण्टकेन युगपद्भिन्नमिति लोकसिद्धो योऽभिमानः स न स्यादित्यर्थः। ननु धारावाहिकस्थले द्वितीयक्षणे घटोऽयमिति यज् ज्ञानं तत् प्रथमक्षणे कुतो न स्यात् सामग्रीसत्त्वादिति चेत् अत्र पूर्वपूर्वज्ञानत्वेनोत्तरोत्तरज्ञानहेतुत्वमन्वयव्यतिरेकाभ्यां कल्प्यते तथा च नोत्तरज्ञानं पूर्वक्षण उत्पत्तुमर्हति

(१) क्रिया क्रियातो विभागो विभागात् पूर्वसंयोगनाशस्तदुत्तरसंयोगोत्पत्तिरिति क्रियादि—पा· २ पु· ।

र्णां यौगपद्याभिमानो न स्यात्। क्रिया क्रियातो विभागो विभागात् पूर्वसंयोगनाशस्ततश्चोत्तरसंयोगोत्पत्तिरिति। ननु प्रमायाः कारणानि बहूनि सन्ति प्रमातृप्रमेयादीनि तान्यपि किं करणानि उत नेति। उच्यते। सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्तेः इन्द्रियसंयोगादौ सत्यविलम्बेन प्रमोत्पत्तेरत इन्द्रियसंयोगादिरेव करणम्। प्रमायाः साधकत्वाविशेषे ऽप्यनेनैवोत्कर्षेणास्य प्रमात्रादिभ्योऽतिशयितत्वादतिशयितं साधकं साधकतमं तदेव करणमित्युक्तम्[1]। अत इन्द्रियसंयोगादिरेव प्रमाकरणत्वात् प्रमाणं न प्रमात्रादि। तानि च प्रमा-

कारणाभावादिति तत्त्वम्। अथात्ममनोयोगादेर्व्यापारस्यात्मादौ सत्त्वाद् व्यापारवत्त्वाविशेषे करणे कर्त्रादिवैलक्षण्यं दुर्ज्ञानमिति सन्दिहानः पृच्छति। नन्विति। उत्तरयति। उच्यत इति। इन्द्रियसंयोगादौ सतीति। इन्द्रियं च संयोगश्च तावादी यस्य स तादृशः। आदिशब्देन निर्विकल्पकज्ञानादि गृह्यते। तानि च प्रमाणानीति।

(१) तदेव प्रमायाः करणमित्युक्तं प्रागेव—पा॰ १ पु॰।

णानि चत्वारि । तथा च न्यायसूत्रम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति[१] ।

प्रत्यक्षमेकं चार्वाकाः काणादसुगतौ पुनः ।
अनुमानं च तच्चाथ सांख्याः शब्दं च ते अपि ॥
न्यायैकदेशिनोऽप्येवमुपमानं च केचन ।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥[२]

इत्यादिवचनान्मतान्तरे प्रमाणाल्पीयस्त्वबहुत्वेऽपि गौतममते चत्वार्येव प्रमाणानीत्यर्थः । उक्ते ऽर्थे सूत्रसंवादं दर्शयति । तथा चेत्यादि । सूत्रे विभागेनोद्देशस्य न्यूनाधिकसंख्याव्यवच्छेदपरत्वात् चत्वार्येवेति लभ्यत इत्याशयः । अक्षिअक्षि प्रतीति वीप्सायामव्ययीभावसमासे प्रतिपरसमनुभ्योऽक्ष्ण इति[३]टच्प्रत्यये प्रत्यक्षमिति सिद्धं भवति । न चैवं प्रत्यक्षो घटः प्रत्यक्षा कन्येत्यादिप्रयोगानुपपत्तिरिति वाच्यम् । अर्शआदिभ्योऽजित्य[४]जन्तत्वेन सामञ्जस्यादिति । अन्ये तु कुगतिप्रादय[५] इति-

(१) अ· १ आ· १ सू· ३ ।

(२) एताः कारिकाः तार्किकरक्षायां प्रमाणप्रकरणे वरदराजेनोक्ताः ।

(३) अ· ५ पा· ४ सू· १०७ अव्ययीभावे शरत्प्रभृतिभ्य इति· पाणिनिसूत्रस्यशरदादिगणसूत्रमिदम् ।

(४) पाणिनिसूत्रम् । अ· ५ पा· २ सू· १२७ ।

(५) पाणिनिसूत्रम् । अ· २ पा· २ सू· १८ ।

किं पुनः प्रत्यक्षम् । साक्षात्कारिप्रमाकरणं प्रत्यक्षम्। साक्षात्कारिणी च प्रमा सैवोच्यते येन्द्रियजा । सा च द्विधा सविकल्पकनिर्विकल्पकभेदात् । तस्याः करणं त्रिविधम् । कदाचिदिन्द्रियं कदाचिदिन्द्रियार्थसन्निकर्षः कदाचिज्ज्ञानम् । कदा पुनरिन्द्रियं करणम् । यदा निर्विकल्पकरूपा प्रमा फलम् । तथाह्यात्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन

---

सूत्रेण प्रति गतमक्षं प्रत्यक्षमिति तत्पुरुषे परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति(१) परवल्लिङ्गतायां प्राप्तायां द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु नेति(२) परवल्लिङ्गतायाः प्रतिषेधादभिधेयलिङ्गतोपपद्यते चक्षुरादौ च प्रत्यक्षशब्दस्य पङ्कजादिशब्दवद् वृत्तिरुपपन्नेत्याहुः ।

प्रमाणसामान्यलक्षणमुक्त्वा विशेषलक्षणमाह । साक्षात्कारीति । साक्षात्कारिणी चासौ प्रमा चेति कर्मधारये स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिष्विति(३) पुंवद्भावः । येन्द्रियजेति । इन्द्रियत्वेनेन्द्रियजन्येत्यर्थः । तेन मनस्त्वेन मनोजन्याया-

---

(१) पाणिनिसूत्रम् । अ· २ पा· ४ सू· २६ ।

(२) परवल्लिङ्गमितिपाणिनिसूत्रस्थं वार्तिकम् ।

(३) पाणिनिसूत्रम् । अ· ६ पा· ३ सू· ३४ ।

इन्द्रियाणां वस्तुप्राप्यप्रकाशकारित्व[1]नियमात्। ततोऽर्थसन्निकृष्टेनेन्द्रियेण निर्विकल्पकं नामजात्यादियोजनाहीनं वस्तुमात्रावगाहि किञ्चिदिदमिति ज्ञानं जन्यते। तस्य ज्ञानस्येन्द्रियं करणं छिदाया इव परशुः। इन्द्रियार्थसन्निकर्षोऽवान्तरव्यापारः छिदाकरणस्य परशोरिव दारुसंयोगः। निर्विकल्पकं ज्ञानं फलं परशोरिव च्छिदा। कदा पुनरिन्द्रियार्थसन्निकर्षः करणम्। यदा निर्विकल्पकानन्तरं[2] सविकल्पकं नामजात्यादियोजनात्मकं डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति विशेषणविशेष्यावगाहि ज्ञान-

---

मनुमित्यादौ नातिव्याप्तिरिति। नामजात्यादियोजनेति। नाम सञ्ज्ञा जातिर्घटत्वादिः आदिशब्देन गुणक्रियादेर्ग्रहणं तेषां योजना सम्बन्धस्तदनवगाहीत्यर्थः। इन्द्रियार्थसन्निकर्ष इति। तज्जन्यस्तज्जन्यजनको व्यापारः प्रकृते इन्द्रियजन्य इन्द्रियजन्यज्ञानजनकः फलकरणयोर्मध्ये वर्तमानत्वादवान्तरत्वम्। नामजात्यादियोजनात्मकमिति। नामजात्यादिसम्बन्धावगाहीत्यर्थः।

---

(१) प्राप्यकारित्व—पा॰ २ पु॰।

(२) निर्विकल्पकज्ञानानन्तरं—पा॰ २ पु॰।

मुत्पद्यते तदा इन्द्रियार्थसन्निकर्षः करणम् । निर्विकल्पकज्ञानमवान्तरव्यापारः । सविकल्पकं ज्ञानं फलम् । कदा पुनर्ज्ञानं करणम् । यदो-क्तसविकल्पकानन्तरं हानोपादानोपेक्षाबुद्धयो जायन्ते तदा निर्विकल्पकं ज्ञानं[1] करणम् । सवि-कल्पकज्ञानमवान्तरव्यापारः । हानादिबुद्धयः[2] फलम् । तज्जन्यस्तज्जन्यजनकोऽवान्तरव्यापारः । (यथा कुठारजन्यः कुठारदारुसंयोगः कुठारज-न्यच्छिदाजनकः ।)[3] अत्र कश्चिदाह । सविक-ल्पकादीनामपीन्द्रियमेव करणं यावन्ति त्वान्त-रालिकानि सन्निकर्षादीनि तानि सर्वाण्यवान्त-रव्यापार इति । इन्द्रियार्थयोस्तु यः सन्निकर्षः

---

यदोक्तसविकल्पकानन्तरं हानेति । दोषवति वस्तुनि या हेयत्वबुद्धिः सा हानबुद्धिः । गुणवति योपादेयत्व-बुद्धिः सोपादानबुद्धिः । उभयाभाववति योपेक्षणीय-ताबुद्धिः सोपेक्षाबुद्धिरित्यर्थः । करणभेदानभिधाय स-न्निकर्षभेदानाह । इन्द्रियार्थयोरित्यादि ।

---

(१) तदा ज्ञानं–पा॰ २ पु॰ ।

(२) बुद्धिरेव–पा॰ २ पु॰ ।

(३) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति १ । ३ पु॰ ।

साक्षात्कारिप्रमाहेतुः स षड्विध एव। तद्यथा। संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेष्यविशेषणभावश्चेति। तत्र यदा चक्षुषा घटविषयं ज्ञानं जन्यते तदा चक्षुरिन्द्रियं घटोऽर्थः अनयोः सन्निकर्षः संयोग एवायुतसिद्ध्यभावात्। एवं मनसान्तरेणेन्द्रियेण यदात्मविषयकं ज्ञानं जन्यते ऽहमिति तदा मन इन्द्रियमात्मार्थः अनयोः सन्निकर्षः संयोग एव। (कदा पुनः संयुक्तसमवायसन्निकर्षः।) [१]यदा चक्षुरादिना घटगतरूपादिकं गृह्यते घटे श्यामं रूपमस्तीति तदा चक्षुरिन्द्रियं घटरूपमर्थः अनयोः सन्निकर्षः संयुक्तसमवाय एव चक्षुःसंयुक्ते घटे रूपस्य समवायात्। एवं मनसात्मसमवेते सुखादौ गृह्यमाणे अयमेव सन्निकर्षः। घटगतपरिमाणादिग्रहे[२] चतुष्टयसन्निकर्षोऽप्यधिकं कारण-

घटतन्नीलनीलत्वशब्दशब्दत्वजातयः।
अभावसमवायौ च ग्राह्याः सम्बन्धषट्कतः॥

इति सङ्ग्रहकारिकार्थं हृदि निधाय सन्निकर्षसम्ब-

(१) ( ) एतन्मध्यस्थः पाठो नास्ति २। ३ पु०।
(२) परिमाणग्रहणे-पा० २ पु०।

स्थिते सत्यपि संयुक्तसमवाये तदभावे दूरे परिमाणाद्यग्रहणात् । चतुष्टयसन्निकर्षो यथा । इन्द्रियावयवैरर्थावयविनामिन्द्रियावयविनार्थावयवानामिन्द्रियावयवैरर्थावयवानामर्थावयविनामिन्द्रियावयविनां सन्निकर्ष इति । यदा पुनश्चक्षुषा घटरूपसमवेतं रूपत्वादिसामान्यं गृह्यते तदा चक्षुरिन्द्रियं रूपत्वादिसामान्यमर्थः अनयोः सन्निकर्षः संयुक्तसमवेतसमवाय एव । यतश्चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात् । कदा पुनः समवायः सन्निकर्षः । यदा श्रोत्रेन्द्रियेण शब्दो गृह्यते तदा श्रोत्रमिन्द्रियं शब्दोऽर्थः अनयोः सन्निकर्षः समवाय एव (कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं)[१] श्रोत्रस्याकाशात्मकत्वाच्छब्दस्य चाकाशगुणत्वाद् गुणगुणिनोश्च समवायात् । (कदा पुनः समवेतसमवायः)[२] । यदा पुनः शब्दसमवेतं शब्दत्वादिसामान्यं श्रोत्रेन्द्रियेण गृह्यते तदा श्रोत्रमिन्द्रियं शब्दत्वादिसामान्यमर्थः अनयोः सन्नि-

(१) ( ) एतन्मध्यस्थः पाठो नास्ति १ । ३ पु० ।

(२) ( ) एतन्मध्यस्थो नास्ति २ पु० ।

कर्षः समवेतसमवाय एव । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । कदा पुनर्विशेषणविशेष्यभाव इन्द्रियार्थसन्निकर्षो भवति । यदा चक्षुषा संयुक्ते[1] भूतले घटाभावो गृह्यते इह भूतले घटो नास्तीति तदा विशेषणविशेष्यभावः सम्बन्धः[2] । तदा चक्षुःसंयुक्तस्य भूतलस्य घटाद्यभावो विशेषणं भूतलं विशेष्यम् । यदा च मनःसंयुक्त आत्मनि सुखाद्यभावो गृह्यते ऽहं सुखरहित इति तदा मनःसंयुक्तस्यात्मनः सुखाद्यभावो विशेषणम् । यदा श्रोत्रसमवेते गकारे घत्वाभावो गृह्यते तदा श्रोत्रसमवेतस्य गकारस्य घत्वाभावो विशेषणम् । तदेवं सङ्क्षेपतः पञ्चविधसम्बन्धान्यतमसम्बन्धसम्बद्ध[3] विशेषणविशेष्यभावलक्षणेनेन्द्रियार्थसन्निकर्षेणाभाव इन्द्रि-

---

न्धिनः कथयति । तत्र यदेत्यादि । तदेवं सङ्क्षेपत इति । तत् तस्मात् समानन्यायत्वादेवमुक्तरीत्या सङ्क्षेपतः सामान्येन । पञ्चविधसम्बन्धसम्बद्धविशेषण-

---

(१) चक्षुःसंयुक्त-पा० २ । ३ पु० ।

(२) सन्निकर्षः-पा० ३ पु० ।

(३) पञ्चविधसम्बन्धसम्बन्धि-पा० २ पु० ।

येण गृह्यते। एवं समवायोऽपि चक्षुःसम्बद्धस्य तन्त्वोर्विशेषणभूतः पटसमवायो गृह्यते इह तन्तुषु पटसमवाय इति। तदेवं षोढा सन्निकर्षो वर्णितः। सङ्ग्रहश्च।

अक्षजा प्रमितिर्द्वैधा सविकल्पाविकल्पिका।
कारणं त्रिविधं तस्याः सन्निकर्षस्तु षड्विधः॥
घटतन्नीलनीलत्वशब्दशब्दत्वजातयः।
अभावसमवायौ च ग्राह्याः सम्बन्धषट्कतः(१)॥

विशेष्यभावलक्षणेन। संयोगादिपञ्चविधसम्बन्धान्यतमसम्बद्धविशेषणविशेष्यभावलक्षणेनेत्यर्थः। भूतले घटाभाव इत्यत्र चक्षुःसंयुक्तस्य भूतलस्य व्यावर्तकत्वाद्विशेषणत्वं घटाभावस्य व्यावर्त्यत्वाद्विशेष्यत्वम्। अघटं भूतलमित्यत्र तु घटाभावस्य व्यावर्तकत्वाद्विशेषणत्वं भूतलस्य च व्यावर्त्यत्वाद्विशेष्यत्वमिति ज्ञेयम्। एवं समवायोऽपीति। अनेन समवायोऽप्रत्यक्ष इत्यन्यमतं निराकृतं भवतीति ज्ञेयम्। इह तन्तुष्विति। अत्र पटसमवायो विशेष्यत्वेन गृह्यते चक्षुःसम्बद्धस्येति मूलोक्तं विशेषणत्वेन ग्रहणं तु पटसमवायवन्तस्तन्तव इत्यत्रेत्याकलनीयम्। एवं रूपत्वसमवायवद्रूपं रूपे रूपत्वसमवाय इत्याद्यप्यूहनीयम्।

(१) इयं कारिका नास्ति २। ३ पुस्तकयोः।

ननु निर्विकल्पकं परमार्थतः स्वलक्षणविषयं भवतु प्रत्यक्षं सविकल्पकं तु शब्दलिङ्गवदनुगताकारावगाहित्वात् सामान्यविषयं कथं प्रत्यक्षमर्थजस्यैव प्रत्यक्षत्वात् । अर्थस्य च परमार्थतः सत एव तज्जनकत्वात् । स्वलक्षणं तु परमार्थतः सत् न तु सामान्यं तस्य प्रमाणनिरस्तविधिभावस्यान्यव्यावृत्त्यात्मनस्तु-

अक्षजा प्रमितिर्द्वेधेत्यादिना सविकल्पकनिर्विकल्पकयोः प्रामाण्ये उपपादिते सविकल्पकप्रामाण्यमसहमानो बौद्धः शङ्कते । नन्विति । परमार्थतः अनारोपितरूपतः । स्वलक्षणविषयम् । स्वलक्षणं व्यक्तिर्विषयो यस्य तत् तथोक्तम् । भवतु प्रत्यक्षम् । भवतु साक्षात्कारिणी प्रमेत्यर्थः । सविकल्पकं तु शब्दलिङ्गवदिति । यथा शब्दानुमानाभ्यां ज्ञायमानोऽर्थः सामान्यात्मना ज्ञायते न तु सर्वतो व्यावृत्तस्तथा सविकल्पकमप्यनुगतमेवाकारमवगाहत इत्यर्थः । तस्य प्रमाणेति । अत्र सामान्यं व्यक्तिषु वर्तत इति वादिनं प्रत्युच्यते किं कात्स्न्येन वर्तत उतैकदेशेनेति । नाद्यः । अन्यस्यां व्यक्तौ तस्य प्रतीत्यनुपपत्तेः । न द्वितीयः । निरंशस्य तस्य देशकल्पनासम्भवादिति युक्तिः प्रमाणशब्देनोच्यते तेन निरस्तो निराकृतो विधिभावोऽस्तित्वं यस्यै-

च्छत्वात् । मैवम् । सामान्यस्यापि वस्तुभूतत्वात् । तदेवं व्याख्यातं प्रत्यक्षम् ।

---

त्ति समासः । अन्यव्यावृत्त्यात्मन इति । घटोयमित्यत्राघटव्यावृत्तोऽयमिति तेनार्थकरणात् सर्वत्रान्यापोहरूपं सामान्यं तन्मत इत्याशयः । तुच्छत्वात् शशविषाणवदत्यन्तासत्त्वात् । समाधत्ते । मैवमिति । सामान्यस्येति । अयं भावः । घटोऽयंघटोऽयमित्यनुगताकारप्रत्ययोऽनुगतकार्यत्वादनुगतं कारणं सामान्यरूपमाक्षिपति । ननु व्यक्तय एव तथास्त्विति चेत् । न । तासामननुगतत्वेनातथात्वात् । नन्वघटव्यावृत्त्यैवानुगतप्रत्ययोपपत्तौ किं सामान्येनेति चेत् । न । अभावरूपाया अन्यव्यावृत्तेः सामान्यापेक्षया गुरुत्वेन तदनुपपादकत्वात् । समवायरूपया वृत्त्या सामान्यं प्रत्येकपर्याप्तमिति न प्रागुक्ततद्वृत्तिविकल्पोऽपि । तथा च प्रयोगः । सामान्यं वस्तुभूतमबाधितत्वात् स्वलक्षणवदिति । गौतमोऽपि तदसूत्रयत् । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्ष[1]मित्यादि सङ्क्षेपः । इदं त्वत्रावधेयम् । जन्यप्रत्यक्षमात्रे सन्निकर्षो हेतुः द्रव्यप्रत्यक्षमात्रे तु संयोगः संयुक्तसमवेतप्रत्यक्षादौ[2] संयुक्तसमवायादिः । मणिकृन्मते त्वलौकिकोऽपि सन्निकर्षोऽस्तीति जन्यमलौकिकमपि प्रत्यक्षम् ।

---

(१) न्यायसूत्रम् । अ॰ १ आ॰ १ सू॰ ४ ।

(२) द्रव्यसमवेतप्रत्यक्षादाविति पाठः सम्भाव्यते ।

लिङ्गपरामर्शोऽनुमानम् । येन ह्यनुमीयते

तच्च सामान्यलक्षणयोगजधर्मज्ञानलक्षणप्रत्यासत्तिजन्यतया त्रिविधम् । तत्रायं घट इति प्रत्यक्षं भूतभाविवर्तमानयावद्घटविषयकमाद्यं तद्धि घटत्वेन ज्ञायमानेन प्रत्यासत्त्या जन्यते । यथा वा प्रमेयमिति प्रत्यक्षं यावत्प्रमेयविषयकम् । प्राञ्चस्तु न सामान्यं प्रत्यासत्तिः किं तु वर्तमानगतसन्निकर्षेणैवासन्निकृष्टातीतानागतादिभानं गौरवेण यावद्विषयकेन्द्रियसन्निकर्षस्याहेतुत्वात् । न चैवं पटादेरप्यसन्निकृष्टत्वाविशेषे घटोयमितिप्रत्यक्षविषयतापत्तिः प्रकारीभूतसामान्याश्रयत्वस्यैव नियामकत्वादित्याहुः । योगिनां यावत्पदार्थगोचरं प्रत्यक्षं द्वितीयं तद्धि योगजधर्मेण प्रत्यासत्त्या जन्यते । तृतीयं परमाणुमहं जानामीति परमाण्वंशे प्रत्यक्षं कविकाव्यादिमूलभूतसंसर्गज्ञानं च तद्धि ज्ञानलक्षणेन सन्निकर्षेण जन्यते । तच्च जन्यसविकल्पकमेव प्रत्यासत्तिः । ईश्वरज्ञाननिर्विकल्पकयोरप्रत्यासत्तित्वात् । इदं च मनस एवासत्तिरित्येके । बहिरिन्द्रियस्यापि तदासत्तिरित्यपरे । जन्यप्रमामात्रे विशेष्यसम्बद्धविशेषणज्ञानं गुणः । जन्यप्रत्यक्षप्रमामात्रे तु भ्रमविरोधिसन्निकर्षो गुण इति कश्चित् । अदृष्टविशेषस्तथेति रत्नकोषकृतः । स्थूलावयविप्रत्यक्षप्रमायां भूयोवयवेन्द्रियसन्निकर्ष इति ।

उपजीव्यं प्रत्यक्षं निरूप्य तदुपजीवकमनुमानं निरूपयति । लिङ्गपरामर्श इति । लीनमर्थं गमयतीति लिङ्गं तस्य परामर्शस्तृतीयं ज्ञानं वह्निव्याप्यधूमवानयमित्येवमाकारकम् । इदं च वार्त्तिककारमतम् । मणिकृन्मतं तु व्याप्तिज्ञानमनुमानमिति । यत्तु परामृश्यमानं लिङ्गम-

तदनुमानम् । लिङ्गपरामर्शेन चानुमीयतेऽतो लिङ्गपरामर्शोऽनुमानम् । तच्च धूमादिज्ञानमनुमितिं प्रति करणत्वात् । अग्न्यादिज्ञानमनुमितिः तत्करणं धूमादिज्ञानम् । किं पुनर्लिङ्गं कश्च तस्य परामर्शः । उच्यते । व्याप्तिबलेनार्थगमकं लिङ्गम् । यथा धूमोऽग्नेर्लिङ्गम् । तथाहि यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिस्तस्यां गृहीतायामेव व्याप्तौ धूमोऽग्निं गमय-

---

नुमानमित्युदयनाचार्यमतम् । तन्न । अतीतानागतस्थले लिङ्गाभावेनानुमित्यनुदयप्रसङ्गात् । ननु लिङ्गपरामर्शस्य चरमकारणत्वात् तस्य च स्वोत्तरभाविभावभूतकारणानपेक्षत्वरूपत्वाद् व्यापाराभावेन करणत्वाभावात् कथमनुमानत्वमिति चेत् । न । वार्त्तिककारमते यस्मिन् सति क्रिया भवत्येव तस्यैव करणत्वेन निर्व्यापारत्वस्यादोषत्वादिति । ननु कोऽसौ लिङ्गपरामर्श इत्यत आह । तच्चेति । सर्वनामान्युद्देश्यविधेययोरेकत्वमापादयन्ति पर्यायेण तत्तल्लिङ्गभाञ्जि भवन्तीतिवामनवचनाद्धूमादिज्ञानापेक्षया तदिति नपुंसकलिङ्गनिर्देशः । तदुक्तम् । शैत्यं हि यत् सा प्रकृतिर्जलस्येति । व्याप्तिलक्षणमाह । यत्रेत्यादिना । अत्र लक्षणं साहचर्येत्यादि । धूमाग्निपदं तूदाहरणार्थमिति ज्ञेयम् । सहचरत इति सहचरौ तयोर्भावः साहचर्यं तस्य नियमो नाम व्याप्तिरित्यक्षरार्थः । यद्यपि साहचर्यमात्रं न व्याप्तिः सोपाधावपि गतत्वात् । नापि

त्यतो व्याप्तिबलेनाग्न्यनुमापकत्वाद् धूमोऽग्ने-र्लिङ्गम् । तस्य तृतीयं ज्ञानं लिङ्गपरामर्शः । तथाहि प्रथमं तावन्महानसादौ भूयोभूयो धूमं पश्यन् वह्निं पश्यति तेन भूयोदर्शनेन धूमाग्न्योः स्वाभाविकं सम्बन्धमवधारयति यत्र धूमस्तत्राग्निरिति । यद्यपि यत्रयत्र मैत्रीतन-

नियतत्वेन विशेषितं सद् व्याप्तिघटितत्वेनात्माश्रयात् । तथाप्यनौपाधिकः सम्बन्धो व्याप्तिरिति दर्शयितुं नियमपदनिर्देश इति भावः । यत्तु ।

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्न न दर्शनात्[1] ॥

इति वचनात् तादात्म्यतदुत्पत्तिभ्यामेवाविनाभाव इति सौगतमतम् । तन्न । रसादिना रूपाद्यनुमानस्य सकलजनसिद्धत्वात् । न ह्यनयोः कार्यकारणभावो न वा तादात्म्यमिति । धूमलक्षणं कार्यं वह्निलक्षणं कारणमनुमापयति शिंशपात्वं च तादात्म्याद् वृक्षत्वमनुमापयतीति सौगताशय इत्यादि सङ्क्षेपः । ननु तृतीयज्ञानं परामर्श इत्युक्तं तन्न सङ्गच्छते इति व्याप्तिग्राहकाणां सहचारदर्शनानां बहुत्वादित्यत आह । प्रथममित्यादि ।

(१) इयं कारिका न्यायकन्दलीग्रन्थे ऽनुमाननिरूपणप्रकरणे श्रीधरेण तदुक्तमित्यादिना धृता । तत्र दर्शनान्न तु दर्शनादिति चतुर्थपादस्य पाठः । सर्वदर्शनसङ्ग्रहे बौद्धदर्शने ऽपीयं धृता । तत्र दर्शनान्तरदर्शनादिति पाठः । तार्किकरक्षाव्याख्याने न्यायसारसङ्ग्रहे वरदराजेनापि यथाहुरित्यादिना धृता ।

यत्वं तत्रतत्र श्यामत्वमपीति भूयोदर्शनं समानमवगम्यते तथापि मैत्रीतनयत्वश्यामत्वयोर्न स्वाभाविकः सम्बन्धः किं त्वौपाधिक एव शाकाद्यन्नपरिणामस्योपाधेर्विद्यमानत्वात्। तथाहि श्यामत्वे मैत्रीतनयत्वं न प्रयोजकं किं तु शाकाद्यन्नपरिणतिभेद एव प्रयोजकः प्रयोजकश्चोपाधिरित्युच्यते। न च धूमाग्न्योः सम्बन्धे कश्चिदुपाधिरस्ति। अस्ति चेत् योग्यो ऽयोग्यो वा। अयोग्यस्य शङ्कितुमशक्यत्वाद् योग्यस्य चानुपलभ्यमानत्वाद् यत्रोपाधिरस्ति

---

व्याप्तिग्रहमारभ्य तृतीयत्वमित्याशयः। किं त्वौपाधिक इति। उपाधेर्जात इत्यर्थः। श्यामत्वे मैत्रीतनयत्वमित्यादि। अयं भावः। कश्चित्तार्किको मैत्र्याः पूर्वतनान् सप्त पुत्राननुभूयाष्टमं गर्भस्थं पुत्रं पक्षीकृत्यैवमनुमानं रचयति विमतः पुत्रः श्यामो भवितुमर्हति मैत्रीतनयत्वात् सम्प्रतिपन्नमैत्रीतनयवदिति अत्रान्य आह श्यामत्वे मैत्रीतनयत्वं न प्रयोजकं किं तु शाकाद्याहारपरिणतिभेद एव। अयं च शङ्कितोपाधिः मैत्रीतनयत्वलक्षणसाधनाव्यापकत्वानिश्चयात्। आर्द्रेन्धनसंयोगादिस्तु निश्चित एवेति। यद्यपि नीलोत्पलादौ श्यामत्वसत्त्वे ऽपि शाकाद्याहारपरिणतिभेदो नास्तीत्यसमञ्जसं तथापि यत्र पुरुषस्य श्यामत्वं तत्रोक्त उपाधिरस्त्येवेति सर्वं

तत्रोपलभ्यते यथाग्नेर्धूमसम्बन्ध आर्द्रेन्धनसंयोगः हिंसात्वस्य चाधर्मसाधनत्वेन सह सम्ब-

समञ्जसम् । अस्य लक्षणं तु साधनाव्यापकत्वे सति साध्यसमव्यापकत्वम् । साध्यसमव्यापक उपाधिरित्युक्ते ऽनित्यः शब्दः कृतकत्वाद्धटवदित्यत्र सकर्तृकत्वमुपाधिः स्यादत उक्तं साधनाव्यापकेति । तावत्युक्ते तत्रैव प्रयोगे घटत्वमुपाधिः स्यादत उक्तं साध्यव्यापक इति । साधनाव्यापकत्वे सति साध्यव्यापक उपाधिरित्युक्ते तत्रैव श्रावणत्वमुपाधिः स्यादतः समपदग्रहणम् । सर्वत्र साध्यव्यापकत्वं दृष्टान्ते ग्राह्यम् । साधनाव्यापकत्वं च पक्ष इति विवेकः । स्फटिकगतत्वेन लौहित्यावभासे जपाकुसुमवत्साधनत्वाभिमतगतत्वेन स्वधर्मभूताया व्याप्तेः प्रतिभासस्तन्निमित्तत्वेनास्योपाधिव्यपदेश इति । दूषकता चोपाधेः स्वव्यभिचारेण साध्यव्यभिचारोन्नायकतया स्वव्यतिरेकेण सत्प्रतिपक्षतया वा । तथाहि इदं साधनं साध्यव्यभिचारि साध्यव्यापकोपाधिव्यभिचारित्वाद् यद् यद्व्यापकव्यभिचारि तत् तद्व्याप्यव्यभिचारि यथा पृथिवीत्वव्यापकद्रव्यत्वव्यभिचारि गुणत्वादि पृथिवीत्वमपि व्यभिचरतीति सामान्यतो विशेषतस्तु मित्रातनयत्वं श्यामत्वव्यभिचारि तद्व्यापकशाकाद्याहारपरिणतिभेदव्यभिचारित्वात् प्रमेयत्ववदिति शाकाद्यन्नपरिणतिभेदनरश्यामत्वयोर्वैद्यकशास्त्रात् कार्यकारणभावावगमात् कारणाभावे कार्यभूतश्यामत्वासम्भव इति विपक्षे बाधकस्तर्क इति द्रष्टव्यम् । हिंसात्वस्य चाधर्मसाधनत्वेनेति । अहिंसा परमो धर्मस्त्वधर्मः प्राणिनां बध इत्य-

न्धे निषिद्धत्वमुपाधिः मैत्रीतनयत्वस्य च श्यामत्वेन सह सम्बन्धे शाकाद्यन्नपरिणतिर्भेदः । न चेह धूमस्याग्निसाहचर्ये कश्चिदुपाधिरस्ति । यद्यभविष्यत् तदाऽद्रक्ष्यत् ततो दर्शनाभावान्नास्तीति तर्कसहकारिणाऽनुपलम्भसनाथेन प्रत्यक्षेणैवोपाध्यभावोऽवधार्यते । तथा च उपाध्यभावग्रहणजनितसंस्कारसहकृतेन भूयोदर्शनजनितसंस्कारसहकृतेन साहचर्यग्राहिणा प्रत्यक्षेणैव धूमाग्न्योर्व्याप्तिरवधार्यते । तेन

---

भिमानवानार्हतो ऽनुमानं रचयति । क्रत्वन्तर्वर्तिनी हिंसा अधर्मसाधनं हिंसात्वात् क्रतुबाह्यहिंसावदिति । अत्र हिंसात्वं नाधर्मसाधनत्वे प्रयोजकं किं तु निषिद्धत्वमुपाधिरित्यर्थः । योग्यानुपलब्धिविषयतया धूमस्य वह्निसम्बन्धे उपाधिर्नास्तीत्याह । न चेह धूमस्येति । अनुपलब्धौ योग्यता च तर्कितप्रतियोगिसत्त्वविरोधितारूपेति ज्ञेयम् । तर्कानुपलम्भाभ्यां सनाथेन प्रत्यक्षेणोपाध्यभावस्यावधारणे सति यत् फलं भवति तदाह । तथा चेति । व्यभिचारादर्शनं सहचारदर्शनं च व्याप्तिग्राहकम् । व्यभिचारादर्शनं च व्यभिचारज्ञानाभावः । व्यभिचारज्ञानं च निश्चयशङ्कासाधारणम् । उपाधिसंशयाहिता च व्यभिचारशङ्का उपाध्यभावावधारणे सति निवर्तत इत्याशयेन तदवधारणस्य व्याप्तिग्रहोपयोग उक्त इत्यर्थः । भूयोदर्शनजनितसं-

धूमाग्न्योः स्वाभाविक एव सम्बन्धः न त्वौपाधिकः । स्वाभाविकश्च सम्बन्धो व्याप्तिः(१) । तदनेन न्यायेन धूमाग्न्योर्व्याप्तौ गृह्यमाणायां महानसे यद्धूमज्ञानं तत् प्रथमम् । पर्वतादौ पक्षे यद्धूमज्ञानं तद् द्वितीयम् । ततः पूर्वगृहीतां धूमाग्न्योर्व्याप्तिं स्मृत्वा यत्र धूमस्तत्राग्निरिति(२) तत्रैव पर्वते पुनर्धूमं परामृशति अस्त्यत्र पर्वते ऽग्निना व्याप्तो धूम इति तदिदं धूमज्ञानं तृतीयम्। एतच्चावश्याभ्युपेतव्यमन्यथा यत्र धूमस्तत्राग्निरित्येव स्यादिह तु कथमग्निना भवितव्यं तस्मादिहापि धूमोऽस्तीतिज्ञानमन्वेषितव्यम् । अयमेव लिङ्गपरामर्शोऽनुमितिं प्रति करणत्वाच्चानुमानम्। तस्मादस्त्यत्र पर्वते

स्कारस्त्वनुकूलतर्कावनार इति ज्ञेयम्। पुनर्धूमं परामृशति अनुसन्धत्त इत्यर्थः। लिङ्गदर्शनव्याप्तिस्मृतिभ्यामेवानुमितिर्भवतीति कन्दलीकारादिमतं प्रतिहेतुमाह । एतच्चावश्याभ्युपेतव्यमिति। तस्मादस्त्यत्र पर्वत इति। तस्मात् तृतीयज्ञानात्। नन्वग्न्यनुमितेर्विषयोऽग्निः

(१) व्याप्तिरित्युच्यते-पा० २। ३ पु०।
(२) यत्र धूमस्तत्राग्निरिति-इति नास्ति २। ३ पुस्तकयोः।

ऽग्निरित्यनुमितिज्ञानमुत्पद्यते । ननु कथं प्रथमं महानसे यद्धूमज्ञानं तन्नाग्निमनुमापयति[१] । सत्यम् । व्याप्तेरगृहीतत्वाद् गृहीतायामेव व्याप्तावनुमित्युदयात् । अथ व्याप्तिनिश्चयोत्तरकालं महानस एवाग्निरनुमीयताम् । मैवम् । अग्नेर्दृष्टत्वेन सन्देहास्यानुदयात्[२] । सन्दिग्धश्चार्थोऽनुमीयते । यथोक्तं भाष्यकृता । नानुपलब्धे न निर्णीते ऽर्थे न्यायः प्रवर्तते किं तु सन्दिग्धे । अथ पर्वतगतमात्रस्य पुंसो यद्धूमज्ञानं तत् कथं नाग्निमनुमापयति । अस्ति चात्राग्निसन्देहः साधकबाधकप्रमाणाभावेन संशयस्य न्यायप्राप्तत्वात् । सत्यम् । अगृहीतव्याप्तेरिव गृहीतविस्मृतव्याप्तेरपि पुंसोऽनुमानानुदयेन व्याप्तिस्मृतेरप्यनुमितिहेतुत्वात् । धूमदर्शनाच्चो-

---

पर्वतस्तदुभयसंयोगश्च तत्र पर्वतस्तावच्चक्षुषैव गृहीतोऽग्नितत्संयोगौ च व्याप्तिग्राहकेणैव गृहीताविति नानुमेयं किञ्चिदिति चेत् । न । वह्निः पर्वतीयतयानुमितिविषयः पर्वतीयत्वं च न प्रकारः किं तु संसर्ग एवेति सर्वं समञ्जसम् ।

---

(१) तत्राग्न्यनुमापकम्—पा· २ । ३ पु· ।

(२) सन्देहाभावात्—पा· २ । ३ पु· ।

द्बुद्धसंस्कारो व्याप्तिं[१] स्मरति यो यो धूमवान् स सोऽग्निमान् यथा महानस इति । तेन धूमदर्शने जाते व्याप्तिस्मृतौ भूतायां यद्धूमज्ञानं तत् तृतीयं धूमवांश्चायमिति तदेवाग्निमनुमापयति नान्यत् तदेवानुमानं स एव लिङ्गपरामर्शः । तेन व्यवस्थितमेतल्लिङ्गपरामर्शोऽनुमानमिति । तच्चानुमानं द्विविधम् । स्वार्थं परार्थं चेति । स्वार्थं स्वप्रतिपत्तिहेतुः । तथाहि स्वयमेव महानसादौ विशिष्टेन प्रत्यक्षेण धूमाग्न्योर्व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वतवर्तिनीमविच्छिन्नमूलामभ्रंलिहां धूमलेखां पश्यन्[२] धूमदर्शनाच्चोद्बुद्धसंस्कारो व्याप्तिं स्मरति यत्र

---

धूमदर्शनाद्व्याप्तिं स्मरति। एकसम्बन्धिदर्शने ऽपरसम्बन्धिस्मरणमिति भावः । स्वप्रतिपत्तिहेतुरिति । वाक्याप्रयुक्तः परामर्शः स्वार्थानुमानमित्यर्थः । विशिष्टेन व्यभिचारादर्शनसहचारदर्शनसहकृतेन । उद्बुद्धसं-

---

(१) धूमदर्शनाद्व्याप्तिमिति टीकासम्मतः २ पुस्तके च पाठः ।
(२) पुनःपुनः पश्यन्—पा॰ १ पु॰ ।

धूमस्तत्राग्निरिति । ततोऽत्रापि धूमोऽस्तीति प्रतिपद्यते तस्मादत्र पर्वते ऽग्निरप्यस्तीति स्वयमेव प्रतिपद्यते तत् स्वार्थानुमानम् । यत्तु कश्चित् स्वयं धूमादग्निमनुमाय परं बोधयितुं पञ्चावयवमनुमानवाक्यं प्रयुङ्क्ते तत् परार्थानुमानम् । तद्यथा पर्वतोऽयमग्निमान् धूमवत्त्वाद् यो यो धूमवान् स सोऽग्निमान् यथा महानसः तथा चायं तस्मात्तथेति । अनेन वाक्येन प्रतिज्ञा-

स्कारः संस्कारस्योद्बोधः कार्योन्मुखत्वम् । स्वार्थानुमानं प्रदर्श्य क्रमप्राप्तं परार्थानुमानं प्रदर्शयति । यत्त्विति । पर्वतोऽयमग्निमान् धूमादिति । अत्र धूमस्य वह्न्यहेतुतया वाक्यार्थान्वयानुपपत्त्या साध्यहेतुपदयोर्ज्ञानलक्षणेति वदन्ति । प्रतिज्ञावाक्यस्य पर्वतो वह्निमत्तया ज्ञातव्य इत्यर्थकरणात् तत्र ज्ञातव्यत्वे लक्षणा हेतुपदे तु धूमज्ञानादित्यर्थः क्रियत इत्युभयत्र ज्ञानलक्षणेति तदाशयः । अत्र धूमादित्येव प्रयोक्तव्यं न तु धूमवत्त्वादिति । मतुपो व्यर्थत्वाद्धेतुमात्रस्य ह्याकाङ्क्षितत्वादनाकाङ्क्षिताभिधाने ऽप्राप्तकालत्वादिति । अन्ये तु धूमादित्यनेन न कारको हेतुरभिधीयते किं तु ज्ञापको वह्निमानिति साध्यनिर्देशानन्तरं कुत इति प्रमाणाकाङ्क्षायां धूमादिति प्रयोगात् पञ्चम्या अपि तत्र ज्ञापकत्वरूपहेतुत्वपरत्वं तथा च हेतुवाक्यार्थे ज्ञापके ज्ञाप्यस्य साध्यस्य विषयत्वेनैवान्वय इति न साध्यपदे लक्षणेत्याहुः । अनेन वाक्येन प्रतिपा-

दिमता[१] प्रतिपादितात् पञ्चरूपोपपन्नाल्लि-ङ्गात् परोऽप्यग्निं प्रतिपद्यते तेनैतत् परार्थमनु-मानम् । अत्र पर्वतस्याग्निमत्त्वं साध्यं धूमवत्त्वं हेतुः। स चान्वयव्यतिरेकी अन्वयेन व्यतिरेकेण च व्याप्तिमत्त्वात् । तथाहि यत्रयत्र धूमव-त्त्वं तत्राग्निमत्त्वं यथा महानस इत्यन्वय-व्याप्तिः। महानसे धूमाग्न्योरन्वयसद्भावात्[२]। एवं यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इतीयं व्यतिरेकव्याप्तिः। महाह्रदे धूमा-ग्न्योर्व्यतिरेकस्य सद्भावदर्शनात्[३]। व्यतिरेक-व्याप्तेस्त्वयं क्रमः। अन्वयव्याप्तौ यद् व्याप्यं तदभावोऽत्र व्यापको यच्च व्यापकं तदभावोऽत्र

दितात् पञ्चरूपोपपन्नादिति । पक्षधर्मत्वादिलक्ष-णपञ्चरूपयुक्तादित्यर्थः । अत्रैवं क्रमः । प्रतिज्ञादिपञ्चवा-क्यैरेकवाक्यतया महावाक्यार्थज्ञानं प्रथमं ततो धूमवि-शिष्टे वह्निवैशिष्ट्यमिति विशिष्टवैशिष्ट्यावगाहिमानसं ज्ञानं ततो वह्निव्याप्यधूमवानयमिति मानसलिङ्गपरा-मर्शस्ततोऽनुमितिरिति । ननु प्रथमज्ञानस्य न्यायजन्यस्य

(१) प्रतिज्ञादिमता—इति नास्ति २ । ३ पु· ।
(२) सद्भावदर्शनात्—पा· २ । ३ पु· ।
(३) व्यतिरेकस्याभावस्य दर्शनात्—पा· २ पु· । व्यतिरेकदर्श-नात्—पा· ३ पु· ।

व्याप्य इति[1] । तदुक्तम् ।

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥[2]
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥
व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् ।
एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः ॥

---

वादिवाक्यजन्यत्वेनाप्रामाण्यशङ्कास्कन्दिततया अपरोऽपि परामर्शोऽङ्गीक्रियतां किं मध्ये विशिष्टवैशिष्ट्यावगाहिज्ञानेन । न चाप्रामाण्यशङ्काकलङ्कितं प्रथमज्ञानं न द्वितीयलिङ्गपरामर्शजनकमिति वाच्यम् । विशिष्टवैशिष्ट्यावगाहिज्ञानजनकत्वस्याप्येवं सत्यनुपपत्तेः । अथ पदार्थोपस्थितिनिरूपतया तज्जनयतीति चेत् परामर्शजननेऽपि तुल्यमिति । अत्रोच्यते । यदा अयं घट इति ज्ञानं प्रमा न वेति सन्देहो जायते तदा अप्रामाण्यसंशयनिबन्धनसंशयसामग्रीसत्त्वेन घटो न वेति संशय एव भवति न निश्चयः संशयसामग्र्या बलवत्त्वात् । न हि संशयसामग्र्या निश्चयं कोऽप्यभ्युपगच्छति तथा च परामर्शे ऽप्रामाण्यशङ्कायां तद्विषये संशय एव

---

(१) अत्र व्याप्यं तु गमकं प्रोक्तं व्यापकं गम्यमिष्यत इत्यधिकः पाठः २ पुस्तके व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यत इति श्लोकवार्त्तिके ऽनुमानपरिच्छेदे ४ श्लोके पाठः ।

(२) श्लोकवार्त्तिके ऽनुमानपरिच्छेदे १२१ श्लोकः ।

तदेवं धूमवत्त्वे हेतावन्वयेन व्यतिरेकेण च व्याप्तिरस्ति । यत्तु वाक्ये केवलमन्वयव्याप्तेरेव प्रदर्शनम् तदेकेनापि चरितार्थत्वात् तत्राप्यन्वयस्यावक्रत्वात् प्रदर्शनम् । ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगात् । न तु व्यतिरेकव्याप्तेरभावात् तदेवं धूमवत्त्वं हेतुरन्वयव्यतिरेकी । एवमन्ये ऽप्यनित्यत्वादौ साध्ये कृतकत्वादयो हेतवोऽन्वयव्यतिरेकिणो द्रष्टव्याः । (यथा शब्दोऽनित्यः कृतकत्वाद् घटवत् यत्र कृतकत्वं तत्रानित्यत्वं यत्रानित्यत्वाभावस्तत्र कृतकत्वाभावः यथा गगने । )(१) कश्चिद्धेतुः केव-

स्यात् । न तु तत्समानविषयको निश्चय इत्यतो न्यायजन्यज्ञानरूपपदार्थोपस्थितौ सत्यां स्वयमेव तर्कयति । यदि धूमविशिष्टे वह्निवैशिष्ट्यं न स्यात् तदा अकारणककार्योत्पत्तिः स्यात् । यदि च हेतुमति साध्यबाधा स्यात् तदा प्रमाणसिद्धा व्याप्तिर्बाध्येतेत्यादि । एवं चैतादृशतर्करूपविशेषदर्शने संशयसामग्र्यभावान्निश्चयो युज्यते स एव तर्को विशिष्टवैशिष्ट्यावगाहित्वेन विवक्षित इति दिक् । पञ्चरूपोपपन्नमन्वयव्यतिरेकिणं हेतुं प्रदर्श्य चतूरूपोपपन्नं केवलव्यतिरेकिणं प्रदर्शयति कश्चिद्धेतुरिति । चार्वाकं प्रति देहातिरिक्तमात्मानं

(१) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति १ । २ पुस्तकयोः ।

लव्यतिरेकी । तद्यथा । सात्मकत्वे साध्ये प्राणादिमत्त्वं हेतुः । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वाद् यत् सात्मकं न भवति तत् प्राणादिमन्न भवति यथा घटो न चेदं जीवच्छरीरं तथा तस्मान्न तथेति[1] । अत्र हि जीवच्छरीरस्य सात्मकत्वं साध्यं प्राणादिमत्त्वं हेतुः । स च केवलव्यतिरेकी अन्वयव्याप्तेरभावात् । तथाहि यत् प्राणादिमत् तत् सात्मकं यथामुक इति दृष्टान्तो[2] नास्ति । जीवच्छरीरं

---

साधयितुं प्रयोगं रचयति । यथा जीवच्छरीरमिति । शरीरमात्रपक्षीकरणे मृतशरीरे प्राणादिमत्त्वादिति हेतौ भागासिद्धिः स्यादत उक्तं जीवदिति । प्राणादिमत्त्वादिति । अत्रादिपदेन प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति कणादसूत्रोक्ता[3] अपानादयो गृह्यन्ते । न चेदं जीवच्छरीरं तथेति । इदं जीवच्छरीरं प्राणादिमत्त्वाभाववन्न भवतीत्यर्थः । तस्मान्न तथेति । तस्मात् प्राणादिमत्त्वाभावाभावात् न तथा न सात्मकत्वाभावव-

---

(१) न च नेदं प्राणादिमत् तस्मात् सात्मकम्–पा॰ ४ पु॰ ।

(२) अन्वयदृष्टान्तः–पा॰ ४ पु॰ ।

(३) अ॰ ३ आ॰ २ सू॰ ४ ।

सर्वं पक्ष एव । लक्षणमपि केवलव्यतिरेकी हेतुः । यथा पृथिवीलक्षणं गन्धवत्त्वं विवादपदं पृथिवीति व्यवहर्तव्यं[1] गन्धवत्त्वाद् (यन्न पृथिवीति व्यवह्रियते[2] तन्न गन्धवद्)[3] यथा आपः । प्रमाणलक्षणं वा यथा प्रमाकरणत्वम् । तथाहि प्रत्यक्षादिकं प्रमाणमिति व्यवहर्तव्यं प्रमाकरणत्वाद् यत् प्रमाणमिति न व्यवह्रियते

दित्यर्थः । अन्वय्यनुमितिमात्रं व्यापकतावच्छेदकप्रकारकमित्यविवादं व्यतिरेक्यनुमानं तु साध्याभावाभावत्वप्रकारकमेव । अत एव नेदं निरात्मकमिति टीकायामाकारो दर्शित इत्येके । तन्न । साध्याभावाभावत्वस्य विशेषणस्य नियतोपस्थापकाभावात् । तस्मादनियमः । कदाचित् साध्याभावाभावत्वप्रकारकं कदाचित् साध्यतावच्छेदकप्रकारकं साध्यतावच्छेदकसाध्याभावाभावत्वयोरुपस्थितौ चानुमित्सासमानप्रकारकमेव तस्या अप्यभावे करम्बिताकारमेव । अनुमितिमात्रं व्यापकतावच्छेदकप्रकारकमेवेत्यपरे । विवादपदं पृथिवीति व्यवहर्तव्यमिति । पृथिवी भवति न भवति वेति विवादविषयीभूतं पृथिवीति व्यवहर्तव्यम् । इतरेभ्यो भिद्यत इति वा साध्यं

(१) विवादपदं पृथिवी–पा० २ पु० । विवादास्पदीभूता पृथिवी अबादिभ्यो भिद्यते–पा० ४ पु० ।

(२) यत्र पृथिवी–पा० २ पु० ।

(३) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति ४ पु० ।

तन्न प्रमाकरणं यथा प्रत्यक्षाभासादि न पुन-स्तथेदं तस्मान्न तथेति । न पुनरत्र यत् प्रमाकरणं तत् प्रमाणमिति व्यवहर्तव्यं यथानुक इति दृष्टान्तो[1]ऽस्ति प्रमाणमात्रस्य पक्षीकृतत्वादत्र च व्यवहारः साध्यो न तु प्रमाणत्वं तस्य प्रमाकरणत्वाद्धेतोरभेदेन साध्याभेददोषप्रसङ्गात् । तदेवं केवलव्यतिरेकिणो दर्शिताः । कश्चिदन्यो हेतुः केवलान्वयी । यथा शब्दो-[2]

निर्दोषत्वम् । व्यावृत्तिर्व्यवहारो वा लक्षणस्यार्थ इत्यभियुक्तवचनात् । तस्य प्रमाकरणत्वाद्धेतोरिति । तस्य प्रमाणत्वस्य साध्यस्येत्यर्थः । अयं भावः । यत् साधनमर्हति तत् साध्यं हेतुश्च सिद्ध एव साध्यं साधयितुं क्षमते तथा च सिद्धत्वसाध्यत्वे एकदा एकत्र विरुद्धे इत्येव साध्याभेददोष इति । केवलान्वयिनं निरूपयति । कश्चिदन्य इति । केवलान्वयी केवलान्वयिसाध्यक इत्यर्थः । केवलान्वयित्वं नाम वृत्तिमदत्यन्ताभावाप्रतियोगित्वम् । आकाशात्यन्ताभावे ऽव्याप्तिवारणार्थं वृत्तिमदित्यत्यन्ताभावस्य विशेषणम् । आकाशात्यन्ताभावस्य यद्यप्याकाशलक्षणेऽत्यन्ताभावो वर्तते तथापि स न वृत्तिमानिति भवति तेन तद्वारणम् ।

(१) अन्वयदृष्टान्तः—पा॰ ३ । ४ पु॰ ।

(२) विशेषो—पा॰ २ । ४ पु॰ ।

ऽभिधेयः प्रमेयत्वाद् यत् प्रमेयं तदभिधेयं यथा घटः तथा चायं तस्मात् तथेति। अत्र शब्दस्य[1] अभिधेयत्वं साध्यं प्रमेयत्वं हेतुः। स च केवलान्वय्येव यदभिधेयं न भवति तत् प्रमेयमपि न भवति यथामुक इति व्यतिरेकदृष्टान्ताभावात्। सर्वत्र हि प्रामाणिक एवार्थो दृष्टान्तः स च प्रमेयश्चाभिधेयश्चेति। एतेषां चान्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिहेतूनां त्रयाणां मध्ये यो हेतुरन्वयव्यतिरेकी स पञ्चरूपोपपन्न एव स्वसाध्यं साधयितुं क्षमते न त्वेकेनापि रूपेण हीनः। तानि पञ्चरूपाणि तु पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति। एतानि तु पञ्चरूपाणि धूमवत्त्वादावन्वयव्यतिरेकिणि हेतौ विद्यन्ते। तथाहि धूमवत्त्वं पक्षस्य पर्वतस्य धर्मः पर्वते तस्य विद्यमानत्वात्। एवं सपक्षे सत्त्वं सपक्षे महानसे सद् विद्यत इत्यर्थः। एवं विपक्षान्महाह्रदाद् व्यावृत्तिस्तत्र नास्तीत्यर्थः। एवमबाधितविषयं च

(१) विशेषस्य—पा॰ २। ४ पु॰।

धूमवत्त्वम् । तथाहि धूमवत्त्वस्य हेतोर्विषयः साध्यधर्मस्तच्चाग्निमत्त्वं तत् केनापि प्रमाणेन न बाधितं न खण्डितमित्यर्थः[1] । एवमसत्प्रतिपक्षत्वं असन् प्रतिपक्षो[2] यस्येत्यसत्प्रतिपक्षं धूमवत्त्वं हेतुः । तथाहि साध्यविपरीतसाधकं हेत्वन्तरं प्रतिपक्ष इत्युच्यते स च धूमवत्त्वे हेतौ नास्त्येवानुपलम्भात्[3] । तदेवं पञ्चरूपाणि धूमवत्त्वे हेतौ विद्यन्ते तेनैतद्धूमवत्त्वमग्निमत्त्वस्य गमकमग्निमत्त्वस्य साधकम् ।

---

तेनैतद्धूमवत्त्वमग्निमत्त्वस्य गमकमिति । गम्लृ गतावित्यस्माद्धातोर्निष्पन्नस्य गमकशब्दस्य प्रापकत्वार्थकत्वभ्रान्तिं निवारयितुमाह । अग्निमत्त्वस्य साधकमिति ।

> विशेषे ऽनुगमाभावात् सामान्ये सिद्धसाधनात् ।
> इत्यादिदोषदुष्टत्वादनुमानकथा कुतः[4] ॥

---

(१) केनापि प्रकारेण न बाधितमित्यर्थः—पा॰ ४ पु॰ ।

(२) एवमसन् प्रतिपक्षो -पा॰ २ । ३ । ४ पु॰ ।

(३) अनुपलभ्यमानत्वात्—पा॰ ३ पु॰ ।

(४) इयं कारिका न्यायमञ्जरीग्रन्थे २ आह्निके ऽनुमानप्रामाण्याक्षेपावसरे जयन्तभट्टेन अपि चेत्यादिना धृता । वाराणसीस्थमेडिकल्हाल्नामकयन्त्रालयमुद्रितन्यायमञ्जरीपुस्तके ११९ पृष्ठायाम् । तत्र तद्वतोऽनुपपन्नत्वादिति तृतीयपादस्य पाठः ।

अग्नेः पक्षधर्मत्वं[1] हेतोः पक्षधर्मताबलात् सिध्यति[2]। तथाहि अनुमानस्य द्वे अङ्गे[3] व्याप्तिः पक्षधर्मता च। तत्र व्याप्त्या साध्यसामान्यस्य सिद्धिः[4]। पक्षधर्मताबलात्तु साध्यस्य पक्षसम्बन्धित्वं विशेषः सिध्यति। पर्वतधर्मेण धूमवत्त्वेन वह्निरपि पर्वतसम्बद्ध एवानुमीयते। अन्यथा साध्यसामान्यस्य व्याप्तिग्रहादेव[5] सिद्धेः कृतमनुमानेन। यस्त्वन्योऽप्यन्वयव्यति-

---

इतिकारिकां प्रतिक्षेप्तुमाह। अग्नेः पक्षधर्मत्वमिति। विशेषे ऽनुगमाभावादित्यस्यार्थः। पर्वतनिष्ठेनाग्निना धूमस्य क्वचिदप्यन्वयादृष्टौ व्याप्तेर्ग्रहाभावादिति। व्याप्तौ सामान्यनिष्ठायां सत्यां धूमस्य हेतोः पर्वतनिष्ठत्वेन वह्निरपि पर्वतनिष्ठ एव सिध्यति तेन न कारिकोक्तो दोष इत्याशयः। यस्त्वन्योऽप्यन्वयव्यतिरेकीति। अनि-

---

(१) पक्षसम्बन्धस्तु–पा॰ ४ पु॰।

(२) विशेषः सिध्यति तथाहि अनुमानस्य द्वयं साध्यं सामान्यं विशेषश्चेतीत्यधिकः पाठः २ पु॰।

(३) द्वयं सामर्थ्यं–पा॰ ४ पु॰।

(४) उक्तं च व्याप्तिर्हि सामान्यबलप्रवृत्ता सामान्यमुपनयतीत्यधिकः पाठः ७ पु॰।

(५) अन्यथा सामान्यस्य व्याप्तिग्राहकादेव–पा॰ २। ४ पु॰।

रेकी हेतुः स सर्वः पञ्चरूपोपपन्न एव सन् हेतुः[१] । अन्यथा हेत्वाभासोऽहेतुरिति यावत् । केवलान्वयी चतूरूपोपपन्न एव स्वसाध्यं साधयति तस्य हि विपक्षाद्व्यावृत्तिर्नास्ति विपक्षाभावात् । केवलव्यतिरेकी च चतूरूपोपपन्न[२] एव तस्य हि सपक्षे सत्त्वं नास्ति सपक्षाभावात् । के पुनः पक्षसपक्षविपक्षाः । उच्यन्ते । सन्दिग्धसाध्यधर्मा धर्मी पक्षः । यथा धूमा-

त्यत्वादौ साध्ये कृतकत्वादिरित्यर्थः । अन्यथेति । अयमर्थः । पक्षधर्मत्वेन हीनश्चेदसिद्धो भवति । तदुक्तम् । व्याप्तस्य पक्षधर्मताप्रतीतिः सिद्धिः तदभावोऽसिद्धिरिति । तथा सपक्षे सत्त्वेन हीनश्चेत् पक्षविपक्षयोर्वर्तमानो विरुद्धो भवति । एवं विपक्षाद् व्यावृत्त्या हीनश्चेत् पक्षादित्रयवृत्तिरनैकान्तिको भवति । एवं बाधितविषयत्वेन कालात्ययापदिष्टो भवति सत्प्रतिपक्षत्वेन च प्रकरणसमो भवति । अत एव हेतुवदाभासमानो हेत्वाभासो भवति । उदाहरणानि त्वनुपदमेव मूले सुलभानीति न लिख्यन्ते । के पुनरिति । पुनःशब्दो वाक्यालङ्कारे । पक्षादयः किंस्वरूपा इति प्रश्नः । उत्तरयितुमाह । उच्यन्त इति । सन्दिग्धेति । साध्यो धर्मो यस्येति बहुव्रीहौ

(१) सद्धेतुः–पा॰ २ । ३ पु॰ ।

(२) चतूरूपयुक्तः–पा॰ २ । ३ । ४ पु॰ ।

नुमाने पर्वतः पक्षः । सपक्षस्तु निश्चितसाध्यधर्मा धर्मी । यथा महानसो धूमानुमाने[1] । विपक्षस्तु निश्चितसाध्याभाववान् धर्मी । यथा तत्रैव महाह्रद इति । तदेवमन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिणो दर्शि-

धर्मादनिच् केवलादितिसूत्रेण[2] धर्मशब्दादनिच् । साध्यधर्मा पक्ष इत्युक्ते सपक्षे ऽपि गतमतः सन्दिग्धेति । सन्दिग्धेत्यस्य साध्यधर्मेत्यनेन समं कर्मधारयसमासः । ननु निश्चिते ऽपि साध्ये यत्र सिषाधयिषयानुमानं तत्र सन्देहाभावादव्याप्तिरिति चेत् । न । अनुमित्साविरहविशिष्टसिद्ध्यभावः पक्षतेत्युक्तत्वात् तत्रापि पक्षतास्तीत्यत्रैव तात्पर्यात् । अत्र विशिष्टाभावस्त्रेधा यत्रानुमित्सा सिद्धिश्च वर्तेते तत्रानुमित्साविरहरूपविशेषणाभावायत्तो विशिष्टाभावो यत्रानुमित्सा सिद्धिश्च न वर्तेते तत्र विशेष्याभावायत्तो यत्रानुमित्सा वर्तते सिद्धश्च नास्ति तत्रोभयाभावायत्त इति । अत्र धर्मिनिवेशः पक्षादीनां प्रमाणसिद्धत्वद्योतनार्थः । अन्यथा सर्वत्र प्रमाणरहितवचोमात्रस्य सम्भवे ऽयं हेतुरयं हेत्वाभास इति विभागो न स्यादित्याशयः । निश्चितसाध्येति । अत्रापि पूर्ववद् बहुव्रीहौ धर्मपदादनिच् द्रष्टव्यः । पक्षे ऽतिव्याप्तिर्माभूदित्यत्र निश्चितपदम् । विपक्षस्तु निश्चितेति । साध्याभाववान् विपक्ष

(१) यथात्रैव महानसम्—पा॰ ४ पु॰ ।
(२) पाणिनिसूत्रम् । अ॰ ५ पा॰ ४ सू॰ १२४ ।

ताः[1] । अतोऽन्ये हेत्वाभासाः[2] । ते च[3] अ-

---

इत्युक्ते केनचित् पक्षे ऽपि साध्याभाव आरोप्यत इति तत्रापि विपक्षत्वं स्यादतो निश्चितपदम् । निश्चितव्याप्यवृत्तिसाध्याभाववान् विपक्ष इति विवक्षणीयम् । तेन वृक्षः संयोगी द्रव्यत्वादित्यत्र वृक्षे न विपक्षतेति । इदं त्ववधेयम् । अनुमितिमात्रे लिङ्गज्ञानं कारणं विशेषे त्वन्वयिमात्रे परामर्शः गृहीतव्याप्तेरपि वह्निव्याप्यधूमवानयमिति परामर्शे सत्येवानुमित्युत्पत्तेः । तथा व्यतिरेकिणि साध्याभावव्यापकाभावप्रतियोगिमत्त्वज्ञानम् । अनुमितिप्रमायां गुणस्तु व्याप्यवति व्याप्यज्ञानमिति केचित् । परामर्शप्रमा गुण इति सम्प्रदायः । न च कूटलिङ्गादनुमितिप्रमायां व्यभिचार इति वाच्यम् । तत्रापीश्वरीयपरामर्शप्रमायाः सत्त्वादिति । अतोऽन्ये हेत्वाभासा इति । अत उक्तलक्षणेभ्यस्त्रिभ्योऽन्ये ऽरविन्दत्वादित्यादयः । हेत्वाभासा अनुमितिकारणविघटकज्ञानविषया इत्यर्थः । अनुमितिप्रतिबन्धकतावच्छेदकप्रकारकयथार्थज्ञानविषया हेत्वाभासा इत्यन्ये । तत्र बाधप्रतिरोधयोः साक्षादनुमितिप्रतिबन्धकत्वमनैकान्तिकादीनां तु कारणविघटकतयेति विशेषः । ते चेति । ते

---

(१) व्यतिरेकेण त्रयोऽपि हेतवो दर्शिताः–पा॰ ४ पु॰ ।

(२) अतोऽन्ये हेतुलक्षणहीना हेतुवद्भासमाना हेत्वाभासाः–पा॰ ४ पु॰ । हेतुलक्षणरहिता हेतुवदाभासमाना हेत्वाभासाः–पा॰ ३ पु॰ ।

(३) ते चानेकविधाः–पा॰ २ पु॰ ।

सिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात् पञ्चैव । तत्र लिङ्गत्वेनानिश्चितो हेतु[१]रसिद्धस्तत्रासिद्धस्त्रिविध आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति । आश्रयासिद्धो यथा गगनारविन्दं सुरभ्यरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स च नास्त्येव । स्वरूपासिद्धो यथा अनित्यः शब्दश्चाक्षुषत्वाद् घटवत् । अत्र चाक्षुषत्वं हेतुः

चासिद्धादयः पञ्चैव । न तु भट्टानामिवासिद्धसव्यभिचारविरुद्धास्त्रय एव न वा बाह्यानामिवासिद्धमात्रमित्याशयः । तत्रासिद्धस्त्रिविध इति । व्याप्तस्य पक्षधर्मताप्रतीतिः सिद्धिस्तदभावोऽसिद्धिरित्यसिद्धत्वमुदयनेनोक्तम् । अत्र व्याप्त्यभावे व्याप्यत्वासिद्धिः पक्षाभाव आश्रयासिद्धिः तद्धर्मस्य हेतोरभावे स्वरूपासिद्धिरित्यर्थो भवतीत्याशयः । आश्रयासिद्ध इति । आश्रयेणासिद्ध इति तृतीयासमासः । असिद्ध आश्रयो यस्येति बहुव्रीहिर्वा । अस्मिन् पक्षे वाहिताग्न्यादिष्विति-सूत्रेण[२] निष्ठायाः परनिपात इति द्रष्टव्यम् । एवं स्व-

(१) अनिश्चितपक्षवृत्तिहेतुः—पा० ३ पु० । व्याप्तिपक्षधर्मताभ्यामप्रमितः—पा० ४ पु० ।

(२) पाणिनिसूत्रम् । अ० २ पा० २ सू० ३७ ।

स च शब्दे नास्त्येव तस्य श्रावणत्वात् । व्याप्यत्वासिद्धस्तु द्विविधः । एको व्याप्तिग्राहकप्रमाणाभावमात्रात्[1] । अपरस्तूपाधिसद्भावात् । तत्र प्रथमो यथा । शब्दः क्षणिकः सत्त्वाद् यत् सत् तत् क्षणिकं यथा जलधरपटलं तथा च शब्दादिरिति[2] । न च सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकं प्रमाणमस्ति[3] । सोपाधिकतया सत्त्वस्य व्याप्यत्वासिद्धावुच्यमानायां क्षणिकत्वमन्यप्रयुक्तमित्यभ्युपगतं स्यात् । द्वितीयो यथा क्रत्वन्तरवर्तिनी हिंसा अधर्मसाधनं[4] हिंसात्वात् क्रतुबा-

रूपासिद्धादावपि ज्ञेयम् । एको व्याप्तिग्राहकेति । यत् सत् तत् क्षणिकमिति सौगतमतावलम्बनेन प्रयोगे क्षणिकत्वं साध्यं तच्च क्षणमात्रावस्थायित्वरूपं तथा च तादृशस्य साध्यस्य सत्त्वस्य च हेतोः सहचाराभावेन व्याप्तिग्राहकं सहचारदर्शनं नास्तीत्यर्थः । अपरस्त्विति । अव्यभिचाराभावादित्याशयः । यत् सत् तदिति । सौगतमतावलम्बनेनात्रावयवद्वयोपन्यासः । तदुक्तम् ।

(१) प्रमाणाभावात्—पा· २ । ३ । ४ पु· ।

(२) संश्च शब्दादिः—पा· ३ पु· ।

(३) सत्त्वहेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणं निर्धारितम्—पा· ३ पु· ।

(४) अधर्म्या—पा· ४ पु· ।

ह्यहिंसावत्। अत्र ह्यधर्मसाधनत्वे हिंसात्वं न प्रयोजकं किं तु निषिद्धत्वमेव। प्रयोजकमुपाधिरिति यावत्। तथाहि साध्यव्यापकत्वे सति साधनाव्यापक उपाधिरित्युपाधिलक्षणम्। तच्चास्ति निषिद्धत्वे निषिद्धत्वं हि साध्यस्याधर्मसाधनत्वस्य व्यापकं यतो यत्रयत्राधर्मसाधनत्वं तत्रतत्रावश्यं निषिद्धत्वमपीति। एवं साधनं हिंसात्वं न व्याप्नोति निषिद्धत्वम्। न हि यत्रयत्र हिंसात्वं तत्रतत्रावश्यं निषिद्धत्वं यज्ञीयपशुहिंसायां निषिद्धत्वा(१)भावात्। (तदेवं निषिद्धत्वस्योपाधेः सद्भावात्)(२) अन्यप्रयुक्तव्याप्त्युप-

---

सौगतास्तु सोपनीतिमुदाहृतिमिति। उपाधिलक्षणमाह। साध्यव्यापकत्वे सतीति। साध्यसमव्याप्तत्वे सतीत्यर्थः। तदुक्तमाचार्यैः। समव्याप्त एवोपाधिरिति। स च त्रिविधः शुद्धसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति। तत्र धूमवान् वह्नेरित्यत्रार्द्रेन्धनवत्त्वमार्द्रेन्धनप्रभववह्निमत्त्वं वा प्रथमः। वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वाव-

---

(१) सत्यपि हिंसात्वे निषिद्धत्वा—पा· ३ पु·।

(२) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति १। २ पु·।

जीवि हिंसात्वं व्याप्यत्वासिद्धमेव । साध्यविप-र्ययव्याप्तो हेतुर्विरुद्धः । स यथा शब्दो नित्यः कृतकत्वादात्मवत्[1] अत्र कृतकत्वं हि साध्य-नित्यत्वविपरीतानित्यत्वेन व्याप्तं यत् कृतकं तदनित्यमेव न नित्यमित्यतो विरुद्धं कृतकत्व-मिति । सव्यभिचारोऽनैकान्तिकः । स द्विवि-धः । साधारणानैकान्तिकोऽसाधारणानैकान्तिक-श्चेति । तत्र पक्षसपक्षविपक्षवृत्तिः[2] साधारणः । स यथा शब्दो नित्यः प्रमेयत्वाद् व्योमवत् । अत्र हि प्रमेयत्वं हेतुस्तच्च नित्यानित्यवृत्ति ।

---

च्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वं द्वितीयः । आत्मा प्रत्यक्षो जन्यद्रव्यत्वादित्यत्र प्रत्यक्षपरिमाणवत्त्वं तृतीयः । विरुद्धं लक्षयति । **साध्यविपर्ययेति** । अनैकान्तिकं लक्ष-यति । **सव्यभिचार** इति । हेतोः साध्याभाववद्वृत्तित्वं व्यभिचारस्तेन सह वर्तमानः सव्यभिचारः । **अनैकान्तिक** इति । एकेन साध्यस्वरूपेण अन्तः सहचारनिश्चयो न वि-द्यते यस्यासावनैकान्तिकः । अन् गतावित्यस्माद्धातोर्नि-ष्पन्नोऽन्तशब्दो ये गत्यर्था इतिन्यायेनात्र निश्चयं वक्ती-त्यर्थः । साधारणं लक्षयति । **पक्षसपक्षेति** । स्वानुचित-

---

(१) व्योमवत्–पा॰ ३ पु॰ ।

(२) सपक्षविपक्षवृत्तिः–पा॰ ४ पु॰ । पक्षत्रयवृत्तिः–पा॰ २ पु॰ ।

सपक्षाद् विपक्षाद् व्यावृत्तो यः पक्ष एव वर्तते सोऽसाधारणानैकान्तिकः । स यथा भूर्नित्या गन्धवत्त्वात् । गन्धवत्त्वं हि सपक्षान्नित्याद्विपक्षाच्चानित्याद्व्यावृत्तं भूमात्रवृत्ति । प्रकरणसमस्तु स एव यस्य हेतोः साध्यविपरीतसाधकं हेत्वन्तरं विद्यते । स यथा शब्दोऽनित्यो नित्यधर्मरहितत्वात्[1] शब्दो नित्योऽनित्यधर्मरहितत्वादिति । अयमेव हि सत्प्रतिपक्ष इति चोच्यते ।

---

स्थले विपक्षे ऽपि वर्तमानत्वात् प्रमेयत्वादितिहेतोः सव्यभिचारतेत्यर्थः । लक्षणोदाहरणाभ्यामसाधारणं निरूपयति । सपक्षाद् विपक्षादित्यादि । अत्राप्यनुचितस्थले वृत्तिरिवोचितस्थले सपक्षे ऽवृत्तेर्गन्धवत्त्वादित्यस्य हेतोः सव्यभिचारतेत्यर्थः । तदुक्तम् । सति सपक्षे सपक्षव्यावृत्तो हेतुरसाधारण इति । अत्र सपक्षो नित्यो गगनादिः । नित्यत्वे साध्ये नित्यानां सपक्षतेत्याद्यभियुक्तवचनादिति । सत्प्रतिपक्षापरपर्यायं प्रकरणसमं लक्षयति । प्रकरणसमस्तु स एव यस्य हेतोरिति । नित्यधर्मरहितत्वादिति । नित्यत्वस्य ज्ञापको यो धर्मोऽकारणकत्वादिस्तद्रहितत्वादित्यर्थः । अनित्यधर्मेति । अनित्यत्वस्य ज्ञापको यो धर्मो ध्वंसप्रतियोगित्वादिस्तद्रहित-

---

(१) नित्यधर्मानुपलब्धेरिति—पा० २ पु० ।

पक्षे प्रमाणान्तरावधृतसाध्याभावो हेतुर्बाधितविषयः कालात्ययापदिष्ट इति चोच्यते। यथाग्निरनुष्णः कृतकत्वाज्जलवत् । अत्र हि कृतकत्वस्य हेतोः साध्यमनुष्णत्वं तदभावः प्रत्य-

त्वात् तदपि तद्वत्तयानुपलभ्यमानत्वादित्यर्थः । समानबलोपस्थितिप्रतिरुद्धकार्यलिङ्गत्वं सत्प्रतिपक्षत्वमिति कश्चित् । अत्र सत्प्रतिपक्षे विरोधिसामग्रीद्वयेनानुमितिर्नोत्पद्यते। रत्नकोषकृन्मते तु विरुद्धानुमितिद्वयसामग्रीभ्यां संशयरूपा विरुद्धोभयगोचरानुमितिरेवोत्पद्यत इति।कालात्ययापदिष्टस्य लक्षणमाह। **पक्षे प्रमाणान्तरे**त्यादि । प्रमाणान्तरेणावधृतः साध्याभावो यस्येति समासः। **कालात्ययापदिष्टः** कालस्यात्यये ऽपगमे ऽपदिष्टो निर्दिष्ट इत्यर्थः। उदाहरणमाह । **यथाग्निरनुष्ण** इत्यादि । अत्र कृतकत्वानुष्णत्वयोर्व्याप्तिग्रहणसमय एव प्रत्यक्षेणानुष्णत्वप्रतियोगितयोष्णत्वं क्वचिदवधारणीयमुष्णत्वरूपप्रतियोगिनिरूपणं विना तदभावनिरूपणासम्भवात् ततो बलवता व्याप्तिग्राहकेणैव प्रत्यक्षेणाग्नावुष्णत्वमवधारितम् । न चोष्णत्वस्याग्नेरन्यत्रावधारणं सम्भवति। तथा चोष्णत्वग्राहिणोपजीव्यत्वेन बलीयसा त्वाचप्रत्यक्षेण बाधितमिदमनुमानमिति भावः। अत्र पक्षे पक्षीयः पक्षातिरिक्तवृत्तिश्च वन्हिर्नास्ति वह्नौ पक्षवृत्तित्वं नास्तीत्यादिबाधानन्तरमनुमितिप्रतिबन्धदर्शनात् तद्धर्मिणि तदभावज्ञानं तत्र तज्ज्ञानविरोधि लाघवात् । न तु तद्धर्मावच्छेदेन तदवच्छिन्नाभावज्ञानं तदवच्छेदेन

द्गौवावधारितः । स्पार्शनप्रत्यक्षेणैवौष्ण्यात्वोपलम्भात् । इति व्याख्यातमनुमानम् ।

अतिदेशवाक्यार्थस्मरणसहकृतं गोसादृश्यविशिष्टपिण्डज्ञानमुपमानम्[1] । यथा गवय-

---

तदवच्छिन्नज्ञानविरोधि गौरवात् । न च प्रमेयत्वेनाभावज्ञाने भावज्ञानानुपपत्तिः । प्रमेयवदभिधेयमितिज्ञानेन सर्वप्रकारेण प्रतिबन्धापेक्षया केवलान्वयिधर्मपुरस्कारेण यज् ज्ञानं तद्भिन्नज्ञानत्वेन प्रतिबन्धकताया उभयसमाधेयत्वादिति वदन्ति । व्याख्यातमनुमानमिति । त्रिविधमपीति शेषः । तथा च सूत्रम् । अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टं चेति[2] ।

उद्देशक्रमेणोपमानं निरूपयति । अतिदेशेति । अतिदिश्यते प्रतिपाद्यते साधर्म्यादिरनेनेत्यतिदेशः । स च तद्वाक्यं चेति कर्मधारयसमासः । ननु विलिङ्गयोः पुन्नपुंसकयोः कथं कर्मधारय इति शङ्कमानं देवानां प्रियं प्रत्युच्यते । तत्प्रतिपाद्यस्याभेदस्य सत्त्वात् पञ्चावयववाक्यमित्यादिप्रयोगदर्शनाच्च कर्मधारय उपपद्यत एवेति । यथा गौस्तथा गवय इत्येवमाकारकस्यातिदेशवाक्यस्य योऽर्थस्तस्य यत् स्मरणं तेन सहकृतं यद् गोसादृश्यविशिष्टपिण्डज्ञानं तदुपमानमित्यक्षरार्थः । अत्रार्थे सूत्रम् । प्रसि-

---

(१) इदमेव लक्षणम् । यदाह । प्रसिद्धसाधर्म्यादप्रसिद्धार्थस्मरणसहकृतं गोसदृशपिण्डज्ञानमुपमानमित्यधिकः पाठः ४ पु० ।

(२) न्यायसूत्रम् । अ० १ आ० १ सू० ५ ।

मजानन्नपि नागरिको यथा गौस्तथा गवय इति-वाक्यं कुतश्चिदारण्यकपुरुषाच्छ्रुत्वा वनं गतो वाक्यार्थं स्मरन् यदा गोसादृश्यविशिष्टं पिण्डं पश्यति तदा तद्वाक्यार्थस्मरणसहकृतं गोसादृश्यविशिष्टपिण्डज्ञानमुपमानमुपमितिकरणत्वात् । गोसादृश्यविशिष्टपिण्डज्ञानानन्तरमयमसौ गवयशब्दवाच्यः पिण्ड इति सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतिरुपमितिः । सैव फलम् । (इदं तु प्रत्यक्षानुमानासाध्यप्रमासाधकत्वात् प्रमाणा-

न्तसाधर्म्यात् साध्यसाधनमुपमानमिति[१] । विविच्य निरूपयति । यथेत्यादि । गोसादृश्यविशिष्टपिण्डज्ञानानन्तरमयमित्यादि । इयं च साधर्म्यज्ञानजन्यतया साधर्म्योपमितिः । वैधर्म्यज्ञानजन्या वैधर्म्योपमितिरप्यपरा ज्ञेया । तथाहि कीदृगुष्ट्र इतिप्रश्नोत्तरं धिगुष्ट्रमतिदीर्घग्रीवं प्रलम्बचञ्चलोष्ठं कठोरतरकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति श्रुतवत उष्ट्रपिण्डदर्शनानन्तरमयमुष्ट्रपदवाच्यः पिण्ड इत्याकारिका उष्ट्रत्वमुष्ट्रपदप्रवृत्तिनिमित्तमित्याकारिका वा वैधर्म्योपमितिः । अर्थादुपमानमपि द्विविधं साधर्म्योपमानं वैधर्म्योपमानं चेति । सैव फलमिति । तदुक्तम् ।

(१) न्यायसूत्रम् । अ० १ आ० १ सू० ६ ।

**न्तरमुपमानमस्ति)[१]। इति व्याख्यातमुपमानम्।**

**आप्तवाक्यं शब्दः। आप्तस्तु यथाभूत-**

सम्बन्धस्य परिच्छेदः सञ्ज्ञायाः सञ्ज्ञिना सह।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः॥ इति[२]।
अन्यैरप्युक्तम्।
शक्तिग्रहं व्याकरणोपमान-
कोषाप्तवाक्यव्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः[३]॥

इत्यादि दिक्। इदं त्ववधेयम्। उपमितिमात्रे धर्मज्ञानं कारणम्। साधर्म्योपमितौ साधर्म्यज्ञानं वैधर्म्योपमितौ वैधर्म्यज्ञानम्। उपमितिप्रमायां साधर्म्यप्रमा गुण इति।

क्रमप्राप्तं शब्दं लक्षयति। **आप्तवाक्यमिति**। वाक्यं शब्द इत्युक्ते भ्रान्तविप्रलम्भकवाक्यस्यापि शब्दता स्यादतो विशिनष्टि आप्तेति। आप्तशब्दार्थमाह। **आप्तस्त्विति**। अत्र तुशब्दो भ्रान्तविप्रलम्भकयोराप्तत्वनिवृत्त्यर्थः। यथाभूतार्थोपदेष्टा आप्त इत्युक्तम्। तत्रार्थे यथाभूतत्वं नामाबाधितत्वं ततश्च भ्रान्तस्य यथार्थदर्शित्वाभावेन तदुक्तवाक्यार्थस्य बाधितत्वेनाबाधि-

(१) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति २। ३ पु०।

(२) न्यायकुसुमाञ्जलौ ३ स्तबके १० कारिका।

(३) इयं कारिका कारिकावलीटीकायां सिद्धान्तमुक्तावल्यामपि शब्दनिरूपणावसरे विश्वनाथेन धृता।

स्यार्थस्योपदेष्टा पुरुषः । वाक्यं त्वाकाङ्क्षा-

तत्त्वं नास्ति तथा यथार्थदर्शिनोऽपि विप्रलम्भकस्य यथार्थवाचित्वाभावेन तदुक्तवाक्यार्थस्यापि बाधितत्वादबाधितत्वं नास्तीति भ्रान्तविप्रलम्भकौ नाप्ताविति न तद्वाक्यस्य शब्दप्रमाणतेत्याशयः । तथा च सूत्रम् । आप्तोपदेशः शब्द इति(१) । वाक्यलक्षणमाह । वाक्यं त्विति । अत्राकाङ्क्षया इच्छात्मकत्वेन चेतनधर्मत्वादित्यग्रेतनग्रन्थानुरोधेन समभिव्याहृतपदस्मारितपदार्थविषयिणी प्रतिपत्तुर्जिज्ञासैवाकाङ्क्षा तथाहि पुस्तकमानयेतिवाक्ये पुस्तकमितिपदश्रवणानन्तरमानय परय नयेत्येवमाकारिकाकाङ्क्षा भवति आनयेतिश्रवणानन्तरं पुस्तकमन्यद्वेत्येवमाकारिका । एवं वाक्यान्तरे ऽपि ज्ञेयम् । अन्ये तु अजिज्ञासोरपि शाब्दबोधोदयान्नेयमाकाङ्क्षा किं तु यस्य पदस्य यत्पदव्यतिरेकप्रयुक्तमर्थान्वयाननुभावकत्वं तस्य तदननुभावकत्वं(२) तेन सह तदेवाकाङ्क्षा । अत्र पदपदं तदुपस्थितिपरं तेन मौनिश्लोके ऽव्याप्तिः पदस्य स्वत एवाननुभावकत्वादसम्भवश्चेति दूषणं न लगति । नापि जनितान्वयबोधे ऽतिव्याप्तिस्तदानीमन्वयाननुभावकत्वाभावात् । पुनरनुसन्धीयमानश्लोकादौ तु पदोपस्थित्यन्तरस्याजनितान्वयबोधत्वेनान्वयाननुभावकत्वस्य सत्त्वात् पुनरर्थप्रत्यय उपपत्स्यत एव । घटः कर्मत्वमानयनं कृतिरित्यादेश्च नेतरपदव्यतिरेकप्र-

(१) न्यायसूत्रम् । अ॰ १ आ॰ १ सू॰ ७ ।
(२) तदननुभावकत्वमित्यधिकमिति सम्भाव्यते ।

नि[1] पदानि तान्येव वाक्यम् । यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि । यथा च नदीतीरे पञ्च फलानि सन्तीति। यथा च तान्येव गामानयेत्यादिपदान्यविलम्बितोच्चरितानि। नन्वत्रापि न पदानि साकाङ्क्षाणि किं त्वर्थाः फलादीनामाधेयानां तीराद्याधाराकाङ्क्षितत्वात् । न च विचार्यमाणे ऽर्था अपि साकाङ्क्षाः आकाङ्क्षाया इच्छात्मकत्वेन चेतनधर्मत्वात् । सत्यम् । अर्थास्तावत् स्वपदश्रोतर्यन्योन्यविषयाकाङ्क्षा-

ज्योतिष्टोमेनेति । अनेन वाक्येन स्वर्गं प्रति यागः साधनमितिप्रतीतिः क्रियते ऽतः परस्पराकाङ्क्षावदन्वययोग्यार्थप्रतिपादकपदसमूहत्वाद्वाक्यमित्यर्थः । लौकिकमुदाहरति । यथा चेति । फलानि सन्तीत्युक्ते कियन्तीत्याकाङ्क्षोत्पद्यते ततः पञ्चेति सम्बध्यते । ततः कुत्रेत्याकाङ्क्षायां तीर इति। तदपि कस्या इत्याकाङ्क्षायां नद्या इति । अत्रापि परस्पराकाङ्क्षावदन्वययोग्यार्थप्रतिपादकपदसमूहत्वाद्वाक्यत्वमित्यर्थः । अर्थास्तावदिति। आकाङ्क्षाधिकरणत्वेन साकाङ्क्षत्वाभावे ऽप्याकाङ्क्षाजनकत्वेन साकाङ्क्षत्वं सम्भवतीति भावः । नन्वेवं पदार्थानां साकाङ्क्षत्वे ऽपि पदानां कथं साका-

(१) आकाङ्क्षायोग्यतासन्निधिमन्ति—पा० २ । ३ पु० ।

जनकत्वेन साकाङ्क्षा इत्युच्यन्ते तद्द्वारेण तत्प्रतिपादकानि पदान्यपि साकाङ्क्षाणीत्युपचर्यन्ते । यद्वा पदान्येवार्थान् प्रतिपाद्यार्थान्तरविषयाकाङ्क्षाजनकानीत्युपचारात् साकाङ्क्षाणि । एवमर्थाः साकाङ्क्षाः परस्परान्वययोग्यास्तद्द्वारेण पदान्यपि परस्परान्वययोग्यानीत्युच्यन्ते । सन्निहितत्वं तु पदानामेकेनैव पुंसा अविलम्बेनोच्चरितत्वम् । तच्च साक्षादेव पदेषु

---

ङ्क्षत्वमित्यत आह । तद्द्वारेणेति । साकाङ्क्षार्थप्रतिपादकत्वेन पदानां लाक्षणिकं साकाङ्क्षत्वमित्यर्थः । यद्वेति । अर्थानां मुख्यं साकाङ्क्षत्वं पदानां तु लक्षणयेति प्रागुक्तमत्र चाकाङ्क्षाधारत्वेनात्मन्येव मुख्यमाकाङ्क्षाजनकत्वेन तु अर्थेष्विव पदेष्वपि लाक्षणिकमित्युच्यत इत्याशयः । अत एवाकाङ्क्षाधारत्वेन विनार्थानां मुख्यं साकाङ्क्षत्वमनुचितमिति पूर्वत्रापरितोषोऽपि । तदुक्तम् ।

सर्वव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम् ।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा ॥ इति ।

सन्निहितत्वमपि पदानां नाकाङ्क्षादिवदौपचारिकं किं त्वाहत्येति वक्तुमुपक्रमते । सन्निहितत्वं त्विति । तच्चेति । उच्चारणस्य पदधर्मत्वादिति भावः । ननु पदानां समूहो वाक्यं तत्र न ज्ञायते किं पदमिति तल्ल-

सम्भवति नार्थद्वारा[1] । तेनायमर्थः सम्पन्नः । अर्थप्रतिपादनद्वारा श्रोतुः पदान्तरविषयामर्थान्तरविषयां वाकाङ्क्षां जनयतां प्रतीयमानपरस्परान्वययोग्यार्थप्रतिपादकानां सन्निहितानां पदानां समूहो[2] वाक्यम् । पदं च वर्णसमूहः । समूहश्चात्रैकज्ञानविषयीभावः । एवं च वर्णानां क्रमवता[3]माशुतरविनाशित्वेनैकदानेकवर्णानुभवासम्भवात् पूर्वपूर्ववर्णाननुभूयान्त्यवर्णश्रवणकाले पूर्वपूर्ववर्णानुभवजनितसंस्कार-

---

नयति । पदं चेति । ननु वर्णानामाशुतरविनाशिनामेकक्षणावस्थायित्वेन समूहत्वं दुर्लभमित्यत आह । समूहश्चेति । एकज्ञानविषयत्वेन समूहत्वं न तु वास्तवमित्यर्थः । नन्वेकज्ञानविषयत्वं नामैकं पदमितिज्ञानविषयत्वं तदपि दुर्लभं वर्णानामाशुतरविनाशित्वेन बहुवर्णात्मकपदस्य लौकिकश्रौत्रसाक्षात्कारासम्भवादित्यत आह । एवं चेति । एवं वक्ष्यमाणेन प्रकारेण पदप्रतीतिर्जन्यत इत्यन्वयः । क्रमवतामिति । क्रम आनुपूर्वी तद्वतामित्यर्थः । आनुपूर्वी नाम घटेतिपदे घकालीनप्राग-

---

(१) नान्यद्वारा—पा॰ ४ पु॰ ।
(२) समुदायः—पा॰ १ पु॰ ।
(३) तथा क्रमवतां—पा॰ ४ पु॰ ।

सहकृतेनान्त्यवर्णसम्बन्धेन पदव्युत्पादनसमयग्रहानुगृहीतेन श्रोत्रेणैकदैव सदसदनेकवर्णावगाहिनी पदप्रतीतिर्जन्यते सहकारिदार्ढ्यात् (१) प्रत्यभिज्ञानवत् । प्रत्यभिज्ञाप्रत्यक्षे ह्यतीतापि पूर्वावस्था स्फुरत्येव । ततः पूर्वपूर्वपदानुभवज-

भावप्रतियोगित्वं टस्य टकालीनध्वंसप्रतियोगित्वं वा घस्येत्यादिरूपा सा च यद्यप्यतीन्द्रियकालादिघटिता तथाप्युपनीता सती श्रोत्रज्ञाने ऽपि भासत इत्याकलनीयम् । यदि क्रमवतामिति नोच्येत तदा सर इत्यादिपदे रस इत्यादिप्रतीतिः स्यात् । ननूक्तरीत्या सदसदनेकवर्णप्रतीतिरुत्पद्यतां पदप्रतीतिः कथमुत्पत्स्यत इत्यत आह । पदव्युत्पादनेति । पदव्युत्पादनमित्येतस्य व्याख्यानम् । समयग्रहेति । यद्यपि शक्त्यनुभवस्तदानीं नास्ति तथापि तज्जन्यः संस्कारस्तस्यां दशायां वर्तते तज्जन्या स्मृतिर्वा तदनुगृहीतेन श्रोत्रेणेति द्रष्टव्यम् । ननु पूर्वपूर्ववर्णानुभवजनितसंस्कारबलाच्छ्रोत्रेन्द्रियेण सदसदनेकवर्णावगाहिनी पदप्रतीतिर्जन्यत इत्युक्तं तदयुक्तं संस्कारा हि यद्विषयानुभवजन्यास्तद्विषयस्मरणजनन एव समर्था न तु कार्यान्तरकरण इत्याशङ्कायामाह । प्रत्यभिज्ञानवदिति । यथा संस्कारसहकृतस्य चक्षुरिन्द्रियस्य स्मृति-

(१) सहकारिसामर्थ्यात्—पा॰ ३ पु॰ ।

नितसंस्कारसहकृतेनान्त्यपदविषयेण श्रोत्रेन्द्रियेण पदार्थप्रत्ययानुगृहीतेनानेकपदावगाहिनी वाक्यप्रतीतिः क्रियते । तदिदं वाक्यमाप्तपुरुषेण प्रयुक्तं सच्छब्दनामकं प्रमाणम् । फलं त्वस्य[१] वा-

---

व्यतिरिक्तप्रत्यभिज्ञानजननसामर्थ्यं वर्तत एवमत्रापि भविष्यतीत्यर्थः । तदुक्तम् ।

यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम् ।
कार्यान्तरे ऽपि सामर्थ्यं तस्य न प्रतिहन्यते ॥ इति[२] ।

तत्तेदन्तोभयाविषयकं ज्ञानं प्रत्यभिज्ञानं यथा सोऽयं देवदत्त इति । अज्ञातपदार्थकस्य पुरुषस्य पदश्रवणे ऽपि वाक्यज्ञानानुदयाद् वाक्यज्ञाने पदार्थज्ञानमङ्गमित्याह । **पदार्थप्रत्ययानुगृहीतेनेति** । नन्वन्त्यपदविषयेण श्रोत्रेन्द्रियेणेत्युक्तं तच्च बहुवर्णपदस्थले लौकिकसन्निकर्षासम्भवान्न सम्भवतीति चेत् श्रौत्रप्रत्येकपदानुभवजन्यसंस्कारमेलकादेकदैव तावत्पदसमूहालम्बनस्मृतिरङ्गीक्रियत इत्यत्रैव तात्पर्यम् । तत एकदैव तावत्पदार्थसमूहालम्बनस्मृतिरप्यावश्यकी प्रत्येकपदार्थस्मरणानां नष्टत्वादिति सर्वं समञ्जसम् । पदार्थस्मृतिं व्यापारीकृत्य पदज्ञानं करणं तच्च फलवदिति हृदि निधायाह । **फलं त्वस्येति** । इदं त्ववधेयम् । शाब्दबोधत्वावच्छेदेन योग्यताज्ञानं संशयनिश्चयसाधारणं कारणम् । तथाकाङ्क्षानिश्चयः । स्व-

---

(१) तस्य–पा० २ । ४ पु० ।

(२) अयं श्लोको न्यायकन्दलीग्रन्थे संस्कारनि[illegible]पणप्रकरणे यथोक्तं न्यायवार्तिकभिरित्यादिना श्रीधरेणापि धृतः ।

क्यार्थज्ञानम्[१] । तच्चैतच्छब्दलक्षणं प्रमाणं लोके वेदे च समानम्[२] । लोके त्वयं विशेषो यः कश्चि-

रूपसत्याकाङ्क्षेत्याचार्याः । आसत्तिनिश्चयोऽपि तथा । तथा तात्पर्यनिश्चयः । तात्पर्यं नाम तत्प्रतीतीच्छयोच्चरितत्वं तत्र च लिङ्गानि ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः[३] ॥

इत्येवं क्वचित् । क्वचित्तु

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये[४] ॥

इति कथितानि । एवं पदजन्यपदार्थोपस्थितिरपि । अत एव द्वारमित्यादौ पिधेहीतिपदमेवाध्याह्रियते । प्राभाकरास्त्वनियममाचक्षाणास्तत्राप्यर्थाध्याहारं मन्यन्ते । भाट्टास्तु शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यतीति न्यायात् पदोपस्थापित एकपदार्थेऽपरस्यापि पदजन्योपस्थितिरपेक्षिता । यत्र पुनः सर्व एवार्थाः प्रमाणान्तरोपस्थापितास्तत्र तदपेक्षा नास्त्येव । यथा ।

(१) यथाह निर्दोषवाक्यं शब्दो वैदिको लौकिकश्च सोऽनुमानमिदं ज्ञेयमिति वैशेषिकादय इति पाठोऽधिकः ४ पु० ।

(२) साधारणम्-पा० २ । ४ । पु० ।

(३) इयं कारिका साहित्यदर्पणे द्वितीयपरिच्छेदे उक्तं हीत्यादिना धृता ।

(४) अयं श्लोको बृहत्संहितोक्तः । सर्वदर्शनसङ्ग्रहे पूर्णप्रज्ञदर्शने उक्तं बृहत्संहितायामित्यादिनैतच्छ्लोकस्य धृतत्वात् ।

देवाप्तो भवति न सर्वः। अतः किञ्चिदेव लौ-

पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः[1] ॥

इत्याहुः। शाब्दप्रमायां गुणस्तु तात्पर्यप्रमा योग्यताप्रमा वा। पुनरप्यवधेयम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ यागं विना स्वर्ग इति व्यभिचारसत्त्वे स्वर्गं प्रति यागस्य साधनत्वं वेदेनापि कथं बोध्यत इतिशङ्कायामुच्यते समानप्रकारकं हि विरहज्ञानं समानप्रकारकान्वयज्ञानविरोधि तेन स्वर्गत्वावच्छेदेन व्यभिचारग्रहात् तदवच्छेदेन नियतपूर्ववृत्तित्वं माग्राहि तदाश्रये धर्मि हेतुताग्रहे किं बाधकं तथा च कार्यतानवच्छेदकस्वर्गत्वधर्मसामानाधिकरण्येन यागजन्यता वेदेन बोध्यते। न च यागजन्यस्वर्गे जातिभेदस्य सत्त्वात् तदवच्छेदेन तत्र यागस्य साधनत्वं वेदेन बोध्यतां न त्वतिप्रसक्तधर्मसामानाधिकरण्येनेति वाच्यम्। साधनताबोधात् प्राक् स्वर्गे जातिभेदोपस्थितौ मानाभावेन तमादाय कारणताबोधस्याशक्यत्वात्। तस्मादतिप्रसक्तेनापि स्वर्गत्वेन रूपेणोपस्थितस्वर्गविशेषं प्रति वेदेन यागस्य साधनत्वं बोध्यते ततश्च कारणभेदप्रतिसन्धाने तत्र जातिभेदः कल्प्यते। ननु यदि कार्यतावच्छेदकज्ञानं विनाप्यतिप्रस-

(१) श्लोकवार्त्तिके वाक्याधिकरणे ३३५ श्लोकः। अयं श्लोको न्यायमञ्जरीग्रन्थे ६ आह्निके पदार्थनिष्ठवाक्यार्थबोधहेतुत्वकथनावसरे जयन्तभट्टेनापि धृतः। वाराणसीस्थमेडिकलहालनामकयन्त्रालयमुद्रितन्यायमञ्जरीपुस्तके ३८७ पृष्ठायाम्।

किंं वाक्यं प्रमाणं यदाप्तवक्तृकम्[1] । वेदे तु परमाप्तश्रीमहेश्वरेण कृतं सर्वमेव वाक्यं प्रमाणं सर्वस्यैवाप्तवाक्यत्वात्[2] । वर्णिता-

---

क्तधर्मसामानाधिकरण्येन साधनता शब्देन बोध्यते तदा प्रत्यक्षेणापि बोध्येताविशेषादिति चेत् । मैवम् । ग्राहकाभावात् । अन्वयव्यतिरेकाभ्यां हि तत्र कारणता गृह्यते न चातिप्रसक्तेन द्रव्यत्वादिना दण्डान्वयव्यतिरेकग्रहो यत्र दण्डाभावस्तत्र द्रव्याभावाभावाद् यत्र द्रव्यं तत्र दण्डनियमाभावाच्च । यत्र च तृणारणिमणिस्थले ग्राहकमस्ति तत्रातिप्रसक्तधर्मसामानाधिकरण्येन तज्जन्यता प्रत्यक्षेणापि गृह्यत एव । अत्रारणिमण्यभाववति स्तोमविशेषे तृणान्वयव्यतिरेकौ तद्ग्राहकौ तौ च स्त एवेति हृदयम् । वेदे तु परमाप्तश्रीमहेश्वरेण कृतमिति ।

---

(१) कर्तृकम्—पा॰ २ । ३ । ४ पु॰ ।

(२) अत्र चतुर्थपुस्तके ऽधिकः पाठः । नन्वीश्वरस्यैवाभावात् कथमाप्तस्येश्वरस्य वाक्यं वेदः प्रमाणम् । तत्र चोच्यते । प्रमाणाभावादप्रतीतश्चेदीश्वरः कथमस्याभावोऽवगम्यते प्रमाणतो लब्धरूपस्यैव निषेद्धुं शक्यत्वात् । यथोक्तम् ।

न स्वरूपं क्वचित् किञ्चित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य सम्भवः ॥

अथ महेश्वरस्याभावो नावधार्यते सद्भावस्तु त्वया तस्य कथमवधार्यते प्रमाणाभावेनानवधारिते चेश्वरसद्भावे तत्कृते वेदे प्रामाण्यमिति क्व निश्चयः । नैवम् । ईश्वरसद्भावप्रतिपादकस्यानुमानस्य विद्यमानत्वात् । तथाहि घटादेः कार्यस्य कर्तृजन्यत्वदर्शनात् क्षितिक्षितिधरादिकार्यं कर्तृजन्यमित्यनुमीयते यः क्षित्यादेः कर्ता स एवेश्वरः । न हीश्वरस्य क्षित्यादिकर्तृत्वादन्यदीश्वरत्वम् । तदयमनुमानवाक्यप्रयोगः

## नि चत्वारि प्रमाणानि । एतेभ्योऽन्यन्न प्रमाणं

क्रियते । क्षित्यादिकं सकर्तृकं कार्यत्वाद् यत् कार्यं तत् सकर्तृकं यथा घटः तथा चेदं तस्मात्तथेति । अत्र कार्यत्वं हेतुस्तच्च कारणाधीनात्मलाभत्वं भावे ऽभावे च साधारणम् । न चेदमाश्रयासिद्धमाश्रयस्य क्षित्यादेः प्रमाणसिद्धत्वात् । नापि स्वरूपासिद्धं प्रत्यक्षजन्मकेष्वङ्कुरादिषु कार्यत्वस्य प्रत्यक्षसिद्धत्वात् । अदृष्टचरोत्पत्तिषु भूभूधरादिषु सावयवत्वेन कार्यत्वस्यानुमीयमानत्वात् । ननु व्याप्यत्वासिद्धोऽयं कार्यत्वहेतुः । अस्मदादिशक्यज्ञानोपाधेर्विद्यमानत्वात् तथाह्यस्मदादिभिः शक्यं ज्ञातुमुपादानं यस्य तदेव सकर्तृकं न तु कार्यमात्रमिति । अत्रोच्यते । किं प्रत्यक्षेण शक्यज्ञानत्वमभिप्रेतमाहोस्विदनुमानादिना शक्यज्ञानत्वमभिप्रेतम् । यदि प्रत्यक्षेण तदा स्थूलतरेषु क्षितिशरीरप्रभृतिषु तदुपलभ्यत एव क्षित्याद्युपादानभूतस्य भूभागकरचरणशाखापल्लवादेः प्रत्यक्षसिद्धत्वात् । अथानुमानादिना शक्यज्ञानत्वमभिप्रेतम् । तत् सर्वस्मिन्नेव पक्षीभूते क्षित्यादावस्ति । शरीरजन्यत्वमुपाधिर्भविष्यतीति । नैवम् । साक्षाच्छरीरजन्यत्वस्य मन्त्रिमन्त्रकृते शाखाभङ्गे सकर्तृके ऽभावात् । परम्परया तु क्षित्यादावपि तस्य सिद्धत्वात् क्षित्यादावप्यदृष्टद्वारा शरीरजनितत्वात् । अथ शरीरिकर्तृकत्वमुपाधिर्भविष्यति न च क्षित्यादौ साक्षाददृष्टद्वारा वा शरीरिणः कर्तारः कारणमात्राणि भवन्ति । नैवम् । अशरीरकर्तृत्वसद्भावे ईश्वराभ्युपगमात् । असद्भावे वा विशेषणानर्थक्यात् । अथ क्रियादर्शिपुरुषविषयकृतबुद्धिजनकत्वमुपाधिर्भविष्यति । यथोक्तम् । यद्दृष्टे क्रियादर्शिनः कृतबुद्धिरुत्पद्यते स एव कार्यत्वविशेषः सकर्तृकत्वे प्रयोजको न तु कार्यत्वमात्रं तत् न च क्षित्यादौ क्रियादर्शनात् कृतबुद्धिरस्ति । नैवम् । कृतबुद्धिः कार्यबुद्धिः सा क्षित्यादावस्त्येव । अथ सकर्तृकत्वबुद्धिः सापि गृहीतव्याप्तेरस्त्येव । तदेवमुपाधेर्निरस्तत्वान्न व्याप्यत्वासिद्धं कार्यत्वम् । अनुपलब्धपूर्वकोटिषु पर्वतादिषु तथादर्शनाद् द्रव्यादिषु सावयवत्वादिना तथानुमानात् । नापि कार्यत्वं विरुद्धं साध्यविपरीतेन व्याप्यभावात् । न हि सकर्तृकत्वविपरीतेनाकर्तृकत्वेन कार्यत्वं व्याप्तं घटादौ व्यभिचारात् । अथ कार्यत्वमनैकान्तिकं भवत्विति तत् साधारणमसा-

प्रमाणस्य सतोऽत्रैवान्तर्भावात् ।

ननु अर्थापत्तिरपि पृथक् प्रमाणमस्ति (अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्त-

---

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर[1] इत्यभिज्ञोक्तेर्भ्रमप्रमादविप्रलिप्साकरणापाटवानां दोषाणां तत्रासम्भवात् तत्प्रणीतं सर्वमेव वाक्यं प्रमाणमित्यर्थः ।

अर्थापत्तेः पृथक्प्रमाणत्वमुपपादयितुं मीमांसकः शङ्कते । नन्विति । अनुपपद्यमानार्थदर्शनात् तदुपपादकभूतार्थान्तरकल्पनरूपाया अर्थापत्तेः पृथक्प्रमाणत्वमुपपाद-

---

धारणं च तत्र न प्रथमं विपक्षे व्योमादावभावात् । नापि द्वितीयं सपक्षे घटादौ सत्त्वात् । अथ कार्यत्वं हेतुः सत्प्रतिपक्षो भवति तथाहि क्षित्यादिकमकर्तृकं शरीराजन्यत्वाद् व्योमवदिति । तन्न । क्षित्यादेरपि परम्परया शरीरजन्यत्वात् साक्षाच्छरीराजन्यत्वमनैकान्तिकं मन्त्रिमन्त्रकृतशाखाभङ्गे ऽभावात् । अस्यामेवं प्रतिपक्षानुमानम् । ईश्वरो न कर्ता शरीररहितत्वान्मुक्तात्मवदिति । तदसङ्गतम् । ईश्वरस्याप्रामाणिकत्वे आश्रयासिद्धेः प्रामाणिकत्वे धर्मिग्राहकप्रमाणबाधात् । न चायं कालात्ययापदिष्टः कार्यत्वहेतुः प्रत्यक्षादिभिः साध्यानपहारात् । तदेवं निरस्तहेत्वाभासशङ्कः कार्यत्वहेतुः क्षित्यादेः कर्तारं साधयत्येव । यस्तु कर्तृगतो विशेषोऽशरीरत्वनित्यज्ञानप्रयत्नवत्त्वसर्वज्ञत्वादिकः साधयितुमिष्टः स सर्वः पक्षधर्मताबलात् सिद्ध्यति । यथाहुः । अनुमानस्य द्वयं सामर्थ्यं व्याप्तिः पक्षधर्मता च । तत्र व्याप्त्या कर्तृसामान्यसिद्धिः पक्षधर्मतया तु विशेषः सिद्ध्यति सा हि यदन्तरेणानुपपद्यमाना तदाक्षिपति । इहापि क्षित्यादिकर्तुः सर्वज्ञतादिविशेषमन्तरेण पक्षधर्मता नोपपद्यत इति तमाक्षिपति धूमस्य पक्षधर्मतेव वह्नेः पर्वतसम्बन्धविशेषमिति ।

(१) पातञ्जलसूत्रम् । पा॰ १ सू॰ २४ ।

रकल्पनमर्थापत्तिः) [१]। तथाहि पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा रात्रिभोजनं कल्प्यते। दिवा अभुञ्जानस्य पीनत्वं रात्रिभोजनमन्तरेण नोपपद्यते ऽतः पीनत्वान्यथानुपपत्तिप्रसूतार्थापत्तिरेव रात्रिभोजने प्रमाणम्। तच्च प्रत्यक्षादिभ्यो भिन्नं रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वात् [२]। नैतत्। रात्रिभोजनस्यानुमानविषयत्वात्। तथाह्ययं देवदत्तो रात्रौ भुङ्क्ते दिवा अभुञ्जानत्वे सति पीनत्वाद् यस्तु न रात्रौ भुङ्क्ते नासौ दिवा अभुञ्जानत्वे सति पीनो यथा दिवारात्रावभुञ्जानोऽपीनो न चायं

---

यति। तथाहीत्यादिना। दिवा अभुञ्जानस्य पीनत्वे वर्तमानाया अनुपपत्तेर्देवदत्ते रात्रिभोजनेन सह व्याप्तिर्नास्ति सामानाधिकरण्याभावादत एव न पक्षधर्मता तथा च तयोरभावादर्थापत्तिर्नानुमानेऽन्तर्भवतीति तदाशयः। सिद्धान्ती परिहरति। नैतदिति। पञ्चावयवानुमानवाक्यं रचयति। अयं देवदत्त इति। योगीश्वरादौ व्यभिचारवारणाय हेतौ तद्भिन्नत्वे सतीति विशेषणं द्रष्टव्यम्। केव-

---

(१) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति २। ४ पु०।

(२) तदुक्तम्। अन्वयबोधजन्यत्वमनुमानस्य हि स्थितम्।
अर्थापत्तिरियं त्वन्या व्यतिरेकप्रवर्तिनी॥
इत्यधिकः पाठः ४ पु०।

तथा तस्मान्न तथेति[1] केवलव्यतिरेक्यनुमानेनैव रात्रिभोजनस्य प्रतीयमानत्वात् किमर्थमर्थापत्तिः कल्पनीया।

नन्वभावाख्यमपि पृथक् प्रमाणमस्ति। तच्चाभावग्रहणायाङ्गीकरणीयम्। तथाहि घटाद्यनुपलब्ध्या घटाद्यभावो निश्चीयते। अनुपलब्धिश्चोपलब्धेरभाव इत्यभावप्रमाणेन घटाद्य-

लव्यतिरेक्यनुमानेनेति। व्यतिरेकिणि साध्याभावव्यापकाभावप्रतियोगिमत्त्वज्ञानं हेतुरित्यभिज्ञोक्तेरत्र रात्रिभोजित्वाभावव्यापकाभावप्रतियोगिदिवाऽभुञ्जानत्वसमानाधिकरणपीनत्ववानयमिति ज्ञानं हेतुरिति। व्यापकत्वं च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। किमर्थमर्थापत्तिरिति। क्लृप्तेनोपपत्तावक्लृप्तकल्पनानवकाशादिति भावः।

षष्ठप्रमाणवादी भाट्टः शङ्कते। नन्वित्यादिना। अभावग्रहे ऽनुपलब्धिः कारणमित्युभयवादिसिद्धं तथा च तस्यैव प्रमाणत्वे कल्प्यमाने लाघवमिन्द्रियस्य तु प्रमाणत्वकल्पनायामभावेन सह प्रत्यासत्त्यन्तरं कल्पनीयमिति गौरवं स्यादित्याशयः। इत्यभावप्रमाणेनेति। इन्द्रियव्यापारस्याधिकरणग्रहण उपक्षीणत्वादिन्द्रियं नाभावग्रहे कारणं तथा च परिशेषादनुपलब्धिप्रमाणेन घटा-

(१) तस्मात् तथेति—पा· ३। ४ पु·।

**भावो गृह्यते । नैतत् । यद्यत्र घटोऽभवि-ष्यत् तर्हि भूतलमिवाद्रक्ष्यदित्यादितर्कसह-कारिणानुपलम्भसनाथेन प्रत्यक्षेणैवाभावग्रह-णात्[१] । नन्विन्द्रियाणि सम्बद्धार्थग्राहकाणि ।**

अभावो गृह्यत इत्यर्थः । सिद्धान्ती परिहरति । **नैतदि-ति** । ननु योग्यानुपलब्धिरवश्यमपेक्ष्यते योग्यता च तत्र तर्कितप्रतियोगिसत्त्वविरोधिता तर्कश्च कीदृश इत्या-शङ्कायां तर्कस्वरूपं दर्शयन् योग्यानुपलब्धेरभावग्रह इन्द्रियसहकारित्वमात्रं न तु प्रमाणत्वं गौरवादित्याह । **यद्यत्रेत्यादिना अभावग्रहणादित्यन्तेन** । अभवि-ष्यदित्यादौ लिङ्निमित्ते लृङ् क्रियातिपत्ताविति[२] लृङ् । नन्विन्द्रियव्यापारस्याधिकरणग्रहणोपक्षीणत्वादभावग्रहो नैन्द्रियकः किं त्वभावजन्य इति प्रागुक्तमिति चेत् । न । अधिकरणग्रहणस्य व्यापाररूपतया अव्यवधायकत्वात् । तदुक्तम् । न हि स्वाङ्गं स्वस्य व्यवधायकमिति । नन्वि-न्द्रियस्य प्रमाणत्वाङ्गीकारे प्रत्यासत्त्यन्तरकल्पना भवि-ष्यतीति चेत् । न । अभावं प्रकाशयदिन्द्रियमित्यादिनाग्रे समाधास्यमानत्वादिति सर्वं सुस्थम् । नन्विन्द्रियाभाव-योः सम्बन्धाभावेनाभावस्येन्द्रियगम्यत्वं न सङ्घटीति तथा चानन्यगतिकत्वेनाभावगम्यत्वमेव भविष्यतीति वक्तुमिन्द्रियाणां प्राप्तप्रकाशकत्वं तावद्वदति । **नन्वित्या-**

(१) किमभावाख्यप्रमाणान्तरेणेत्यधिकः ४ पु० ।

(२) पाणिनिसूत्रम् । अ० ३ पा० ३ सू० १३९ ।

तथाहीन्द्रियाणि वस्तु प्राप्य प्रकाशकारीणि ज्ञानकरणत्वादालोकवत्। यद्वा चक्षुःश्रोत्रे वस्तु प्राप्य प्रकाशकारिणी बहिरिन्द्रियत्वात् त्वगादिवत् । त्वगादीनां तु प्राप्यकारित्वमुभयवादिसिद्धमेव न चेन्द्रियाभावयोः सम्बन्धोऽस्ति । संयोगसमवायौ हि सम्बन्धौ न च तौ तयोस्तः । (द्रव्ययोरेव संयोग इतिनियमादभावस्य च द्रव्यत्वाभावात् । अयुतसिद्धत्वाभावान्न समवा-

---

दिना । ज्ञानकरणत्वादिति । यद्यपि स्पर्यमाणेनार्थेन सह मनसः सम्बन्धाभावात् स्मृतिज्ञानजनके तत्र व्यभिचारशङ्का । तथापि संस्काररूपप्रत्यासत्त्या मनसोऽपि प्राप्यकारित्वमस्त्येवेति समाधानं ज्ञेयम्। यदा तु संस्कारमात्रजन्यं ज्ञानं स्मृतिर्न मनस्तत्र करणमिति पक्षस्तदा तु हेत्वगमनादेव न व्यभिचार इति द्रष्टव्यम् । यद्वा चक्षुःश्रोत्रे इति । चक्षुषो रश्मिद्वारार्थेन सह सम्बन्धः । भेरीदेशे जातोऽपि शब्दो वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श्रवणपथप्राप्त एव गृह्यत इति श्रोत्रस्याप्यर्थेन सह सम्बन्धोऽस्तीति चक्षुःश्रोत्रे वस्तुप्राप्यप्रकाशकारिणी इत्यर्थः । अधस्ताज्जायमानः शब्दः प्रासादादूर्ध्वस्थितेन पुरुषेण वीचीतरङ्गन्यायेनोपलब्धुं न शक्यत इति तदर्थं कदम्बमुकुलन्याय इत्याकलनीयम् । बहिरिन्द्रियत्वादिति । स्मृतिं प्रति मनो न करणमितिपक्षे बहिःपदं सार्थकमिति ज्ञेयम् ।

योऽपि)[१]। विशेषणविशेष्यभावश्च सम्बन्ध एव न सम्भवति भिन्नोभयाश्रितैकत्वाभावात्। सम्बन्धो हि सम्बन्धिभ्यां भिन्नो भवत्युभयसम्बन्ध्याश्रितश्चैकश्च। यथा भेरीदण्डयोः संयोगः स हि भेरीदण्डाभ्यां भिन्नस्तदुभयाश्रितश्चैकश्च न च विशेषणविशेष्यभावस्तथा। तथाहि दण्डपुरुषयोर्विशेषणविशेष्यभावो न ताभ्यां भिद्यते। न हि दण्डस्य विशेषणत्वमर्थान्तरं नापि पुरुषस्य विशेष्यत्वमर्थान्तरमपि तु स्वरूपमेव अभावस्यापि विशेषणत्वाद् विशेष्यत्वाच्च। न चाभावे कस्यचित् पदार्थस्य द्रव्याद्यन्यतमस्य सम्भवः। तस्मादभावस्य[२] स्वोपरक्तबुद्धिजनकत्वं यत् स्वरूपं तदेव विशेषणत्वं न तु तदर्थान्तरम्। एवं व्यापकत्वकारणत्वादयो[३]ऽप्यूह्याः। स्वप्रति-

नन्वेवं व्याप्यव्यापकभावादयोऽपि सम्बन्धा न स्युरित्यत्रेष्टापत्त्या परिहारमाह। एवं व्यापकत्वेति। व्यापक-

(१) ( ) एतच्चिह्नमध्यस्थो नास्ति २। ४ पु०।

(२) भावस्य वेत्यधिकः पाठः ४ पु०।

(३) व्याप्यत्वव्यापकत्वकार्यत्वकारणत्वादयः—पा० ३ पु०। व्याप्यव्यापककार्यकारणत्वादयः—पा० २ पु०।

बद्धबुद्धिजनकत्वं स्वरूपमेव हि व्यापकत्वमग्न्यादीनाम् । कारणत्वमपि कार्यानुकृतान्वयव्यतिरेकिस्वरूपमेव हि तन्त्वादीनां न त्वर्थान्तरमभावस्यापि व्यापकत्वात् कारणत्वाच्च न ह्यभावे सामान्यादिसम्भवः । तदेवं विशेषणविशेष्यभावो न विशेषणविशेष्यस्वरूपाभ्यां भिन्नो नाप्युभयाश्रितो विशेषणे विशेषणभावमात्रस्य सत्त्वाद् विशेष्यभावस्याभावाद् विशेष्ये च विशेष्यभावमात्रस्य सद्भावाद् विशेषणभावस्याभावात् । नाप्येको विशेषणं च विशेष्यं च तयोर्भाव इति द्वन्द्वात् परः[१] श्रूयमाणो भावशब्दः प्रत्येकमभिसम्बध्यते । तथा च विशेषणभावो विशेष्यभावश्चेत्युपपन्नं द्वावेतावेकश्च

त्वादेरर्थान्तरत्वाभावे युक्तिमाह । अभावस्यापीति । इदमिदानीं घटाभाववद् योग्यघटानुपलब्धिमत्त्वादित्यत्र व्यापकत्वं ज्ञेयम् । प्रागभावप्रतिबन्धकाभावादौ तु कारणत्वमिति विवेकः । अथ यथा गोत्वादिशब्दानां गवादिगतसामान्यवाचकत्वं तथा व्यापकत्वादिशब्दस्य सामान्यवाचकत्वं स्यादित्याशङ्क्याह । न ह्यभाव इति । विशेषण-

(१) द्वन्द्वान्ते-पा० १ पु० ।

सम्बन्धः । तस्माद्विशेषणविशेष्यभावो न सम्बन्धः । एवं व्याप्यव्यापकभावादयोऽपि । सम्बन्धशब्दप्रयोगस्तूभयनिरूपणीयत्वसाधर्म्येणोपचारात् । तथा चासम्बद्धस्याभावस्येन्द्रियेण ग्रहणं न सम्भवति । सत्यम् । भावावच्छिन्नत्वाद् व्याप्तेर्भावं प्रकाशयदिन्द्रियं प्राप्तमेव प्रकाशयति न त्वभावमपि अभावं प्रकाशयदिन्द्रियं विशेषणविशेष्यभावमुखेनैवेति सिद्धान्तः। असम्बद्धाभावग्रहे ऽतिप्रसङ्गदोषस्तु विशेषण-

विशेष्यभावादौ सर्वजनसिद्धं सम्बन्धव्यपदेशमुपपादयति। सम्बन्धशब्देति । उभयनिरूपणीयत्वसाधर्म्येण । उभयविषयकज्ञानविषयत्वसाधर्म्येणेत्यर्थः । विशेषणविशेष्यभावादिः स्वरूपसम्बन्धस्तल्लक्षणं तु सम्बन्धान्तरमन्तरा विशिष्टप्रतीतिजननयोग्यत्वमिति भावः(१)। सिद्धान्ती परिहर्तुमाह। सत्यमिति । भावावच्छिन्नत्वाद् व्याप्तेरिति। तस्या व्याप्तेर्भावमात्रविषयत्वेन सङ्कोचनीयत्वादित्यर्थः । तदेवाह । भावं प्रकाशयदिति । नन्विन्द्रियस्यासम्बद्धार्थग्राहकत्वाङ्गीकारे वृत्ताद्व्यवहितार्थग्रहणं स्यादित्यत आह । असम्बद्धेति । ननु दण्डी कमण्डलुमान् नीलो घट इत्यादौ दण्डादेर्विशेषणत्वं सम्बन्धान्तरपूर्वकं दृष्टं न चेन्द्रियस्याभावेन सह संयोगः समवायो वा सम्भवति तस्मात् सम्बन्धान्तरपूर्वकत्वाभावाद्विशेषणतयाप्यतिप्रसङ्गदोषो दुर्निरस्य इत्याक्षेपे ऽनुप-

(१) विशिष्टप्रतीतिजननयोग्यत्वमौपचारिकमिति हृदयम् ।

तयैव निरस्तः । समग्रं परमते[1] ।

लब्धिप्रमाणेनाप्यभावः कस्यचिद् विशेषणत्वेन ग्राह्यस्तथा चाभावप्रमाणवादिनोऽप्येतत् समानमित्याह । समग्रंचे- ति । धनवानित्यादावुभयविधसम्बन्धाभावे ऽपि क्वचिद्वि- शेषणत्वं दृष्टमिति यदुच्यते तदेन्द्रियस्याभावेन सहोभय- विधसम्बन्धाभावे ऽपि संयुक्तादिविशेषणता नानुपपन्ना। तस्मात् सुष्ठूक्तमतिप्रसङ्गदोषस्तु विशेषणतयैव निरस्त

(१) अत्र चतुर्थपुस्तके ऽधिकः पाठः । अनिर्दिष्टप्रवक्तृकं पारम्पर्योपदेशमात्रमैतिह्यं प्रमाणान्तरमिति केचित् । तन्न । इह वटे यक्षः प्रतिवसतीत्यादीनां प्रामाण्यपक्षे शब्द एवान्तर्भावादप्रामाण्यपक्षे ऽप्रमाणत्वादेव । सम्भवस्तु प्रमाणमेवाविनाभावविज्ञानादनुमानं तत् ।

अहिंसा सत्यवचनं ब्रह्मचर्यमकाङ्क्षिता ।
अस्तेयमिति पञ्चैते यमा वै परिकीर्तिताः ॥
अक्रोधो गुरुशुश्रूषा माहात्म्यं तनुलाघवम् ।
अप्रमादश्च सततं पञ्चैते नियमाः स्मृताः ॥

इत्यार्षं च प्रत्यक्ष एवान्तर्भवतीति । तदुक्तम् ।

योगधर्मप्रभावेण प्रत्यक्षं योगिनां मतम् ।
देशकालस्वरूपेण विप्रकृष्टेषु वस्तुषु ॥

यमनियमाद्यष्टाङ्गसाध्य आत्मतत्त्वसाक्षात्कारो योगः । तेन खलु योगेन स्वसामर्थ्यात् स्वर्गापवर्गापूर्वदेवताद्याः साक्षात् प्रतीयन्ते । योगिन एव केन प्रमाणेन सिद्धा इति चेदस्मदाद्यप्रत्यक्षाः कस्यचित् प्रत्यक्षाः वस्तुभूतत्वाद् घटवत् । येषां चैते साक्षाद्विषयास्त एव योगिन उच्यन्ते । तत्रातिप्रसक्तिवारणाय योगजधर्मा एव सन्निकर्षशब्दवाच्याः । एवं तपःप्रभावप्रयुक्तानां महर्षीणां ज्ञानं त्रैकालिकविषयं व्याख्यातम् । लोके ऽपि दृश्यते यथा कन्या वदति श्वो मे भ्राता आगमिष्यतीति हृदयं मे कथयति तच्च तथैव भवतीति धर्मविशेष एवात्र सन्निकर्ष इति ।

यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे[१] ॥

इदमिदानीं निरूप्यते । जलादिज्ञाने

इति । सम्भवैतिह्ययोः पृथक्प्रमाणत्वनिरसनं तु सुगममिति मत्वा मूलकृतोपेक्षितम् । अस्माभिस्तु शिष्यजिज्ञासानुरोधेन किञ्चित् प्रदर्श्यते । सम्भवो द्विविधः सम्भावनारूपो निश्चयरूपश्च । तत्राद्यो ब्राह्मणे चतुर्वेदाभिज्ञत्वं सम्भवतीत्यादिरूपोऽप्रमाणभूत एव । द्वितीयस्तु सहस्रमयुते सम्भवतीत्यादिरूपः स चायुतं सहस्रेण व्याप्तमिति व्याप्तिपूर्वकत्वादनुमानेऽन्तर्भूत एव । ऐतिह्यं त्वनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमेव । यथेह वटे यक्षस्तिष्ठतीति तदप्याप्तोक्तं सच्छब्दान्नातिरिच्यत इति चत्वार्येव प्रमाणानि ।

प्रमाणनिरूपणानन्तरं तद्गतं प्रामाण्यं निरूपयितुमाह । इदमिति । अत्र प्रमाणानां प्रामाण्यं स्वतोऽप्रामाण्यं तु परत इति मीमांसकमतम् । उभयमपि परत इति नैयायिकमतम् । तत्र प्रामाण्यस्य स्वतस्त्वमुत्पत्तौ ज्ञप्तौ चेति द्विविधम् । तत्रोत्पत्तौ स्वतस्त्वं ज्ञानकारणमात्रजन्यत्वं येन ज्ञानं जायते तेनैव प्रमाणं सदेव जायत इत्यर्थः । ज्ञप्तौ स्वतस्त्वं तु ज्ञानग्राहकमात्रग्राह्यत्वं येन ज्ञानं गृह्यते तेनैव प्रमाणं सदेव ज्ञायत इत्यर्थः । परतस्त्वमप्युत्पत्तौ ज्ञप्तौ चेति द्विविधम् । तत्रोत्पत्तौ परतस्त्वं ज्ञानकारणातिरिक्तकारणजन्यत्वम् । इन्द्रियार्थसंयोगादिना ज्ञानं

(१) अयं श्लोको नास्ति ४ पु· ।

जाते तस्य प्रामाण्यमवधार्य कश्चिज्जलादौ प्रवर्तते । कश्चित्तु सन्देहादेव प्रवृत्तः प्रवृत्त्युत्तरकालं जलादिप्रतिलम्भे सति प्रामाण्यमवधारयतीति वस्तुगतिः । अत्र कश्चिदाह । प्रागेव प्रवृत्तेः प्रामाण्यमवधार्य पुरुषः प्रवर्तते स्वत एव प्रामाण्यावधारणात् । अस्यार्थः । येनैव यज्ज्ञानं

---

जायते तदतिरिक्तेन गुणेन दोषेन वा तज्ज्ञानं प्रमाणमप्रमाणं वा जायत इत्यर्थः । ज्ञप्तौ परतस्त्वं नाम ज्ञानग्राहकातिरिक्तग्राह्यत्वं ज्ञानं मनसा गृह्यते तद्गतं प्रामाण्यमनुमानेनेति । एवं विवादे सति परतः प्रामाण्यं साधयितुं सकलजनसिद्धां वस्तुस्थितिं तावदनुवदति । जलादिज्ञान इति । कचिदिदं जलमिति ज्ञाने जाते तस्यानभ्यासदशापन्नस्य समर्थप्रवृत्तिजनकजातीयत्वलिङ्गेन प्रामाण्यमवधार्य कश्चित् प्रवर्तत इत्येकः पक्षः । कश्चित्तु अभ्यासदशापन्नस्य जलज्ञानस्य समर्थप्रवृत्तिजनकत्वलिङ्गेन प्रामाण्यमवधारयति तन्निश्चयस्य प्रवृत्त्यनङ्गत्वादित्याशयः । कश्चित्तु प्रामाण्यनिश्चयसंशयाभ्यां रहिते ऽर्थनिश्चये जाते प्रवर्तत इत्यप्यधिकं द्रष्टव्यम् । तन्निश्चयत्वेन तज्ज्ञानत्वेन वा तस्य प्रवृत्तावहेतुत्वात् । न च निष्कम्पप्रवृत्तौ प्रामाण्यनिश्चयो हेतुः । अप्रामाण्यशङ्काशून्यार्थनिश्चयादेव तदुपपत्तेरिति । मीमांसकमतमाह । अत्रेत्यादिना । येनैवेति । भयदभिप्रेतानुमितौ पक्षज्ञानानुरोधेन संशये च धर्मिज्ञानानुरोधेन ज्ञानग्राहिका सामग्री आवश्य-

गृह्यते तेनैव तद्गतं प्रामाण्यमपि न तु ज्ञान-ग्राहकादन्यज् ज्ञानधर्मस्य प्रामाण्यस्य ग्राहकम् । तेन ज्ञानग्राहकातिरिक्तानपेक्षत्वमेव स्वतस्त्वं प्रामाण्यस्य । ज्ञानं च प्रवृत्तेः पूर्वमेव गृहीतं कथमन्यथा प्रामाण्याप्रामाण्यसन्देहोऽपि स्यात् । अनधिगते धर्मिणि सन्देहानुदयात् । तस्मात् प्रवृत्तेः पूर्वमेव ज्ञाततान्यथानुपपत्ति-प्रसूतार्थापत्त्या ज्ञाने गृहीते ज्ञानगतं प्रामाण्यमप्यर्थापत्त्यैव गृह्यते ततः पुरुषः प्रवर्तते । न तु प्रथमं ज्ञानमात्रं गृह्यते ततः प्रवृत्त्युत्तर-कालं फलदर्शनेन ज्ञानस्य प्रामाण्यमवधार्यते ।

की सैव च मम प्रामाण्यग्राहिकेति भावः । परमतं प्रतिक्षिपति । न त्विति । यदि ज्ञानमात्रमादौ गृह्यते ततोऽनुमानेन तद्गतं प्रामाण्यं निश्चीयत इत्युच्येत तदा निश्चितप्रमाणभावमेवानुमानं प्रामाण्यं निश्चाययतीति वक्तव्यं ततश्च तत्र तन्निश्चयार्थमनुमानापेक्षा तत्रापि तदर्थं तदपेक्षेत्यनवस्था स्यादिति परतस्त्वं नाद्रियत इत्याशयः । भट्टमतमुपपादयति । तस्मादिति । भट्टमते ज्ञानमतीन्द्रियं तेन च ज्ञानेन विषये ज्ञातताख्यः कश्चन धर्मो जन्यते स तु प्रत्यक्षस्तदन्यथानुपपत्तिर्ज्ञानमिव प्रामाण्यमपि ग्राहयतीति हृदि निधायाह । **ज्ञातता-न्यथानुपपत्तिप्रसूतार्थापत्त्येति** । ज्ञातताऽन्यथानुप-पत्तिरर्थान्तरकल्पनं प्रसूते तया ज्ञातताऽन्यथानुपपत्ति-

अत्रोच्यते। ज्ञाततान्यथानुपपत्तिप्रसूतयार्थापत्त्या ज्ञानं गृह्यत इति यदुक्तं तदेव वयं न मृष्यामहे तया प्रामाण्यग्रहस्तु दूरत एव। तथाहि इदं किल परस्याभिमतम्। घटादिविषये ज्ञाने जाते मया ज्ञातोऽयं घट इति घटस्य ज्ञातता प्रतिसन्धीयते। तेन ज्ञाने जाते सति ज्ञातता नाम कश्चिद्धर्मो जात इत्यनुमीयते। स च ज्ञानात् पूर्वमजातत्वाज् ज्ञाने जाते च जातत्वादन्वयव्यतिरेकाभ्यां ज्ञानेन जन्यत इत्यवधार्यते। एवं च ज्ञानजन्योऽसौ ज्ञातताना मधर्मो ज्ञानमन्तरेण नोपपद्यते कारणाभावे कार्यानुदयात्। तेनार्थापत्त्या स्वकारणं ज्ञानं ज्ञाततयाक्षिप्यत इति। न चैतद्युक्तम्। ज्ञानविषयतातिरिक्ताया ज्ञाततायाः

प्रसूतयार्थान्तरकल्पनया ज्ञानप्रामाण्ये सहैव गृह्येते ततः पुरुषः प्रवर्तते प्रामाण्यज्ञानत्वेन प्रवृत्तित्वेन च कार्यकारणभावात् पूर्वं प्रामाण्यज्ञानमिति तदाशयः। सिद्धान्ती परिहरति। अत्रोच्यत इति। तत्रादौ ज्ञाततामेव निराकरोति। ज्ञाततान्यथानुपपत्तीत्यादिना। अन्वयव्यतिरेकाभ्यां ज्ञानेन जन्यत इत्यवधार्यत इति। विमता ज्ञातता ज्ञानजन्या तदन्वयव्यतिरेकानुविधायित्वाद् यद् यदन्वयव्यतिरेकानुविधायि तत् तज्जन्यं

अभावात्। ननु ज्ञानजनितज्ञाततााधारत्वमेव हि घटादेर्ज्ञानविषयत्वम्। तथाहि न तावत् तादात्म्येन विषयता विषयविषयिणोर्घटज्ञानयोस्तादात्म्यानभ्युपगमात्। तदुत्पत्त्या तु विषयत्व इन्द्रियादेरपि विषयत्वापत्तिरिन्द्रियादेरपि तस्य ज्ञानस्योत्पत्तेः। तेनेदमनुमीयते ज्ञानेन घटे किञ्चिज्जनितं येन घट एव तस्य ज्ञानस्य विषयो नान्य इत्यतो विषयत्वान्यथानुपपत्तिप्रसूतयार्थापत्त्यैव ज्ञाततासिद्धिः न तु प्रत्यक्षमात्रेण। मैवम्। स्वभावादेव विषयविषयितोपपत्तेः। अर्थज्ञानयोरेतादृश एव स्वाभाविको विशेषः येनानयोर्विषयविषयीभावः। इतरथातीतानागतयोर्विषयत्वं न स्यात्। ज्ञानेन तत्र ज्ञात-

---

यथा कपालान्वयव्यतिरेकानुविधायी घटः कपालजन्य इत्यनुमानेनावधार्यत इत्यर्थः। शङ्कते। नन्विति। न तावत् तादात्म्येनेति। भेदसहिष्णुरभेदस्तादात्म्यम्। येषु स्थलेषु समवायं वैशेषिका वदन्ति तेषु मीमांसकास्तादात्म्यमित्याकलनीयम्। तदुक्तम्। विशेषसमवायौ द्वौ नाङ्गीचक्रुः कुमारिला इति। परिहरति। मैवमिति। स्वभावादेवेति। स्वरूपसम्बन्धविशेष एव विषयतेति भावः। इतरथातीतानागतयोरिति। वृष्टिरा-

ताजननासम्भवादसति धर्मिणि धर्मजननायोगात् । किं च ज्ञाततायाअपि स्वज्ञानविषयत्वात् तत्रापि ज्ञातताान्तरप्रसङ्गः(१) तथा चानवस्था । अथ ज्ञातताान्तरमन्तरेणापि स्वभावादेव विषयत्वं(२) ज्ञाततायाः । एवं चेत् तर्हि घटादावपि किं ज्ञाततयेति । अस्तु वा ज्ञातता तथापि तन्मात्रेण ज्ञानं गम्यते ज्ञाततावि-शेषेण प्रमाणज्ञानाव्यभिचारिणा प्रामाण्यमिति कुत एव ज्ञानग्राहकग्राह्यता प्रामाण्यस्य । अथ केनचिज् ज्ञातताविशेषेण प्रामाणज्ञानाव्यभिचारिणा ज्ञानप्रामाण्ये सहैव गृह्येते । एवं चेदप्रामाण्ये ऽपि शक्यमिदं वक्तुं केनचिज् ज्ञातताविशेषेणाप्रमाणज्ञानाव्यभिचारिणा ज्ञानाप्रामाण्ये सहैव गृह्येते इत्यप्रामाण्यमपि स्वत एव गृह्यताम् । अथैवमप्यप्रामाण्यं परतस्तर्हि प्रामाण्यमपि परत एव गृह्यताम् । ज्ञानग्राह-

सीत् सुभिक्षं भविष्यतीत्यादावतीतानागतयोरित्यर्थः । नन्वत्रैकस्य स्वरूपस्याभावात् स्वरूपसम्बन्धोऽपि कथमिति चेत् । न । ज्ञानस्यैव विषयविषयिभावात्मकस्वरू-

(१) तत्रापि प्रसङ्गः—पा॰ २ पु॰ ।
(२) ज्ञानविषयत्वं—पा॰ १ पु॰ ।

कादन्यत इत्यर्थः । ज्ञानं[1] हि मानसप्रत्यक्षेणैव गृह्यते प्रामाण्यं पुनरनुमानेन । तथाहि जलज्ञानानन्तरं जलार्थिनः प्रवृत्तिर्द्वेधा फलवत्यफला चेति । तत्र या फलवती प्रवृत्तिः सा समर्था । तया तज्ज्ञानस्य याथार्थ्यलक्षणं प्रामाण्यमनुमीयते[2] । प्रयोगश्च विवादाध्यासितं जलज्ञानं प्रमाणं समर्थप्रवृत्तिजनकत्वाद् यन्न प्रमाणं न तत् समर्थां प्रवृत्तिं जनयति यथा प्रमाणाभास इति केवलव्यतिरेकी । अत्र च फलवत्प्रवृत्तिजनकं यज्जलज्ञानं तत् पक्षः तस्य प्रामाण्यं साध्यं यथार्थत्वमित्यर्थः । न तु प्रमाकरणत्वं

---

पसम्बन्धरूपत्वात् । स्वमतं दर्शयति । ज्ञानं हि मानसेति । ज्ञानं द्विविधं व्यवसायरूपमनुव्यवसायरूपं च तत्र विषयविषयं ज्ञानं व्यवसायो यथेदं जलमिति । विषयिविषयं ज्ञानं त्वनुव्यवसायो यथा जलमहं जानामीति । तेन च मानसप्रत्यक्षेणाद्यज्ञानं गृह्यत इत्यर्थः । प्रामाण्यज्ञापकमनुमानं दर्शयितुं प्रतिजानीते । तथाहीति । विवादाध्यासितमिति । प्रमाणमप्रमाणं वेतिविवादेनाध्यासितमित्यर्थः । पक्षसाध्यविभागं दर्शयति । अत्र च

---

(१) अस्माकं तु ज्ञानं–पा· ४ पु· ।

(२) प्रामाण्यमवधार्यते–पा· २ पु· ।

स्मृत्या व्यभिचारापत्तेः । हेतुस्तु समर्थप्रवृत्तिजनकत्वं फलवत्प्रवृत्तिजनकत्वमिति यावत् । अनेन तु केवलव्यतिरेक्यनुमानेनाभ्यासदशापन्नस्य ज्ञानस्य प्रामाण्ये ऽवबोधिते तद्दृष्टान्तेन जलप्रवृत्तेः पूर्वमपि तज्जातीयत्वेन लिङ्गेनान्वयव्यतिरेक्यनुमानेनान्यस्य ज्ञानस्यानभ्यासदशापन्नस्य प्रामाण्यमनुमीयते । तस्मात् परत एव प्रामाण्यं न ज्ञानग्राहकेणैव गृह्यत इति ।

---

फलवदिति । स्मृत्येति । स्मृतौ समर्थप्रवृत्तिजनकत्वं हेतुर्वर्तते प्रमाकरणत्वरूपं साध्यं च नास्तीति तया व्यभिचार इत्यर्थः । ननु प्रामाण्यमवधार्य कश्चिज्जलादौ प्रवर्तत इत्यादिना प्रवृत्तेः प्रागपि प्रामाण्यग्रह उभयवादिसिद्ध इत्युक्तः स च न समर्थप्रवृत्तिजनकत्वरूपेण लिङ्गेन सम्भवति तदानीं तस्याज्ञानात् किं तु स्वत एवेत्यत आह । अनेनेत्यादि । अभ्यासदशापन्नस्य निष्पादितार्थक्रियस्येत्यर्थः।उपपादितमर्थमुपसंहरति। परत एवेत्यादिना। अत्रेदं शास्त्ररहस्यम् । गुरुभट्टमुरारिमिश्रास्त्रयो मीमांसकाः । तत्र गुरुमते जलमहं जानामीत्येवमाकारकेण स्वप्रकाशेन ज्ञानेन स्वात्मेव स्वप्रामाण्यमपि गृह्यते प्रामाण्यं च जलत्ववति जलत्वप्रकारकज्ञानत्वादिरूपम् । भट्टमते तु ज्ञाततालिङ्गकानुमित्या तद् गृह्यते सा चाहं जलत्वप्रकारकज्ञानवान् जलत्वप्रकारकज्ञाततावत्त्वात् । जलं जलत्वप्रकारकज्ञानविषयो जलत्वप्रकारकज्ञाततावत्त्वादिति वा

**चत्वार्येव प्रमाणानि युक्तिलेशोक्तिपूर्वकम् ।**
**केशवो बालबोधाय[1] यथाशास्त्रमवर्णयत् ॥**
**(इति प्रमाणपदार्थः समाप्तः[2] ॥)**

---

जायमाना ज्ञानविषया सती ज्ञानविषयमप्यवगाहमाना धर्मधर्मिवत्तद्वैशिष्ट्यमपि विषयीकरोति ज्ञानविषयत्वाविशेषात् । मुरारिमिश्रमतेऽपि मनसा जायमानेन जलमहं जानामीत्याकारकेणानुव्यवसायेन व्यवसाये गृह्यमाणे धर्मधर्मिवत्तद्वैशिष्ट्यमपि गृह्यते व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात् तस्मात् प्रामाण्यघटकानां धर्मधर्मितद्वैशिष्ट्यविशेष्यत्वादीनां ज्ञानज्ञाने स्फुरणात् प्रामाण्यस्य ज्ञानग्राहकमात्रग्राह्यत्वादिरूपं स्वतस्त्वमस्तीति मीमांसकाशयः । अत्र नैयायिकानामयं भावः । अनुव्यवसायानन्तरं व्यवसायस्य प्रामाण्ये ऽर्थस्य तद्वत्त्वे च संशयस्यानुभवसिद्धत्वान्नार्थतद्वत्त्वमनुव्यवसायस्य स्वातन्त्र्येण विषयो मनसो बहिरस्वातन्त्र्यात् किं तु ज्ञानविषयतया स्वातन्त्र्येण तद्ग्राहकस्यैव तत्सत्तानिश्चयरूपतया प्रामाण्यग्राहकत्वात् । अथोपनीते स्वातन्त्र्यं मनसो न विरुद्धमित्यनुव्यवसायस्य स्वातन्त्र्येणैवार्थतद्वत्त्वं विषयो भविष्यतीति यद्युच्येत तदा संशयो न स्यान्निश्चिते संशयायोगात् । गुरुनये च यद्यपि स्वातन्त्र्येण तद्वत्त्वग्रहस्तथापि सिद्धान्ते स्वप्रकाशानङ्गीकारादेव न स्वतस्त्वम् । भट्टमते ज्ञानानुमित्यापि न तद्ग्रहः । अनुमितेर्व्यापकतावच्छेद-

---

(१) बोधार्थं—पा॰ २ पु॰ ।
(२) अयं पाठो नास्ति ३ । ४ पु॰ ।

(प्रमाणान्युक्तानि अथ प्रमेयाण्युच्यन्ते)[1] । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति सूत्रम्[2] । तत्रात्मत्वसामान्यवानात्मा । स च देहेन्द्रियादिव्यतिरिक्तः प्रतिशरीरं भिन्नो

कप्रकारकत्वनियमाज् ज्ञाततायां निराकरणाच्चेति न स्वतः प्रामाण्यग्रह इति सङ्क्षेपः ॥

प्रमाणपदार्थं निरूप्योद्देशक्रमेण प्रमेयपदार्थं निरूपयति । अथेति । तत्रात्मत्वेति । आत्मत्वसामान्यं सजातीयविजातीयव्यवच्छेदकत्वादात्मनो लक्षणमित्यर्थः । स च देहेन्द्रियादीति । देहमशिरस्कः पिण्डः । इन्द्रियाणि घ्राणादीनि । आदिशब्देन मनो गृह्यते । एतत्त्रितयव्यतिरिक्त आत्मेत्यर्थः । ननु स्थूलोऽहं कृशोऽहमिति देहधर्मसामानाधिकरण्यदर्शनात् क्रमुकादिभ्यो मदशक्तिवद् देहाकारपरिणतानां भूतानां चैतन्योपपत्तेश्च देह एवात्मेति चार्वाकमतम् । काणोऽहमित्यादीन्द्रियधर्मसामानाधिकरण्यदर्शनादिन्द्रियाण्येवात्मेत्यन्यस्य मतम् । स्वप्ने चक्षुराद्युपरमे मनसैव सर्वव्यवहारोपपत्तेर्मन एवात्मेत्यपरस्य मतमिति कथं त्रितयव्यतिरिक्त आत्मेति चेत् । उच्यते । न तावद्देह आत्मा बाह्येन्द्रियग्राह्यत्वात् घटवत् । योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरे प्रनप्तॄननुभ-



(१) ( ) एतन्मध्यस्थः पाठो नास्ति ३ पु० ।
(२) न्यायसूत्रम् । अ० १ आ० १ सू० ९ ।

नित्यो विभुश्च । स च मानसप्रत्यक्षः । विप्रतिपत्तौ तु बुद्ध्यादिगुणलिङ्गकः । तथाहि बुद्ध्यादयस्तावद्गुणा अनित्यत्वे सत्येकेन्द्रियमात्रग्राह्यत्वाद्रूपवत् । गुणश्च गुण्याश्रित एव ।

---

वामीतिप्रतिसन्धानानुपपत्तिर्विपक्षे बाधकस्तर्कः । बाल्यस्थविरशरीरयोश्च परिमाणभेदेन भेदान्नैतादृशं प्रत्यभिज्ञानं सम्भवतीति । नापीन्द्रियाण्यात्मा करणत्वाद् वासीवत् । चक्षुषि नष्टे योऽहं चक्षुषा रूपमद्राक्षं स एव त्वचा स्पृशामीतिप्रतिसन्धानानुपपत्तिर्विपक्षे बाधकस्तर्कः । ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया विमुच्यते ऽविद्योपहितं ब्रह्मैव जीव इति व्यपदिश्यते ततश्च जीवब्रह्मणोर्जीवानां च परस्परभेदाभावादेक एवात्मेति वेदान्तिमतं प्रतिक्षेप्तुमाह । प्रतिशरीरमिति । विवादाध्यासितौ भिन्नौ किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माध्यस्तत्वादित्यनुमानं जीवब्रह्मणोर्भेदे मानम् । सुखादिवैचित्र्यदर्शनाज् जीवानामपि परस्परं भेदः सिध्यति । तदुक्तम् । नानात्मानो व्यवस्थात इति । विप्रतिपत्तौ तु बुद्ध्यादीति । बुद्ध्यादयो गुणा लिङ्गं यस्य स तथा । तथा च सूत्रम् । इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति(१) । बुद्ध्यादीनां गुणत्वं साधयति । बुद्ध्यादय इति । अनित्यत्वे सतीति । अत्र ग्राह्यत्वादित्युक्ते ऽनुमानग्राह्ये परमाण्वादौ गतं तत इन्द्रियेति । तावत्युक्ते घटादौ गतमत एकेति । ताव-

---

(१) न्यायसूत्रम् । अ॰ १ आ॰ १ सू॰ १० ।

तत्र बुद्ध्यादयो न गुणा भूतानां मानसप्रत्यक्षत्वाद् ये हि भूतानां गुणास्ते न मनसा गृह्यन्ते यथा रूपादयः । नापि दिक्कालमनसां गुणा विशेषगुणत्वाद् ये हि दिक्कालादिगुणाः संख्यादयो न ते विशेषगुणास्ते हि सर्वद्रव्यसाधारणगुणा एव बुद्ध्यादयस्तु विशेषगुणा गुणत्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपवदतो न दिगादिगुणाः । तस्मादेभ्योऽष्टभ्यो व्यतिरिक्तो बुद्ध्यादीनां गुणानामाश्रयो वक्तव्यः(१) । स एवात्मा । प्रयोगश्च बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रिताः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वाद् यस्तु पृथिव्याद्यष्ट-

---

त्युक्ते सुखत्वादौ गतमतोऽनित्यत्वे सतीति । परिशेषप्रकारं दर्शयति । तत्र बुद्ध्यादय इति । न गुणा भूतानामिति । बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वमतो भूतशब्देन पृथिव्यादयः पञ्चोच्यन्ते तेषां बुद्ध्यादयो न गुणा इत्यर्थः । बुद्ध्यादीनां विशेषगुणत्वं साधयति । बुद्ध्यादयस्तु विशेषगुणा इति । गुणत्वे सतीति । रूपत्वादौ व्यभिचारवारणाय सत्यन्तम् । यद्यपीदं विशिष्टमपि

---

(१) गुणी भवितव्यः—पा॰ ३ पु॰ ।

द्रव्यातिरिक्तद्रव्याश्रितो न भवति नासौ पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणोऽपि भवति यथा रूपादिरिति केवलव्यतिरेकी । अन्वयव्यतिरेकी वा । तथाहि बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रिताः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वाद् यो यदनाश्रितो गुणः स तदतिरिक्ताश्रितो भवति यथा पृथिव्याद्यनाश्रितः शब्दः पृथिव्याद्यतिरिक्ताकाशाश्रय इति । (तथा च बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्ताश्रयाः ।)(१) तदेवं पृथिव्याद्यष्टद्रव्यातिरिक्तो नवमं द्रव्यमात्मा सिद्धः । स च सर्वत्र कार्योपलम्भाद्विभुः(२) । परममहत्परिमा-

संख्यायां व्यभिचारि तथाप्येकेन्द्रियमात्रग्राह्यत्वादित्याकलनीयम् । अन्वयव्यतिरेकी वेति । विशेषाविवक्षायां यत्तच्छब्दाभ्यां सामान्येन निर्देशादन्वयव्यतिरेक्यपि सम्भवतीति भावः । एवं साधितस्यात्मनो विभुत्वं साधयति । स च सर्वत्र कार्योपलम्भादिति । आम्रफलादिलक्षणकार्योपलम्भादित्यर्थः । अयं भावः । आम्रादृष्टसहकारिसमवधाने समानेऽपि कस्यचित् फलन्ति

(१) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति २ । ४ पु० ।

(२) स च विभुः ज्ञानसुखादेस्तत्कार्यस्य सर्वत्र दर्शनात्—पा० ४ पु० ।

णावानित्यर्थः । विभुत्वाच्च नित्योऽसौ व्योमवत् । सुखादीनां वैचित्र्यात्[१] प्रतिशरीरं भिन्नः ।

तस्य भोगायतनमन्त्यावयवि शरीरम् । सुखदुःखान्यतर[२]साक्षात्कारो[३] भोगः । स च यदवच्छिन्न आत्मनि जायते तद्भोगायतनं तदेव

---

कस्यचिन्नेत्यतो दृष्टभिन्नमदृष्टमपेक्षणीयम् । तच्च तदुपकारकारिणि पवनपावकादौ क्रियां जनयत् स्वाश्रयसंयुक्त एव जनयति । तथा चोक्तम् । अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्येतान्यदृष्टकारितानीति[४] । तथा च तत्र स्थले आम्रफलादिलक्षणकार्यस्योपलम्भात् तत्कारणादृष्टाश्रयस्यात्मनो विभुत्वमङ्गीकर्तव्यमिति । विभुशब्दार्थमाह । **परममहदिति** । महदिति भावप्रधानो निर्देशः परमं महत्त्वं परिमाणमस्य स तथोक्तः ।

शरीरलक्षणमाह । **तस्य भोगायतनमिति** । करादावतिव्याप्तिवारणायान्त्यावयवीति । अन्त्यावयवित्वं तु द्रव्यानारम्भकावयवित्वं तावत्युक्ते घटादावतिव्याप्तिरिति तद्वारणाय पूर्वदलम् । भोगशब्दार्थमाह । **सुखदुःखेति** । अत्रान्यतरपदेन स्वर्गशरीरे नारकिशरीरे च शरीरल-

---

(१) वैचित्र्यादनुसन्धानाभावाच्च—पा० ४ पु० ।

(२) स्वसमवेतसुखदुःखान्यतर—पा० २ पु० ।

(३) सुखदुःखानुभवः—पा० ३ । ४ पु० ।

(४) वैशेषिकसूत्रम् । अ० ५ आ० २ सू० १३ । कर्मादृष्टकारितम्—सू० पा० ।

शरीरम् । चेष्टाश्रयो वा शरीरम् । चेष्टा तु हिताहितप्राप्तिपरिहारार्था क्रिया[१] । न तु स्पन्दनमात्रम् ।

शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिन्द्रियम् । अतीन्द्रियमिन्द्रियमित्युच्यमाने कालादेरपीन्द्रियत्वप्रसङ्गोऽत उक्तं ज्ञानकरणमिति ।

क्षणं नाव्याप्तं भवतीति ज्ञेयम् । लक्षणान्तरमाह । **चेष्टाश्रय** इति । तथा च सूत्रम् । चेष्टेन्द्रियार्थाश्रयः शरीरमिति[२] । अत्रापि करचरणादावतिव्याप्तिस्तत्परिहारार्थमन्त्यावयवित्वे सतीति द्रष्टव्यम् । न च मृतशरीरेष्वव्याप्तिः । कादाचित्कस्य चेष्टाश्रयत्वादेर्लक्षणत्वात् तेषामपि तथाभावादिति । **चेष्टा तु हिताहितेति** । हिताहितप्राप्तिपरिहारान्यतरार्थेत्यर्थः । तदुक्तम् । अत्र चेष्टा नाम प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया विवक्षितेति ।

इन्द्रियलक्षणमाह । **शरीरसंयुक्तमिति** । लक्षणपदानां व्यावर्त्यान्याह । **अतीन्द्रियमित्यादिना** । इन्द्रियमतिक्रान्तमतीन्द्रियमित्युक्ते ज्ञप्तौ परस्पराश्रयदोषप्रसङ्गाद् योगजधर्माजन्यसाक्षात्काराविषयत्वमतीन्द्रियशब्दार्थः । अन्ये तु स्मृत्यजनकज्ञानहेतुमनःसंयोगाश्रयत्वं तल्लक्षणमाहुः । उभयथापि शरीरत्वेन्द्रियत्वे भूतत्वमूर्त्तत्ववदुपाधिविशेषौ । ननु जातिरूप एव कुतो न स्याता-

(१) परिहारार्थमङ्गस्पन्दनम्—पा· ४ पु· ।

(२) न्यायसूत्रम् । अ· १ आ· १ सू· ११ ।

तथापि इन्द्रियार्थसन्निकर्षे ऽतिप्रसङ्गोऽत उक्तं शरीरसंयुक्तमिति। शरीरसंयुक्तं ज्ञानकरणमिन्द्रियमित्युच्यमान आलोकादेरिन्द्रियत्वप्रस-

---

मिति चेत्। न। पृथिवीत्वादिना परापरभावानुपपत्तेरिति। अयं भावः। जात्योरपि यदि सङ्करः स्वीक्रियेत तदा गोत्वाश्वत्वयोरपि जातित्वलक्षणसाधारणधर्मदर्शनजन्या साङ्कर्यशङ्का दुर्निवारा स्यात् तथा च तयोर्विरोधासिद्धावश्वत्वस्य गोत्वविरुद्धस्योपलब्ध्या गोत्वविरहानुमानं न स्यात् न स्याच्च समाविष्टजातिगतपरापरभावनियमलक्षणविपक्षबाधकमूलकं शिंशपात्वेन वृक्षत्वानुमानमिति। सङ्करो नाम परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोः सामानाधिकरण्यम्। अन्यत्राप्युक्तम्।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥ इति[१]

अस्यार्थः। व्यक्तेरभेद आकाशत्वे। तुल्यत्वं नामान्यूनानतिरिक्तव्यक्तिकत्वं बुद्धित्वज्ञानत्वयोः। अत्रैका जातिर्नोभयम्। सङ्करो मूर्त्तत्वस्य भूतत्वेन मूर्त्तत्वमवच्छिन्नपरिमाणवत्त्वं भूतत्वं निरुक्तं प्राक्। सामान्ये चेत् सामान्यं तर्हि तत्रापि तुल्यन्यायेनापरमेवं तत्रापीत्यनवस्थितिः। रूपं विशेषाणामत्यन्तव्यावर्तकत्वं तच्च जातिमत्त्वे हीयेत। असम्बन्धः समवाये। अत्र जातेर्वृत्तिः

---

(१) इयं कारिका द्रव्यकिरणावल्यामुदयनाचार्यैरुक्ता। धृता च तथा चोक्तमित्यादिना कारिकावलीटीकायां सिद्धान्तमुक्तावल्यां विश्वनाथपञ्चाननैः।

न्तोऽत उक्तमतीन्द्रियमिति । तानि चेन्द्रियाणि षट् । घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि । तत्र गन्धोपलब्धिसाधनमिन्द्रियं घ्राणम् । नासाग्रवर्ति । तच्च पार्थिवं गन्धवत्त्वाद् घटवत् । गन्धवत्त्वं च गन्धग्राहकत्वात्(१) । यदिन्द्रियं रूपादिषु

---

समवायात्मिका न सम्भवत्यात्माश्रयापत्तेरित्यर्थः । सिध्यति तु किञ्चित्कार्यतावच्छेदकतया यथा धर्मजन्यतावच्छेदकतया सुखत्वम् । अधर्मजन्यतावच्छेदकतया वा दुःखत्वम् । किञ्चित्तु कारणतावच्छेदकतया सिध्यति यथा धर्मत्वादि । किञ्चित्तु अनुगतप्रतीतिजनकतया यथा गोत्वादीत्यादि दिक् । ननु त्वगेव बुद्धीन्द्रियं सैव च विचित्रशक्तिमत्तया रूपादिसाक्षात्कारकारिणीति सांख्यमतमपाकर्तुमाह । तानि चेति । कर्मेन्द्रियाणि च वाक्पाणिपादपायूपस्थान्यधिकान्याहुः । तत्रेति । आत्मा जिघ्रति गन्धमनेनेति घ्राणं करणाधिकरणयोश्चेति(२) करणे ल्युट् । उपलब्धिसाधनं घ्राणमित्युक्ते अलक्ष्ये चक्षुरादौ गतमत उक्तं गन्धेति । तावत्युक्ते मृगमदगन्धाभिव्यञ्जके घृतादौ गतमत उक्तमिन्द्रियमिति । तावत्यप्युक्ते सर्वार्थोपलब्धिसाधने मनसि गतं तदर्थं बाह्येति द्रष्टव्यम् । ननु तत् क्व वर्तत इत्याकाङ्क्षायामाह । नासाग्रेति । तथा च

---

(१) कुङ्कुमगन्धव्यञ्जकतैलादिवदित्यधिकः पाठः ४ पु० । ।

(२) पाणिनिसूत्रम् । अ० ३ पा० ३ सू० ११७ ।

पञ्चसु मध्ये यं गुणं गृह्णाति तदिन्द्रियं तद्गुण-संयुक्तं यथा चक्षू रूपग्राहकं रूपवत्[1]। रसोपलब्धिसाधनमिन्द्रियं रसनम्। जिह्वाग्रवर्ति। तच्चाप्यं रसवत्त्वाद्रसवत्त्वं च रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वाल्लालावत्। रूपोपलब्धि-साधनमिन्द्रियं चक्षुः। कृष्णताराग्रवर्ति[2]। तच्च तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जक-

प्रत्यक्षस्य नासाग्रादेरिन्द्रियाधिष्ठानत्वमेवेति भावः। रसोपलब्धीति। शुष्करसाभिव्यञ्जकलालायामतिव्याप्तिनिरासार्थमत्रेन्द्रियपदम्। शेषं पूर्ववत्। रसनस्याप्यत्वं साधयितुमनुमानं रचयति। तच्चाप्यमित्यादि। अत्राभिव्यञ्जकत्वादित्युक्ते रूपादौ व्यभिचारस्तदर्थमुक्तं रसस्येति। तावत्युक्ते मनसि व्यभिचारस्तद्वारणायैवकारः। एतावतापि रसनस्य रसत्वस्याप्यभिव्यञ्जकत्वेन हेतुरसिद्धः स्यादतो रूपादिष्विति। नन्वसिद्धिवारकं व्यर्थमिति चेत्। न। अप्रसिद्धेरपि वारकस्यैतस्य व्याप्तिग्रहौपयिकत्वेन सार्थकत्वात्। तदुक्तम्। यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना ग्रहीतुं न शक्यते तस्यैव सार्थकत्वात्। वह्निनिरूपितधूमनिष्ठव्याप्तिग्रहे धूमत्वमेव तादृशं न तु नीलत्यपीति। रूपोपलब्धीति। रूपव्यञ्ज-

(१) गन्धग्राहकं च घ्राणमतो गन्धवदित्यधिकः २।४ पु०।

(२) तारान्तर्वर्ति—पा० ३ पु० कृष्णगोलकताराग्रवर्ति—पा० ४ पु०।

त्वात्[1] प्रदीपवत् । स्पर्शोपलब्धिसाधनमिन्द्रियं त्वक् । सर्वशरीरव्यापि तत्तु वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वादङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनवातवत् । शब्दोपलब्धिसाधनमिन्द्रियं श्रोत्रम् । तच्च कर्णशष्कुल्यवच्छिन्नमाकाशमेव[2] न द्रव्यान्तरं शब्दगुणत्वात् । तदपि शब्दग्राहकत्वाद् यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यद्गुणव्यञ्जकं तत् तद्गुणसंयुक्तं यथा चक्षुरादि रूपादिग्राहकं रूपाद्युक्तम् । शब्दग्राहकं च श्रोत्रमतः शब्दगुणकम् । सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्चाणुपरिमाणं हृदयान्तर्वर्ति । ननु चक्षुरादीन्द्रियसद्भावे किं प्रमाणम् । उच्यते । अनुमानमेव तथाहि

कप्रभायामतिव्याप्तिनिरासायात्रेन्द्रियपदम् । शेषं समानम् । स्पर्शोपलब्धीति । स्पर्शाभिव्यञ्जकव्यजनपवनादौ व्यभिचारवारणायात्रेन्द्रियपदम् । समानमितरत् । शब्दोपलब्धीति । शब्दाभिव्यञ्जकेऽनुकूलवायौ व्यभिचारवारणायेन्द्रियपदम् । अन्यत् समानम् । चक्षुरादिस-

(१) व्यञ्जकद्रव्यत्वात्—पा· १ पु· एवमग्रेऽपि ।
(२) वच्छिन्ननभोदेशः—पा· ४ पु· ।

रूपाद्युपलब्धयः करणसाध्याः क्रियात्वाच् छिदिक्रियावत् ।

अर्थाः षट्पदार्थाः । ते च द्रव्यगुणकर्मसामान्यविशेषसमवायाः । प्रमाणादयो यद्यप्यत्रैवान्तर्भवन्ति तथापि प्रयोजनवशाद् भेदेन कीर्तनम् । तत्र समवायिकारणं द्रव्यम् । गुणाश्रयो वा । तानि च द्रव्याणि पृथिव्यप्तेजो-

---

ऽभावे ऽनुमानं दर्शयति । रूपाद्युपलब्धय इति । क्रियात्वादिति । क्रियात्वमिह कार्यत्वं तच्च अभूत्वा भावित्वमिति ज्ञेयम् ।

तुरीयं प्रमेयमाह । अर्था इति । नन्वभावोऽपि सप्तमः पदार्थोऽस्तीति कथं षडित्युक्तिरिति चेत् । न । विधिमुखप्रत्ययवेद्यतया भावाः षडित्याशयात् । प्रमाणादय इति । अयं भावः । यद्यपि द्रव्यादिषट्सु पदार्थेषु प्रमाणादिषोडशानां निरूपणमन्तर्भवति तथापि प्रमाणादीनां साक्षान्निःश्रेयसाङ्गत्वविवक्षया प्राधान्येन पृथक् कीर्तनम् । षण्णां तु तदविवक्षया अप्राधान्येनेति । तत्रेति । द्रव्यादिषट्कमध्य इत्यर्थः । द्रव्याणि परिसङ्ख्यष्टे तानि च द्रव्याणीति । अत्र न्यूनाधिकसंख्याव्यवच्छेदपराद् विभागादेव नवत्वे लब्धे स्पष्टार्था नवेत्युक्तिः । अत्र शङ्खः पाण्डर एवेतिवद्विशेषणसङ्गत एवकारोऽयोगव्यवच्छेदार्थ इति द्रव्ये सुवर्णे नवबाह्यत्वं निषिध्यते । पार्थ एव

वाय्वाकाशकालदिगात्ममनांसि नवैव । तत्र पृथिवीत्वसामान्यवती पृथिवी। काठिन्यकोमलत्वादिनावयवसंयोगविशेषेण युक्ता । घ्राणशरीरमृत्पिण्डपाषाणवृक्षादिरूपा । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती। सा च द्विविधा । नित्याऽनित्या च । नित्या परमाणुरूपा । अनित्या च कार्यरूपा। द्विविधायाः पृथिव्या रूपरसगन्धस्पर्शा अनित्याः पाकजाश्च । पाकस्तु

---

धनुर्धर इतिवद्वा विशेष्यसङ्गत एवकारोऽयमन्ययोगव्यवच्छेदार्थ इति नवबाह्ये तमसि द्रव्यत्वं निषिध्यत इत्युभयथापि नवैवेतिनियमः सङ्घटीति। काठिन्येति। आदिपदादतिनिबिडत्वादिकं गृह्यते । काठिन्यकोमलत्वादिश्चासाववयवसंयोगविशेषश्चेति स तादृशस्तेन युक्तेत्यर्थः। घ्राणशरीरेति। घ्राणशरीरयोर्लक्षणमुक्तम्। मृत्पिण्डपाषाणादिस्तु विषयः। विषयत्वं च न जातिस्तद्रहितयोरपि सामान्याभावयोर्विषयत्वात्। किं तु प्रतीयमानतया भोगसाधनं विषय इति । तस्या द्रव्यत्वसिद्धये गुणान् दर्शयति। रूपरसेति। पृथिव्या विभागमाह। सा चेत्यादि। नित्या परमाणुरूपेति। सक्रियो नित्यः परमाणुस्तद्रूपा नित्येत्यर्थः। अनित्येति । द्व्यणुकादिकार्यरूपा

तेजःसंयोगः तेन पृथिव्याः पूर्वरूपादयो नश्यन्त्यन्ये जन्यन्त इति पाकजाः ।

अप्त्वसामान्ययुक्ता आपः । रसनेन्द्रियशरीरसरित्समुद्रहिमकरकादिरूपाः । गन्धवर्जस्नेहयुक्तपूर्वोक्तगुणवत्यः । नित्या अनित्याश्च । नित्यानां रूपादयो नित्या एव । अनित्यानां रूपादयोऽनित्या एव ।

तेजस्त्वसामान्यवत् तेजः । चक्षुःशरीरसवितृसुवर्णवह्निविद्युदादिप्रभेदम् । रूपस्पर्शसं-

---

अनित्येत्यर्थः । पाकपदार्थमाह । पाकस्त्विति । तेनेति । पृथिव्यां तेजःसंयोगेन पूर्वरूपादिपरावृत्त्या तदन्यरूपादेरुत्पादनाद्रूपादीनां स्पर्शान्तानां पाकजत्वमित्यर्थः । अत्र सम्प्रदायद्वयम् । तथाहि रूपादयो जन्यपृथिव्यामपाकजाः कारणगुणपूर्वका एवेति पीलुपाकवादिनो वैशेषिकाः । नैयायिकास्तु एकस्मिन्नेव घट आमे श्यामस्य पक्वे च रक्तस्य दर्शनात् तत्राप्यनियममाचक्षत इति । मीमांसकास्तु एकैका एव हि नीलारुणादिव्यक्तय इति मन्वाना रूपादीनां पाकजत्वमपाकजत्वं वोभयमपि नेच्छन्ति ।

समानासमानजातीयव्यावृत्तस्वरूपप्रतिपादनार्थमपां लक्षणं दर्शयति । अप्त्वसामान्येति । रसनेन्द्रियेति । अत्रादिशब्दाल्लालादिकं ग्राह्यम् ।

तेजो लक्षयति । तेजस्त्वेति । चक्षुरिति । अत्र

स्पर्शपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारवत्[1]। नित्यमनित्यं च पूर्ववत्[2] तच्चतुर्विधम्। उद्भूतरूपस्पर्शमनुद्भूतरूपस्पर्शमनुद्भूतरूपमुद्भूतस्पर्शमुद्भूतरूपमनुद्भूतस्पर्शं चेति। उद्भूतरूपस्पर्शं यथा[3] सौरादितेजः पिण्डीभूतं तेजो वह्न्यादिकम्। सुवर्णं तु उद्भूताभिभूतरू-

चक्षुरिन्द्रियं सवित्रादिकं तु विषयरूपमिति विवेकः। विषयसंज्ञकं चतुर्विधम्। भौमं दिव्यमुदर्यमाकरजं चेति। न्यायभाष्योक्तं चातुर्विध्यं दर्शयति। उद्भूतेति। उद्भूतत्वं जातिभेदः तच्च रूपत्वादिव्याप्यं नानेति न जातिसङ्करः। एवमनुद्भूतत्वमपि। सुवर्णमिति। ननु सुवर्णं पार्थिवं

(१) संस्काराख्यैकादशगुणम्–पा॰ ४ पु॰।

(२) तत्तु शरीरेन्द्रियविषयरूपम्। शरीरमादित्यलोके रूपोपलम्भकमिन्द्रियं चक्षुः पूर्वोक्तो विषयः भौमदिव्योदर्याकरजप्रभेदः। तत्र भूमिभवं पार्थिवं दीपनकमूर्द्ध्वज्वलनस्वभावम्। दिवि भवं तु जलदीपकं विद्युदादिरूपम्। उदर्यं पुनरभ्यवहृतपार्थिवाप्यदीपनकं रसमलधातुरूपपरिणामयुक्तम्। खनिजं तु सुवर्णरजतकांस्यपित्त्वटसीसरूपम्। अथ न कथं सुवर्णादि पार्थिवं नैमित्तिकद्रवत्वाद् घृतवदिति। अत्रोच्यते। नेयं व्याप्तिरसम्भवात् अनेकसामान्यविशेषरूपादिकारणत्वे पृथिवीलक्षणे सति हि तद् भवति अन्यथा तु विपक्षे बाधकाभावः। किं तु सुवर्णादि न पार्थिवमत्यन्ताग्निसंयोगे ऽप्यपरावर्तमानत्वाज् जलवत् सुवर्णादि तैजसं पार्थिवाप्याभ्यामन्यत्वे सति रूपवत्त्वात् सूर्यालोकवत्। इति पाठोऽधिकश्चतुर्थपुस्तके।

(३) तत्राद्यं यथा–पा॰ २ पु॰।

पस्पर्शं तदनुद्भूतरूपत्वे ऽचाक्षुषं स्यादनुद्भूतस्पर्शत्वे त्वचा[1] न गृह्येत । अभिभवस्तु बलवत्सजातीयेन पार्थिवरूपेण स्पर्शेन च कृतः । अनुद्भूतरूपस्पर्शं तेजो यथा चक्षुरिन्द्रियम् । अनुद्भूतरूपमुद्भूतस्पर्शं यथा तप्तवारिस्थं तेजः । उद्भूतरूपमनुद्भूतस्पर्शं यथा प्रदीपप्रभामण्डलम् ।

वायुत्वाभिसम्बन्धवान् वायुः । त्वगि-

---

नैमित्तिकद्रवत्वाद् घृतादिवदिति चेद् विमतं न पार्थिवं अत्यन्ताग्निसंयोगे ऽप्यपरावर्तमानरूपत्वाज् जलवत् तथा नाप्याप्यमसांसिद्धिकद्रवत्वाद् घटादिवदित्यनुमानद्वयेन हेतुं सिद्धं कृत्वा तैजसं चैतत् पार्थिवाप्याभ्यामन्यत्वे सति रूपवत्त्वात् सूर्यालोकवदिति तैजसत्वसाधनात् । अभिभवस्त्विति । अभिभवलक्षणं तूदयनेन कृतम् । बलवत्सजातीयग्रहणकृतमग्रहणं खल्वभिभव इति ।

वायुं लक्षयति । वायुत्वेति । वायुत्वं जातिस्तेनाभिमतः सम्बन्धः समवायलक्षणस्तद्वान् वायुरित्यर्थः । त्वगिन्द्रियेति । त्वगिन्द्रियस्य लक्षणं प्रागुक्तम् । प्राणवातस्तु शरीराभ्यन्तरचारी वायुः । स चैक एव कार्यभेदात् पञ्च संज्ञा लभते मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्

---

(१) स्पर्शनेन—पा॰ २ पु॰ ।

न्द्रिय[1] प्राणवातादिप्रभेदः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगवान्[2] । स च स्पर्शाद्यनुमेयः । तथाहि योऽयं वायौ वाति अनुष्णाशीतस्पर्श उपलभ्यते स गुणत्वाद् गुणिनमन्तरेणानुपपद्यमानो गुणिनमनुमापयति । गुणी च वायुरेव । पृथिव्याद्यनुपलब्धेः । वायुपृथिवीव्यतिरेकेण अनुष्णाशीतस्पर्शाभावात्[3] । स च द्विविधो नित्यानित्य-

---

प्राणः । रसमलधातूनामधोनयनादपानः । समं नयनात् समानः । ऊर्द्ध्वं नयनादुदानः । नाडीमुखेषु विततनाद्व्यान इति । द्रव्यत्वव्यवस्थितये गुणानाह । स्पर्शसंख्येति । अत्र वृद्धाः ।

वायोर्नवैकादश तेजसो गुणा
जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे
महेश्वरेऽष्टौ मनसस्तथैव च[4] ॥ इति

---

(१) शरीरत्वगिन्द्रिय—पा॰ ३ पु॰ ।

(२) संस्कारवान्—पा॰ ४ पु॰ ।

(३) रूपसाहचर्याग्रहणे सति स्पर्शोऽनुष्णाशीतोऽपाकज उपलभ्यते स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीस्पर्शवत्—पा॰ ४ पु॰ ।

(४) इयं कारिका दिनकर्यां मुक्तावलीप्रकाशाख्यायां सिद्धान्तमुक्तावलीटीकायां धृता ।

भेदात् । नित्यः परमाणुरूपो वायुरनित्यः कार्यरूप एव । (एवं पृथिव्यादिभूतचतुष्टयं नित्यं कार्यं चोक्तम् ।)[१]

तत्र पृथिव्यादीनां चतुर्णां कार्यद्रव्याणामुत्पत्तिविनाशक्रमः कथ्यते । द्वयोः परमाण्वोः क्रियया संयोगे सति द्व्यणुकमुत्पद्यते । तस्य परमाणू समवायिकारणम् । तत्संयोगोऽसमवायिकारणम् । अदृष्टादि निमित्तकारणम् । ततो द्व्यणुकानां त्रयाणां क्रियया संयोगे सति त्र्यणुकमु-

---

सृष्टिप्रलयौ व्युत्पादयितुमारभते । तत्रेत्यादिना । तत्र द्विविधेषु पृथिव्यादिषु द्व्यणुकादिप्रक्रमेण सृष्टिः । क्रियाविभागादिन्यायेनापरमाण्वन्तः प्रलय इति सर्वं विविच्य दर्शयति । द्वयोः परमाण्वोरित्यादि । लब्धवृत्तिकादृष्टवदात्मसंयोगात् परमाणोः क्रिया सा चाद्येति गीयते । तदुक्तम् । अणुमनसोश्चाद्यं कर्मेति[२] । मनस आद्यं कर्म तु सुषुप्त्यनन्तरकालीनमिति विवेचनीयम् । ततो विभागस्ततः पूर्वसंयोगनाशस्ततः परमाण्वोः संयोगो भवतीति ज्ञेयम् । तस्य परमाणू इति । एकस्यानारम्भकत्वात् त्र्यादिकल्पने मानाभावादिति भावः । अदृष्टादीति ।

---

(१) ( ) एतन्मध्यस्थो नास्ति २ । ३ । ४ पु० ।

(२) एतद्वाक्यं अ० ५ आ० २ सू० १३ वैशेषिकसूत्रान्तर्गतमक्षरम् ।

त्पद्यते । तस्य द्व्यणुकानि समवायिकारणम् । शेषं पूर्ववत् । एवं त्र्यणुकैश्चतुर्भिश्चतुरणुकम् । चतुरणुकैरपरं स्थूलतरं स्थूलतरैरपरं स्थूलतमम् । एवं क्रमेण महापृथिवी महत्य आपो महत् तेजो महांश्च वायुरुत्पद्यते । कार्यगता रूपादयः स्वाश्रयसमवायिकारणगतेभ्यो रूपादिभ्यो जायन्ते । कारणगुणा हि कार्यगुणानारभन्त इतिन्यायात् । इत्यमुत्पन्नस्य रूपादिमतः कार्यद्रव्यस्य घटादेरवयवेषु कपालादिषु नोदनादभिघाताद्वा क्रिया जायते । तया विभागस्ते-

---

आदिशब्दादीश्वरेच्छादिकं गृह्यते । एवं क्रमेण महापृथिवीत्यादि । यद्यपि प्रशस्तपादभाष्ये आदौ महान् वायुरुत्पन्नस्तिष्ठति ततस्तस्मिन्नेव वायौ महान् सलिलराशिस्ततस्तस्मिन्नेव सलिलराशौ महापृथिवी ततो महांस्तेजोराशिरिति क्रम उपलभ्यत इति विरोधस्तथाप्यत्र क्रमस्याविवक्षितत्वान्न दोष इति ज्ञेयम् । कार्यगता इति । यद्यपि नैयायिकानां पिठरपाकाभ्युपगमात् सम्भवन्त्येव कार्ये पाकजा रूपादयस्तथापि यत्रावयविनि न पाकस्तत्र स्थल इदं ज्ञेयम् । नोदनादभिघाताद्वेति । नोदकनुद्यमानयोः परस्परविभागाजनकं यत् कर्म तस्य जनको यः संयोगस्तन्नोदनम् । यथा धनुर्ज्याशरसंयोगः स च शरकर्षणाख्यं कर्म

नावयव्यारम्भकस्यासमवायिकारणीभूतस्य संयोगस्य नाशः क्रियते ततः कार्यद्रव्यस्य घटादेरवयविनो नाशः । एतेनावयव्यारम्भकासमवायिकारणनाशे[1] द्रव्यनाशो दर्शितः । क्वचित् समवायिकारणनाशे द्रव्यनाशो यथा पूर्वोक्तस्यैव पृथिव्यादेः संहारे सञ्जिहीर्षोर्महेश्वरस्य सञ्जिहीर्षा जायते ततो द्व्यणुकारम्भकेषु पर-

---

जनयति । तदुक्तम् । नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्काराद्उत्तरमुत्तरं तथोत्तरं चेति[2] । अस्यार्थः । इषुज्यासंयोगान्नोदनाख्यादाद्यमिषुकर्म ततो वेगस्ततस्तस्मात् कर्म ततः शरज्याविभागस्तदेतदुत्तरं कर्म तज्जनितेन च वेगेन पुनः कर्मान्तरमेवमापतनं कर्मसन्तानमिति । अभिघातस्तु स्पर्शवद्वेगवद्द्रव्यसंयोगात्मा यथा मुषलपक्वेष्टकादेरुलूखलपाषाणादौ पातितस्य संयोगः स चोत्पतनाख्यं कर्म जनयति । महेश्वरस्य सञ्जिहीर्षा जायत इति । यद्यप्यस्तीत्येवमाकारिका भगवदिच्छा नित्यैव तथाप्युपाधिरुत्पद्यत इत्येतत्परमिदम् । तदपि संहारादिकारणसमवधानमेवेत्यर्थः । एकस्या अपि तस्याः सिसृक्षासञ्जिहीर्षेत्यादिभेदोऽपि सर्गसंहारात्मकफलोपाधि-

---

(१) एतेनासमवायिकारणनाशेन–पा॰ ३ पु॰ ।

(२) वैशेषिकसूत्रम् । अ॰ ५ आ॰ १ सू॰ १७ । तत्रोपस्कारकृद्विवृतिकृन्मते संस्कारादुत्तरं तथोत्तरमुत्तरं चेति पाठः ।

माणुषु[१] क्रिया तया विभागस्ततस्तयोः संयोगनाशे[२] सति द्व्यणुकेषु नष्टेषु स्वाश्रयनाशात् त्र्यणुकादिनाश एवं क्रमेण पृथिव्यादिनाशः। यथा वा तन्तूनां नाशे पटनाशः। तद्गतानां रूपादीनां स्वाश्रयनाशेनैव नाशः। अन्यत्र तु सत्येवाश्रये विरोधिगुणप्रादुर्भावेण विनाशः। यथा पाकेन घटादौ रूपादि[३]नाश इति।

---

भेदादेवेति द्रष्टव्यम्। ननु द्रव्यनाशः क्वचित् समवायिनाशात् क्वचिच्चासमवायिनाशादतोऽननुगमस्ततश्च व्यभिचारादकारणत्वमिति। मैवम्। निमित्तकारणेतरकारणनाशत्वस्यानुगतस्य सत्त्वादिति। विनाशक्रमोऽपि भाष्योक्त एवानुसर्तव्यः। भाष्यं तु तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव प्रकारेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्यपूर्वस्य विनाश इति। अवयवक्रियाविभागादिन्यायेन जलादौ सति पार्थिवस्य महाभूतस्य विनाशः। तथा ज्वलनादौ सति जलस्येत्यादि भाष्यार्थः। अन्यत्र तु सत्येवेति। इदं च स्वमतावष्टम्भेनोक्तम्। वैशेषिकनये तु पीलुपाकाश्रयणादापाकनिक्षिप्तस्य घटादेरवयवक्रियाविभागादिन्यायेन परमाण्वन्तविनाशे पुनरपि परमाणुषु रूपो-

---

(१) ततोऽणुषु-पा॰ १। ३ पु॰।

(२) विभागात् संयोगनाशे-पा॰ २। ३ पु॰।

(३) घटादिरूपादेः-पा॰ २ पु॰।

किं पुनः परमाणुसद्भावे प्रमाणम्। उच्यते। यदिदं जालं सूर्यमरीचिस्थं सर्वतः सूक्ष्मतमं रज उपलभ्यते तत् स्वल्पपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वाद् घटवत्। तच्च द्रव्यं कार्यमेव महद्द्रव्यारम्भकस्य कार्यत्वनियमात्। तदेवं द्व्यणुकाख्यं द्रव्यं सिद्धम्। तदपि स्वल्पपरिमाणसमवायिकारणारब्धं कार्यद्रव्यत्वाद् घटवत्। यस्तु द्व्यणुकारम्भकः स एव परमाणुः स चानारब्ध एवेति। ननु कार्यद्रव्यारम्भकस्य कार्यद्रव्यत्वा[1]व्यभिचारात् तस्य कथमनारब्धत्वम्। उच्यते। अनन्तकार्यपरम्परादोषप्रसङ्गात्। तथा च सत्यनन्तद्रव्यार-

त्पत्तौ द्व्यणुकादिप्रक्रमेण कार्यद्रव्य उत्पन्ने कारणगुणपूर्वक्रमेण रूपाद्युत्पत्तिरित्याकलनीयम्।

नन्विदं सृष्टिप्रलयनिरूपणमनुपपन्नं तदुपपादकपरमाणुसद्भावे प्रमाणाभावादिति शङ्कते। किं पुनरिति। सिद्धान्तयति। उच्यत इति। तथा च सत्यनन्तेति। नन्वनन्तावयवारब्धत्वाविशेषेऽपि क्वचित् तादृग्बहुतरावयवारब्धत्वं क्वचित् तादृगल्पावयवारब्धत्वमिति परिमाणविशेषः स्यादिति चेत्। अत्रोच्यते। सुमेरुपदं स्थूलपरं

(१) कार्यत्वा—पा॰ २। ४ पु॰।

ब्यत्वाविशेषेण मेरुसर्षपयोरपि तुल्यपरिमाण-त्वप्रसङ्गः। तस्मादनारब्ध एव परमाणुः। द्व्यणुकं तु द्वाभ्यामेव परमाणुभ्यामारभ्यत एकस्या-नारम्भकत्वात् त्र्यादिकल्पनायां प्रमाणाभा-वात्। त्र्यणुकं तु[1] त्रिभिरेव द्व्यणुकैरारभ्यत एक-स्यानारम्भकत्वात्। द्वाभ्यामारम्भे कार्यगुण[2]म-हत्त्वानुपपत्तिप्रसङ्गात्। कार्ये हि महत्त्वं[3] का-रणमहत्त्वाद्वा कारणबहुत्वाद्वा। तत्र प्रथमस्या-सम्भवाच्चरममेषितव्यम्। न च चतुरादिक-ल्पनायां प्रमाणमस्ति त्रिभिरेव महत्त्वारम्भोप-पत्तेरिति।

---

सर्षपपदं च द्व्यणुकपरं तथा च यदि द्व्यणुकं सावयवावयवा-रब्धं स्यात् महत् स्यादिति महत्त्वापादनमेव तुल्यपरिमाण-त्वापादनशब्दार्थः। ननु यद्यप्यनुमानेन परमाणुः सिद्धस्त-थापि कियत्सङ्ख्याकेन तेन द्व्यणुकमारभ्यत इत्याकाङ्क्षा-यामाह। द्व्यणुकं त्विति। एकस्येति। एकस्यासमवा-यिकारणाभावादिति भावः। त्रिभिरेवेति। कारणबहुत्वं हि कार्यमहत्त्वं प्रति प्रयोजकमित्युक्तं तच्च कपिञ्जलाधिक-

---

(१) द्व्यणुकारब्धं द्रव्य–पा॰ २ पु॰। त्र्यणुकाख्यं च–पा॰ ३ पु॰।
(२) कार्यगत–पा॰ २। ३ पु॰।
(३) कार्यमहत्त्वं-पा॰ ४ पु॰।

शब्दगुणमाकाशम् । शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागवत् । एकं विभु नित्यं च । शब्दलिङ्गकं च । शब्दलिङ्गकत्वमस्य कथम् । परिशेषात् । प्रसक्तप्रतिषेधे ऽन्यत्राप्रसङ्गात् परिशिष्यमाणे सम्प्रत्ययः परिशेषः । तथाहि शब्दस्तावद् विशेषगुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वाद्[1] रूपादिवत् । गुणश्च

रणन्यायेन त्रित्व एव पर्यवस्यतीत्याशयः ।

इत्थं पृथिव्यादिद्रव्यचतुष्टयं निरूप्येदानीं पञ्चमं द्रव्यं निरूपयति । शब्दगुणमिति । परिशेषादिति । प्रसक्तप्रतिषेधे ऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेषस्तस्मादित्यर्थः । परिशेषमेवोपपादयितुमादौ शब्दस्य गुणत्वं साधयति । शब्दस्तावदिति । सामान्यवत्त्वे सतीति । अत्र ग्राह्यत्वादित्युक्ते ऽनुमानग्राह्ये परमाणौ व्यभिचारोऽत उक्तमिन्द्रियेति । तावत्युक्त आत्मनि गतं तदर्थं बाह्येति । तावत्यप्युक्ते योगिबाह्येन्द्रियग्राह्ये परमाण्वादौ गतं तदर्थमस्मदादीति । तावत्यप्युक्ते घटादौ गतमत उक्तमेकेति । एकेन्द्रियग्राह्यत्वं चैकेन्द्रियमात्रग्राह्यत्वमतो न पुनर्घटादौ व्यभिचारः । रूपत्वादौ व्यभिचारवारणाय सत्यन्तम् । गुणत्वसाधनस्य फलमाह । गुणश्चेति । शब्दः कचि-

(१) शब्दस्तावत् सामान्यवत्त्वे सति बाह्येकेन्द्रियग्राह्यत्वाद् गुणः–पा· ४ पु· ।

गुणत्वाश्रित एव । न चास्य पृथिव्यादिचतुष्टयमात्मा च गुणी भवितुमर्हति श्रोत्रग्राह्यत्वाच्छब्दस्य । ये हि पृथिव्यादीनां गुणा न ते श्रोत्रेन्द्रियेण गृह्यन्ते यथा रूपादयः शब्दस्तु श्रोत्रेण गृह्यते । न दिक्कालमनसां गुणः विशेषगुणत्वात् । अत एभ्योऽष्टभ्योऽतिरिक्तः शब्दगुणी एषितव्यः[1] । स एवाकाश इति । स चैको भेदे प्रमाणाभावादेकत्वेनैवोपपत्तेः । एकत्वाच्चाकाशत्वं नाम सामान्यमाकाशे[2] न विद्यते सामान्यस्यानेकवृत्तित्वात् । विभु चाकाशम् । परममहत्परिमाणमित्यर्थः । सर्वत्र तत्का-

दाश्रितो गुणत्वात् स्पर्शवदित्याशयः । परममहदिति ।

(१) अनुमीयते– पा॰ ४ पु॰ । अत्र चतुर्थपुस्तकेऽधिकः पाठः । तथा चोक्तम् ।

शङ्खादितः क्वचित्तिष्ठन् वीचीतरङ्गसन्निभः ।
श्रुतिविवरमापन्नः शब्दो बोध्यो न चान्यथा ॥
वायुस्तत्र निमित्तं स्यान्न समवायिकारणम् ।
श्रोत्रत्वचोरभेदः स्याद् बधिरत्वं सुदुर्घटम् ॥
अदृष्टात् कर्णबाधा चेत् चतुर्भिर्नियमादितः ।
वैचित्र्यं व्यक्तिभेदे स्यात् तथापि तत एव चेत् ॥
सर्वदैवैकजातित्वं वक्तुं ज्ञातुं कुतो न चेत् ।
कल्पनागौरवात् तर्हि पाण्डित्यं भवतो गुरु ॥ इति ।

(२) सामान्यविशेषः–पा॰ ४ पु॰ ।

र्थोपलब्धेः। अत एव विभुत्वान्नित्यमिति।

कालोऽपि दिग्विपरीतपरत्वापरत्वानुमेयः। संख्यापरिमाणपृथक्त्वसंयोगविभागवान्। एको नित्यो विभुश्च। कथमस्य दिग्विपरीतपरत्वापरत्वानुमेयत्वम्। उच्यते। सन्निहिते वृद्धे

महदिति भावप्रधानो निर्देशः परमं महत्त्वं परिमाणमस्य स तथोक्तः तथा चान्महतः समानाधिकरणजातीययोरि[1]त्यात्वं न भवति। इदं त्ववधेयम्। आकाशपदशक्यं च शब्दाश्रयत्वं न त्वपृथक्त्व्यातिरिक्तद्रव्यत्वं गौरवात्। क्वचित् तत्त्वेन शक्तिभ्रमात् तदुपस्थितिरिति। केचित्तु आकाशपदस्य व्यक्तिमात्रे शक्तिराकाशत्वं शक्त्युपाधिस्तेनाकाशपदान्न निष्प्रकारकं स्मरणम्। अस्तु वा यदाकाशत्वांशे संस्कारानुद्बोधस्तदा निष्प्रकारकमपि स्मरणमित्याहुः। तन्न। वृत्त्यनुपस्थितस्याप्यन्वयबोधे गोत्वादेरपि गोपदशक्यत्वं न स्यादिति।

पृथिव्यादिभूतपञ्चकं निरूप्य सम्प्रति कालं निरूपयति। कालोऽपीत्यादि। सूर्यपरिस्पन्दानुत्पाद्ये परत्वापरत्वे दिक्कृते तद्विपरीते सूर्यपरिस्पन्दोत्पाद्ये परत्वापरत्वे कालकृते तदनुमेयः। एवंविधपरत्वापरत्वासमवायिकारणसंयोगाश्रयविभुत्वं काललक्षणमित्यर्थः। सन्निहित इति। द्रष्टुः शरीरापेक्षया संयुक्तसंयोगाल्प-

(१) पाणिनिसूत्रम्। अ॰ ६ पा॰ ३ सू॰ ४६।

सन्निधानादपरत्वार्हे तद्विपरीतं(१) परत्वं प्रतीयते । व्यवहिते यूनि व्यवधानात् परत्वार्हे तद्विपरीत(२)मपरत्वम् । तदिदं तत्तद्विपरीत(३)-परत्वमपरत्वं च कार्यं तत्कारणस्य दिगादेर-सम्भवात् कालमेव कारणमनुमापयति(४) । स

त्ववतीत्यर्थः । व्यवहित इति । पूर्वोक्तापेक्षयैव संयुक्तसंयोगभूयस्त्ववतीत्यर्थः । तदिदं तत्तद्विपरीतेति । अयमर्थः । एकस्यां दिश्यवस्थितयोः पिण्डयोः सन्निकृष्टेऽपरत्वमुत्पद्यते विप्रकृष्टे परत्वमिति दिक्कृते परत्वापरत्वे । तत्र सन्निकृष्टादिपिण्डः समवायिकारणम् । दिक्पिण्डसंयोगोऽसमवायिकारणम् । विप्रकृष्टमवधिं कृत्वायमस्मात् सन्निकृष्ट इत्याद्याकारिकापेक्षाबुद्धिर्निमित्तकारणम् । तथा अनियतदिगवस्थितयोर्युवस्थविरपिण्डयोः स्थविरे परत्वं जायते यून्यपरत्वमितीमे कालकृते । अत्रापि स्थविरादिपिण्डः समवायिकारणं कालपिण्डसंयोगोऽसमवायिकारणं युवानमवधिं कृत्वायमस्माद्बहुतरतपनपरिस्पन्दान्तरितजन्मा स्थविरमवधिं कृत्वायमस्मादल्पतरतपनपरिस्पन्दान्तरितजन्मा वेत्याकारिकापेक्षाबुद्धिर्निमित्तकारणम् । तत्कारणस्य दिगादेरसम्भवादिति । दिशः

(१) सन्निधानात् परत्वानर्हत्वाद्विपरीतं—पा॰ ३ पु॰ ।

(२) परत्वार्हत्वाद्विपरीत—पा॰ ३ पु॰ ।

(३) दिक्कृतविपरीतम्—पा॰ ३ । ४ पु॰ ।

(४) कारणमनुमापयति स एव कालः—पा॰ ४ पु॰ ।

चैकोऽपि वर्तमानातीतभविष्यत्क्रियोपाधिवशाद् वर्तमानादिव्यपदेशं लभते पुरुष इव पच्यादि(१) क्रियोपाधिवशात् पाचकपाठकादिव्यपदेशम्(२) । नित्यत्वविभुत्वे चास्य पूर्ववत् ।

---

संयोगमात्रोपनायकत्वेन सिद्धत्वात् तपनपरिस्पन्दोपनायकत्वं न सम्भवति। आत्माकाशयोः परधर्मोपनायकत्वे तु देशान्तरस्थेन कुङ्कुमरागेण देशान्तरस्थस्फटिकादेरुपरञ्जनप्रसङ्गः । पृथिव्यादेस्त्वव्यापकत्वादेव न सम्भवतीत्याशयः । विनाशस्त्वनयोः ।

अपेक्षाबुद्धिसंयोगद्रव्यनाशात् पृथक्पृथक् ।
द्वाभ्यांद्वाभ्यां च सर्वेभ्यो विनाशः सप्तधा तयोः ॥

इत्यभिज्ञैः सङ्गृहीत इति । नन्वेकस्य कालस्य कथं वर्तमानत्वाद्यनेकरूपेण व्यपदेश इत्यत आह । स चैकोऽपीति । वर्तमानातीतभविष्यत्क्रियोपाधिवशादिति । अनुत्पन्नध्वंसा नष्टप्रागभावा च वर्तमाना क्रिया तदुपलक्षितः कालो वर्तमानः । विद्यमानध्वंसप्रतियोगिन्यतीतक्रिया तदुपलक्षितः कालोऽप्यतीतः । विद्यमानप्रागभावप्रतियोगिनी भविष्यन्ती क्रिया तदुपलक्षितः कालोऽपि भविष्यन्निति तात्पर्यार्थः । नित्यत्वविभुत्वे चेति । भेदे प्रमाणाभावेनाकाशवदेकत्वम् । एकत्वाच

---

(१) यथा पुरुषः पच्यादि–पा० १ पु० ।
(२) व्यपदेशं लभते–पा० १ । २ । ३ पु० ।

( कालविपरीतपरत्वापरत्वानुमेया )[1] दिगेका नित्या विभ्वी च । संख्यापरिमाणपृथक्त्वसंयोगविभागगुणवती । पूर्वादि[2]प्रत्ययैरनुमेया । तेषामन्यनिमित्तासम्भवात् । पूर्वस्मिन् पश्चिमे वा देशे स्थितस्य वस्तुनस्तादवस्थ्यात् । सा चैकापि[3] सवितुस्तत्तद्देशसंयोगोपाधिवशात् प्राच्यादिसंज्ञां लभते ।

---

विभुत्वम् । विभुत्वाच्चात्मवन्नित्यत्वमित्यर्थः ।

साम्प्रतं दिशं निरूपयति । दिगेकेति । पूर्वादिप्रत्ययैरनुमेयेति । मूर्त्तद्रव्यमवधिं कृत्वा मूर्त्तेष्वेव द्रव्येष्विदमस्मात् पूर्वमिदमस्मादपरमित्यादिप्रत्यया निमित्तमन्तरेणात्मानमनाप्नुवन्तो दिशो निमित्तत्वं कल्पयन्ति । प्रथमचरमादित्यसंयोगो ह्यत्र निमित्तं तत्संयोगोपनायकत्वं च व्यापिकाया दिश एव सम्भवतीति कालनिरूपणावसरेऽस्माभिरुक्तमित्यनुसन्धेयमिति भावः । ननु विषय एव तादृशप्रत्ययस्य निमित्तमस्त्वित्यत आह । पूर्वस्मिन्निति । प्राच्यादिसंज्ञामिति । रविः प्रथममस्यामञ्चतीति प्राची । अवागञ्चतीत्यवाची । प्रत्यगञ्चतीति प्रतीची । उदगञ्चतीत्युदीचीत्यन्वर्थसंज्ञामित्यर्थः ।

---

(१) ( ) एतन्मध्यस्थो नास्ति १ । २ । ४ पु· ।

(२) पूर्वपरादि—पा· १ पु· ।

(३) सापि दिगेका—पा· ३ पु· ।

आत्मत्वाभिसम्बन्धवानात्मा[1] । सुख-दुःखादिवैचित्र्यात् प्रतिशरीरं भिन्नः[2] । स चोक्त एव । तस्य सामान्यगुणाः संख्यादयः पञ्च बुद्ध्यादयो नव विशेषगुणाः[3] । नित्यत्व-विभुत्वे पूर्ववत् ।

---

अवसरप्राप्तमात्मानं निरूपयति । आत्मत्वेति । आत्मत्वं जातिस्तेनाभिमतः सम्बन्धः समवायलक्षणस्त-द्वानात्मेत्यर्थः । नन्वात्मनानात्वमन्तरेणात्मत्वं जातिर्न सम्भवतीति तन्नानात्वमाह । सुखदुःखेति । तथा च सू-त्रम् । नानात्मानो व्यवस्थात इति[4] । अस्यार्थः । कश्चित् संसरति कश्चिदपवृक्त इत्येका तत्र यद्येक एवात्मा शुकः प्रह्लादो वा मुक्त इति कोऽपरः संसरेत् । न हि योऽपवृक्तः स एव संसरतीति सम्भवति एकस्य युगपद्बन्धमोक्षयोर्वि-रोधात् तथा कश्चिदीश्वरः कश्चिदनीश्वर इत्यपरा व्यव-स्था । एकदैव कश्चित् सुखी कश्चिद् दुःखीत्यपरं व्यवस्थान्त-रमपि । ननु पादे मे सुखं शिरसि मे वेदनेतिवच्छरीरभे-देनैकस्यापि सुखदुःखे सम्भविष्यत इति चेत् । न । भवतां नामैकस्य सुखदुःखे तथापि यो देवदत्तः सुखी सोऽहं यज्ञ-

---

(१) आत्मत्वसामान्यवानात्मा देहेन्द्रियादिव्यतिरिक्तः-पा· ४ पु· ।

(२) वैचित्र्याच्चानाभावत्रात्-पा· ३ पु· । वैचित्र्याच्चाना-पा· २ पु· ।

(३) तस्य गुणाः संख्यादयः पञ्च बुद्ध्यादयो नव-पा· २।३।४ पु· ।

(४) वैशेषिकसूत्रे अ· ३ आ· २ सू· २० व्यवस्थातो नानेति पाठो दृश्यते ।

**मनस्त्वाभिसम्बन्धवन्मनः । अणुवात्मसंयोग्यन्तरिन्द्रियम्[1] । सुखाद्युपलब्धिकरणं नित्यं च संख्याद्यष्टगुणवत्[2] । तत्संयोगेन बाह्येन्द्रियमर्थग्राहकम् । अत एव सर्वोपलब्धिसाधनम् । तच्च न प्रत्यक्षमपि त्वनुमानगम्यम् । तथाहि सुखाद्युपलब्धय श्चक्षुराद्यतिरिक्तकरणसाध्या असत्स्वपि चक्षुरादिषु जायमानत्वा-**

दसौ दुःखीति प्रतिसन्धानमपि स्यादित्यत्रैव तात्पर्यमिति । अथ शरीरभेदादेव जन्मान्तरसुखादिवत् स्वीयमपि सुखं न प्रतिसन्धीयत इति चेत् । न । तत्र संस्कारस्यानुद्भवादिना तदुपपत्तेः । नन्वत्रापि तथास्त्विति चेत् । न । यज्ञदत्तवद्देवदत्तेनाप्यप्रतिसन्धानप्रसङ्गादिति दिक् ।

आत्मानं निरूप्य क्रमप्राप्तं मनो निरूपयति । **मनो मनस्त्वेति** । **अणिवति** । विभुत्वे दीर्घशष्कुलीं भक्षयतः पुंसो रूपरसाद्यनेकविषयाणि ज्ञानानि युगपज्जायेरन् । आत्मेन्द्रियविषयसम्बन्धात्मिकायाः सामग्र्याः सत्त्वादणुत्वे त्विन्द्रियाप्राप्तेर्न युगपज्ज्ञानानि भविष्यन्तीति भावः । मनसो बहिरस्वातन्त्र्यादित्युक्तत्वात् स्वातन्त्र्येण रूपादिज्ञानजनकत्वं मनसो नास्तीत्याशयेनाह । **तत्संयोगेनेति** ।

---

(१) अन्तरिन्द्रियं मनः मनस्त्वजातिमन्मनः अणुत्वसंयोग्यन्तरिन्द्रियं–पा. २ पु. । मनो मनस्त्वयोगि मूर्त्तमणुत्वसंयोगि चान्तरिन्द्रियं–पा. ३ पु. । मनस्त्वयोगि मनोऽन्तरिन्द्रियं–पा. ४ पु. ।

(२) [illegible]–पा. ३ पु. ।

त्। (यद्वस्तु यद्विनैवोत्पद्यते तत् तदतिरिक्तकरणसाध्यं यथा कुठारं विनोत्पद्यमाना पचनक्रिया तदतिरिक्तवह्न्यादिकरणसाध्या।)(१) यच्च करणं(२) तन्मनः। तच्च चक्षुराद्यतिरिक्तम्। तच्चाणुपरिमाणम्। द्रव्याण्युक्तानि॥

अथ गुणा उच्यन्ते। सामान्य(३)वानसमवायिकारणमस्पन्दात्मा गुणः। स च द्रव्याश्रित एव। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारभेदाच्चतुर्विंशतिधा।

---

द्रव्याण्युक्तानीति। तथा च करिष्यमाणगुणनिरूपणं नासङ्गतमिति भावः॥

गुणपदार्थं लक्षयति। सामान्यवानिति। कर्मद्रव्यभिन्नो यो जातिमान् स गुण इत्यर्थः। रूपरसगन्धेति। ननु गुणेषु चतुर्विंशतित्वसङ्ख्यालक्षणस्य गुणस्य कथं बुद्धिरिति चेत्। उच्यते। चतुर्विंशतित्वसङ्ख्यैकार्थसमवायाच्चतुर्विंशतिर्गुणा इति बुद्धिरुपपद्यते सामान्यादौ

---

(१) ( ) एतन्मध्यस्थो नास्ति २। ३। ४ पु०।

(२) घटवत्। यच्च सुखाद्युपलब्धिकरणं—पा० २। ३ पु०।

(३) गुणत्वसामान्य—पा० १ पु०।

तत्र रूपं चक्षुर्मात्रग्राह्यो विशेषगुणः । पृथिव्यादित्रयवृत्ति । तच्च शुक्लाद्यनेकप्रकारकम् । पाकजं च पृथिव्याम् । (तच्चानित्यं पृथिवीमात्रे । आप्यतैजसपरमाण्वोर्नित्यम् । आप्यतैजसकार्येष्वनित्यम् ।)[१] शुक्लभास्वरमपाकजं तेजसि । तदेवाभास्वरमप्सु ।

रसो रसनेन्द्रियग्राह्यो विशेषगुणः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां मधुरादिषट्प्रकारो मधुराम्ललवणकटुकषायतिक्तभेदात् पाकजश्च । अप्सु मधुरोऽपाकजो नित्योऽनित्यश्च ।

---

सत्तैकार्थसमवायनिबन्धनसत्प्रत्ययवत् ।

गुणं लक्षयित्वा यथोद्देशं रूपादेर्लक्षणमाह । तत्र रूपमित्यादिना । चक्षुर्ग्राह्यत्वस्य सङ्ख्यायामतिव्याप्तिवारणाय मात्रपदम् । एवमपि रूपत्वेऽतिव्याप्तिरिति गुणपदम् । अतीन्द्रिये रूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमद्गुणत्वं विवक्षणीयम् । किमयं सामान्यगुणो विशेषगुणो वेति सन्दिग्धं प्रति विशेषेत्युक्तम् । तच्च शुक्ललोहितपीतकृष्णहरितकपिलचित्रभेदेन सप्तविधम् । सर्वं चैतत् पृथिव्यां सम्भाव्यते जले तु शुक्लाभास्वरमेव तेजसि च तदेव भास्वरमिति विशेषः । परस्परविजातीयरूपवदारब्धे आस-

---

(१) (........) एतन्मध्यस्थो नास्ति ३ । ४ पु० ।

नित्यः परमाणुभूतास्वप्सु । कार्यभूतास्वनित्यः ।

गन्धो घ्राणग्राह्यो विशेषगुणः । पृथिवीमात्रवृत्तिः । अनित्य एव । स द्विविधः सुरभिरसुरभिश्च । जलादौ गन्धप्रतिभानं तु संयुक्तसमवायेन द्रष्टव्यम् ।

स्पर्शस्त्वगिन्द्रियग्राह्यो विशेषगुणः । पृथिव्यादिचतुष्टयवृत्तिः । स च त्रिविधः शीतोष्णानुष्णाशीतभेदात् । शीतः पयसि । उष्ण-

---

नादौ चित्रं रूपं तच्चावश्यमभ्युपेयम् । एकं चित्ररूपमित्यनुभवात् । एवं परस्परविजातीयस्पर्शवदारब्धे चित्रस्पर्शोऽपि । ननु षड्रसा हरीतकीतिव्यवहारादेवं चित्ररसोऽपि स्यादिति चेत् । मैवम् । रूपादेर्व्याप्यवृत्तित्वनियमेनैकस्मिन् धर्मिणि रूपद्वयं स्पर्शद्वयं वा न सम्भवतीति चित्ररूपस्य तथाविधस्पर्शस्य वानङ्गीकारे ऽवयविनो नीरूपत्वाद्यापत्तावतीन्द्रियत्वाद्यापत्तिस्तत्र बाधिका । अत्र तु रसनस्य द्रव्याग्राहकत्वान्नीरसत्वे ऽपि बाधकाभावान्मधुराम्ललवणकटुतिक्तकषायलक्षणरसषट्कव्यवहारस्तु तत्तद्रसजन्योपकारजनकत्वगुणयोगेनाप्युपपद्यत इति सर्वं समञ्जसम् ।

स च त्रिविधः शीतोष्णानुष्णाशीतभेदादिति । परस्परविजातीयस्पर्शवदारब्धे चित्रस्पर्शोऽपि चतुर्थोऽस्तीति त्रिधेत्युपलक्षणं ज्ञेयम् ।

स्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः[1] । (पृथिवीमात्रे ह्यनित्यः । आप्यतैजसवायवीयपरमाणुषु नित्यः । आप्यादिकार्येष्वनित्यः । )[2] एते च रूपादयश्चत्वारो महत्त्वैकार्थसमवेतत्वे सत्युद्भूता एव प्रत्यक्षाः ।

संख्या एकत्वादिव्यवहारहेतुः सामान्यगुणः । एकत्वादिपरार्द्धपर्यन्ता । तत्रैकत्वं द्विविधं नित्यानित्यभेदात् । नित्यगतं नित्यमनित्यगतमनित्यम्[3] । स्वाश्रयसमवायिकारणगतैकत्वजन्यं च । द्वित्वं चानित्यमेव । तच्च द्वयोः

सङ्ख्यां लक्षयति । सङ्ख्येति । एको द्वावित्यादिविशिष्टव्यवहारस्य विशेषणज्ञानपूर्वकत्वात् सङ्ख्यालक्षणं विशेषणमङ्गीकर्तव्यमित्याशयः । सङ्ख्यात्वसामान्यवती सङ्ख्येति लक्षणान्तरमपि द्रष्टव्यम् । एकाश्रयां सङ्ख्यां प्रदर्श्यानेकाश्रयां प्रदर्शयति । द्वित्वं चेति । द्वित्वं त्वित्यर्थः । व्यासज्यवृत्त्यपीति ज्ञेयम् । व्यासज्यवृत्तित्वं च यावदाश्रयनिरूपणनिरूप्यत्वम् । द्वित्वोत्पत्तिप्रक्रियामाह ।

---

(१) अनुष्णाशीतः पाकजः पृथिव्यां स एवापाकजो वायौ— पा· ४ पु· ।

(२) ( ) एतन्मध्यस्थो नास्ति ३ । ४ पु· ।

(३) कार्यगतं त्वनित्यम्—पा· ३ । ४ पु· ।

पिण्डयोरिदमेकमिदमेकमित्यपेक्षाबुद्ध्या जन्यते। तत्र द्वौ पिण्डौ समवायिकारणे । पिण्डयोरेकत्वे असमवायिकारणे । अपेक्षाबुद्धिर्निमित्तकारणम् । अपेक्षाबुद्धिनाशादेव द्वित्वविनाशः । एवं त्रित्वाद्युत्पत्तिर्विज्ञेया[1] ।

तत्रेति । अपेक्षाबुद्धिनाशादिति । इदमुपलक्षणम् । क्वचिदाश्रयनाशान्नश्यति । तथाहि एकत्वद्वयज्ञानमथ द्वित्वोत्पत्तिरथ द्वित्वनिर्विकल्पकमथापेक्षाबुद्धिनाशोऽथ द्वित्वनाश इत्येकः प्रकारः। यदापेक्षाबुद्धेः स्वाश्रयसमवायिविभागस्य चैकदोत्पत्तिस्ततो विभागतः संयोगनाशोऽपेक्षाबुद्ध्या च द्वित्वोत्पत्तिरथ द्रव्यनाशद्वित्वबुद्धी ततोऽपेक्षाबुद्धिद्वित्वयोर्नाश इत्यपरः। एवं त्रित्वाद्युत्पत्तिरिति । एवं त्रित्वाद्युत्पत्तिविनाशावपि ज्ञेयावित्यर्थः । विशेषस्तु एकत्वत्रयविषयिकापेक्षाबुद्धिस्त्रित्वमेवं तच्चतुष्टयादिविषया चतुष्ट्वादिकमारभत इति । तदुक्तम् ।

आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधी-
रेकत्वोभयगोचरा मतिरतो द्वित्वं ततो जायते ।
तस्माद् द्वित्वमतिस्ततोऽनु परतो[2] द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वाश्रया प्रक्रिया[3]॥ इति ।

(१) त्रित्वाद्युत्पत्तिविनाशौ–पा· ४ पु· ।

(२) द्वित्वस्य प्रमितिस्ततोऽपि परत इति पाठो लक्षणावल्याम् ।

(३) द्वित्वोदयप्रक्रियेति पाठो लक्षणावल्याम् । इयं कारिका लक्षणावल्यामुदयनाचार्यैरुक्ता । वाराणसीस्थमेडिकलहालनामकयन्त्रालयास्मन्मुद्रितलक्षणावलीपुस्तके ५८ पृष्ठायाम् ५ पङ्क्तौ ।

**परिमाणं मानव्यवहारासाधारणं कारणम् । तच्चतुर्विधम् । अणु महद् दीर्घं ह्रस्वं चेति । तत्र कार्यगतं परिमाणं[1] संख्यापरिमाणप्रचययोनि । तद्यथा द्व्यणुकपरिमाणमीश्वरापेक्षाबुद्धिजन्यपरमाणुद्वित्वजनितत्वात् संख्यायोनि । संख्याकारणकमित्यर्थः । त्र्यणुकपरिमाणं च स्वाश्रयसमवायिकारणगतबहुत्वसंख्यायोनि । चतुरणुकादिपरिमाणं तु स्वाश्रयसमवायिकारणपरिमाण[2]जन्यम् । तूलपिण्डपरिमाणं तु**

परिमाणं लक्षयति । **परिमाणमिति** । अङ्गुष्ठाङ्गुल्यादिमानव्यवहारासाधारणकारणगुणः परिमाणमिति लक्षणं ज्ञेयम् । **अणु महदिति** । अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चेत्यर्थः । **द्व्यणुकपरिमाणमिति** । परमाणुपरिमाणस्य नित्यपरिमाणत्वेनाकाशमहत्त्ववदारम्भकत्वं न सम्भवतीति परमाणुगतद्वित्वसङ्ख्याया एव द्व्यणुकपरिमाणं प्रत्यसमवायिकारणत्वम् । तद् द्वित्वजनिका च परमाणुद्वयगतैकत्वोभयगोचरापेक्षाबुद्धिरस्मदादीनां न सम्भवतीति कृत्वेश्वरापेक्षाबुद्धिजन्येत्युक्तमिति फक्किकार्थः । प्रशिथिलसंयोगाख्यप्रचयजन्यं परिमाणं दर्शयति । **तूलपिण्डपरिमाणमिति** । अयमर्थः । द्वाभ्यां तूलपिण्डा

(१) कार्यपरिमाणं–पा· ४ पु· ।
(२) [illegible]परिमाण–पा· ४ पु· ।

स्वाश्रयसमवायिकारणावयवानां प्रशिथिलसंयोगजन्यम्[१] । परमाणुपरिमाणं परममहत्परिमाणं चाकाशादिगतं नित्यमेव ।

पृथक्त्वं पृथग्व्यवहारासाधारणं कारणम्[२] । तच्च द्विविधम् । एकपृथक्त्वं द्विपृथक्त्वादिकं च । तत्राद्यं नित्यगतं नित्यमनित्यगतमनित्यम् । द्विपृथक्त्वादिकं चानित्यमेव ।

संयोगः संयुक्तव्यवहारहेतुर्गुणः[३] । स द्व्याश्रयोऽव्याप्यवृत्तिश्च । स त्रिविधः । अन्यतरकर्मज उभयकर्मजः संयोगजश्चेति । तत्रान्यतरकर्मजो यथा क्रियावता श्येनेन सह निष्क्रि-

---

भ्यामारब्धे तूलपिण्डे यन्महत्त्वादिपरिमाणं तत् तूलपिण्डसमवायिकारणपिण्डद्वयनिष्ठप्रचयेनासमवायिकारणेन जन्यत इत्यर्थः ।

पृथक्त्वं निरूपयति । पृथक्त्वमिति । इदमस्मात् पृथगिति यो व्यवहारस्तदसाधारणकारणगुणः पृथक्त्वमित्यर्थः ।

---

(१) स्वकारणावयवप्रचययोनि प्रचयस्तु अवयवानां प्रशिथिलसंयोगः—पा॰ ४ पु॰ ।

(२) व्यवहारकारणम्—पा॰ ४ पु॰ ।

(३) व्यवहारासाधारणं कारणम्—पा॰ ३ पु॰ ।

यस्य स्थाणोः संयोगः । अस्य हि श्येनक्रिया असमवायिकारणम् । उभयकर्मजो यथा सक्रिययोर्मल्लयोः संयोगः । संयोगजो यथा कारणाकारणसंयोगात् कार्याकार्यसंयोगः । यथा हस्ततरुसंयोगेन कायतरुसंयोगः ।

विभागोऽपि विभक्तप्रत्ययहेतुः । संयोगपूर्वको द्व्याश्रयः । स च त्रिविधोऽन्यतरकर्मज उभयकर्मजो विभागजश्चेति । तत्र प्रथमो यथा श्येनक्रियया शैलश्येनयोर्विभागः । द्वितीयो यथा मल्लयोर्विभागः । तृतीयो यथा हस्ततरुविभागात् कायतरुविभागः ।

परत्वापरत्वे परापरव्यवहारासाधारणकारणे । ते तु द्विविधे दिक्कृते कालकृते च । तत्र दिक्कृतयोरुत्पत्तिः कथ्यते । एकस्यां दिश्यवस्थितयोः पिण्डयोरिदमस्मात् सन्निकृष्टमिति-

---

कारणाकारणसंयोगादित्यस्यैवार्थं दर्शयन्ति । यथा हस्ततरुसंयोगेनेति । हस्तः कायस्य कारणं तरुश्चाकारणं तयोः संयोगेन कायो हस्तस्य कार्यं तरुश्चाकार्यं तयोः संयोग इत्यर्थः ।

परत्वापरत्वे इति । उभयविधे अपि परत्वापरत्वे

बुद्ध्यानुगृहीतेन दिक्पिण्डसंयोगेनापरत्वं सन्निकृष्टे जन्यते । विप्रकृष्टबुद्ध्या तु परत्वं विप्रकृष्टे जन्यते । सन्निकर्षस्तु पिण्डस्य द्रष्टुः शरीरापेक्षया संयुक्तसंयोगाल्पीयस्त्वम् । तद्भूयस्त्वं विप्रकर्ष[1] इति । कालकृतयोस्तु परत्वापरत्वयोरुत्पत्तिः कथ्यते । अनियतदिगवस्थितयोर्युवस्थविरपिण्डयोरयमस्मादल्पतरकालसम्बद्ध इत्यपेक्षाबुद्ध्या[2]नुगृहीतेन कालपिण्डसंयोगेनासमवायिकारणेन यूनि[3] अपरत्वम् । अयमस्माद् बहुतरकालेन सम्बद्ध[4] इतिधिया स्थविरे परत्वम् ।

गुरुत्वमाद्यपतनासमवायिकारणम् । पृथि-

---

कालनिरूपणावसरेऽस्माभिर्विविच्य दर्शिते इत्यत्र न व्याख्यायेते ।

गुरुत्वं निरूपयति । गुरुत्वमिति । द्वितीयपतनास-

---

(१) विप्रकृष्टत्वं संयुक्तसंयोगभूयस्त्वं—पा· ३ पु· । तद्बहुत्वं विप्रकर्षः—पा· १ । २ पु· ।

(२) इति बुद्ध्या—पा· ३ पु· । इतिविशेषापेक्षाबुद्ध्या निमित्तकारणभूतया—पा· ४ पु· ।

(३) संयोगेन यूनि—पा· ३ पु· । संयोगेन कारणेन यूनि—पा· ४ पु· ।

(४) प्रचुरकालसम्बद्ध—पा· ३ । ४ पु· ।

वीजलवृत्ति । यथोक्तम् । संयोगवेगप्रयत्नाभावे सति गुरुत्वात् पतनमिति ।

द्रवत्वमाद्यस्यन्दनासमवायिकारणम् । भूतेजोजलवृत्ति । भूतेजसोर्घृतादिसुवर्णयोरग्निसंयोगेन द्रवत्वं नैमित्तिकम्[१] । जले नैसर्गिकं द्रवत्वम् ।

स्नेहश्चिक्कणता । जलमात्रवृत्तिः । कारणगुणपूर्वको गुरुत्वादिवद् यावद्द्रव्यभावी ।

शब्दः श्रोत्रग्राह्यो गुणः । आकाशस्य विशेषगुणः । ननु कथमस्य श्रोत्रेण ग्रहणम् । यतो

---

मवायिकारणे वेगे ऽतिव्याप्तिवारणायाद्येत्युक्तम् । गन्धवत्यधःसंयोगफलिका क्रिया सासमवायिकारणिका क्रियात्वात् सम्प्रतिपन्नवदिति प्रयोगो द्रष्टव्यः । अगुरुणि तेजस्यधःसंयोगफलकक्रियाया वेगादिजत्वेनार्थान्तरवारणाय गन्धवतीत्युक्तम् ।

द्रवत्वं निरूपयति । द्रवत्वमिति । अत्रापि द्वितीयस्यन्दनासमवायिकारणे वेगे ऽतिव्याप्तिः स्यादत उक्तमाद्येति ।

शब्दं निरूपयति । शब्द इति । श्रोत्रग्राह्यो गुणः शब्द इत्यर्थः । आकाशस्य विशेषगुण इति । विशि-

---

(१) द्रवत्वान्नैमित्तिकं द्रवत्वम्—पा॰ ३ पु॰ ।

भेर्यादिदेशे शब्दो जायते श्रोत्रं तु पुरुषदेशे ऽस्ति । सत्यम् । भेरीदेशे जातः शब्दो वीचीतरङ्गन्यायेन कदम्बमुकुल[1]न्यायेन वा सन्निहितं शब्दान्तरमारभते स च शब्दः शब्दान्तरमितिक्रमेण श्रोत्रदेशे जातोऽन्त्यः[2] शब्दः श्रोत्रेण गृह्यते न त्वाद्यो नापि मध्यमः । एवं वंशे पाट्यमाने दलद्वयविभागदेशे जातः शब्दः शब्दान्तरारम्भक्रमेण श्रोत्रदेशे ऽन्त्यं शब्दं जनयति सोऽन्त्यः शब्दः श्रोत्रेण गृह्यते नाद्यो न मध्यमः । भेरीशब्दो मया श्रुत इति मतिस्तु[3] भ्रान्तैव । भेरीशब्दोत्पत्तौ भेर्याकाशसंयोगोऽसमवायिकारणम् । भेरीदण्डसंयोगो निमित्तकारणम्[4] । एवं वंशोत्पाटनाच्चटचटाशब्दोत्पत्तौ

ष्यते व्यवच्छिद्यते स्वाश्रयो येन स विशेषः स चासौ गुणश्चेति समासः । ननु वर्णात्मकः शब्दो नित्य इति जैमिनेर्मतं तथा च यतो भेर्यादिदेशे शब्दो जायत इत्यादिना ग्रन्थेन कथं तस्योत्पत्तिविनाशकथनमित्याशङ्कायामाह ।

(१) कदम्बगोलक–पा· ४ पु· ।
(२) श्रोत्रदेशे ऽन्त्यं शब्दं जनयति सोऽन्त्यः–पा· ३ पु· ।
(३) मया गृह्यत इति श्रुतप्रतीतिरत्र–पा· ३ पु· ।
(४) [illegible]

वंशदलाकाशविभागोऽसमवायिकारणम् । दलद्वयविभागो निमित्तकारणम् । इत्यमाद्यः शब्दः संयोगजो विभागजो वा अन्त्यमध्यमशब्दास्तु शब्दासमवायिकारणका अनुकूलवातनिमित्तकारणकाः । यथोक्तम् । संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिरिति[१] । आद्यादीनां सर्वशब्दानामाकाशमेकमेव समवायिकारणम् । कर्मबुद्धिवत्त्रिक्षणावस्थायित्वम् । तत्राद्यमध्यमशब्दाः कार्यशब्दनाश्या अन्त्यस्तूपान्त्येन उपान्त्यस्त्वन्त्येन सुन्दोपसुन्दन्यायेन विनश्येते । इदं त्वयुक्तम् । उपान्त्येन त्रिक्षणावस्थायिनान्त्यस्य द्वितीयक्षणमात्रानुगामिना तृतीयक्षणे चासतान्त्यनाशजननासम्भवात् । तस्मादुपान्त्यनाशादेवान्त्यनाश इति । विनाशित्वं च शब्दस्यानुमानात् । तथाहि अनित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वाद्घटवदिति शब्दस्यानित्यत्वं साध्यमनित्यत्वं च

---

विनाशित्वं चेति । अनुमानं रचयति । अनित्य इति । अनित्यत्वं निर्वक्ति । अनित्यत्वं चेत्यादि । ध्वंसप्रति-

(१) वैशेषिकसूत्रम् । अ० २ आ० २ सू० ३१ ।

विनाशावच्छिन्नस्वरूपत्वं न तु विनाशावच्छिन्नसत्तायोगित्वं प्रागभावे सत्ताहीने[1] ऽनित्यत्वाभावप्रसङ्गात् । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वं हेतुः । इन्द्रियग्राह्यत्वादित्युच्यमान आत्मनि व्यभिचारः स्यादत उक्तं बाह्येति । एवमपि तेनैव योगिबाह्येन्द्रियेण ग्राह्ये[2] परमाण्वादौ व्यभिचारः स्यादतो योगिनिरासार्थमुक्तमस्मदादीति । किं पुनर्योगिसद्भावे प्रमाणम् । उच्यते । परमाणवः कस्यचित् प्रत्यक्षाः प्रमेयत्वाद् घटवदिति । तथापि सामान्यादिना व्यभिचारोऽत उक्तं सामान्यवत्त्वे सतीति । सामान्यादित्रयस्य निःसामान्यत्वात् ।

अर्थप्रकाशो बुद्धिः । (नित्या अनित्या च ।

---

योगित्वमनित्यत्वमित्यर्थः । ध्वंसोपलक्षितं सत्तायोगित्वमनित्यत्वमिति वदन्तं वादिनं निराकरोति । न त्विति । तेनैवेति । योगिबाह्येन्द्रियग्राह्ये परमाणौ व्यभिचारवारणार्थमस्मदादीत्यर्थः ।

क्रमप्राप्तां बुद्धिं लक्षयति । अर्थेति । बुद्धित्वं लक्षण-

---

(१) सत्तायोगाभावात् सत्ताहीने–पा॰ ४ पु॰ ।

(२) एवमपि योगिबाह्येन्द्रियग्राह्ये — — —

ऐश्वरी बुद्धिर्नित्या अन्यदीया त्वनित्या ।)[1]

प्रीतिः सुखम् । तच्च सर्वात्मनामनुकूलवेदनीयम् ।

पीडा दुःखम् । तच्च सर्वात्मनां प्रतिकूलवेदनीयम् ।

राग इच्छा ।

क्रोधो द्वेषः ।

उत्साहः प्रयत्नः ।

बुद्ध्यादयः षड् मानसप्रत्यक्षाः ।

धर्माधर्मौ सुखदुःखयोरसाधारणकारणे । तौ चाप्रत्यक्षावप्यागमगम्यावनुमानगम्यौ च । तथाहि देवदत्तस्य शरीरादिकं देवदत्तविशेषगु-

---

मित्यर्थः । एवं सुखादिलक्षणे ऽपि द्रष्टव्यम् ।

धर्माधर्मौ निरूपयति । **धर्माधर्मौ सुखदुःखयो-रिति** । सुखस्यासाधारणं कारणं धर्मः दुःखस्यासाधारणं कारणमधर्म इत्यर्थः । धर्माधर्मयोरनुमानाख्यं प्रमाणं दर्शयति । **देवदत्तस्य शरीरादिकमिति** । अत्र शरीरमाद्यत्वेन विशेषणीयम् । तथा च प्रयत्नजन्येदानीन्तनशरीरमादाय न सिद्धसाधनता । परिमाणादिनार्थान्तरं वारयितुं साध्ये विशेषेति । शरीरादिकं परमेश्वरविशेषगुणजन्यं भवत्येवे-

---

(१) ( ) एतन्मध्यस्थो नास्ति १ । २ । ४ पु.

णजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वाद् देवदत्तप्रयत्नजन्यवस्तुवत्। यश्च शरीरादिजनक आत्मविशेषगुणः स एव धर्मोऽधर्मश्च। प्रयत्नादीनां शरीराद्यजनकत्वादिति।

संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च। तत्र वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः। स च क्रियाहेतुः। भावनाख्यस्तु संस्कार आत्ममात्रवृत्तिरनुभवजन्यः स्मृतिहेतुः। स चोद्बुद्ध

ति सिद्धसाधनता स्यात् तदर्थं साध्ये देवदत्तपदम्। चैत्रशरीरमादाय बाधः स्यात् तदर्थं पक्षे देवदत्तपदम्। आत्मना व्यभिचारं वारयितुं हेतौ सत्यन्तम्। चैत्रभोगसाधने शरीरादौ कार्यत्वे सति भोगहेतुत्वादिति वर्तते साध्यं च नास्तीति व्यभिचारः स्यात् तदर्थं हेतौ देवदत्तपदम्। साध्यवैकल्यपरिहारार्थं दृष्टान्ते ऽपि देवदत्तपदम्। प्रयत्नादीनामिति। पक्षीभूताद्यशरीरोत्पत्तेः प्राक् तेषामसम्भवादाद्यशरीराद्यजनकत्वादित्यर्थः।

संस्कारं विभजते। संस्कार इति। आत्ममात्रवृत्तिरिति। संसार्यात्ममात्रवृत्तिरित्यर्थः। अत्र

रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः।
बुद्ध्यादिर्भावनान्तश्च शब्दो वैशेषिका गुणाः॥

इति षोडश विशेषगुणाः। इतरे सामान्यगुणाः। रूपरसगन्धस्पर्शशब्दा बाह्यैकेन्द्रियग्राह्याः। संख्यापरिमाणपृथक्त्वसंयोगविभाग[illegible]

एव स्मृतिं जनयति। उद्बोधश्च सहकारिलाभः। सहकारिणश्च संस्कारस्य सदृशादर्शनादयः। यथोक्तम्। सादृश्याद्दृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इति। स्थितिस्थापकस्तु स्पर्शवद्द्रव्यविशेषवृत्तिः(१)। अन्यथाभूतस्य स्वाश्रयस्य धनुरादेः पुनस्तादवस्थ्यापादकः(२)। एते च बुद्ध्या-

दीन्द्रियग्राह्याः। तदुक्तमुदयनेन। द्रव्यग्रहणयोग्यतान्तर्भूतयोग्यताकानि खलु संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगकर्माण्येवं ह्यमीषां द्वीन्द्रियग्राह्यता निर्वहतीति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना अन्तरिन्द्रियग्राह्याः। धर्माधर्मभावनागुरुत्वान्यतीन्द्रियाणि। संयोगविभागौ द्वित्वद्विपृथक्त्वादयश्चानेकाश्रिताः। इतरे त्वेकैकद्रव्यवृत्तयः। अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः। बुद्ध्यादयो नव शब्दश्चेति तद्विपरीताः। संयोगविभागशब्दा आत्मविशेषगुणाश्च प्रदेशवृत्तयः। शेषाश्चाश्रयव्यापिनः। गुरुत्वद्रवत्वप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः। परत्वापरत्वद्वित्वद्विपृथक्त्वादयोऽपेक्षाबुद्धिजन्यास्तद्विनाशविनाशिनश्च। अपाकजरूपरसगन्धस्पर्शादयो यावद्द्रव्यभाविनः। द्वित्वादयस्त्वयावद्द्रव्यभाविनः। रूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहशब्दा असमवायि-

(१) विशेषद्रव्यवृत्तिः—पा॰ ३ पु॰। विशेषवृत्तिः—पा॰ २ पु॰।
(२) पुनस्तथैव स्थापकः—पा॰ ३। ४ पु॰।

द्वयोऽधर्मान्ता भावना चात्मविशेषगुणाः । गुणा उक्ताः ॥

कर्माण्युच्यन्ते । चलनात्मकं कर्म । गुण इव द्रव्यमात्रवृत्ति । अविभुद्रव्यपरिमाणेन मूर्त्तत्वापरनाम्ना सहैकार्थसमवेतं विभागद्वारा पूर्वसंयोगनाशे सत्युत्तरदेशसंयोगहेतुश्च । तच्च उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चविधम् । भ्रमणादयस्तु गमनग्रहणेनैव गृह्यन्ते ॥

अनुवृत्तिप्रत्ययहेतुः सामान्यम् । द्रव्यादित्रयवृत्ति । नित्यमेकमनेकानुगतं च । तच्च द्विविधं

---

कारणानि । बुद्ध्यादयो नवापि निमित्तकारणानि । संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगास्तूभयकारणानि । परत्वापरत्वद्विपृथक्त्वादीन्यकारणानि । अकारणत्वं चामीषां ज्ञानव्यतिरेकेणेति द्रष्टव्यमित्यादि ॥

कर्म निरूपयति । चलनेति । मूर्त्तत्वापरनाम्नेति । इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्त्तत्वं तदपरनाम्नेत्यर्थः । कर्म विभजते । उत्क्षेपणेति । ऊर्द्धादिदेशे द्रव्यसंयोगासमवायिकारणत्वं यथासंख्येनोत्क्षेपणादेर्लक्षणं ज्ञेयम् । भ्रमणादयस्त्विति । आदिशब्दाद् रेचनस्यन्दनादयो ग्राह्याः ॥

सामान्यं निरूपयति । अनुवृत्तीति । अनुवृत्तिप्रत्ययः सामान्ये प्रमाणमित्याशयः । तस्याश्रयमाह । द्रव्यादीति । तस्य लक्षणमाह । नित्यमिति । अत्रैकमिति

परमपरं च। परं सत्ता बहुविषयत्वात्। सा चानुवृत्तिप्रत्ययमात्रहेतुत्वात् सामान्यमात्रम्। अपरं द्रव्यत्वादि अल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद् विशेषः। अत्र कश्चिदाह। व्यक्तिव्यतिरिक्तं सामान्यं नास्तीति। तत्र वयं ब्रूमः। किमालम्बना[१] तर्हि भिन्नेषु विलक्षणेषु पिण्डेष्वेकाकारा बुद्धिर्विना सर्वानुगतमेकं यच्च तदालम्बनं तदेव[२] सामान्यमिति। ननु तस्यातद्व्यावृत्ति[३]कृतैवैकाकारा बुद्धिरस्तु।

स्वरूपाभिधानमात्रं द्रव्यत्वमेकं गुणत्वमेकमिति। लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वमित्यर्थः। **परमपरं चेति**। परं व्यापकमपरं व्याप्यमित्यर्थः। **बहुविषयत्वादिति**। बह्वाश्रयत्वादित्यर्थः। **सा चेति**। यद्यप्यभावाद् व्यावृत्तिबोधकत्वं सत्ताया अस्त्येव भावादपि सामान्यादेरौपपत्तिकसत्ताव्यतिरेकनिश्चये सत्यस्त्येव व्यावृत्तिबोधकत्वं तथापि जातिमद्व्यक्तिप्रतियोगिकव्यावृत्त्यबोधकत्वेन सामान्यमेवेति भावः। अपोहवादिनो बौद्धस्य मतमवतारयति। **अत्र कश्चिदिति**। समाधातुं प्रतिजानीते। **तत्रेति**॥

(१) किन्निबन्धना—पा॰ ४ पु॰।
(२) अस्ति चेत् तदेव—पा॰ ४ पु॰।
(३) नन्वतद्व्यावृत्ति—पा॰ ४ पु॰।

तथाहि सर्वेष्वेव हि गोपिण्डेषु अगोभ्योऽश्वादिभ्यो व्यावृत्तिरस्ति । तेनागोव्यावृत्तिविषय एवायमेकाकारः प्रत्ययोऽनेकेषु गोपिण्डेषु न तु विधिरूपगोत्वसामान्यविषयः । मैवम् । विधिमुखेनैवैकाकारस्फुरणात् ॥

विशेषो नित्यो नित्यद्रव्यवृत्तिः । व्यावृत्तिबुद्धिमात्रहेतुः । नित्यद्रव्याणि त्वाकाशादीनि पञ्च पृथिव्यादयश्चत्वारः परमाणुरूपाः ॥

अयुतसिद्धयोः सम्बन्धः समवायः । स चोक्त एव । नन्ववयवावयविनावप्ययुतसिद्धौ तेन तयोः सम्बन्धः समवाय इत्युक्तम् । न चैतद् युक्त-

---

विशेषपदार्थं निरूपयति । विशेष इति । निःसामान्यत्वे सत्येकद्रव्यमात्रवृत्तित्वं लक्षणमिति ज्ञेयम् ॥

समवायं निरूपयति । अयुतसिद्धयोरिति । तस्य वृत्तिः सम्बन्धः स्वरूपमेव । अविशिष्टधीव्यावृत्तविशिष्टधीविषयत्वं सम्बन्धत्वं स्वरूपसम्बन्धत्वं तु प्राङ् निरुक्तं तत्रैवानुसन्धेयम् । समवाये मानं तु घट इति धीरेव । अस्यां धियि घटत्वसमवायो भासत इत्यर्थः । वैशिषिकनये त्विह गवि गोत्वमिति प्रत्यय आधाराधेयसम्बन्धनिबन्धनोऽबाधितेहप्रत्ययत्वादिह कुण्डे बदरमितिप्रत्ययवदित्यनुमानात् समवायसिद्धिरिति । अवयवातिरिक्तमवयविनं नाङ्गीकुर्वाणो बौद्धः शङ्कते । नन्वित्यादिना ।

मवयवातिरिक्तस्यावयविनोऽभावात् । परमाणव एव बहवस्तथाभूताः सन्निकृष्टा[१] घटोऽयं घटोऽयमिति गृह्यन्ते । अत्रोच्यते । अस्त्येकः स्थूलो घट इति प्रत्यक्षा बुद्धिः । न च सा परमाणुष्वनेकेष्वस्थूलेष्वतीन्द्रियेषु भवितुमर्हति । भ्रान्तेयं बुद्धिरिति चेत् । न । बाधकाभावात् । तदेवं षट्पदार्था द्रव्यादयो वर्णिताः । ते च विधिमुखप्रत्ययवेद्यत्वाद् भावरूपा एव ॥

इदानीं निषेधमुखप्रमाणगम्योऽभावरूपः सप्तमः पदार्थः प्रतिपाद्यते । स चाभावः सङ्क्षेपतो द्विविधः संसर्गाभावोऽन्योन्याभावश्चे-

---

परिहर्तुं प्रतिजानीते । अत्रोच्यत इति । अस्त्येक इति । प्रत्यक्षमेवात्र प्रमाणमिति भावः । बाधकाभावादिति । विनापि बाधकेन भ्रान्तित्वकल्पने ऽतिप्रसङ्गः स्यादिति भावः । ते च विधीति । प्रलयविनाशावसानादिषु विधिमुखत्वमेव नास्तीति न व्यभिचारः । तदुक्तम् । न हि नञोऽप्रयोग इत्येव विधिरिति ॥

अभावं निरूपयितुं सङ्गतिं दर्शयति । इदानीमिति । अभावं विभजते । अभावः सङ्क्षेपत इति । इदं त्ववधे-

---

(१) परमाणवो हि तथातथा सन्निविष्टा–पा· ४ पु· ।

त्ति । संसर्गाभावोऽपि त्रिविधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति ।

उत्पत्तेः प्राक् कारणे कार्यस्याभावः प्रागभावः । यथा तन्तुषु पटाभावः । स चानादिरुत्पत्तेरभावात् । विनाशी च कार्यस्यैव तद्विनाशरूपत्वात् ।

उत्पन्नस्य कारणे ऽभावः प्रध्वंसाभावः । प्रध्वंसो विनाश इति यावत् । यथा भग्ने घटे कपालमालायां घटाभावः । स च मुद्गरप्रहारादिजन्यः । स चोत्पत्तिमानप्यविनाशी नष्टस्य कार्यस्य पुनरनुत्पत्तेः[१] ।

त्रैकालिकोऽभावोऽत्यन्ताभावः । यथा वायौ रूपाभावः ।

यम् । नीलघटात्यन्ताभावे पीतघटात्यन्ताभावोऽतिरिक्त एव । तत्रैव नीलघटात्यन्ताभावस्त्वधिकरणात्मक एव स चात्माश्रयः प्रामाणिकत्वान्न दोषावहः । अन्योन्याभावे संसर्गाभावादीनां भेदोऽप्यधिकरणमेव । अत्यन्ताभावस्य प्रतियोगितत्प्रागभावध्वंसा अभावरूपाः । एवं प्रागभावस्यापि प्रतियोग्यत्यन्ताभावादयस्तथा ध्वंसस्यापि । अन्योन्याभावस्य तु प्रतियोगितावच्छेदक एवाभाव-

(१) अविनाशी पुनरनिवृत्तेः—पा॰ ४ पु॰ ।

अन्योन्याभावस्तु तादात्म्यप्रतियोगिकोऽभावः । घटः पटो न भवतीति । तदेवमर्था व्याख्याताः ॥

ननु ज्ञानाद् ब्रह्मणो वा अर्था व्यति-

---

स्तद्धिय एव तद्बुद्धिप्रतिबन्धकत्वात् । नन्वेवं विरोधाभावेनाकाशात्यन्ताभावस्याकाशमभावो न स्यादिति चेत् सत्यमेवैतत् । साम्प्रदायिकास्तु आकाशस्याभाव इति प्रतियोगिता भासते सा चाभावाभावत्वमतो धर्मिग्राहकमानादेवाकाशस्य स्वात्यन्ताभावाभावता सिद्धेत्याहुः ।

अन्योन्याभावस्त्विति । नन्वसत्तादात्म्यप्रतियोगिकत्वेन तुच्छत्वं स्यादिति चेत् । न । प्रतियोगितावच्छेदकारोपहेतुकधीविषयत्वं लक्षणमित्यत्र तात्पर्यात् । नन्वेकस्य घटस्य कथमभावभेदः प्रतियोगिभेदाभावादिति चेत् । न । प्रतियोगितावच्छेदकभेदेनाभावभेदाभ्युपगमात् । तदुक्तं रुचिदत्तेन । तत्कालतत्संसर्गतादात्म्यावच्छेदकभेदेन तत्र भेदः सर्वसम्मत इति ॥

सौगतवेदान्तवादिनौ प्रत्यवतिष्ठेते । नन्विति । विज्ञानव्यतिरेकेण क्षणिकस्य वस्तुजातस्य सत्त्वमेव नास्ति व्यवहारोपपत्तिस्तु स्वप्नव्यवहारवदनाद्यविद्यावशादिति सौगतस्य मतम् । मायासचिवे ब्रह्मण्याकाशादिप्रपञ्चस्याध्यस्तत्वाद् ब्रह्मव्यतिरेकेण वस्तुजातस्य सदसद्विलक्षणत्वमिति ब्रह्मवादिनो मतमित्यर्थः । सिद्धान्ती

रिक्ता न सन्ति । मैवम्[1] । अर्थानामपि प्रत्यक्षादिसिद्धत्वेनाशक्यापलापत्वात् ॥

बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इत्यादिभिः पर्यायशब्दैर्याभिधीयते सा बुद्धिः । अर्थप्रकाशो वा बुद्धिः । सा च सङ्क्षेपतो द्विविधा । अनुभवः स्मरणं च । अनुभवोऽपि द्विविधो यथार्थोऽयथार्थश्चेति ।

तत्र यथार्थोऽर्थाविसंवादी । स च प्रत्यक्षादिप्रमाणैर्जन्यते । यथा चक्षुरादिभिरदुष्टैर्घटादिज्ञानम् । धूमलिङ्गकमग्निज्ञानम् । गोसादृ-

---

परिहरति । मैवमित्यादिना । अयं भावः । नात्र स्वप्नव्यवहारसाम्यं तद्बाधाभावात् । नापि सदसद्विलक्षणत्वपक्षः । परस्परविरोधे हि न प्रकारान्तरस्थितिरितिन्यायेन[2] सत्त्वासत्त्वव्यतिरिक्तस्य तृतीयप्रकारस्य खपुष्पतुल्यत्वात् । तस्मात् पदार्थजातस्य सत्यत्वं प्रमाणबलेनाङ्गीकर्तव्यमेवेति ॥

बुद्धिं निरूपयति । बुद्धिरिति । बुद्धिं विभजते । **सा च सङ्क्षेपत** इति । साक्षात्कृत्यनुमित्यादिभेदे सति

---

(१) नैतत्–पा॰ ४ पु॰ ।

(२) न्यायकुसुमाञ्जलिप्रकरणे तृतीयस्तबके ऽष्टमकारिकायाः पूर्वार्द्धम् ।

श्यदर्शनाद् गवयशब्दवाच्यताज्ञानम् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्याज् ज्योतिष्टोमस्य स्वर्गसाधनताज्ञानं च ।

अयथार्थस्तु अर्थव्यभिचार्यप्रमाणजः । स त्रिविधः संशयस्तर्कौ विपर्ययश्चेति । संशयतर्कौ वक्ष्येते ।

विपर्ययस्तु अतस्मिंस्तद्ग्रहः । भ्रम इति यावत् । यथा पुरोवर्तिन्यरजते शुक्त्यादौ रजतारोप इदं रजतमिति ।

स्मरणमपि यथार्थमयथार्थं चेति द्विविधम् । तदुभयं जागरे । स्वप्ने तु सर्वमेव ज्ञानं स्मरणमयथार्थं[1] च । दोषवशेन तदिति-

कथं द्वैविध्यमित्याशङ्क्य सङ्क्षेपत इत्युक्तम् ।

स्मरणं विभजते । स्मरणमिति । स्वप्ने त्विति । निद्रादुष्टान्तःकरणजं ज्ञानं स्वप्नः निद्रा नाम योगजधर्मासहकृतस्य मनसो निरिन्द्रियप्रदेशे ऽवस्थानम् । समाधावतिव्याप्तिवारणाय योगजधर्मासहकृतस्येति विशेषणम् । सुषुप्त्यवस्थायां मनः सर्वाणीन्द्रियाणि परिहृत्य पुरीतति वर्तत इति प्रलीनमनस्कस्यात्मनो मनसा सह संयोग एव नास्ति। स्वप्नावस्थायां तु सत्यप्यात्मनः संयोगे मन इन्द्रियेण न संयुज्यत इति विवेकः । जाते ज्ञाने ऽर्थेन स्वाकारो

(१) सर्वं ज्ञानं स्मरणमेवायथार्थं—पा· २ पु· ।

स्यान इदमित्युदयात्। सर्वं च ज्ञानं निराकारमेव न तु ज्ञाने अर्थेन स्वस्याकारो जन्यते साकारज्ञानवादनिराकरणात्। अत एवाकारेणार्थानुमानमपि निरस्तम्। प्रत्यक्षसिद्धत्वाद् घटादेः। सर्वं ज्ञानमर्थनिरूप्यमर्थप्रतिबद्धस्यैव तस्य मनसा निरूपणाद् घटज्ञानवानहमित्येतन्मात्रं गम्यते न तु ज्ञानवानहमित्येतावन्मात्रं ज्ञायते॥

अन्तरिन्द्रियं मनः। तच्चोक्तमेव॥

प्रवृत्तिर्धर्माधर्ममयी यागादिक्रिया तस्या[१]

---

जन्यत इति सौगतमतं निराकर्तुमाह। सर्वं च ज्ञानमिति। साकारज्ञानवादेति। अतीतानागतविषयके ज्ञानेऽसता विषयेण स्वाकारजननायोगादिति भावः। अर्थस्य प्रत्यक्षविषयत्वे प्रमाणमाह। सर्वमिति॥

प्रवृत्तिं निरूपयति। प्रवृत्तिरिति। धर्माधर्ममयीति। धर्माधर्मजनिकेत्यर्थः। अत्र सूत्रम्। प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति[२]। अत्र बुध्यतेऽनेनेति व्युत्पत्त्या बुद्धिशब्देन मनो विवक्षितम्। अन्यैरप्युक्तम्। प्रवृत्तिरत्र यागादेः पुण्यापुण्यमयी क्रियेति। ननु धर्माधर्महेतुत्वे तस्या जगद्धेतुत्वं स्यादित्यत्रेष्टापत्त्या समाधत्ते। तस्या

---

(१) क्रिया प्रवृत्तेः—पा॰ ४ पु॰।

(२) न्यायसूत्रम्। अ॰ १ आ॰ १ सू॰ १७।

जगद्व्यवहारसाधकत्वात् ॥

दोषा रागद्वेषमोहाः। राग इच्छा। द्वेषो मन्युः क्रोध इति यावत्। मोहो मिथ्याज्ञानं विपर्यय इति यावत् ॥

पुनरुत्पत्तिः प्रेत्यभावः। स चात्मनः पूर्वदेहनिवृत्तिरपूर्वदेहसङ्घातलाभः[1] ॥

फलं पुनर्भोगः सुखदुःखान्यतरसाक्षात्कारः[2] ॥

---

इति ॥

दोषान् विभजते। दोषा इति। अत्र सूत्रे प्रवर्तनालक्षणा दोषा[3] इति प्रवृत्तिहेतवो दोषा इत्यर्थः। अत्र मोहस्य न रागद्वेषवत् स्वातन्त्र्येण प्रवृत्तिहेतुत्वं किंतु तयोरनुग्राहकत्वेन मूढमेव हि रागद्वेषौ प्रवर्तयत इति विवेक्तव्यम् ॥

प्रेत्यभावं निरूपयति। पुनरुत्पत्तिरिति। प्रेत्य मृत्वा भवनं जन्म प्रेत्यभावः। मरणं प्राणशरीरविभागः। क्त्वाप्रत्ययार्थस्तु प्रक्रियाप्रदीपे ऽस्माभिर्निरूपितस्तत्रै-

---

(१) आत्मनोऽपूर्वदेहसंहतिलाभः—पा० ४ पु०। आत्मनः पूर्वदेहनिवृत्तिरुत्तरदेहसङ्गतिलाभः—पा ३ पु०। आत्मनोऽपूर्वदेहसङ्घातलाभः—पा० २ पु०।

(२) सुखदुःखानुभवः—पा० २। ३। ४ पु०।

(३) न्यायसूत्रम्। अ० १ आ० १ सू० १८।

पीडा दुःखम् । तच्चोक्तमेव ॥

मोक्षोऽपवर्गः । स चैकविंशतिप्रभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः । एकविंशतिप्रभेदास्तु शरीरं षडिन्द्रियाणि षड्विषयाः षड् बुद्धयः सुखं दुःखं चेति गौणमुख्यभेदात् । सुखं दुःखमेव दुःखानुषङ्गित्वात् । अनुषङ्गोऽविनाभावः । स चायमुपचारो मधुनि विषसंयुक्ते[1] वानुसन्धेयः ॥

अपवर्गं निरूपयति । मोक्ष इति । स चैकविंशतीति । दुःखनिवृत्तेरात्यन्तिकत्वं नाम निवृत्तसजातीयस्य तत्रैवात्मनि पुनरनुत्पादः । एकविंशतिप्रभेदास्त्विति । अत्र शरीरं दुःखायतनतया इन्द्रियाणि विषया बुद्धयश्च दुःखसाधनतया सुखं च दुःखानुषङ्गाद् दुःखमिति विवेकः । सन्ततिनिवृत्तिश्चेयं तत्त्वसाक्षात्कारेण विरोधितया समूलं मिथ्याज्ञानमुन्मूल्य जन्यत इति ज्ञेयम् । अत्र सूत्रम् । तदत्यन्तविमोक्षोऽपवर्ग[2] इति । दुःखसाधनशरीरनाशे नित्यसुखाभिव्यक्तिर्मुक्तिरिति भाट्टाः । नित्यं यत् सुखं तस्याभिव्यक्तिरित्यर्थः । आत्यन्तिको दुःखप्रागभावः सेति प्राभाकराः । दुःखात्यन्ताभाव इति लीला-

(१) मधुविषसम्पृक्ते ऽन्ने–पा॰ ४ पु॰ ।
(२) न्यायसूत्रम् । अ॰ १ आ॰ १ सू॰ २२ ।

मधुनोऽपि विषपक्षनिक्षेपवत् । स पुनरपवर्गः कथं भवति । उच्यते । शास्त्राद्विदितसमस्तपदार्थतत्त्वस्य[(१)] विषयदोषदर्शनेन विरक्तस्य मुमुक्षोर्ध्यायिनो ध्यान[(२)]परिपाकवशात् साक्षात्कृतात्मनः क्लेशहीनस्य निष्कामकर्मानुष्ठानादनागतधर्माधर्मावनर्जयतः पूर्वोपात्तं च धर्माधर्मप्रचयं योगर्धिप्रभावाद् विदित्वा समाहृत्य भुञ्जानस्य पूर्वकर्मनिवृत्तौ वर्तमानशरीरापगमे[(३)] ऽपूर्वशरीराभावाच्छरीराद्येकविंशति-

---

वतीकारः । अविद्यानिवृत्तिरित्यौपनिषदाः । मोक्षोत्पत्तिप्रक्रियां दर्शयति । स पुनरपवर्ग इत्यारभ्य सोऽपवर्ग इत्यन्तेन । तत्र शास्त्राद्विदितेत्यारभ्य साक्षात्कृतात्मन इत्यन्तेन मननिदिध्यासनसाक्षात्कारा दर्शिताः । तत्रापि विरक्तस्येतिपदेन निदिध्यासनोपयोगि वैराग्यं दर्शितं न तु परमं तस्य साक्षात्कारोत्तरभावित्वात् । क्लेशहीनस्य मिथ्याज्ञानादिध्वंसवत इत्यर्थः । पूर्वोपात्तमित्यादिना भुञ्जानस्येत्यन्तेन कायव्यूहो

---

(१) विदितपदार्थतत्त्वस्य–पा॰ २ । ३ पु॰ । विदितपरमार्थतत्त्वस्य–पा॰ ४ पु॰ ।

(२) ध्यायिन आत्मध्यान–पा॰ २ पु॰ ।

(३) शरीरादिवियोगे–पा॰ ४ पु॰ ।

दुःखसम्बन्धो न भवति कारणाभावात् । सोऽयमेक(१)विंशतिप्रभेदभिन्नदुःखहानिर्मोक्षः । सोऽपवर्ग(२) इत्युच्यते ॥

दर्शितः । अत्रागमः ।

आत्मनो वै शरीराणि बहूनि मनुजेश्वर ।
प्राप्य योगबलं कुर्यात्तैश्च सर्वमिहाचरेत् ॥
भुञ्जीत विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ।
सङ्ग्रहेच्च पुनस्तानि सूर्यस्तेजोगणानिव ॥ इति ।

मोक्षाय त्वरमाणस्यैव कायव्यूहेन भोगो नात्वरितस्यापीति निबन्धकृतः । अयं भावः । तत्वज्ञानात् कायव्यूहादिना भोगद्वारा कर्मक्षये सति मोक्षो नाभुक्तं क्षीयते कर्मेत्यादेः । न च ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन(३) इत्यनेन विरोधः । भोगद्वारापि तत्प्रामाण्योपपत्तेरिति साम्प्रदायिकाः । ननु क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इति श्रुत्या विरोध इति चेत् नेयं ज्ञानस्य कर्मक्षयहेतुतां प्रतिपादयति किं तु तत्त्वज्ञानध्वंसवति कर्मक्षयं स च कायव्यूहादिना नानुपपन्न इति न विरोधलेशोऽपि । क्वचित्तस्तु यत्कर्मजदुःखप्रागभावोऽस्ति तस्य भोगेनैव नाशस्तत्प्रागभावस्य प्रतियोगिजनकत्वनियमादन्यथा प्रतियोगिरूपनाशकाभावे तस्यात्यन्ताभावत्वापत्तेः । यत्कर्मजदुःखप्रागभावो नास्ति तस्यानुत्पादित-

(१) आत्यन्तिकी सेयमेक–पा· ४ पु· ।

(२) अयमेवापवर्ग–पा १ । २ पु· ।

(३) श्रीमद्भगवद्गीतायां चतुर्थाध्याये सप्तत्रिंशश्लोकपार्द्धम् ।

(इदानीं संशयमाह ।)[1] एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः संशयः । स च त्रिविधः। (विशेषादर्शने सति समानधर्मदर्शनजो विप्रतिपत्तिजोऽसाधारणधर्मजश्चेति ।)[2] तत्रैको विशेषादर्शने सति समानधर्मदर्शनजः। यथा स्थाणुर्वा पुरुषो वेति । एकस्मिन्नेव हि पुरोवर्तिनि द्रव्ये स्थाणुत्वनिश्चायकं वक्रकोट-

---

दुःखस्यैव तत्त्वज्ञानान्नाश इत्यनियममाह । वेदान्तविदस्तु तत्त्वज्ञानात् सञ्चितकर्मणः क्षयः प्रारब्धकर्मणस्तु भोगेनैव। प्रारब्धत्वं नाम प्रायणकाल उत्पादितदेहान्तरविषयान्तिमप्रत्ययत्वम् । इदं च ।

यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥ (३)

इत्यादिप्रमाणबलादावश्यकम् । एतदितरत् सञ्चितमित्याहुः ।

संशयलक्षणमाह । एकस्मिन्निति । एकत्र विरुद्धकोटिद्वयविषयकं ज्ञानं संशय इत्यर्थः। तद्भेदान् निरूपयति। स च त्रिविध इत्यादिना। विशेषादर्शने सति साधारणधर्मवद्धर्मिज्ञानानन्तरं कोटिद्वयस्मरणे सत्याद्यः। तथा वि-

---

(१) ( ) एतन्मध्यस्थो नास्ति ४ पु० ।

(२) ( ) एतन्मध्यस्थो नास्ति ३ । ४ पु० ।

(३) श्रीमद्भगवद्गीतायामष्टमाध्याये षष्ठश्लोकोऽयम् ।

रादिकं पुरुषत्वनिश्चायकं च शिरःपाण्यादिकं विशेषमपश्यतः स्थाणुपुरुषयोः समानधर्ममूर्द्ध्वत्वादिकं[1] च पश्यतः पुरुषस्य भवति संशयः किमयं स्थाणुर्वा पुरुषो वेति। द्वितीयस्तु संशयो विशेषादर्शने सति विप्रतिपत्तिजः। स यथा शब्दो[2] नित्य उतानित्य इति। तथाह्येको ब्रूते

---

शेषादर्शने सति विरुद्धधर्मप्रतिपादकवचनद्वयात्मकविप्रतिपत्तेः कोटिद्वयस्मरणे सत्यपरः। एवं विशेषादर्शने सत्यसाधारणधर्मवद्धर्मिज्ञानानन्तरं कोटिद्वयस्मरणे सति तृतीयः। असाधारणधर्मो नाम सामानासमानजातीयव्यवच्छेदको धर्मः। उपलब्ध्यनुपलब्ध्योस्तु साधारणधर्मान्तर्भूततया पृथक् संशयकारणत्वं नोक्तम्। तथाहि वापीखननानन्तरं जलमुपलभ्य किं पूर्वं सदेव जलमिदानीमभिव्यक्तमुपलभ्यते किं वा पूर्वमसदेव खननव्यापारजनितमुपलभ्यत इत्युपलब्धेः संशयः। अनुपलब्धेस्तु किं सन्नेव राक्षसो नोपलभ्यत उतासन्निति। तत्र किञ्चित् पूर्वं सदेव घटादिकं प्रदीपारोपणेनाभिव्यक्तमुपलभ्यते कदाचिच्चासदेव घटादिकं कुलालव्यापारादिजनितमुपलभ्यत इति सदसतोः साधारणधर्मेणोपलब्ध्या संशयः। अनुपलब्धिरपि सतां परमाण्वादीनामसतां च शशशृङ्गादीनामस्तीति तत्रापि साधारणधर्मादेव संशय इति। अत्र सूत्रम्। समानाने-

---

(१) धर्ममूर्द्धतालक्षणं—पा॰ ४ पु॰। धर्ममुच्चतालक्षणं—पा॰ ३ पु॰।
(२) किमयं शब्दो—पा॰ २। ३। ४ पु॰।

(इदानीं संशयमाह ।)[१] एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः संशयः । स च त्रिविधः । (विशेषादर्शने सति समानधर्मदर्शनजो विप्रतिपत्तिजोऽसाधारणधर्मजश्चेति ।)[२] तत्रैको विशेषादर्शने सति समानधर्मदर्शनजः । यथा स्थाणुर्वा पुरुषो वेति । एकस्मिन्नेव हि पुरोवर्तिनि द्रव्ये स्थाणुत्वनिश्चायकं वक्रकोट-

---

दुःखस्यैव तत्त्वज्ञानान्नाश इत्यनियममाह । वेदान्तविदस्तु तत्त्वज्ञानात् सञ्चितकर्मणः क्षयः प्रारब्धकर्मणस्तु भोगेनैव । प्रारब्धत्वं नाम प्रायणकाल उत्पादितदेहान्तरविषयान्तिमप्रत्ययत्वम् । इदं च ।

यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥ (३)

इत्यादिप्रमाणबलादावश्यकम् । एतदितरत् सञ्चितमित्याहुः ।

संशयलक्षणमाह । एकस्मिन्निति । एकत्र विरुद्धकोटिद्वयविषयकं ज्ञानं संशय इत्यर्थः । तद्भेदान् निरूपयति । स च त्रिविध इत्यादिना । विशेषादर्शने सति साधारणधर्मवद्धर्मिज्ञानानन्तरं कोटिद्वयस्मरणे सत्याद्यः । तथा वि-

---

(१) ( ) एतन्मध्यस्थो नास्ति ४ पु· ।

(२) ( ) एतन्मध्यस्थो नास्ति ३ । ४ पु· ।

(३) श्रीमद्भगवद्गीतायामष्टमाध्याये षष्ठश्लोकोऽयम् ।

रादिकं पुरुषत्वनिश्चायकं च शिरःपाण्यादिकं विशेषमपश्यतः स्थाणुपुरुषयोः समानधर्ममूर्द्ध्वत्वादिकं[1] च पश्यतः पुरुषस्य भवति संशयः किमयं स्थाणुर्वा पुरुषो वेति। द्वितीयस्तु संशयो विशेषादर्शने सति विप्रतिपत्तिजः। स यथा शब्दो[2] नित्य उतानित्य इति। तथाह्येको ब्रूते

---

शेषादर्शने सति विरुद्धधर्मप्रतिपादकवचनद्वयात्मकविप्रतिपत्तेः कोटिद्वयस्मरणे सत्यपरः। एवं विशेषादर्शने सत्यसाधारणधर्मवद्धर्मिज्ञानानन्तरं कोटिद्वयस्मरणे सति तृतीयः। असाधारणधर्मो नाम सामानासमानजातीयव्यवच्छेदको धर्मः। उपलब्ध्यनुपलब्ध्योस्तु साधारणधर्मान्तर्भूततया पृथक् संशयकारणत्वं नोक्तम्। तथाहि वापीखननानन्तरं जलमुपलभ्य किं पूर्वं सदेव जलमिदानीमभिव्यक्तमुपलभ्यते किं वा पूर्वमसदेव खननव्यापारजनितमुपलभ्यत इत्युपलब्धेः संशयः। अनुपलब्धेस्तु किं सन्नेव राक्षसो नोपलभ्यत उतासन्निति। तत्र किञ्चित् पूर्वं सदेव घटादिकं प्रदीपारोपणेनाभिव्यक्तमुपलभ्यते कदाचिच्चासदेव घटादिकं कुलालव्यापारादिजनितमुपलभ्यत इति सदसतोः साधारणधर्मेणोपलब्ध्या संशयः। अनुपलब्धिरपि सतां परमाण्वादीनामसतां च शशशृङ्गादीनामस्तीति तत्रापि साधारणधर्मादेव संशय इति। अत्र सूत्रम्। समानाने-

---

(१) धर्ममूर्द्ध्वतालक्षणं–पा॰ ४ पु॰। धर्ममुच्चतालक्षणं–पा॰ ३ पु॰।
(२) किमयं शब्दो–पा॰ २। ३। ४ पु॰।

शब्दो नित्य इति। अपरो ब्रूते शब्दोऽनित्य इति[1]। तयोर्विप्रतिपत्त्या मध्यस्थस्य पुंसो विशेषमपश्यतो भवति संशयः किमयं शब्दो नित्य उतानित्य इति। तृतीयोऽसाधारणधर्मजस्तु संशयः। यथा नित्यादनित्याच्च व्यावृत्तेन भूमा-

कधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय[2] इति। अत्रोपलब्ध्यनुपलब्ध्यव्यवस्थात इत्यस्य साधकबाधकप्रमाणाभावे सतीत्यर्थः। एवं विपरीतज्ञानमात्रे दोषोऽपि हेतुः। भ्रमजनकदोषात् संशयजनको दोषो विजातीय एवेत्यपि ज्ञेयम्। तथा आरोपमात्रे सारूप्यज्ञानमपि हेतुः पीतः शङ्ख इति भ्रमे श्वेतपीतयोः सारूप्याभावेऽपि पीतशङ्खयोः सामानाधिकरण्यमेवारोप्यते न पीतगुणः। तथा च तत्रापि तत्सारूप्यमसंसर्गाग्रहरूपमस्त्येवेति टीकायां द्रष्टव्यम्। ननु तथापि लोहितः स्फटिक इत्यनुभूयमानारोपे सारूप्यज्ञानं व्यभिचारि आरोप्यस्मरणद्वारा हि तद्धेतुर्न तु साक्षादिति चेत्। न। सारूप्यज्ञानजन्यस्य सारूप्यविशिष्टारोप्यज्ञानस्यारोपहेतुत्वात्। आरोप्यज्ञानं च स्मरणमनुभवो वेत्यन्यदेतत्। अनुभूयमानस्मर्यमाणारोपतयारोप इव संशयोऽपि सम्भावनातदितरभेदेन द्विविधः। तत्रोत्कटकोटिकः संशयः सम्भावना। उत्कटत्वं च भूयः-

(१) ब्रूते शब्दो नित्योऽपरोऽनित्य इति—पा॰ ३ पु॰।

(२) न्यायसूत्रम्। अ॰ १ आ॰ १ सू॰ २३।

असाधारणेन गन्धवत्त्वेन विशेषमपश्यतो भुवि नित्यत्वानित्यत्वसंशयः । तथाहि सकलनित्यव्यावृत्तेन गन्धवत्त्वेन योगाद् भूः किमनित्या उत सकलानित्यव्यावृत्तेन तेनैव योगान्नित्येति संशयः ॥

येन प्रयुक्तः पुरुषः प्रवर्तते तत् प्रयोज-

---

सहचरितत्वम् । यथा सति तोयदे तोयं भविष्यति न वेति । तदितरस्तु प्रसिद्धः । विशेषादर्शनं संशये हेतुरित्युक्तमिति पूर्ववद्विशेषदर्शनमपि भ्रमसंशयोत्तरप्रत्यक्षे हेतुरिति प्रदर्श्यते । तथाह्ययं स्थाणुरितिभ्रमोत्तरमयं स्थाणुः पुरुषो वेतिसंशयोत्तरं वायं पुरुष एवेतिप्रत्यक्षे पुरुषत्वव्याप्यकरचरणादिमानयमिति विशेषदर्शनमन्वयव्यतिरेकाभ्यां हेतुः । कारणता तु तस्य भ्रमोत्तरप्रत्यक्षे भ्रमविरोधिदर्शनत्वेन दोषाभावकालीनदर्शनत्वेन वा । अतः सत्यपि शुक्लत्वव्याप्यशङ्खत्ववानयमिति भ्रमविरोधिनि विशेषदर्शने पीतः शङ्ख इति भ्रमः । साक्षात्कारिभ्रमे हि साक्षात्कारिविशेषदर्शनमेव विरोधि । अत एव सूर्योदयेन प्राचीमनुमिन्वतोऽपि भवति दिङ्मोहः । संशयोत्तरप्रत्यक्षे तु संशयविरोधित्वेन संशयविरोधिसामग्रीत्वेन वा । अत एवान्धकारवति स्थले घटसन्देहानन्तरं विनापि व्याप्यदर्शनमालोकसंयोगाद् घटप्रत्यक्षमित्यन्यत्र विस्तरः ॥

प्रयोजनं लक्षयति । येन प्रयुक्त इति । यदिच्छ-

नम् । तच्च सुखदुःखावाप्तिहानी । तदर्था हि प्रवृत्तिः सर्वस्य[1] ॥

वादिप्रतिवादिनोः सम्प्रतिपत्तिविषयोऽर्थो दृष्टान्तः । स द्विविधः । एकः साधर्म्यदृष्टान्तः । यथा धूमवत्त्वस्य हेतोर्महानसम् । द्वितीयस्तु वैधर्म्यदृष्टान्तः । यथा तस्यैव हेतोर्महाह्रद इति ॥

प्रमाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः । स चतुर्धा सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपमसिद्धान्तभेदात् । तत्र सर्वतन्त्रसिद्धान्तो यथा धर्मिमात्रसद्भावः । द्वितीयो[2] यथा नैयायिकस्य मते मनस इन्द्रियत्वम् । तद्धि समानतन्त्रे

---

येत्यर्थः ॥

सिद्धान्तं लक्षयति । प्रामाणिकत्वेनेति । सर्वतन्त्रेति । तन्त्रमिह शास्त्रम् । सर्वतन्त्राविरुद्धः स्वतन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः । यथा घ्राणादीनीन्द्रियाणि । गन्धादय इन्द्रियार्था इति । नैयायिकस्येति । एतन्मते मनस इन्द्रियत्वं प्रतितन्त्रसिद्धान्तसिद्धमि-

---

(१) प्रवृत्तिः पुरुषस्य–पा॰ ४ पु॰ ।

(२) द्वितीयः प्रतितन्त्रसिद्धान्तो–पा॰ ३ पु॰ ।

वैशेषिके सिद्धम् । तृतीयो[1] यथा क्षित्यादिकर्तृसिद्धौ कर्तुः सर्वज्ञत्वम् । चतुर्थो[2] यथा जैमिनीयस्य नित्यानित्यविचारो यथा भवतु तावच्छब्दो गुण इति ॥

अनुमानवाक्यस्यैकदेशा अवयवाः । ते च प्रतिज्ञादयः पञ्च । तथा च न्यायसूत्रम् । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति[3] । तत्र साध्यधर्मविशिष्टपक्षप्रतिपादकं[4] वचनं प्रतिज्ञा । यथा पर्वतोऽयं वह्निमानिति ।

---

त्यर्थः । क्षित्यादीति । क्षित्यादिकं सकर्तृकमित्यनुमितौ पक्षधर्मताबलाद् यत् सर्वज्ञत्वादिर्विषयो भवति तदधिकरणसिद्धान्त इत्यर्थः । चतुर्थो यथा जैमिनीयस्येति । अत्र सूत्रम् । अपरीक्षितार्थाभ्युपगमात् तद्विशेषपरीक्षणमभ्युगमसिद्धान्त[5] इति ॥

अनुमानवाक्यस्यैकदेशा इत्यारभ्याकाङ्क्ष-

---

(१) अधिकरणसिद्धान्तो–पा॰ ३ पु॰ ।

(२) अभ्युपगमसिद्धान्तो–पा॰ ३ पु॰ ।

(३) अ॰ १ आ॰ १ सू॰ ३२ ।

(४) धर्मिप्रतिपादकं–पा॰ २ । ३ पु॰ ।

(५) न्यायसूत्रम् । अ॰ १ आ॰ १ सू॰ ३१ । तत्रापरीक्षिताभ्युपगमादिति पाठः ।

तृतीयान्तं[१] पञ्चम्यन्तं वा लिङ्गप्रतिपादकं वचनं हेतुः । यथा धूमवत्त्वेन धूमवत्त्वादिति[२] वा ।

सव्याप्तिकं दृष्टान्तवचनमुदाहरणम् । यथा यो यो धूमवान् सोऽग्निमान् यथा महानस इति ।

पक्षे लिङ्गोपसंहारवचनमुपनयः । यथा वह्निव्याप्यधूमवांश्चायमिति[३] तथा चायमिति वा ।

पक्षे साध्योपसंहारवचनं निगमनम् । यथा तस्मादग्निमानिति तस्मात् तथेति वा । एते च प्रतिज्ञादयः पञ्चानुमानवाक्यस्यावयवा इवावयवा न तु समवायिकारणं शब्दस्याकाशसमवेतत्वादिति ॥

तर्कोऽनिष्टप्रसङ्गः । स च सिद्धव्याप्तिक-

---

समवेतत्वादित्येतत्पर्यन्तम् । ग्रन्थार्थः स्पष्टः ॥

तर्कं निरूपयति । तर्क इति । तदुक्तम् । अनिष्टव्यापकप्रसञ्जनं तर्क इति । अनिष्टं यद् व्यापकं धूमाभावा-

---

(१) तृतीयान्तमिति नास्ति ४ पु० ।

(२) यथा धूमवत्त्वादिति–पा० ४ पु० ।

(३) यथा धूमवांश्चायमिति–पा० २ । ३ । ४ पु० ।

योर्धर्मयोर्व्याप्याङ्गीकारेण अनिष्टव्यापकप्रसञ्जनरूपः । यथा यद्यत्र घटोऽभविष्यत् तर्हि भूतलमिवाद्रक्ष्यतेति । स चायं तर्कः प्रमाणानामनुग्राहकः । तथाहि पर्वतोऽयं साग्निरुता-

दिरूपं तस्य प्रसञ्जनं तर्क इत्यर्थः ।

व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ॥ (१)

इतिवचनादङ्गपञ्चकसम्पन्नः सत्तर्कः । एकेनापि हीनश्चेत् तर्काभास इति । स चायं विरोधिशङ्काकालीनप्रमाणमात्रसहकारी । तदुक्तम् । प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेदिति । सर्वस्यापि प्रमां प्रति करणत्वात् । करणानां चेतिकर्तव्यतासाध्यत्वादित्याशयः । यथाहुः ।

न हि तत् करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहे ऽर्थिता ॥ इति (२)

शब्दानुग्राहकत्वं मीमांसकाचार्येणाप्युक्तम् ।

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ इति ।(३)

(१) अयं श्लोको वरदराजेनोक्तः । वाराणसीस्थमेडिकलहाल नामकयन्त्रालयमुद्रितसटीकतार्किकरक्षापुस्तके १८७ पृष्ठायाम् ।

(२) अयं श्लोकस्तार्किकरक्षाटीकायां वरदराजेनापि यथाहुरित्यादिना धृतः । वाराणसीस्थमेडिकलहालनामकयन्त्रालयमुद्रितसटीकतार्किकरक्षापुस्तके १९४ पृष्ठायाम् ।

(३) श्लोकोऽयं कुमारिलभट्टोक्तः । न्यायमञ्जरीग्रन्थे शास्त्रारम्भसमर्थनावसरे जयन्तभट्टेन तथा च भट्ट इत्यनेन धृतत्वात् ।

नग्निरितिसन्देहानन्तरं यदि कश्चिन्मन्येता-
नग्निरयमिति तदा तं प्रति यद्ययमनग्निरभ-
विष्यत् तदानग्नित्वाद्धूमोऽप्यभविष्यदित्यधू-
मवत्त्वप्रसञ्जनं क्रियते। स एष प्रसङ्गस्तर्क इत्यु-
च्यते। अयं चानुमानस्य विषयशोधकः प्रवर्तमा-
नस्य धूमवत्त्वलिङ्गकानुमानस्य विषयमग्निमनु-

मनुनापि।

आर्षं धर्मोपदेशं च वेदवाक्याविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ इति।(१)

तर्कसाध्यः प्रमाणानामनुग्रहस्तु प्रमाणविषये तद्वि-पर्ययाशङ्काविघटनादिरूपो ज्ञेयः। आत्माश्रयान्योन्या-श्रयादीनि तु तर्कप्रतिरूपकाणीति। अयं चानुमानस्य विषयेति। धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादिति व्याप्तिग्राहकोऽप्यपरस्तर्कोऽनुमानस्थले द्रष्टव्यः। गवयपदं यदि गवयत्वप्रवृत्तिनिमित्तकं न स्यान्निष्प्रवृत्तिनिमित्तकं स्यादित्युपमानस्य सहकारी। यजेत स्वर्गकाम इत्यत्र धात्वर्थो यदि समानपदोपात्ततया साध्यः स्यात् तदा तस्य दुःखतया वेदकर्तुरासत्वं विधेश्चेष्टोपायत्वं प्रेक्षावतां प्रवृत्तिश्च व्याहन्येतेति शब्दस्य। ननु विरोधिशङ्का-

(१) अयं श्लोको न्यायकुसुमाञ्जलावुदयनाचार्येणापि धृतः। एसियाटिक्सोसाइटीत्रवङ्गलमुद्रितन्यायकुसुमाञ्जलिपुस्तकद्वितीयभागे ८९ पृष्ठायाम्।

जानाति । अनग्निमत्त्वस्य प्रतिक्षेपात् । अतोऽनुमानस्य भवत्यनुग्राहक इति । अत्र कश्चिदाह । तर्कः संशय एवान्तर्भवतीति । तन्न । एककोटिविषयत्वात् तर्कस्य ॥

निर्णयोऽवधारणज्ञानम्[1] । तच्च प्रमाणानां फलम् ॥

तत्त्वबुभुत्सोः कथा वादः । स चाष्टनिग्रहाणामधिकरणम् । ते च न्यूनाधिकापसि-

---

नवतारदशायां तेन विनापि प्रमोत्पादनात् तर्को न सहकारी किं तु विरोधिशङ्कानिवर्तक एवेति चेत् । न । अयं पुरुष एवेत्याकारके संशयोत्तरप्रत्यक्षे विशेषदर्शनस्येव तस्यापि निश्चयविशेषे हेतुत्वात् । अन्ये तु तर्कस्य प्रमाणसहकारित्वाभावे ऽपि विरोधिशङ्कानिवर्तकत्वेन प्रयोजकत्वमात्रमेवेत्याहुः ॥

तर्कसहकृतप्रमाणसाध्यं फलं दर्शयति । निर्णय इति । तच्चेति । यद्यप्यङ्गानां प्रधानफलेनैव फलवत्त्वस्य दर्शपूर्णमासाद्यङ्गेषु प्रयाजादिषु दृष्टत्वात् तर्कस्यापि तत्त्वनिर्णयः फलं तथापि प्राधान्येन व्यपदेशा भवन्तीतिन्यायेनेत्थमुक्तम् । तदुक्तम् । फलवत्सन्निधौ यदफलं तदङ्गमिति ॥

वादकथां निरूपयति । तत्त्वबुभुत्सोरिति । ते च न्यूनाधिकेति । हीनमन्यतमेनाप्यवयवेन न्यूनम्[2] । हेतू-

---

(१) अवधारणम्–पा॰ ४ पु॰ ।

(२) न्यायसूत्रम् । अ॰ ५ आ॰ २ सू॰ १२ ।

द्वान्ता हेत्वाभासपञ्चकं चेत्यष्टौ निग्रहाः ॥

उभयसाधनवती[1] विजिगीषुकथा जल्पः। स च यथासम्भवं सर्वनिग्रहाणामधिकरणम्। परपक्षे दूषिते स्वपक्षस्थापनप्रयोगावसानश्च[2] ॥

स एव स्वपक्षस्थापनाहीनो[3] वितण्डा। सा च परपक्षदूषणमात्रपर्यवसाना। नास्य वैतण्डिकस्य स्थाप्यः पक्षोऽस्ति। कथा तु नानावक्तृक[4]पूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः॥

उक्तानां पक्षधर्मत्वादिरूपाणां मध्ये येन

---

दाहरणाधिकमधिकम्[5]। सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः[6]। हेत्वाभासपञ्चकं चानुपदं वक्ष्यमाणम् ॥

वादादिकथात्रये ऽपि वर्जनीयानां हेत्वाभासानां स्वरूपं दर्शयति। उक्तानां पक्षधर्मत्वादीत्यादिना। यद्यप्यनुमाननिरूपण एत उपन्यस्तास्तथाप्यधिकविशेष-

---

(१) उभयसाधनवतीति नास्ति ४ पु०।

(२) दूषिते साधनप्रयोगावसानश्च जल्पः—पा० ४ पु०।

(३) स्वपक्षस्थापनाहीना कथा—पा० ३ पु०।

(४) नानापुरुषकर्तृक—पा० ४ पु०।

(५) न्यायसूत्रम्। अ० ५ आ० २ सू० १३।

(६) न्यायसूत्रम्। अ० ५ आ० २ सू० २४।

केनापि रूपेण[1] हीना अहेतवः । ते ऽपि कतिपयहेतुरूपयोगाद्धेतुवदाभासमाना हेत्वाभासाः । ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात् पञ्चैव । अत्रोदयनेन व्याप्तस्य हेतोः पक्षधर्मतया प्रतीतिः सिद्धिस्तदभावोऽसिद्धिरित्यसिद्धिलक्षणमुक्तम् । तच्च यद्यपि विरुद्धादिष्वपि सम्भवतीति साङ्कर्यं प्रतीयते । तथापि यथा न साङ्कर्यं तथोच्यते । यो हि यत्र साधने पुरः परिस्फुरति समर्थश्च दुष्टज्ञप्तौ[2] स एव दुष्टज्ञप्तिकारको दूषणमिति यावत् नान्य इति । तेनैव पुरःस्फूर्तिकेन दुष्टौ ज्ञापितायां कथापर्यवसाने जाते तदुपजीविनोऽन्यस्यानुपयोगात् । तथा च सति यत्र विरोधो साध्यविपर्ययव्याप्त्याख्यो दुष्टज्ञप्तिकारकः स एव विरुद्धो हेत्वाभासः । एवं यत्र व्यभिचारादयस्तथाभूतास्ते ऽनैकान्ति-

---

कथनार्थं पुनरुपन्यासः । तत्रोदयनेन व्याप्तस्य पक्ष-

---

(१) अन्यतमेन रूपेण—पा० ४ पु० । एकेनापि रूपेण—पा० २ । ३ पु० ।
(२) दुष्टिज्ञप्तौ—पा० ४ पु० । एवमग्रे ।

कादयस्त्रयः । ये पुनर्व्याप्तिपक्षधर्मताविशिष्ट-हेतुस्वरूपज्ञप्त्यभावेन पूर्वोक्ता असिद्धादयो दुष्टज्ञप्तिकारका दूषणानीति यावत्। तथाभूतः सोऽसिद्धः ।

स च त्रिविध आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदात् । तत्र यस्य हेतोराश्रयो नावगम्यते स आश्रयासिद्धः । यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र हि गगनारविन्दमाश्रयः स च नास्त्येव । अयमप्याश्रयासिद्धः । तथाहि घटोऽनित्यः कार्यत्वात् पटवदिति । नन्वाश्रयस्य घटादेः सत्त्वात् कार्यत्वादिति हेतुर्नाश्रयासिद्धः सिद्धसाधकस्तु[१] स्यात् सिद्धस्य घटानित्यत्वस्य साधनात् । मैवम्[२] । न हि स्वरूपेण कश्चिदाश्रयो भवत्यनुमानस्य किं तु सन्दिग्धधर्मवत्त्वेन[३] । तथा चोक्तं भाष्ये[४] नानुपलब्धे

(१) साधनं तु–पा· ३ । ४ पु· ।

(२) सत्यम्–पा· ३ पु· ।

(३) सन्दिग्धसाध्यत्वेन–पा· ४ पु· ।

(४) तथा चोक्तं भाष्ये इति नास्ति २ । ३ । ४ पु· ।

न निर्णीते ऽर्थे ऽपि तु सन्दिग्धे ऽर्थे न्यायः प्रवर्तते[१]। न च घटे ऽनित्यत्वसन्देहोऽस्ति अनित्यत्वस्य निश्चितत्वात्। तेन यद्यपि स्वरूपेण घटो विद्यते तथाप्यनित्यत्वसन्देहाभावान्नासावाश्रय इत्याश्रयासिद्धत्वादहेतुः[२]। स्वरूपासिद्धस्तु स उच्यते। यो हेतुराश्रये नैवावगम्यते[३]। यथा सामान्यमनित्यं कृतकत्वादिति। कृतकत्वं हि हेतुराश्रये सामान्ये नास्त्येव। (भागासिद्धो यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति। अत्र शब्दस्यानित्यत्वं साध्यम्। प्रयत्नानन्तरीयकत्वादिति हेतुः। स च न सर्वेषां शब्दानाम्। आद्यशब्दस्य प्रयत्नानन्तरीयकत्वं पुरुषव्यापारे ऽस्ति शब्दजनितशब्दे नास्तीति भागासिद्धो हेतुः। अथ किमिदं प्रयत्नानन्तरीयकत्वम्। उच्यते। आदावात्ममनःसंयोगस्ततो ज्ञानं ततो विवक्षा ततः प्रयत्नस्ततः कोष्ठगतस्य वायोः पूर्वदेशविभागस्ततो घटादि-

---

(१) पवर्तत इति न्यायात्–पा॰ ३। ४ पु॰।

(२) इत्याश्रयासिद्धो हेतुः–पा॰ ४ पु॰।

(३) नाधिगम्यते–पा॰ ४ पु॰। नावगम्यते–पा॰ २। ३ पु॰।

देशसंयोगस्तत आद्यनिष्पत्तिरिति । अस्यैव प्रयत्नानन्तरीयकत्वमस्ति अन्येषामाद्यशब्दजनितशब्दानां नास्तीति भागासिद्धो हेतुः । आद्ये शब्दे आत्ममनःसंयोगजनितज्ञानादिक्रमेण प्रयत्नानन्तरीयकत्वं पुरुषव्यापारे वर्तते न तु द्वितीयादिशब्देष्विति हेतोः पक्षैकदेशावर्तित्वात् )[१] । भागासिद्धोऽपि स्वरूपासिद्ध एव । यथा पृथिव्यादयश्चत्वारः परमाणवो नित्या गन्धवत्त्वादिति । गन्धवत्त्वं हि पक्षीकृतेषु सर्वेषु नास्ति पृथिवीमात्रवृत्तित्वात् । अत एव भागे स्वरूपासिद्धः ।

तथा विशेषणासिद्धविशेष्यासिद्धासमर्थविशेषणासिद्धासमर्थविशेष्यासिद्धादयः स्वरूपासिद्धभेदाः । तत्र विशेषणासिद्धो यथा शब्दो नित्यो द्रव्यत्वे सत्यस्पर्शत्वात् । अत्र हि द्रव्यत्वविशिष्टमस्पर्शत्वं हेतुर्नास्पर्शत्वमात्रम् । शब्दे च द्रव्यत्वं विशेषणं नास्ति[२] गुणत्वादतो विशेषणासिद्धः । न चासति विशेषणे

(१) ( ) एतच्चिह्नमध्यस्थो नास्ति २ । ३ । ४ पु० ।
(२) द्रव्यत्वं नास्ति—पा० १ । ४ । २ पु० ।

द्रव्यत्वे तद्विशिष्टमस्पर्शत्वमस्ति विशेषणाभावे विशिष्टस्याप्यभावात्[1]। यथा दण्डमात्राभावे पुरुषाभावे वा दण्डविशिष्टस्य पुरुषस्याभावः। तेन सत्यप्यस्पर्शत्वे द्रव्यत्वविशिष्टस्य हेतोरभावात् स्वरूपासिद्धत्वम्। विशेष्यासिद्धो यथा शब्दो नित्योऽस्पर्शत्वे सति द्रव्यत्वादिति। अत्रापि विशिष्टो हेतुः। न च विशेष्याभावे विशिष्टं स्वरूपमस्ति। विशिष्टश्च हेतुर्नास्त्येव। असमर्थविशेषणासिद्धो यथा[2]। शब्दो नित्यो गुणत्वे सत्यकारणकत्वात्। अत्र हि विशेषणस्य गुणत्वस्य न किञ्चित् सामर्थ्यमस्तीति। (विशेष्यस्याकारणकत्वस्यैव नित्यत्वसाधने सामर्थ्यात्।)[3] अतोऽसमर्थविशेषणता। स्वरूपासिद्धत्वं तु विशेषणाभावे विशिष्टस्याप्यभावात्। ननु विशेषणं गुणत्वं तच्च शब्दे ऽस्त्येव। तत् कथं विशेषणाभावः। सत्यमस्त्येव गुणत्वम्। किं तु न तद्विशेषणम्। तदेव हि हेतोर्विशेषणं भवति

(१) विशिष्टाभावात्—पा॰ ४ पु॰।

(२) असमर्थविशेषणो यथा—पा॰ ४ पु॰।

(३) ( ) एतन्मध्यस्थो नास्ति १ पु॰।

यदन्यव्यवच्छेदेन प्रयोजनवत्। गुणत्वं तु निष्प्रयोजनमतोऽसमर्थमित्युक्तमेव। असमर्थविशेष्यो यथा तत्रैव तद्वैपरीत्येन[१] प्रयोगः। तथाहि शब्दो नित्योऽकारणकत्वे सति गुणत्वादिति। अत्र तु विशेषणमात्रस्यैव नित्यत्वसाधने समर्थत्वाद् विशेष्यमसमर्थम्[२]। स्वरूपासिद्धत्वं तु विशेष्याभावे विशिष्टाभावाद् विशिष्टस्य च हेतुत्वेनोपादानात्। शेषं पूर्ववत्।

व्याप्यत्वासिद्धस्तु स एव यत्र हेतोर्व्याप्तिर्नावगम्यते। स द्विविधः। एकः साध्येनासहचरितोऽपरस्तु सोपाधिकसाध्यसम्बन्धी[३]। तत्र प्रथमो यथा यत् सत् तत् क्षणिकं यथा जलधरः[४] संश्च विवादास्पदीभूतः शब्दादिरिति। अत्र हि शब्दादिः पक्षस्तस्य क्षणिकत्वं साध्यं सत्त्वं हेतुः। न चास्य हेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणमस्ति। इदानीमुपाधिस-

(१) व्यत्ययेन—पा· २। ३। ४ पु·।
(२) विशेष्यासमर्थत्वम्—पा· ४ पु·।
(३) सोपाधिः साध्यासमर्थः—पा· ४ पु·।
(४) यथा घटः—पा· ४ पु·। यथा मेघः—पा· २ पु·।

हितो व्याप्यत्वासिद्धः[१] प्रदर्श्यते । तद्यथा स श्यामो मैत्रीतनयत्वात् परिदृश्यमानमैत्रीतनयस्तोमवदिति। अत्र हि मैत्रीतनयत्वेन श्यामत्वं साध्यते । न च मैत्रीतनयत्वं श्यामत्वे प्रयोजकं किं तु शाकाद्यन्न[२]परिणाम एवात्र प्रयोजकः । प्रयोजकश्चोपाधिरुच्यते । अतो मैत्रीतनयत्वेन श्यामत्वेन सम्बन्धे[३] शाकाद्यन्न[४]परिणाम एवोपाधिः। यथा वा अग्नेर्धूमसम्बन्ध आर्द्रेन्धनसंयोगः । अत एवोपाधिसम्बन्धाद्[५] व्याप्तिर्नास्तीति व्याप्यत्वासिद्धोऽयं मैत्रीतनयत्वादिहेतुः। तथा परोऽपि[६] व्याप्यत्वासिद्धः । यथा क्रत्वन्तर्वर्तिनी[७] हिंसा अधर्मसाधनं[८] हिंसात्वात् क्रतुबाह्यहिंसावदिति । न च हिंसात्व-

(१) यो व्याप्यत्वासिद्धः स च–पा॰ ३ । ४ पु॰ ।

(२) शाकाद्याहार–पा॰ ४ पु॰ ।

(३) मैत्रीतनयत्वस्य श्यामत्वसम्बन्धे–पा॰ ४ पु॰ ।

(४) शाकाद्याहार–पा॰ ३ । ४ पु॰ ।

(५) अतोऽस्वाभाविकसम्बन्धात्–पा॰ ४ पु॰ । यतः सोपाधिकसम्बन्धात्–पा॰ ३ पु॰ ।

(६) अथापरोऽपि–पा॰ ४ पु॰ ।

(७) क्रत्वन्तःपातिनी–पा॰ ४ पु॰ ।

(८) अधर्मजनिका–पा॰ ३ । ४ पु॰ ।

मधर्मे प्रयोजकं[1] किं तु निषिद्धत्वमुपाधिरिति पूर्ववदुपाधिसद्भावाद् व्याप्यत्वासिद्धोऽयं हिंसात्वं हेतुः । ननु साध्यव्यापकत्वे सति साधनाव्यापको यः स उपाधिरित्युपाधिलक्षणम् । तच्च निषिद्धत्वे नास्ति । तत् कथं निषिद्धत्वमुपाधिरिति । नैवम् । निषिद्धत्वे ऽप्युपाधिलक्षणस्य विद्यमानत्वात् । तथाहि साध्यस्य अधर्मजनकत्वस्य व्यापकं निषिद्धत्वम् । यत्रयत्राधर्मसाधनत्वं तत्रतत्रावश्यं निषिद्धत्वमिति निषिद्धत्वस्य[2] विद्यमानत्वात् । न च यत्रयत्र हिंसात्वं तत्रतत्रावश्यं निषिद्धत्वं क्रत्वङ्गहिंसायां व्यभिचारात् । अस्ति हि क्रत्वङ्गहिंसायां हिंसात्वं न चात्र निषिद्धत्वमिति[3] । तदेवं त्रिविधोऽसिद्धो दर्शितः ।

सम्प्रति विरुद्धः कथ्यते । साध्यविपर्ययव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । अत्र हि नित्यत्वं साध्यं कृतकत्वं हेतुः ।

(१) अत्रापि हिंसात्वं नाधर्मे प्रयोजकं—पा· ३ । ४ पु· ।
(२) तत्रतत्र निषिद्धत्वस्य—पा· ३ । ४ पु· ।
(३) अत्र हि क्रत्वङ्गहिंसाया अन्यत्र निषिद्धत्वमिति—पा· ४ पु· ।

तद्विपर्ययेण चानित्यत्वेन कृतकत्वं व्याप्तं यतो यद्यत् कृतकं तत्तत् खल्वनित्यमेव । अतः साध्यविपर्यय(१)व्याप्तत्वात् कृतकत्वं हेतुर्विरुद्धः ।

साध्यसंशयहेतुरनैकान्तिकः सव्यभिचार इति वोच्यते । स द्विविधः । साधारणानैकान्तिकोऽसाधारणानैकान्तिकश्चेति । तत्र प्रथमः पक्षसपक्षविपक्षवृत्तिः(२) । यथा शब्दो नित्यः प्रमेयत्वादिति । अत्र प्रमेयत्वं हेतुः पक्षे शब्दे सपक्षे(३) नित्ये व्योमादौ विपक्षे चानित्ये घटादौ विद्यते सर्वस्यैव प्रमेयत्वात् । तस्मात् प्रमेयत्वं हेतुः साधारणानैकान्तिकः । असा-

---

धर्मताप्रतीतिरित्यारभ्य कृतकत्वं हेतुर्विरुद्ध इत्येतत्पर्यन्तम् । ग्रन्थार्थः स्पष्टः ।

अनैकान्तिकं निरूपयति । संशयहेतुरिति । भाष्योक्तं लक्षणान्तरमाह । सव्यभिचार इति । विभागं दर्शयति । स द्विविध इति । पक्षसपक्षेति । सपक्षविपक्षवृत्तितया साधारणानैकान्तिकः साध्यसन्देहमुत्पादयती-

---

(१) साध्यविरुद्ध—पा० १ पु० ।

(२) प्रथमः सपक्षविपक्षवृत्तिः—पा० ४ पु० ।

(३) प्रमेयत्वं हेतुः सपक्षे—पा० ४ पु० ।

धारणानैकान्तिकश्च स एव यः सपक्षविपक्षाभ्यां व्यावृत्तः पक्ष एव वर्तते । यथा भूर्नित्या गन्धवत्त्वादिति । अत्र हि गन्धवत्त्वं हेतुः । स च सपक्षान्नित्याद्व्योमादेर्विपक्षाच्चानित्याज्जलादेर्व्यावृत्तो गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वादिति । व्यभिचारस्तु लक्ष्यते । सम्भवत्सपक्षविपक्षस्य हेतोः सपक्षवृत्तित्वे सति विपक्षाद्व्यावृत्तिरेव नियमो गमकत्वात् । तस्य च साध्यविपरीतव्याप्तस्य[१] तन्नियमाभावो व्यभिचारः । स च द्वेधा सम्भवति[२] सपक्षविपक्षयोर्वृत्तौ ताभ्यां व्यावृत्तौ च ।

यस्य प्रतिपक्षभूतं हेत्वन्तरं विद्यते स प्रकरणसमः । स एव सत्प्रतिपक्ष इति चोच्यते ।

त्यर्थः । असाधारणानैकान्तिकश्चेत्यादि । असाधारणोऽपि सकलसपक्षविपक्षव्यावृत्ततया साध्यसन्देहजनक इत्यर्थः । तदुक्तम् । साध्यनिश्चयविरोधिसंशयकोट्युपस्थापकतावच्छेदकरूपवाननैकान्तिक इति । स च द्वेधा सम्भवतीत्यादि । यद्यप्यसाधारणस्य साध्याभाववद्गामित्वलक्षणो व्यभिचारो नास्ति तथापि नियमाभावरूपो व्यभिचारोऽस्तीति द्विविधस्यापि सव्यभिचारत्वमुपपद्यत इति भावः ।

प्रकरणसमं लक्षयति । यस्य प्रतिपक्षभूतमिति ।

(१) साध्यव्याप्तविपरीतस्येति सम्भाव्यते ।
(२) स च द्वेधा सम्भवी असम्भवी च—षा॰ ४ पु॰ ।

॥ श्रीः ॥

# आगमप्रामाण्यम् ।

## श्रीपञ्चरात्रतन्त्रप्रामाण्यव्यवस्थापनपरम् ।

श्रीभाष्यकाराणां परमगुरुणा

श्रीयामुनाचार्यस्वामिना प्रणीतम् ।

सत्संप्रदायाचार्यसर्वतन्त्रस्वतन्त्र पं. स्वामिश्रीराममिश्र-शास्त्रिणा परिशोधितं क्वचिद्विषमे विशदीकृतं च ।

# ĀGAMAPRĀMĀṈYAM

BY

ŚRÍ YĀMUNĀCHĀRYA SWĀMIN,

*The Paramaguru of Śrībhāshyāchārya,*

EDITED BY

S. S. A. S. T. S. P. S. M. M. RA'MA MIS'RA S'ĀSTRI,

PROFESSOR SANSKRIT COLLEGE, BENARES.



वाराणस्याम्

ई. जे. लाजरसकम्पिन्याख्येन मेडिकल्-हाल्-नाम्नि

यन्त्रालये मुद्रयित्वा प्रकाशितम् ।

१९५७ वैक्रमाब्दे । १९०० ईस्वी ।

श्रीः ।

श्रियै नमः ।

श्रीधराय नमः ।

श्रीमते रामानुजाय नमः ।

# भूमिका ।

प्रायः सर्वेष्वपि दर्शनेषु पूर्वं सूत्राणां तात्पर्यार्थनिरूपणपरा वृत्तय एव ऋषिभिरारचितास्तदर्थावधारणकामनावद्भिरवलम्बिरे । यथा जैमिनीये उपवर्षवृत्तिर्बादरायणीये च बोधायनवृत्तिः, परं तु निजनयनिरूपणकामैः कैश्चिदेतैरर्वाचीनैर्भट्टप्रभाकरप्रभृतिभिः पूर्वमीमांसासु, भर्तृगौड़पादप्रभृतिभिरुत्तरमीमांसासु च महताऽऽयासेन आर्षवृत्तीः समुत्साद्य स्वाभिमतार्थनिरूपणपराणि स्वव्याख्यानानि सूत्रेषु पुरश्चक्रिरे । तदनु च तदनुयायिभिः प्राभाकरादिभिः पूर्वतन्त्रे, शङ्कराचार्यादिभिश्चोत्तरतन्त्रेऽतिस्वतन्त्राण्येवारब्धानि व्याख्यानान्याख्यातुमिति न परोक्षमाधुनिकान् प्राचीनांश्च दार्शनिकग्रन्थानवलोकयतां विपश्चितामिति किमिह बहूक्तेन । परं तु विशिष्टाद्वैतमास्थायुकैराचार्यैरद्यापि बौधायनीयमार्षमतमेव संरक्ष्यते । यन्मतं वृत्तिषु प्रणाशमुपेयुषीष्वपि द्रमिड़-गुहदेव-टङ्क-भारुचिप्रभृतिभिराचार्यैर्भाष्य-वार्त्तिकादिग्रन्थप्रणयनमुखेनाऽऽप्यायितम् । तदेदं बौधायनीयं मतं वृत्तिकारमतं समुच्चयवादिमतमित्येवं वा व्यवाहारि, तदनु च कालविपरिणामेन तदेव मतं भागवतमतमिति व्यवह्रियते स्म शङ्कराचार्यादिसमये, यथा तैर्बादरायणीयेषु सूत्रेषु भाष्यमाभाषमाणैः उत्पत्त्यसंभवसूत्रचतुष्टयीव्याख्यानावसरे

(भागवता एवं मन्यन्ते) इत्यादिनोपन्यस्य निराकर्त्तुमारब्धम् ।

तदानीं पर्यन्तं श्रीभाष्यकाराः श्री६रामानुजाचार्या नावतेरुरिति नैतद्व्यपदिष्टमभवद् रामानुजमतमिति यथेदानीन्तनाः परमतानुवर्तिनो विशिष्टाद्वैतवादिनः समुद्दिश्य रामानुजीया इति व्यपदिशन्ति । तदेवं शाङ्करसंप्रदायात्प्राचीने सनातनेऽस्मिन् श्रीसंप्रदाये वादिनां विविधा अभूवन् व्यपदेशा इति स्पष्टमस्ति । यस्मिन् समये भागवतमतपदेनेदं व्यपदिष्टमभवद् विशिष्टाद्वैतमतं तदा श्रीभाष्यकाराणां परमगुरवो भगवन्तः श्री६यामुनमुनयः प्राणैषुरमुमागमप्रामाण्यग्रन्थम् ।

तदानीं हि द्वेषोद्रेकवशात्प्रथमतो ये भागवतमतमिदमिति व्यपदेष्टुमारेभिरे त एव व्यतीते बहुतिथे काले एते भागवता न ब्राह्मणा इति वक्तुं प्रायतिषत । तममुं गगनतले पङ्कलेपप्रयत्नप्रायमसदुद्योगं भगवन्नारायणमुखोद्गीतस्य सर्ववेदरहस्यार्थरूपस्य श्रीपञ्चरात्रतन्त्रस्य बाललीलायितं निराकरणसमुद्यमं चावलोक्य निबबन्धुराचार्याः प्रकृतं निबन्धम् । उत्पत्त्यसंभवचतुःसूत्रीव्याख्याने यथा परैः पाण्डित्यं स्वीया सद्वर्त्मानुयायिता च प्रदर्शिता तथा आगमप्रामाण्याचार्यैः स्वयमेव महत्याऽरभट्या निरवशेषेण प्रपञ्चितमिति गजभुक्ते कपित्थे जगति स्वीयबलावेदनाय तद्विस्रंसने रोषमिषेण कृतं पादतलाहत्या, किन्तु परमाऽचार्यपरिचर्यामर्यादया मादृशस्येतरजनस्यापि नानधिकारो वक्तुमिति किञ्चिद्विशदीकरणमुद्रयोच्यते । तथा हि विज्ञानादिसूत्रव्याख्यानावसरे ।

"न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु एकैकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते, वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाश्चतुःसङ्ख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतोभगवद्व्यूहत्वावगमादि ति" श्रीशङ्कराचार्यास्तदिदं विष्णुसहस्रनामव्याख्यासु स्वोक्तैरेव विरुध्यते, तत्र "हि चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः" इति भगवन्नामगणान्तःपातिनि चतुर्व्यूहशब्दे।

व्यू*ह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः।
सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः॥

इति व्यासवचनात्। चतुर्व्यूहः। इति स्वयमेव तैः भगवतः कार्यविशेषसाधनसमुद्देशेन चतुर्धा भवनमङ्गीचक्रे, ततश्च ब्रह्मादिस्तम्बपर्यन्तस्य जगतोयादृशो ब्रह्मभावो न तादृशश्चतुर्व्यूहस्य, न हि लोष्टाश्मसाधारणो ब्रह्मभावो भवता भगवतश्चतुर्व्यूहेऽभ्युपगन्तुं शक्योऽन्यथा तु व्यूह्यात्मानं चतुर्धा वै इति त्वदुपन्यस्तव्यासवचनं सर्वथा कदर्थितमेव स्यात्। न च वासुदेव-संकर्षण-प्रद्युम्नानिरुद्धमूर्त्तीरपहायापराश्चतस्रो वासुदेवादिमूर्त्तयो भवताऽपि निर्देष्टुं शक्यन्ते न चापरैरपि कैश्चिद्वादिभिरभ्युपेयन्ते।

यदपि शरीरपुरुषश्छन्दः पुरुषो वेदपुरुषो महापुरुष इति बाह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा अस्येति चतुर्व्यूह इति व्याख्यानं, तदपि "चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यू-

* अत्र व्यूह्येत्यनेनावतारावतारिभावस्य विश्रुतात्मेत्यनेनावतारावतारिभावापन्नस्याप्यविकलेश्वरभावस्य, जनार्दनपदेन उपलक्षणमुद्रया जगदुत्पत्तिस्थिति-प्रणाशादिकारणतायाश्च बोधनेनाविकृतस्यैवैकस्य भक्तानुग्रहाय चतुर्मूर्तित्वमिति सिध्यति।

श्चतुर्गतिः" इति श्लोकेऽभिहितस्य चतुर्व्यूहशब्दस्यार्थो न तु प्रकृतस्य, न ह्यर्थभेदं विना पदैक्ये भगवन्नाम्नां सहस्रसंख्याप्रपूरणप्रत्याशा, तदवश्यं पदभेदेनार्थभेदेन वा भवितव्यमिति अष्टादशश्लोकस्थचतुर्व्यूहशब्दार्थोऽगत्या स्वानुमतव्यासाभिमतरीत्यैवेति स्पष्टं स्वीयमेव सहस्रनामव्याख्यानं स्वीयेनैव शारीरकस्थव्याख्यानेन विरुध्यते इति कृतं स्वोक्तिविस्मरणशीलानां निग्रहप्रयत्नेनेत्युपरम्यते ।

एते ग्रन्थाचार्याः श्रीभाष्यकाराणां परमगुरवः* श्रीमन्नाथमुनीनां पौत्राः+ श्रीसंप्रदाये ऽत्यन्तमान्या बौद्धैः पादोनबौद्धैरीषदूनबौद्धैर्वा संसारे प्रतारिते सन्मार्गसंदर्शकाः, अनेकप्रौढप्रबन्धनिबन्धारश्च। तद्यथा सिद्धित्रयम्, पुरुषनिर्णयः, आगमप्रामाण्यं, काश्मीरागमप्रामाण्यं, भगवद्गीतानिगूढार्थव्याख्यानमिति,

यथोक्तं श्रीमद्वेदान्ताचार्यैस्तत्त्वमुक्ताकलापे ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः ॥ इति,

अस्मद्गुरुरत्नमहामालायां श्रीमद्यामुनमुनयोमध्यमहामणिस्वरूपा अतः स्वप्रणीतवेदार्थसंग्रहस्यादौ ।

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत्,
परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।

* श्रीमद्रामानुजाचार्याणां मातुलाः श्रीरामायणार्थोपदेष्टारश्च गुरवोऽभूवन् श्रीमच्छैलपूर्णाचार्याः । श्रीमन्महापूर्णाचार्याः समाश्रयणगुरवः । श्रीमद्गोष्ठीपूर्णाचार्या रहस्यार्थोपदेशाचार्याः । अमीषां त्रयाणां गुरवो भगवन्तो यामुनाचार्यपादाः, अतस्ते श्रीभाष्याचार्याणां परमगुरवः ॥

+ यथोक्तमालवन्दारस्तवे स्वयमेव तैः पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ।

श्रुतिन्यायापेतं जगति विततं मोहनमिदं;
तमो येनापास्तं स हि विजयते यामुनमुनिः ॥

एवमाचेरुराचार्याः श्रीरामानुजभगवत्पादाः श्रीयामुनाचार्यवन्दनलक्षणं विशिष्टमङ्गलम् ।

श्रीभाष्ये एतेषामेव सिद्धित्रयस्थानि वचनानि पुरस्कृत्य युक्तीश्चावलम्ब्याचार्याः प्रत्यूचुर्निर्विशेषाद्वैतम् ।

उत्पत्त्यसंभवचतुःसूत्र्यर्थं याथातथ्येन जिज्ञासमानैरेष संदर्भोऽवश्यमवदधानैरध्येय इति चावधापयति विविधनिबन्धदर्शनसमुत्सुकान् दर्शनदर्शनव्यसनिनोजनान् ।

अङ्गीकरोति च हृदयेन साहाय्यं मथुरास्थश्रीरामानुजपाठशालाऽध्यापकस्य श्रीलक्ष्मणाचार्यस्य, येन स्वहस्तलिखितं देवाक्षरपुस्तकं तैलङ्गाक्षरपुस्तकं च संप्रेष्यास्य ग्रन्थरत्नस्य मुद्रणे उपकारः साधु निरभिसंधितया समपादि ।

अथ चागमप्रामाण्यग्रन्थः सम्यगवलोकितो दार्शनिकेतिहासनिरूपणव्यवसायानामत्यन्तमुपयोक्ष्यते । अस्ति चैष श्रीसंप्रदायानुयायिनामिव विपक्षसंप्रदायानुयायिनामप्युपादेयो बहूनामज्ञातरहस्यार्थानां ज्ञानहेतुत्वात् ।

आशासे चामुना ग्रन्थमुद्रणप्रचारणादिव्यापारेण पूर्वाचार्यकृपाभाजनतां तया चात्मनः कृतसर्वकृत्यतामामुष्मिकीं शाश्वतिकीं निश्श्रेयसयोग्यतां चेति ।

| | |
|---|---|
| श्रावणशुक्लसप्तम्यां शुक्रे । सं. १९५७. | पण्डितस्वामिराममिश्रशास्त्री काश्याम् अगस्त्यमुन्याश्रमाश्रमः । |

नमः पूर्वाचार्येभ्यो निर्हेतुकदयादृष्टिभ्यः ।

इति शम् ॥

श्रीमते रामानुजाय नमः ॥

# आगमप्रामाण्यविषयसूचनपत्रम् ।

## पञ्चरात्रागमप्रामाण्ये महापूर्वपक्षः ।

तत्र

॥ शम् ॥

सन्तु पूर्वाचार्याः सहजदयादृष्टयो नः सहायाः सर्वत्र ऐहिकामुष्मिककार्येष्विति भृशमभ्यर्थयते विनतोत्तमाङ्गो रामभिश्रशास्त्री ॥



॥ श्रीमते रामानुजाय नमः ॥

# आगमप्रामाण्यस्य शुद्धिपत्रम् ।

| पृ० । | पं० | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ५ । | ३ | नुलब्धो | नुपलब्धो |
| ८ । | ३ | एषां | येषां |
| १३ । | ६ | यह्वे | मह्वे |
| १५ । | ५ | आद्य | अद्य |
| २३ । | १ | निश्चयः | तिश्चयः |
| २३ । | ७ | स्यादन | त्यादन |
| २३ । | ८ | पत्नेः | पत्तेः |
| २४ । | ४ | तत्रा | तन्त्रा |
| २८ । | १ | तथा अज्ञो | तथाज्ञो |
| २८ । | ३ | विध्यना | त्रिद्यना |
| २८ । | ८ | लोद्यु | कोघु |
| ३१ । | ७ | त्रेधा | श्रेधा |
| ३४ । | ६ | शरारा | शरीरा |
| ४० । | १२ | न्यिना | न्यिनी |
| ४४ । | ४ | स्मतिति | स्मतीति |
| ४५ । | १ | ममी | मिमी |
| ४६ । | ३ | समा | समी |
| ५० । | ३ | एषां | येषां |
| ५० । | २ | कुया | कुर्यां |
| ५२ । | ५ | रजन्य | रन्य |
| ५२ । | ६ | आया | आग्ना |
| ५३ । | ११ | धत | घत |
| ५४ । | ६ | दीक्षीता | दीक्षिता |
| ५३ । | ७ | सहव्योग | साहव्यो |
| ५५ । | ४ | छात्वा | छत्वा |
| ६४ । | १२ | शुद्धि | शब्धि |



श्रीः

श्रियै नमः

श्रीधराय नमः

भगवते यामुनमुनये नमः

श्रीमते रामानुजाय नमः ॥

# श्रीमद्यामुनमुनिविरचितमागमप्रामाण्यम् ।

जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे ।
करामलकवद्विश्वं पश्यते विष्णवे नमः ॥

येऽमी केचन मत्सरात्सवयसो दुर्मानसारा नराः ।
गम्भीरां गुणशालिनीमपि गिरं निन्दन्ति निन्दन्तु ते ॥
सारासारविचारकौशलदशापारे परेऽवस्थिताः ।
सन्तस्सन्त्यनसूयवोऽपि बहवः शंसन्ति ये मद्गिरम् ॥

अभिनिवेशवशीकृतचेतसां बहुविदामपि सम्भवति भ्रमः ।
तदिह भागवतं गतमत्सरा मतमिदं विमृशन्तु विपश्चितः ॥

इह केचिद् यतस्ततोऽवगलकतिपयकुतर्ककल्कविस्फूर्जितविजितमनसस्त्रयीमार्गसंरक्षणव्याजेन निजविमर्शकौशलातिशयमुपदर्शयन्तः परमपुरुषविरचितनिरतिशयनिश्श्रेयसगोचरपञ्चरात्रतन्त्रप्रामाण्ये विप्रतिपद्यन्ते ।

वदन्ति च ।

द्वेधा खलु प्रमाणत्वं वचसामवसीयते ।
एकम्मानान्तरापेक्षमनपेक्षमथेतरत् ॥

तत्रापि ।

न तावत्पुरुषाधीनरचनं वचनं क्वचित् ।
आसीदति प्रमाणत्वमनपेक्षत्वलक्षणम् ॥

पौरुषेयं हि वचः प्रमाणान्तरप्रतिपन्नवस्तूपस्थापनायोपादीयमानं वक्तुस्तदर्थसिद्धिमनुरुध्यमानमेव प्रमाणभावमनुभवति । न च पञ्चरात्रतन्त्रप्रतिपाद्यमानविलक्षणदीक्षापूर्वकभगवदाराधनाभिलषितस्वर्गापवर्गादिसाध्यसाधनसंबन्धं प्रत्यक्षादीन्यावेदयितुं क्षमन्ते । न हि प्रत्यक्षेण दीक्षाराधनादीनि निरीक्षमाणास्तेषां निश्श्रेयससाधनतां प्रतिपद्यामहे ।

न चार्वाचीनाः केचिदतिमानुषशक्तयोऽमीषामभिलषितसाधनतामध्यक्षितवन्त इति प्रमाणमस्ति, यतस्तेषामपि चक्षुरादीन्द्रियं दृश्यमानमिन्द्रियस्वभावं नातिक्रमितुमुत्सहते ।

ननु च ।

प्रकृष्यमाणं प्रत्यक्षं दृष्टमाश्रयभेदतः ।
अतस्तदाश्रये क्वापि ध्रुवं परिनितिष्ठति ॥

सर्वं हि सातिशयं निरतिशयदशामनुभवद् दृष्टं वियतीव परिमाणं, सातिशयं च काकोलूकगृध्रादिषु प्रत्यक्षमीक्षितमिति तदपि तथा भवितुमर्हति । इयं च ज्ञानस्य परा काष्ठा या सर्वगोचरता, अधिकविषयतयैव हि जगति ज्ञानानि परस्परमतिशेरते ।

इत्थमैश्वर्यवैराग्यसामर्थ्यादिगुणा अपि ।
निरस्तातिशयाः पुंसि क्वचित्सन्तीति सूरयः ॥

अतो यस्यैतदखिलभुवनावलम्बिभावभेदसाक्षात्कारिप्रत्यक्षं स तत्समीक्षितदीक्षाराधनादिधर्मभावो भगवानेवं व्याचष्टेति किमनुपपन्नमिति ।

तत्र प्रत्यक्षविज्ञानप्रकर्षः कल्पितोऽपि वः ।
स्वगोचरमतिक्रम्य नान्यदास्कन्दितुं क्षमः ॥

तथा हि ।

रूपरूपितदेकार्थसमवायिषु चाक्षुषः ।
प्रकर्षो भवितुं युक्तो दृश्यमानप्रकर्षवत् ॥

एवम्, ।

इन्द्रियान्तरविज्ञानं विश्वं गोचरयेन्न तु ।
कथं प्रत्यक्षविज्ञानं विश्वं बोधयितुं क्षमम् ॥
ननु तत्क्लृप्तसामर्थ्यं विद्यमानोपलम्भने ।

असति हि स्वभावानुबन्धिनि विद्यमानोपलम्भनत्वे प्रत्यक्षतैव परावर्तते, न ह्यजातमतिवृत्तं वाऽगमयदनुमानादि प्रत्यक्षपक्षनिक्षेपं क्षमते, तेन अशेषविषयितालक्षणप्रत्यक्षप्रकर्षः स्वभावनियमनिर्मूलितोदय इति न हृदयमधिरोहति । इदमपि सातिशयेन निरतिशयमनुमिमानः पृष्टो व्याचष्टां सातिशय एव किन्तु तां दशामनुभवति यतः परं न संभवति महिमेत्यभिनिविशसे बाल इव स्थविरभावम् ।

अथैकस्मिन् सातिशये केनाप्यन्येन निरतिशयेन भवितव्यमिति आहोस्वित्समानजातीयेनान्येन निरतिशयदशामधिरूढेन भवितव्यमिति ।

न तावदग्रिमः कल्पः कल्पतेऽनुपलम्भतः ।
न हि दृष्टं शरावादि व्योमेव प्राप्तवैभवम् ॥

यदि च तदेव सातिशयमसंभावनीयपरप्रकर्षं परिनितिष्ठेत्, हन्त ? तर्ह्येकैकेन घटमणिकादिना ब्रह्माण्डोदरविवरमापूरितमिति तत्प्रतिहततयेतरभावभङ्गप्रसङ्गः ।

व्योमैव लब्धसाध्यत्वान्मध्यमः सिद्धसाधनः ।
कल्पान्तरेऽपि दुर्वारं प्रागुदीरितदूषणम् ॥
विप्रलम्भान्तरव्यासक्तम्भस्सातिशयो न हि ।
दृष्टपूर्वस्तथाऽन्योन्यव्याघातः स्थित एव सः ॥

यदपि वियति परिमाणमिह निदर्शितं तदपि विमर्शनीयमेव परिमाणं हि नाम देशावच्छेदः इयत्ता परितोभाववेष्टनमिति यावत् ।

न च नभसि तदस्तीति कथमिव तदिह निदर्शनतया निर्दिश्यते ।

यदि च नभसि तदनुमन्वीत तदपि तर्हि सम्भाव्यमानपरप्रकर्षमिति पुनरपि साध्यविकलता ।

न च अतिशयितेन प्रत्यक्षेण दीक्षाराधनादयो धर्मतया अवबोधिता इत्यपि प्रमाणमस्ति तस्मादस्मदादिषु अनालोचितपरचेतनातिरेकपरिकल्पनाऽल्पीयसीति नाभिप्रेतसाध्यसाधनसम्बन्धे प्रत्यक्षं प्रमाणं, नतरां तन्मूलतया पञ्चरात्रस्मृतिः प्रमाणम् ।

न च करणपथदूरवर्तिनि प्रस्तुतवस्तुन्यविनाभावावधारणाधीनोदयमनुमानमुत्पत्तुमलं, न ह्यदृष्टचरवह्नयस्तदविनाभावितया धूममनुसंदधाति ।

न चागमस्सात्वतसमयसिद्धक्रियाकलापकर्तव्यतोपस्थापनपरः परिदृश्यते, येन तन्मूलतया पञ्चरात्रस्मृतयः प्रमाणं स्युः, न चादृश्यमानोऽप्यनुमानगोचरः, यथैव हि तत्रप्रसिद्धदीक्षाराधनतत्फलाभिमतस्वर्गादिसाध्यसाधनभावो नानुमानगोचरः सम्बन्धावधारणविरहात्, एवं तन्मूलागमो ऽपि तत एव नानुमातुं शक्यः ।

न चागमेनापि प्रस्तुतस्मरणमूलभूतागमावगमः सम्भवति । स हि द्वेधा पौरुषेयापौरुषेयभेदात् ।

न तावत्पौरुषेयेण वचसा तस्य सम्भवः ।
विप्रलब्धुमपि ब्रूयुर्मृषैव पुरुषा यतः ॥
अद्यत्वेऽपि हि दृश्यन्ते केचिदागमिकच्छलात् ।
अनागमिकमेवार्थं व्याचक्षाणा विचक्षणाः ॥

तदिह पञ्चरात्रग्रन्थप्रबन्द्धृणामपि तन्मूलभूतागमावगमपुरःसरी किं स्वनिबन्धनानां वेदमूलत्वप्रतिज्ञा, किं वा यथारुचि रचयतां प्ररोचनाय तथा वचनमिति शङ्कामहे ।

तावता च प्रमाणत्वं व्याहन्येत समीहितम् ।
न हि नित्यागमः कश्चिदस्ति तादृशगोचरः ॥
न चोपमानात्तन्मूलश्रुतिसिद्धिरसम्भवात् ।
कथं ह्यदृष्टपूर्वा सा सदृशज्ञानगोचरा ॥

न चार्थापत्तितस्तन्मूलश्रुतिसिद्धिः, अनुपपत्त्यभावात्, स्मरणान्यथाऽनुपपत्त्या हि तत्कल्पना प्रादुर्भवति । स्मरन्ति हि पञ्चरात्रप्रणेतारः–दीक्षाराधनादि धर्मतयाऽष्टकादीनिव मन्वादयः ।

न चाननुभूते वस्तुनि स्मरणशक्तिराविर्भवति, अनुभवश्चेन्द्रियलिङ्गशब्दसदृशानुपपद्यमानार्थपूर्वकः, ईदृशविषयेऽनुभवः प्रमाणान्तरेभ्योऽनाविर्भवँश्चोदनामेव मूलमुपकल्पयतीति सिध्येदप्ययं मनोरथः यदि हि यथार्थत्वनियमोऽनुभवानां प्रामाणिकः स्यात्, यदा पुनारागद्वेषाभिनिवेशादिवशीकृतान्तःकरणानामयथार्थानुभवभाविता भावनाः स्वानुरूपाः स्मृतीरारचयन्ति कथमिव तदा स्मरणानुपपत्तितः प्रमाणभूता श्रुतिरुपकल्प्येत अन्यथाऽपि स्मरणोपपत्तेः, मन्वादिस्मरणेष्विदानीं का वार्त्ता । ननु तत्रापि प्रागुक्ता युक्तयः पराक्रमन्ते न ह्यष्टकां दृष्टवत्ताभिष्टसाधनमिति मतिराविरस्ति ।

न चानुमानं, संबन्धादर्शनात्, न च शब्दः, तदनुपलम्भात्, न चानुलब्धोऽनुमातुं शक्यः, संबन्धादर्शनादेव, न चोपमेयः, सदृशानिरूपणात्, न च कल्पयितुं शक्यः, अनन्तरोक्तत्वात्, स्मृत्यन्यथोपपत्तेः ।

वेदसंयोगिपुरुषस्मरणानुपपत्तितः ।
कल्प्यते चेच् श्रुतिस्तत्र ततोऽन्यत्रापि कल्प्यताम् ॥
यतो नारदशाण्डिल्यप्रमुखाः परमर्षयः ।
स्मर्यन्ते पञ्चरात्रेऽपि संप्रदायप्रवर्तकाः ॥

ततश्च ।

तुल्याक्षेपसमाधाने पञ्चरात्रमनुस्मृती ।
प्रमाणमप्रमाणं वा स्यातां भेदो न युक्तिमान् ॥
त्यज्यतां वा प्रमाणत्वं मन्वादिस्मृतिगोचरम् ।
विशेषः पञ्चरात्रस्य वक्तव्यो वा स उच्यते ॥
अपि वा कर्तृसामान्यात् प्रमाणमिति सूत्रयन् ।
सूत्रकारः स्फुटीचक्रे वैलक्षण्यं विवक्षितम् ॥

तथा हि श्रुतिविहितानामग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्मणां स्मृतिविहितानामष्टकाचमन-संध्योपासनादिकर्मणां च पित्राद्युपदिष्टत्वात् परमहितबुद्ध्या त्रैविद्यवृद्धानां निर्विशेषमनुष्ठानं दृष्टं, तेन तादृशशिष्टत्रैवर्णिकपरिग्रहदृढिम्ना स्पष्टदृष्टाष्टकादिकर्तव्यताप्रतीतिः स्वोपपादनपटीयसीं श्रुतिमेव मूलभूतामवलम्बते ।

न चैवमाचमनोपनयनादीनिव श्रुतिविहिताग्निहोत्रादिपदार्थानुष्ठायिनस्तान्त्रिकाचारानुपचरतः पश्यामः ।

प्रत्युतैनान् विगर्हन्ते कुर्वाणान् वेदवादिनः ।
तस्माद् यत्कर्तृसामान्यात् प्रामाण्यं स्मृतिषूदितम् ॥
नैव तत्पञ्चरात्रादि बाह्यस्मरणमर्हति ।
न हि त्रैवर्णिकाः शिष्टास्तदुक्तार्थानुपासते ॥

ननु तत्रापि श्रुतिस्मृतिप्राप्तशिखायज्ञोपवीतादिधारयद्भिर्भागवतब्राह्मणैरहरहरनुष्ठीयमानार्थत्वेन चोद-

नामूलत्वे संभाव्यमाने कथमिव प्रामाण्यप्रत्यनीकभूता भ्रमविप्रलम्भादयः स्मरणकारणतया कल्प्यन्ते ।

उच्यते ।

हन्तैवंवादिना साधु प्रामाण्यमुपपादितम् ।
यत् त्रैवर्णिकविद्विष्टाश्शिष्टा भागवता इति ॥

ननु ते कथमशिष्टा ये त्रैवर्णिकाग्रगण्या ब्राह्मणाः तन्न तेषां त्रैवर्णिकत्वमेव नास्ति दूरे ब्राह्मणभावः, न हीन्द्रियसंप्रयोगसमनन्तरं केषुचिदेव देहविशेषेषु अनुवर्तमानमन्यतो व्यावर्तमानं नरत्वातिरेकिणं ब्राह्मण्यं नाम जातिविशेषमपरोक्षयामः, शिखायज्ञोपवीतादयस्तु ब्राह्मणादीनां विधीयमाना न तद्भावमापादयितुं क्षमन्ते, नाप्यवगमयन्ति, दुष्टशूद्रादिषु व्यभिचारदर्शनात्, अतोनिर्विवादसिद्धवृद्धव्यवहार एवात्रावगमनिदानम् ।

न च भागवतेषु ब्राह्मणपदमविशङ्कं लौकिकाः प्रयुञ्जते । भवति च भेदेन व्यपदेशः—इतो ब्राह्मणा इतो भागवता इति । स्यादेतद् ब्राह्मणेष्वेव कुतश्चिद् गुणयोगात् सात्वतभागवतादिव्यपदेशः यथा तेष्वेव परिव्राजकादिशब्दा इति तन्न ।

रूढ्या सात्वतशब्देन केचित् कुत्सितयोनयः ।
उच्यन्ते तेषु सत्स्वेष शब्दो नान्यत्र वर्त्तते ॥
रूढिशक्तिप्रतिद्वन्द्वियोगशक्तिपरिग्रहः ।
अयुक्त इति युक्तिज्ञा रथकारपदे यथा ॥

अपरथा कथमिव रथकारशब्दोऽध्ययनसिद्धबुद्ध्यङ्गत्वभङ्गेनापि यौगिकीं वृत्तिमपहाय जातिविशेषमभिनिविशते । सन्ति च सात्वता नाम उपनयनादिसंस्कारहीना वैश्यव्रात्यान्वयिनोऽवरजन्मानः केचिद् यथाऽऽह मनुः ।

वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य एव च।
भारुषश्च निजङ्घश्च मैत्रसात्वत एव च ॥

इति,

भागवतशब्दश्च सात्वतेषु वर्तत इति नात्र कश्चिद् विवादः ॥

स्मरन्ति च।

पञ्चमः सात्वतो नाम विष्णोरायतनानि सः।
पूजयेदाज्ञया राज्ञां स तु भागवतः स्मृतः ॥ इति

तथाचोदीरितव्रात्यप्रसूतिवृत्त्युपायतयेदमेव स्मरन्ति यदमी ह प्रत्यक्षमेव वृत्त्यर्थमनुतिष्ठन्तो दृश्यन्ते तथा चोशना सर्वेषां कृषिशश्त्रोपजीवनम् आचार्यसात्त्वतयोर्देवपूजनम् इति, तथा ब्राह्मे पुराणे विष्णोरायतनानि स पूजयेदाज्ञया राज्ञाम्। इति, तथा ऽन्यत्रापि सात्वतानां च देवायतनशोधनं नैवेद्यशोधनं प्रतिमासंरक्षणम् इति, तथा चेदृशसंदेहव्युदासाय मनोर्वचः।

प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः।

इति।

अपि चाचारतस्तेषामब्राह्मण्यं प्रतीयते।
वृत्तितो देवतापूजा दीक्षानैवेद्यभक्षणम् ॥
गर्भाधानादिदाहान्तसंस्कारान्तरसेवनम्।
श्रौतक्रियाऽननुष्ठानं द्विजैस्सम्बन्धवर्जनम् ॥
इत्यादिभिरनाचारैरब्राह्मण्यं सुनिर्णयम्।

स्मरन्ति हि वृत्तितो देवपूजाया ब्रह्मकर्मस्वनधिकारहेतुत्वं यथा।

एषां वंशक्रमादेव देवार्चावृत्तितो भवेत्।
तेषामध्ययने यज्ञे याजने नास्ति योग्यता ॥ इति।

तथा च परमसंहितायां

तेषामेव वचः।

आपद्यपि च कष्टायां भीतो वा दुर्गतोऽपि वा।
पूजयेन्नैव वृत्त्यर्थं देवदेवं कदाचन॥ इति।

यदपि समस्तविशिष्टविगर्हितनिर्माल्यधारणनैवेद्यभक्षणाद्यनुष्ठानं तदपि तेषामब्राह्मण्यमेवाभिद्योतयति इति।

अपि च यदवलोकनादावपि विशिष्टाश्चान्द्रायणादिप्रायश्चित्तानि विदधति कथं तत्परिग्रहः श्रुतिमूलत्वमवगयतीति संभावयामः। स्मरन्ति हि देवलकावलोकने प्रायश्चित्तं देवलकाश्चामी देवकोशोपजीवित्वाद् वृत्त्यर्थं देवपूजनात्। तथा च देवलः।

देवकोशोपजीवी यस्स देवलक उच्यते। इति,
तथा, वृत्त्यर्थं पूजयेद्देवं त्रीणि वर्षाणि योद्विजः।
स वै देवलको नाम सर्वकर्मसु गर्हितः॥

इति।

अमी पुनर्वंशानुपरम्परया वृत्त्यर्थमेव देवमाराधयन्तो दृश्यन्ते, अतो देवलकत्वमकामेनाप्यभ्यनुज्ञातव्यं तथा च।

विड्वराहं च षण्डं च यूपं देवलकं शवम्।
भुञ्जानो नेक्षयेद्विप्रो दृष्ट्वा चान्द्रायणं चरेत्॥

इति प्रायश्चित्तं स्मरन्ति, तथा च विशदतरमेषामेवोपब्राह्मण्यं वर्णयत्यत्रिः। अवालुका देवलकाः कल्पदेवलका गणभोगदेवलका भागवतवृत्तिरिति चतुर्थः एते उपब्राह्मणा इति, तथा च भगवान् व्यासः।

आह्वायका देवलका नक्षत्रग्रामयाजकाः।
एते ब्राह्मणचण्डाला महापथिकपञ्चमाः॥

इति, एवं जात्या कर्मणा च त्रयीमार्गादपभ्रष्टभागवतजनपरिग्रह एव पञ्चरात्रशास्त्रप्रामाण्यप्रतिक्षेपाय पर्याप्तो हेतुः, तथा हि ।

विवादाध्यासितं तन्त्रं न मानं पुण्यपापयोः ।
त्रयीबाह्यैर्गृहीतत्वाच् चैत्यवन्दनवाक्यवत् ॥

अपि च तेषां त्रयीमार्गत्यागपुरस्सरः सर्वधर्मोपदेश इति स्ववाक्यान्येव उपख्यापयन्ति चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान् इत्यादीनि तदिह कथं चतुर्णामपि वेदानां निश्श्रेयससाधनावबोधकत्वव्युदासेन आरभमाणः तत्प्रसादावगतमर्थं पुमर्थतया कथयतीत्युत्प्रेक्ष्येत ।

मन्वादयो हि विवक्षितसकलसमीहितसाधनावबोधकमागमैकमूलमभिदधाना दृश्यन्ते ।

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।

श्रुतिस्मृतिविहितो धर्मः । स सर्वोऽभिहितोवेदे सर्वज्ञानमयो हि सः । इति च ।

यदपरम् उपनयनादिसंस्कृतानामधिकृतानां च अग्निहोत्रादिसमस्तवैदिककर्मसु पुनरपि भगवदाराधनाधिकारसिद्ध्ये दीक्षालक्षणसंस्कारवर्णनं तदवैदिकतामेवानुकारयति, वैदिकत्वे हि तैरेव संस्कारैर्भगवदाराधनादावप्यधिक्रियेरन् ।

यदपि धर्मप्रमाणतया समस्तास्तिकजनपरिगृहीतेषु चतुर्दशविद्यास्थानेष्वपरिगणनं तदप्यवैदिकत्वे लिङ्गम् अन्यथा हीदमपि तदन्यतमत्वेन स्मर्येत । न च स्मर्यते, तदवसीयते अवैदिकमेवेदं पञ्चरात्रस्मरणमिति । अत एव च भगवता बादरायणेन त्रयीमार्गप्रत्यनीकभूतकणभुगक्षचर-

यसुगतमतादिबाह्यसमयनिरासावसरे ऽस्य तत्रास्य निरासः । उत्पत्त्यसंभवात् इति ।

त्रयीविदामित्थमसङ्ग्रहेण तथा त्रयीबाह्यपरिग्रहेण ।
अनन्तरोक्तैरपि हेतुभिस्तन्न मानवादिस्मरणैस्समानम् ॥

एवं सति यान्यपि लोकं व्यामोहयितुं विद्वेषणोच्चाटनवशीकरणादिक्षुद्रविद्याप्रायमेव बहुळमुपदिशद्भिर्भगवदाराधनादिकतिपयवैदिककर्माणि पाञ्चरात्रिकैर्निर्दिश्यन्ते तान्यनुपयोग्यान्यविस्रम्भणीयानि च श्वदृतिनिक्षिप्तक्षीरवदिति मन्यामहे ।

अतो न वेदमूलत्वं पञ्चरात्रस्य युज्यते ।
प्रामाण्यं प्रतिपद्येत येन मन्वादिशास्त्रवत् ॥

अत्र कश्चिदाह कामं कक्ष्यान्तरितप्रामाण्येषु मन्वादिस्मरणेषु कारणतया वेदाः परिकल्प्यन्तां, पञ्चरात्रस्मरणस्य तु किं वेदेन तन्मूलतया ऽवलम्बितेन वेदानामपि यदनुभवनिबन्धनं प्रामाण्यं तदनुभव एव हि पञ्चरात्रस्मरणस्य निदानं, न खलु तुल्यमूलयोरष्टकाचमनस्मरणयोर्मिथोमूलमूलिभावः ।

परस्परमपेक्षेते तुल्यकक्ष्ये न हि स्मृती ।
पञ्चरात्रश्रुती तद्वन्नापेक्षेते परस्परम् ॥
वेदमूलत्वहानेन पञ्चरात्रेऽवसीदति ।
कुतस्तन्मूलताहानादागमो नावसीदति ॥

आह किमेवं वेदा अपि पुरुषानुभवाधीनप्रामाण्याः पौरुषेया एव कस्संशयः, वाक्यत्वं हि पराधीनरचनत्वस्वभावमुपलभ्यमानं कथमपरथाऽवतिष्ठेत वेदनाम्नो ग्रन्थस्यायं महिमा यत्केनचिद् असन्दृब्धोऽपि वाक्यत्वेनावतिष्ठत इति चेत्, हन्त तर्हि पर्वतवर्त्तिनो धूमस्यायं

महिमा यज्ज्वलनमन्तरेणानुच्छिन्नसन्तानो गगनतलमधिरोहतीति किमिति न स्यात् ।

ननु कथमतिक्रान्तमानान्तरावतारे धर्मे ग्रन्थः सन्दृभ्यते, मैवं यतस्सहजसंवेदनसाक्षात्कृतधर्माधर्म एव भगवान् जगदनुकम्पया वेदनामानं ग्रन्थमारचयतीति ।

किमस्ति धर्माधर्मगोचरमपि प्रत्यक्षं, बाढं कथमन्यथा तनुभुवनादिकार्यमुपजनयति, स हि तत्र कर्ता भवति यो-यस्योपादानमुपकरणञ्च साक्षात्कर्तुं प्रभवति धर्माधर्मौ च जगदुपकरणमिति मीमांसकानामपि सम्मतमेव। अतस्तत्साक्षात्कारी कोऽप्याश्रयणीयः स च वेदानादौ निरमिमीतेति । यस्तु ब्रूते गिरिभुवनादयो भावा न कार्या इति प्रतिब्रूयादेनम् ।

विवादगोचरा भावाः कार्या विश्वम्भरादयः ।
विचित्रसन्निवेशत्वान्नरेन्द्रभवनादिवत् ।
तथा सावयवत्वेन विनाशोऽप्यवसीयते ॥
विनश्यन्ति च ये भावास्ते तत्साधनवेदिना ।
विनाश्यन्ते यथा तज्ज्ञैरस्माभिः करकादयः ॥

ये पुनरपरिदृष्टबुद्धिमदधिष्ठानतरुपतनादिशकलिता भावाः तेऽपि विमत्याक्रान्ता इति नानैकान्तिकत्वमावहन्ति । किंच ।

महत्तया सनाथेन स्पन्दमानत्वहेतुना ।
उत्पत्तिभङ्गौ भावानामनुमातुमिहोचितौ ॥

तदेवमुदीरितन्यायप्रसिद्धे विश्वम्भरादिकार्यत्वे सिध्यत्येव भगवतस्तदुपकरणधर्माधर्मसाक्षात्कारित्वम् । तथा हि ।

विवादाध्यासिता भावा येऽमी भूभूधरादयः ।
ते यथोक्तावबोधेन कर्त्रा केनापि निर्मिताः ॥

उत्पत्तिनाशभागित्वाद्यदुत्पत्तिविनाशवद् ।
दृष्टन्तत्तादृशा कर्त्रा निर्म्मितन्तद्यथा गृहम् ॥

न च वाच्यं कर्मणामेव स्वानुष्ठातृ पुरुषसमीहितानि संपादयतामन्तरा नान्तरीयकं तनुभुवनादिकार्यनिर्माणमिति यतश्चेतनानधिष्ठितानि तानि न कार्याणि जनयितुमुत्सहन्ते अचेतनत्वाद् वासीवत्, न हि चेतनेन तक्ष्णाऽनधिष्ठिता वासी स्वयमेव यूपादीन्यापादयितुमलम् ।

न चापूर्वाण्यधिष्ठाय वयं निर्मातुमीश्वराः ।
न हि कर्मोदयात् पूर्वं साक्षात्कर्त्तुं क्षमावहे ॥

उक्तं हि उपादानोपकरणसाक्षात्कारिण एव तत्र तत्र कर्त्तृत्वमिति ।

न च कर्मजन्यापूर्वसाक्षात्कारक्षमः क्षेत्रज्ञः कश्चित् प्रज्ञायते प्रतिज्ञायते वा, अतः क्षेत्रज्ञतदुपभोगतत्साधनधर्माधर्मादिनिखिललोकावलोकनचतुरः कोऽपि निरतिशयशक्तिवैचित्र्यः पुरुषोऽभ्युपगन्तव्यः तस्य चाप्रतिघज्ञानत्वादयस्सहजाः ।

यथाऽऽहुः ।

ज्ञानमप्रतिघं तस्य वैराग्यञ्च जगत्पतेः ।
ऐश्वर्यञ्चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥

इति, इममेवार्थं मन्त्रार्थवादेतिहासपुराणवादा उपोद्बलयन्ति द्यावापृथिवी जनयन् देव एकः । प्रजापतिर्वेदानसृजत । इत्येवमादयः ।

स चाय*मादिकाले भगवान् प्रलीननिखिलकरणकलेवरादिभोगोपकरणचेतनेत†रायमाणजीवजालावलोकन-

* प्रलयकाले ।

† यथा हि जडास्तथैव चेतना अपि करणकलेवरविकला भोगभाजोनाभूवन्निति ते चेतनेतरायमाणा इत्युच्यन्ते ।

जनितमहानुग्रहः सकलमपि जगदुपजनय्य तदभिलषित-समस्तसांसारिकसम्पत्प्राप्त्युपायप्रकाशनबहुलां त्रयीमेकतो निर्माय पुनरपि विविधदुरितपरम्पराकीर्णभवार्णवनिमग्नानुद्विग्नानवलोकयन् परमकरुणतया तप्तमानसः परमनिःश्रेयससाधनस्वाराधानावबोधसाधनीभूताः पञ्चरात्रसंहिताः सनत्कुमार–नारदादिभ्योऽभ्यवोचदिति त्रयीसमानस्वतन्त्रानुभवमूलानि तन्त्राणि कथमिव यादृशतादृशमन्वादिस्मरणगोष्ठीमधितिष्ठन्ति ।

स्यादेवं यदि वेदानां निर्माताऽपि प्रमाणतः ।
कुतश्चिदुपलभ्येत न चासावुपलभ्यते ॥
न च वाक्यत्वलिङ्गेन वेदकारोऽनुमीयते ।
अभिप्रेतविशेषाणां विपर्यासप्रसङ्गतः ।
वाक्यं हि यत् पराधीनरचनं संप्रदृश्यते ॥
शरीरिणैव तत्सर्वमुच्यमानं विलोक्यते ।
पुण्यपापनिमित्तञ्च शरीरं सर्वदेहिनाम् ॥
एवं पुण्येतराधीनसुखदुःखस्य देहिनः ।
अनीश्वरस्य निर्माणं वाक्यत्वमनुमापयेत् ॥
अपि चैवं प्रमाणत्वं वेदानामपि दुर्लभम् ।
न हि मानान्तरापूर्वे धर्मे तस्यास्ति संभवः ॥

ननु कथं मानान्तरापूर्वौ धर्मः, उक्तं हि साक्षात्करोति धर्माधर्मौ कथमन्यथा तदुपकरणं जगज्जनयति इति,

सत्यमुक्तं दुरुक्तं तद् विश्वस्य जगतो न हि ।
विद्यते कोऽपि निर्माता येनैवमपि कल्प्यते ॥
विचित्रसन्निवेशत्वयुक्त्या यदपि साधितम् ।
तत्रोच्यते त्रिधा भावा लौकिकैः परिलोकिताः ॥

प्रत्यक्षदृष्टकर्तारः केचिदेते घटादयः ।
अविद्यमाननिर्माणास्तथाऽन्ये गगनादयः ॥
सन्दिह्यमाननिर्माणाः केचिद् विश्वम्भरादयः ।

तत्र प्रथमसन्दर्शितराशिद्वयेऽनवकाश एवेश्वरव्यापारः । आद्यवदेव विश्वम्भरादयः क्रमप्राप्तागन्तुकोपचयापचययोर्न युगपदुदयविलयभागिनः ईदृशोत्पत्तिभङ्गौ मीमांसकानामपि सम्मतावेवेति सिद्धसाधनत्वम् ।

बुद्धिमत्कर्तृता याऽपि प्रयासेन समर्थिता ।
साध्यते साऽपि सिद्धैव बुद्धिमन्तो हि चेतनाः ॥
यागादिभिः स्वभोगाय तत्तदुत्पादयन्ति नः ॥
युक्तश्चोभयसिद्धानां तत्राधिष्ठानकल्पनम् ।
वयञ्च यागदानादि साक्षात्कर्त्तुं क्षमा यतः ॥
कर्मणः शक्तिरूपं यदपूर्वादिपदास्पदम् ।
माभूत् प्रत्यक्षता तस्य किन्तेनाध्यक्षितेन नः ॥

न खलु कुलालादयः कुम्भादिकार्यमारिप्समानाः तदुपादानोपकरणभूतमृद्दण्डचक्रादिकार्योत्पादनशक्तिं साक्षात्कृत्य तत्तदारभन्ते ।

यदि परं शक्तिमविदुषामभिलषितसाधनाय तदुपादानादिव्यवहारोऽनुपपन्नः इह तु नित्यागमजन्मना प्रत्ययेन संप्रत्याकलितयागादितत्तदुत्पादनपाटवाः पुरुषास्तैरेव विश्वम्भरादिभावानाविर्भावयन्ति,

तथा च ।

प्रत्यक्षप्रकृतिकरणः कर्मकरणप्रवीणो ।
नैवान्यः क्षम इति च नास्त्यत्र नियमः ॥
अपश्यन्नेवायं प्रकृतिकरणे स्वात्ममनसि ।
ननु ज्ञाने कर्त्ता भवति पुरुषस्तत्कथमिव ॥

विनाशीदं विश्वं जगदवयवित्वादिति च यत् ।
बलीयः प्रत्यक्षप्रतिहतमुखत्वेन तदसत् ॥
स एवायम्मेरुर्दिवसकरबिम्बञ्च तदिदम् ।
धरित्री सैवेति स्फुटमिह यतोधीरुदयते ॥

शक्नोति हि प्रत्यभिज्ञैव समस्तकालसम्बन्धमेषामवगमयितुं,सन्ति हि पूर्वापरकालयोरपि तादृशाः पुरुषाः प्रादुःषन्ति येषामीदृशप्रत्ययाः, प्रयोगश्च भवति ।

महीशैलपतङ्गादिप्रत्यभिज्ञानवन्नरः ।
अतीतकालः कालत्वादिदानीन्तनकालवत् ॥

एवमनागतेऽपि प्रयोगोदर्शयितव्यः ।

न चेदृशप्रयोगेण घटादेरपि नित्यता ।
प्रसज्यते यतस्तत्र प्रत्यक्षौ भङ्गसम्भवौ ॥
विरोधे सति येनात्मा हेतुना नैव लभ्यते ।
न लभ्यते विरोधेऽपि तेनात्मेत्त्यसत्यसम्भवः ॥

महत्त्वे सति स्पन्दमानत्वयुक्त्या
जगज्जन्मभङ्गश्च यः प्रत्यपादि ।
स च प्रत्यभिज्ञाबलध्वस्तहेतुर्न
हृद्यत्वमद्य प्रपद्येत युक्त्या ॥

अपि च धर्मिविशेषविरुद्धश्चायं हेतुः कार्यत्वादिति कार्यत्वं हि स्वभावदृष्टविग्रहवत्त्वानाप्तकामत्वानीश्वरत्वासार्वज्ञ्यादिव्याप्तिवित्त्युपयुक्ततरानेकविशेषानुषक्तं कथमिव तत्प्रत्यनीकभूताशरीरनित्त्यतृप्तसर्वज्ञत्वाद्यभिमतविशेषान् साध्यधर्मिण्यवगमयति, स्वशरीरप्रेरणमपि शरीरसम्बन्धासमवायिकारणकप्रयत्नवतो नान्यस्येति न कथंचिदशरीरिणः कर्त्तृत्त्वसम्भवः ॥

अथैतद्दोषहानाय देहवानित्त्युपेयते ।
स देहो जन्मवान् मा वा जन्मवत्त्वेऽनवस्थितिः ॥
नित्यत्वेऽवयवित्वञ्च स्यादनैकान्तिकन्तव ।

यदप्येतेऽवोचन्नधिकरणसिद्धान्तबलतो-
विशेषास्सिध्यन्तीत्ययमपि च पन्था न घटते ।
स हि न्यायो जीवेदपि यदि च मानान्तरकृतो
विरोधोऽस्यादृष्टः पुनरपि विरोधः स्फुटतरः ॥

ननु च अवधृताविनाभावनियममपि यदि न विश्वम्भरादिबुद्धिमन्निमित्ततामवगमयति प्रत्यस्तमितस्तर्ह्यनुमेयव्यवहारः, अथावगमयति, अवगमयत्येवासावखिलत्रैलोक्यनिर्माणप्रवीणन्तमपि कर्त्तारं, न ब्रूमो नावगमयतीति किन्तु यावन्तो विशेषाः व्याप्तिग्रहणसमयसंविदिताः तानप्यविशेषेणोपस्थापयतीति ।

न च तावताऽतिप्रसङ्गः प्रमाणान्तरगोचरे हि लिङ्गिनि लिङ्गबलादापततोविपरीतविशेषाँस्तत्प्रमाणमेव प्रतिरुणद्धि अत्र पुनरतिपतितमानान्तरकर्मभावे भगवति सिषाधयिषिते यावन्तोऽन्वयव्यतिरेकावधारिताविनाभावभाजो धर्मास्तानप्यविशेषेणोपस्थापयतीति, तथा च प्राङ्गणनिकटवर्तिदूर्वाङ्कुरादिष्वनवसितपुरुषव्यापारजन्मस्वनैकान्तः, तत्राप्यतीन्द्रियपुरुषाधिष्ठानकल्पना कल्पनामात्रमेव ।

क्व वा देशे तिष्ठन्ननवरं*ततृप्तिः किमिति वा ।
कदा वा निश्शेषञ्जनयति तदेतद्विमृशतु ॥
क्वचित्तिष्ठन्निष्टं किमपि फलमुद्दिश्य करणैः ।
कदाचिद्यत्किञ्चिज्जनयति कुलालादिरखिलः ॥
कृतार्थत्वात्क्रीडा न च भवति हेतुर्यदि खलु ।
स्वभावस्वातन्त्र्यं प्रकटितमहो सम्प्रति विभोः ॥
अभिप्रेतं किञ्चिद्यदयमसमीक्ष्यैव कुरुते ।
जगज्जन्मस्थेमप्रविलयमहायासमवशः ॥

* तिष्ठन्ननवरततृप्त इति ।

अनुकम्पाप्रयुक्तेन सृज्यमानाश्च जन्तवः ।
सुखिनः किन्न सृज्यन्ते तत्कर्मापेक्षया यदि ॥
ततः स्वतन्त्रताहानिः किञ्च तैरेव हेतुभिः ।
उपपन्नेऽपि वैचित्र्ये किन्तत्कल्पनयाऽनया ॥

अतो नास्ति तादृशः पुरुषः यस्समस्तजगन्निर्माणक्षमः साक्षात्कृतधर्माधर्मो वेदानारचयति ।

अपि च यदि वेदाः केनचिदसृज्यन्त ततस्तेनामी विरचिता इति तत्कर्ता स्मर्येत ।

न च जीर्णकूपादाविवास्मरणं युक्तं, युज्यते हि तत्र प्रयोजनाभावात् कर्त्तुरस्मरणं, वेदे त्वनेकद्रव्यत्यागात्मकबहुतरायाससाध्यानि कर्माणि प्रत्ययिततरनिर्मातृस्मरणमन्तरेण के वा श्रद्दधीरन्, तथा हि नित्या वेदाः अस्मर्यमाणस्मरणार्हकर्त्तृकत्वाद् ये यथोक्तसाध्या न भवन्ति ते यथोक्तसाधना अपि न भवन्ति यथा भारतादयः, अमी तु यथोक्तसाधना इति यथोक्तसाध्या एव, तस्मादपौरुषेया वेदा इति ।

स्वसिद्धान्ताभिनिवेशव्यामुग्धबुद्धिभिरभिहितमिदम् । यदनुभवनिबन्धनं वेदप्रामाण्यं तदनुभवनिबन्धनं पञ्चरात्रप्रामाण्यमिति ।

ननु च किमिदमपौरुषेयत्वं वेदानां, यदि नित्यवर्णारब्धत्वं समानमिदं पञ्चरात्रतन्त्राणाम् ।

अथ पदानां नित्यता, सापि समानैव, न चानुपूर्वी नित्यता, न हि नित्यानामानुपूर्वी स्वभाव उपपद्यते, उच्चारणानुपूर्व्यादानुपूर्वी वर्णानामिति चेत् सा तर्हि तदनित्यत्वादेव अनित्येति कः खलु विशेषः पञ्चरात्रश्रुत्योः ।

अयमेव विशेषो यदेकत्र स्वतन्त्र एव पुरुषस्तां तामानुपूर्वीं रचयति इतरत्र परतन्त्रो नियमेन पूर्वाध्येतृ-

सिद्धामेव विवक्षति, क्रमावान्तरजातिश्च प्रत्यभिज्ञाबलप्रतिष्ठिता नापलापमर्हतीत्यलं प्रविस्तरेण ।

सिद्धमिदं न विलक्षणपुरुषानुभवनिबन्धनप्रामाण्यवर्णनं साधीय इति ।

यतो न साक्षात्कृतपुण्यपापः पुमान् प्रमाणप्रतिपन्नसत्त्वः ।
अतो जगन्मोहयितुं प्रणीतं नरेण केनापि हि तन्त्रमेतत् ॥
ननु च केवलतर्कबलादयं यदि सिषाधयिषापदमीश्वरः ।
भवतु नाम तथा सति दूषणं श्रुतिशिरःप्रमितो हि महेश्वरः॥

यदा तु सकलभुवननिर्माणक्षमसर्वज्ञसर्वैश्वरपरमपुरुषप्रतिपादकानि नित्यागमवचनान्येव बहुलमुपलभ्यन्ते कथं तदा तदनुभवमूलस्मरणप्रामाण्यानङ्गीकरणम् ।

न च परिनिष्ठितवस्तुगोचरतया तानि प्रमाणमर्यादामतिपतन्ति तादृशामपि प्रमाणान्तरसम्भेदातिदूरगोचराणां पौरुषेयवचसां स्वरससमासादितप्रामाण्यवारणायोगात् ।

न च सिद्धे वस्तुनि साधकबाधकयोरन्यतरोपनिपातसम्भवप्रसक्तेर्भावितानुवादविपर्ययपर्यालोचनया तद्गोचरवचसः प्रामाण्यप्रच्युतिः कार्यनिष्ठस्यापि तत्प्रसङ्गात्, कार्यमपि हि मानान्तरवेद्यमेव लौकिकं समिदाहरणादि, तच्च मानान्तरेणापि वेद्यमोदनपाकवदित्यभ्युपगमात् ।

अथ विलक्षणाग्निहोत्रादिविषयकार्यस्यासम्भावितमानान्तरतया तत्प्रतिपादयद्वचः प्रमाणं, हन्त तर्हि निरतिशयावबोधैश्वर्यमहानन्दसन्दोहवपुषि भगवति न मानान्तरगन्धसम्बन्ध इति सर्वं समानमन्यत्राभिनिवेशात् ।

अपि च प्रवृत्तप्रमाणान्तरमपि स्वगोचरं तद्गोचरतया नावभासयतीति परमपि प्रमाणमेव कुतस्तदुपनिपातसम्भावनयाऽनुवादत्वं, कथं वा प्रत्यस्तमितसमस्तपुरुषाशयदोषसंस्पर्शनित्यागमभुवः प्रत्ययस्य पूर्वोपमर्दकतयोन्नीयमानस्य सम्भाव्यमानविविधविप्लवैः प्रमाणान्तरैरपवादापादनमिति यत्किञ्चिदेतत् ।

इत्थञ्च श्रुतिशतसमधिगतविविधबोधैश्वर्यादिवैभवे भगवति सामान्यदर्शनावसितासार्वज्ञ्यविग्रहवत्तादयो दोषा नावकाशमश्नुवते हुतभुजीव शैत्यादयः ।

ततश्च ।

श्रुतिमूर्ध्नि प्रसिद्धेन सर्वज्ञेनैव निर्मितम् ।
तन्त्रं मिथ्येति वक्तुं नः कथं जिह्वा प्रवर्त्तते ॥
अहो मन्दस्य मीमांसाश्रमहानिर्विजृम्भते ।
मीमांसामांसलच्छद्मेनः कथमित्थं प्रमाद्यति ॥
कार्ये मानान्तरापूर्वे समस्तं वैदिकं वचः ।
प्रमाणमिति हि प्राज्ञाः मन्यन्ते मान्यबुद्धयः ॥
पदानां तत्परत्वेन व्युत्पत्तेरवधारणात् ।
न खल्वन्यपरे शब्दे व्युत्पत्तेरस्ति सम्भवः ॥

तथा हि वृद्धयोर्व्यवहरतोरेकतरवृद्धप्रयुक्तशब्दश्रवणसमनन्तरजनितान्यतरवृद्धसमवेतचेष्टां दृष्ट्वा अन्यथाऽनुपपत्त्युन्नीयमाना शब्दशक्तिस्तदुपपादककार्यपर्यवसायिन्येवावसीयते, प्रतीता हि स्वकार्यसन्ताने कार्यसंविदेव तत्तद्विशिष्टचेष्टाहेतुतया तदयमिहापि तादृशीं प्रवृत्तिं पश्यन्नेवमाकलयति । नूनमितस्सकाशादस्य कार्यसंविदाविरासीत् यदयमेतदनन्तरं प्रवर्तत इति, एवं च समस्तव्यवहारानुगतप्रवृत्तिनिमित्तकार्यप्रतिपादनपरतया व्युत्पन्ने शब्दे यत्पदावापोद्धारानुयायिनोयेऽर्थभागास्ते प्रथ-

मावगतप्रधानभूतकार्यानुगुणतया तैस्तैरभिधीयन्ते इत्यध्यवस्यति, तत्र च लिङादयोऽव्यभिचरितकार्यसंविदः कार्यशरीरमेव साक्षात्समर्पयन्ति तिङादयस्तु तदपेक्षिताधिकाराद्यनुबन्धप्रतिपादनमुखेन तत्समन्वयमनुभवन्तीति ।

न च पुत्रजननादिस्वरूपावेदनपर्यवसायिनः पदनिचयस्याविरळपुळकोदयवदनविकासादिभिरभिमतसुतजन्मादिप्रतिपादनशक्तिनिश्चयः अजातातिवृत्तप्रत्युत्पन्नविविधहर्षहेतूपनिपातेयमनुयेति निर्धृत्य प्रतिपत्तुमशक्यत्वात् ।

एतेन व्युत्पन्नेतरपदसमभिव्याहृतवर्तमाननिर्देशेऽपि कार्यैदम्पर्यविरहितपदशक्तिनिश्चयप्रतिविधिरनुसंधातव्य ।

पदान्तराणि यादृङ्क्षि व्युत्पद्यन्ते च तादृशम् ।
इदञ्च पदमित्येव तत्र व्युत्पद्यते नरः ॥
तानि कार्यान्वितस्वार्थबोधकानीति साधितम् ।
अथ तद्बुद्धिहेतुत्वात् प्रामाण्यं भूतगोचरम् ॥
इष्यते तदनेकान्तं पदेष्विति न शोभते ।
अथ तत्परता हेतुस्ततश्च स्यादसिद्धता ॥

न ह्यकार्यरूपे वस्तुनि क्वचिदपि शाब्दी बुद्धिः पर्यवस्यति ।

याः पुनर्लौकिकशब्दश्रवणसमनन्तरभाविन्योऽन्वयावगतयस्ता आनुमानिक्योऽभिहिताः न शाब्द्य इत्युपपद्यत एव तासामतत्पर्यवसानम् ।

यदि तत्परताग्राहः शब्दानां नैव विद्यते ।
अग्निहोत्रञ्जुहोतीति विधिः कस्मादुपेयते ॥

अथ तत्र प्रमाणत्वे संवृत्तेऽपि च तावता ।
पुरुषार्थत्वलाभाय विधिरभ्युपगम्यते ॥
तदसन्न प्रमाणानां प्रयोजनवशानुगा ।
प्रवृत्तिः किन्तु तन्मूलः प्रयोजनपरिग्रहः ॥

न खलु कनकमभिलषतः शिलावलोकनमनभिमतमिति कनकावलोकनताऽऽश्रयितुमुचिता ।

तात्पर्यमेव शब्दानां यावत्कार्ये न कल्पितम् ।
न तावद्वर्तमानादि निर्देशे विधिकल्पनम् ॥

एवञ्चोपनिषदामपि तत्रतत्राम्नायमानज्ञानोपासनादिविधिशेषतयाऽर्थो व्याकरणीयः, तदयमर्थः सर्वज्ञमानन्दमात्मानं जानीयात् इति ।

न च तावता स्वरूपमपि सिध्यतीत्यध्यवसेयम् असत्येव रूपे तादृशि तथा विधानोपपत्तेः । यथैतदपितर्यैव पितरञ्जानीयादिति तथा चानुद्गीथ ओङ्कार उद्गीथविधानमिति ।

यानि पुनरात्मसत्यत्वनित्यत्ववादीनि वाक्यानि तान्यविशेषितकालकर्मविधानाक्षिप्यमाणामुष्मिकफलभोगोचितचेतनकर्तृप्रतिपादनपराणि अतो न किञ्चिदपि वचो भूतेऽर्थे प्रमाणम् ।

अतः*सर्वार्थवादानामपि परिनिष्ठितरुद्ररोदनादिप्रतिपादनपरतावारणोपपादनेन विदूरतरवर्त्तिविधिपदान्वयस्तावकतयाऽपि प्रदर्शितः, तस्मादपर्यालोचितपूर्वापरपदतात्पर्याणामापातायातश्रद्धाविरचितविग्रहोऽयमुद्ग्राहितः पुरुष इत्यलमतिविस्तरेण ।

* अत सर्वार्थवादानाममीति पा· ।

सिद्धमिदं न श्रुतितोऽप्यभिमतपुरुषातिशयः सिध्यतीति ।

अपि च भवतु भूतमपि वस्तु शास्त्रस्य विषयः, अथ च कथमिव चोदनाजनितधियमवधीर्य धर्माधर्मौ विजानाति कश्चिदित्यभ्युपेयते सर्वज्ञता हि प्रसिद्धैरेव प्रमाणैः यथायथमर्थानवगच्छतोऽपि संगच्छते, न हि तदस्ति वचनं यदस्य प्रसिद्धबुद्ध्युत्पादनहेतुहानमुखेन सार्वज्ञ्यं ज्ञापयति ।

यद्यपि किञ्चिदभविष्यत् तथाऽपि परस्परान्वयाऽनुचितपदार्थतयाऽर्थवादतयैव समर्थनीयं प्रमाणान्तरावगतयोग्यतादिपुरस्सरी पदेभ्यो वाक्यार्थबुद्धिरुपजायमाना प्रथमतरनिपतितापेक्षितप्रमाणान्तरविरोधे कथमिव जनिमनुभवतीति सम्भावयामः ।

प्रत्यक्षादिप्रतिक्षिप्तगोचरं वचनं यदि ।
प्रमाणं को नु तादात्म्यं विहन्यादित्ययूपयोः ॥
अपि चास्ति नरः कश्चित् तादृशातिशयाश्रयः ।
सिषाधयिषितग्रन्थप्रामाण्यस्य किमागतम् ॥

ननु च तादृशपुरुषेण विरचितमिदमिति पञ्चरात्रगोत्रानुसारिणः स्मरन्ति । पाशुपता वा किन्न स्मरन्ति, तेऽपि स्वदर्शनादर्शकमखिलजगदध्यक्षमाचक्षते तथाऽन्येऽपि ।

न च सर्वेऽमी सर्वज्ञा विरुद्धार्थोपदेशानुपपत्तेः ।

य एव च वादिनामेकस्य वादिनः सर्वज्ञसिद्धौ हेतुर्भवति स सर्वेषां साधारणः तदिह बहुषु परस्परविरुद्धमर्थमहमहमिकयोपदिशत्सु कतमं सर्वज्ञमध्यवसामः ।

यथाऽऽह ।

सर्वज्ञेषु च भूयस्सु विरुद्धार्थोपदेशिषु ।
तुल्यहेतुषु सर्वेषु को नामैकोनिरूप्यताम् ॥
इति, ।

स्वतन्त्राधिगमाधीनं सर्वज्ञपरिकल्पनम् ।
परस्परप्रतीघातात्सर्वाप्रामाण्यमावहेत् ॥
ननु, श्रुतिस्मृतिप्रसिद्धेन वासुदेवेन भाषितम् ।
कथं तन्त्रान्तरैरेतत् तुल्यकक्ष्यां निवेद्यते ॥
तथा हि पौरुषे सूक्ते श्रूयते तस्य वैभवम् ।
पद्भ्यां भूमिर्दिशश्श्रोत्रादित्यादीदन्तथा परम् ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् इति, ।
तथा स ब्रह्मा स शिव इति, तद्विष्णोः परमम्पदम् ।

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता तस्य च नैव लिङ्गम् ।
इतीरयन्ति श्रुतयोऽस्य भूतिं
जगज्जनिस्थेमपिधाचिन्हाम् ॥

विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्ताऽसावित्याह स्म पराशरः ॥
इत्थं तमेव सर्वेशं मनुरप्याह तद्यथा ।
नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् । इति,

इत्थं नानाश्रुतिमुनिवचस्सन्ततस्तूयमान-
ज्ञानैश्वर्यः परमपुरुषः पञ्चरात्रं व्यधत्त ।
तच्चेदेतच्छ्रुतिपथपरिभ्रष्टतन्त्रैः समानं
पातृत्वेन प्रसजति तदा सोमपस्ते सुरापैः ॥

नैतज्ज्यायः किमङ्ग श्रुतिषु भगवतो न प्रसिद्धा विशुद्ध-
ज्ञानैश्वर्यादिधर्मास्त्रिपुरविजयिनस्तेन यत्किञ्चिदेतत् ।
यद्वा देवस्स एव त्रिभुवनभवनत्राणविध्वंसहेतुः ।
वेदान्तैकप्रमाणः कथयति स कथं वेदगोष्ठीबहिःष्ठम् ॥

तथा हि भगवतः पशुपतेरपि सार्वज्ञ्यसर्वैश्वर्यावेदिकाः श्रुतयो बहुळमुपलभ्यन्ते यस्सर्वज्ञस्स सर्ववित् । तमीश्वराणां परमं महेश्वरम् इत्याद्याः ।

सर्वज्ञेश्वरशब्दौ च नर्ते देवात्पिनाकिनः ।
उत्पत्तिशक्त्या वर्तेते सत्यप्यन्यत्र तद्धति ॥
किञ्च सर्वज्ञशब्देन सर्वज्ञे प्रतिपादिते ।
पौनरुक्त्यं प्रसज्येत सर्वविद्ग्रहणस्य वः ॥
अतः सर्वज्ञशब्दोऽयं महादेवैकगोचरः ।
तथा च स्कन्दलिङ्गादिपुराणानि पिनाकिनः ॥
उपक्षीणानि सार्वज्ञ्यसर्वैश्वर्योपपादने ।
ततश्च तत्प्रणीतत्वात् प्रामाण्यमनया दिशा ॥
प्राप्तं पाशुपतं तन्त्रं तन्त्रान्योन्यविरोधतः ।
सर्वतन्त्रप्रमाणत्वविपर्यासः प्रसज्यते ॥

अपि च भवतु भगवान् वासुदेव एवौपनिषदः पुरुषः, अथ च स कथमिव श्रुतिपरिपन्थितन्त्रमेतत्प्रणयेते-त्युत्प्रेक्षेत य एवमाह श्रुतिस्मृती ममैवाज्ञे इति ततश्च

वासुदेवाभिधानेन केनचिद् विप्रलिप्सुना ।
प्रणीतं प्रस्तुतं तन्त्रमिति निश्चिनुमो वयम् ॥

अस्तु वा समस्तजगदध्यक्षो वासुदेव एवास्य तन्त्रस्य प्रणेता तथाऽपि ।

मायामोहनविग्रहेण हरिणा देवद्रुहां संहतिम् ।
हन्तुं मोहयता ऽहितान्यभिहितान्याहुर्हि तच्छद्मना ॥
एवं किन्नु नयन्नयन्निजमहामायागुहागह्वरम् ।
व्याजह्रे किमिदं न वेति विशये जाते कथं निर्णयः ॥
प्रत्युत भ्रमयन्नेव व्याजहारेति गम्यते ।
वैदिकैरगृहीतत्वात् तथाऽर्हतमतं यथा ॥

वैदिकापरिग्रहश्च प्रागेव प्रपञ्चित इति, तस्मान्न स्वतन्त्रानुभवमूलतया प्रमाणम् ।

नापि मन्वादिस्मरणवदित्यनुपपन्नं पञ्चरात्रस्मरणम् ।

यदि मन्वादिवद्देवः शुश्रूषापरितोषितात् ।
आचार्याल्लब्धवेदार्थस्तन्त्रमेतदचीक्लृपत् ॥
स्वातन्त्र्यकल्पनाऽमुष्य व्यर्था मिथ्या तथा सति ।
अनधीतोऽपि वेदोऽस्य प्रतिभातीत्यलौकिकम् ॥
अत्र वार्त्तिककारेण ये दोषास्समुदीरिताः ।
ते च सर्वेऽनुसंधेयाः पुरुषातिशयादयः ॥

किञ्च ।

शैवं पाशुपतञ्चैव बौद्धमप्यार्हतं तथा ।
कापालं पञ्चरात्रञ्चेत्येवं पाषण्डता स्मृतेः ॥
वैदिकं तान्त्रिकं चेति विभागकरणादपि ।
गम्यते पञ्चरात्रस्य वेदबाह्यत्वनिश्चयः ॥
शैवं पाशुपतं सौम्यं लागुडञ्च चतुर्विधम् ।
तन्त्रभेदः समुदिष्टः सङ्करं न समाचरेत् ॥ इति, ।

तथा ।

भाक्तं भागवतञ्चैव सात्वतं च त्रिधा मतम् ।
इत्येवं तन्त्रभेदोक्तिः पञ्चरात्रेऽपि दृश्यते ॥

किञ्च ।

श्रुतिस्मृतिप्रतिक्षिप्तजीवजन्मादिगोचरम् ।
न्यायहीनं वचस्तथ्यमिति हास्यमिदम्महत् ॥

तथा च श्रुतिः अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्तस्य भवति इति तथा जीवापेतं वाव किलेदम्म्रियते न जीवो म्रियते इति ।

स्यादेतत् उच्छेदाभावमात्रप्रतिपादकमेतद्वचनं न जन्माभावमवगमयतीति ।

न, अनुच्छेदाभिधानेन जन्माभावोऽवसीयते ।
न ह्यस्ति संभवो भावो जातो नैव त्वरेदिति ॥

ननु च, सदेव सौम्येदमिति सदेकत्वावधारणात् ।
प्राक्सृष्टिकालाज्जीवानामभावोऽध्यवसीयते ॥
यदि जीवाः पृथग्भूताः प्राक् सृष्टेः स्युः परात्मवत् ।
कथमेतत्सदेवेति तदेकत्वावधारणम् ॥
अत्रोच्यते सदेवेति यदेकत्वावधारणम् ।
तत्सिसृक्षितवाय्वम्बुवियत्प्रभृतिगोचरम् ॥
पर्युदासिष्यताऽनेन वचसा चेतनो यदि ।
गगनादेरिवास्यापि जननं निरदेक्ष्यत ॥
न च निर्दिश्यते तेन न जीवो जनिमृच्छति ।
तत्तेजोऽसृजतेत्यादौ जीवसर्गो हि नः श्रुतः ॥

ननु च यतो वा इमानि भूतानि इत्यत्र जीवानामेव जननजीवनप्रायणाभिसंवेशनानि प्रतीयन्ते ।

तथा हि भूतशब्दोऽयं जीवानामभिधायकः ।
भ्रामयन् सर्वभूतानीत्येवमादिषु दर्शनात् ॥
जीवन्तीति हि शब्दोऽयं जीवेष्वेवावकल्पते ।
तेन जायन्त इत्येतज् ज्ञायते जीवगोचरम् ॥
तदिदमनुपपन्नं भूतशब्दो विहायः-
पवनहुतभुगम्भोमेदिनीषु प्रसिद्धः ।
पदमिदमितरस्मिँल्लक्षणावृत्ति तेषां
बहुविधपरिणामो गीयते जीवनञ्च ॥
प्रथममधिगता ये खादयो भूतशब्दा-
स्तदनुगुणतयाऽर्थं वक्ति जीवन्ति शब्दः ।
यदि च भवति जीवे भूतशब्दस्तदानी-
मपि वदति तदीयज्जन्म देहानुबन्धि ॥
अतो जीवपरत्वेऽपि भूतशब्दस्य युज्यते ।
जायन्त इति शब्दोऽयं गौर्ज्जातो गच्छतीति वत् ॥

तथा, अजोह्येक इत्याद्याः श्रुतयोऽन्याश्च सन्ति नः।
जीवानुत्पत्तिवादिन्यस्तथा भगवतोवचः॥

प्रकृतिं पुरुषञ्चैव विध्यनादी उभावपि। अजो नित्यश्शाश्वतोऽयं पुराणः। न जायते म्रियते वा कदाचित्। इत्यादि।

न्यायश्च।

विवादाध्यासितो जीवो न जातु जनिमृच्छति।
द्रव्यत्वे सत्यमूर्त्तत्वाच्चिद्रूपत्वात्परात्मवत्॥
पश्यन्तः पौरुषेयत्वे दूषणान्युक्तया दिशा।
अनन्यगतयः केचित् तन्त्रं नित्यमतिष्ठिपन्॥

तदेतत् स्वहृदयनिहितविशदतरकर्त्रस्मरणप्रतिहतमभिधीयत इत्युपेक्षणीयम्।

किञ्च।

इत्थं पाशुपतादीनां न्यायः किं दण्डवारितः।
तथाऽस्त्विति यदि ब्रूयाद् व्याघातस्स्यात् परस्परम्॥
सर्वलोकप्रसिद्धा च वासुदेवप्रणीतता।
न हातुं शक्यते यद्वद्वेदस्यापौरुषेयता॥

अथो कश्चिद् ब्रूयादनुदयविपर्यासविशयैस्त्रिरूपे प्रामाण्ये कतरदिह जोघुष्यत इति। स वक्तव्यः किन्नु त्वदभिलषितं लागुडमते तदेवेति ज्ञात्वा नियमितमदृशाम्यतु भवान्।

तदेवमुदीरितन्यायश्रुतिस्मृतीतिहासपुराणन्यायविरुद्धाभिधानेन, समस्तशिष्टजनपरिग्रहविरहेण च, स्वर्गापवर्गावसानोपदेशव्याजेन केनापि जगद्वञ्चयितुं विरचितानि पञ्चरात्रतन्त्राणीति मन्यामहे।

ईदृशापस्मृतिविषयमेव तद्वचः।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥

इति ।

ईदृशकुमार्गानुगामिन एव तेऽपि एषां वाङ्मात्रेणापि अर्चनं निषिध्यते, उक्तञ्च ।

एत एव च ते येषां वाङ्मात्रेणापि नार्चनम् ।
पाषण्डिनो विकर्मस्थान् वैडालव्रतिकाञ्छठान् ॥
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।

इति ।

इत्युपन्यस्तया नीत्या पञ्चरात्रमशेषतः ।
अप्रमाणमिति प्राप्तमेवं प्राप्तेऽभिधीयते ॥
विवादाध्यासितं तन्त्रं प्रमाणमिति गृह्यताम् ।
निर्दोषज्ञानजन्यत्वाज् ज्योतिष्टोमादिवाक्यवत् ॥
न तावदनुमानेऽस्मिन् न्यायशास्त्रपरीक्षिताः ।
दोषा मृगयितुं शक्यास्तत्र पक्षः परीक्ष्यताम् ॥
पक्षो नाम प्रतिज्ञार्थः स च सिद्धेन केनचित् ।
स्वयं सिद्धो विशिष्टस्सन् यः साधयितुमीप्सितः ॥

तत्र न तावदप्रसिद्धविशेषणः पक्षः, प्रामाण्यनाम्नः पदार्थस्य उभयवादिसिद्धत्वात् प्रत्यक्षादौ, नाप्यप्रसिद्धविशेष्यः पञ्चरात्रशास्त्रस्य सर्वलोकप्रसिद्धत्वात्, नापि सिद्धसाधनः, प्रस्तुतशास्त्रप्रामाण्यस्य प्रतिवादिनोऽसिद्धत्वात्, न च प्रत्यक्षविरुद्धः अप्रामाण्यस्यातीन्द्रियत्वात्, नाप्यनुमानविरुद्धः, अनुपलम्भनात् ।

ननूपलभ्यत एवानुमानम्-पञ्चरात्रशास्त्रमप्रमाणम् वेदबाह्यत्वाद् बौद्धागमवत् ।

अत्र ब्रूमः कतरदिहाप्रामाण्यं सिषाधयिषितं यदि ज्ञानानुत्पत्तिलक्षणं ततः प्रत्यक्षविरोधः, प्रत्यक्षं हि विदितपदतदर्थसङ्गतेः श्रोतुः पञ्चरात्रशास्त्रवाक्यश्रवणसमनन्तरमुपजायमानं तदर्थविषयं ज्ञानम् ।

नापि संशयलक्षणं तत एव विरोधात् न खलु "पद्ममध्ये चतुर्बाहुं पूजयेत्पुरुषोत्तमम्" इतीदं वचनं पूजयेन्न वेति संशयितं प्रत्ययमुत्पादयति, नापि विपर्ययलक्षणं योग्यानुपलम्भाभावात्, अनागतविपर्ययोत्प्रेक्षायाः प्रत्यक्षविरोधात् अशेषव्यवहारोच्छेदहेतुत्वाच्च, प्रपञ्चयिष्यते चैतदुपरिष्टात् ।

आगमविरुद्धञ्च ।

पञ्चरात्रागमे स्वार्थस्तथैवेत्यवबोधनात् ।
अथ तस्याप्रमाणत्वे तद्विरोधो न दूषणम् ॥

हन्त एवं सति तदप्रामाण्येऽनुमानप्रामाण्यम् अनुमानप्रामाण्ये तदप्रामाण्यमित्यन्योन्याश्रयणम् ।

अपि च किमिदं वेदबाह्यत्वं यदि वेदान्यत्वं ततः प्रत्यक्षादिभिरनैकान्तः । अथ शब्दत्वे सतीति हेतुर्विशेष्यते ततो निग्रहस्थानं, यथाऽऽहुः निर्विशेषहेतुप्रयोगे पुनर्विशेषणोपादानं निग्रहः, इति, अनैकान्तिकश्च मन्वादिवाक्यैः ।

अथैतद्दोषहानाय वेदबाह्यत्वशब्दतः ।
अवेदमूलतां मन्द मन्यसे किन्नु तार्किक ? ॥

तेनायमर्थः शब्दत्वे सत्यवेदमूलत्वादिति, ततो वेदैरनैकान्त्यम्, अथवा अवेदत्वे सति शब्दत्वे सति अवेदमूलत्वादिति हेतुः, तथापि ।

सन्ति नद्यास्तटे वृक्षा इत्याद्याप्तोपदेशनैः ।
अवेदमूलैर्दुर्वारमनैकान्त्यं प्रसज्यते ॥

अथ अवेदत्वे सति शब्दत्वे सति कार्यविषयत्वे सति अवेदमूलत्वं हेतुः, अत्रापि अजीर्णे मन्दमश्नीयादित्यादौ व्यभिचारिता ।

अथोक्तविशेषणविशिष्टत्वे धर्माधर्मविषयत्वेऽपि सत्यवेदमूलत्वादिति हेतुः, ततो भागासिद्धो हेतुः, न हि पञ्चरात्रशास्त्रं कृत्स्नं धर्माधर्मविषयम् । ब्रह्मविषयाणामेव वचसां बाहुल्यात् ।

अथ प्रमाणान्तरायोग्यार्थत्वे सतीति विशेषः तत्रापि सैवासिद्धिः, भगवत्प्रत्यक्षस्य धर्माधर्मादिसमस्तवस्तुगोचरस्य श्रुतिशतप्रसिद्धत्वात् तच्चैतदनन्तरमेव वक्ष्यामः, तदलमनेनाशिक्षिताक्षपादमतानामप्रतिष्ठितप्रतिभाविजृम्भितेन ।

संभाव्यमानान्यप्यनुमानान्तराणि परस्तादुपन्यस्य निरस्यन्ते अतो नानुमानविरुद्धः पक्षः ।

नाप्यागमविरुद्धः पञ्चरात्रशास्त्रप्रामाण्यप्रतिपादकस्य इदम्महोपनिषदम् इत्याद्यागमशतस्य प्रदर्शयिष्यमाणत्वात् ।

स्ववचन-स्वाभ्युपगम-सर्वलोकप्रसिद्धिविरोधाख्यशब्दविरोधप्रकारास्त्वनाशङ्कनीया एव, तथा हि न तावत् स्ववचनविरोधः, स हि त्रेधा उक्तिमात्रविरोधः, धर्मोक्तिविरोधः, धर्म्युक्तिविरोधश्चेति, तत्र न तावदुक्तिमात्रविरुद्धोऽयं पक्षः, न हि पञ्चरात्रशास्त्रं प्रमाणमिति प्रतिज्ञावचनं स्वार्थं व्याहन्ति यथा यावज्जीवमहं मौनी इति, नापि धर्मोक्तिविरोधः, न हि प्रामाण्यं पञ्चरात्रोद्देशेन विधीयमानं पक्षं प्रतिक्षिपति सर्ववाक्यानामिव मिथ्यात्ववचनम्, नापि धर्म्युक्तिविरोधः, सत्यपि धर्मिणि धर्मान्वयस्या-

ऽविरुद्धत्वात्, न हि जननीत्वमिव वन्ध्यात्वेन पञ्चरात्रशास्त्रत्वं प्रामाण्येन विरुद्धम्, न हि विवादाध्यासितस्य प्रामाण्यप्रतिज्ञाने तत्र श्रुत्युक्तधर्मिविशेषविरोधः ।

विहितहिंसानामिवाधर्मत्वप्रतिज्ञाने विवादाध्यासस्योपलक्षणत्वात्, अतो वा नागमविरोधः, तदेवं प्रतिपन्नः पक्षः ।

नापि हेतोरनैकान्तिकत्वादयो दोषाः । तथा हि न तावदनैकान्तिकः, स हि द्वेधा साधारणासाधारणभेदात् यथा पृथिवीनित्यत्वसाधने प्रमेयत्वं साधारणः, असाधारणस्तत्रैव गन्धवत्त्वं, तत्र न तावन्निर्दोषज्ञानकारणत्वं प्रमाणाप्रमाणसाधारणं येन साधारणानैकान्तिकं स्यात्, न हि निर्दोषज्ञानकारणत्वमप्रमाणभूतविप्रलम्भकवचनादिषु विपक्षेषु दृष्टचरम् ।

नाप्यसाधारणः ज्योतिष्टोमादिवाक्यदृष्टान्ताभिधानेनैव सपक्षान्वयस्य प्रदर्शितत्वात् ।

नापि विरुद्धः, विपरीतव्याप्त्यभावात्, न हि निर्दोषज्ञानकारणत्वमप्रामाण्येन व्याप्तम् ।

न च कालात्ययापदिष्टः, प्रत्यक्षविरोधाभावात् आगमानुगुण्याच्च ।

न चासिद्धत्वम्, असिद्धिर्हि आश्रयतः स्वरूपतो वा न तावदाश्रयासिद्धिः, पञ्चरात्रशास्त्रस्याश्रयत्वात्, नापि स्वरूपासिद्धः, सोऽपि त्रेधा अज्ञान-सन्देह-विपर्ययभेदात्, न तावदज्ञानासिद्धिः, तत्प्रतिपादकशब्दोच्चारणात्, नापि संदिग्धासिद्धः, निर्दोषत्वस्य वादिनः स्वयं सिद्धत्वात्, प्रतिवादिनोऽपि दोषानुपलम्भादेवान्वयासिद्धत्वात्, विपर्ययासिद्धिस्तु दूरोत्सारितैव ।

नतु कथं पौरुषेयत्वसामान्यादापतन्ती दोषसंभा-

वना अपनीयते पञ्चरात्रमन्त्राणां कथं वाक्यत्वसामान्यादापतन्ती वेदेषु सा वार्यते, अपौरुषेयत्वादिति चेत्तदिहापि सर्वज्ञावाप्तकामपरमपुरुषप्रणीततयेत्यवगम्य शाम्यतु भवान् ।

एतदुक्तं भवति ।

नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः ।
सन्ति किन्तु स्वतस्तस्य प्रमाणत्वमिति स्थितिः ॥
वक्तुराशयदोषेण केषुचित्तदपोद्यते ।
अङ्गुल्यग्रेऽस्ति मातङ्गयूथमित्येवमादिषु ॥
प्रस्तुतग्रन्थसंदर्भे वक्तुराशयगामिनीम् ।
दोषशङ्कां त्रयीमूर्द्धध्वनिरेवापमार्ष्टि नः ॥
वदन्ति खलु वेदान्ताः सर्वज्ञं जगतः पतिम् ।
महाकारुणिकं तस्मिन् विप्रलम्भादयः कथम् ॥

ननु च ।

सिद्धे वस्तुनि शब्दानां प्रामाण्यं नेत्यवादिषम् ।
तत्परेषु प्रयोगेषु व्युत्पत्त्यग्रहणादिति ॥
तदसत्सिद्धमप्यर्थमाचक्षाणाः प्रयोगतः ।
लौकिकाः प्रतिपद्यन्ते शक्तिं कार्यपरादिव ॥

तद्यथा पुत्रस्ते जात इति वचनश्रवणानन्तरजनितविशिष्टवदनविकासावसानसमनन्तरं हृष्टोऽयमिति प्रतिपद्य हर्षोऽयं प्रियार्थावगमनिबन्धन इति स्वात्मन्याकलयन् मध्यमवृद्धस्यापि तन्निबन्धनमेव हर्षमनुमिमानस्तद्भावभावितया शब्दस्यैव प्रियार्थाऽवबोधकतामध्यवस्यति ।

तत्राप्यतीतानागतादिभेदभिन्नेषु हर्षहेतुषूपप्लवमानेषु कस्य वक्ताऽयमिति विचिकित्सोदये सति ।

तदनन्तरसंजातजातकर्मावबोधतः ।
तद्धेतुभूतः कोऽपीति निश्चिन्वन्नात्मनः पुरा ॥

कर्तव्यं जातकर्मेति प्रतीतेः किन्तु कारणम् ।
प्रतीतं प्रियमित्येवं विमृशन्नवगच्छति ॥
पुत्रजन्मैव नैवान्यदिति व्युत्पित्सुरर्भकः ।

तत्र च ।

आवापोद्धारभेदेन पदानां शक्तिनिश्चयः ।
उपपद्यत इत्येवं सिद्धासिद्धार्थवाचिता ॥

ननु न तद्भावभाविताभात्रेण कार्यकारणभावः, अतिप्रसङ्गात् ।

न च जातकर्मकर्तव्यताऽवगतिर्नियमेन प्रियार्थावगमपुरस्सरी, दृश्यते हि कुटुम्बभरणायासविदूयमानमनसोऽप्रीतिपूर्विकापि तत्कर्तव्यतावगतिः, कार्यावगतिः किं शब्दकारणिका दृष्टा येन गामानयेत्यादौ गवानयनादिकर्तव्यतावगतिः शब्दकारणिकाऽभ्युपेयते ।

अथ आकस्मिकत्वानुपपत्तेः सन्निहितशब्द एव तदवगमहेतुरिति चेत् समानोऽयं विधिरितरत्रापि ।

यापि प्रवृत्तिहेत्वर्थप्रतिपादकता क्वचित् ।
लिङादिप्रत्ययावापहेतुकी साऽवसीयते ॥

यश्च कार्यपरतामेवाखिलपदानामातिष्ठते, तेनाप्यावापोद्धारविनिर्द्धारितासंसृष्टशरीराणामेव गवाश्वादीनां तत्पदार्थता समर्थनीया, समर्थ्यमानापि कार्यान्वयिन्येव समर्थ्यत इति चेत् अलं व्यसनेन अन्यान्विताभिधानेनापि व्यवहारोपपत्तेः ।

अवश्याश्रयणीयेयमन्विताथाभिधायिता ।
कार्यान्विताभिधायित्वमन्यथा दुर्वचं यतः ॥

अव्याप्तश्चैतत् कार्यान्वितमेव सर्वत्र पदाभिधेयमिति लिङादिषु व्यभिचारात्, लिङादयो हि परिनिष्ठिताधिकाराद्यनुबन्धसंबन्धिनमेव स्वार्थमभिदधति ।

अथ तेष्वन्विताभिधानमितरत्र कार्यान्विताभिधानमिति चेत् तदर्द्धजरतीयं, ततो वरं सर्वत्रान्विताभिधानमेवाश्रीयताम् ।

तस्मादाकाङ्क्षितासन्नयोग्यार्थान्तरसङ्गतेः ।
स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः ॥

यद्यपि प्रवृत्त्यनुपपत्तिसमधिगमनीयैव शब्दशक्तिस्तथाऽपि ।

तटस्थोपायतामात्रं शब्दशक्तिविनिश्चये ।
कार्यस्याश्रयितुं युक्तं प्रयोक्त्राकाशदेशवत् ॥
अनन्यलभ्यश्शब्दार्थ इति न्यायविदस्स्थिताः ।
तस्मान्नोपायभूतस्य कार्यस्यास्ति समन्वयः ॥
व्युत्पन्नव्यवहारेषु पयःप्रतरणादिवत् ।

यथैव हि ब्रह्मजातीयादिवज्रविशेषावधारणोपयोगिनोऽपि पयःप्रतरणादेरवधृतरत्नसत्त्वस्य न व्यवहारदशायामुपयोगः, एवं व्युत्पत्तिग्रहणसमयसमुपयुक्तस्यापि कार्यस्य न व्युत्पन्नदशायामुपयोगः ॥

यदि च कार्यान्वितमेवार्थं शब्दाः प्रतिपादयन्ति कथं तेभ्यः परिनिष्ठितनदीतीरफलादिसंसर्गावगमः, नायं मुख्यो लाक्षणिक इति चेत् क वा शब्दानां मुख्यप्रयोगः ।

मानान्तरापूर्वे कार्यं इति चेन्न तत्राव्युत्पन्नत्वेन प्रयोगानुपपत्तेः ।

न हि मानान्तरापूर्वे व्युत्पत्तिरुपपद्यते ।
न चाव्युत्पन्नशब्देभ्यः प्रत्ययोऽतिप्रसङ्गतः ॥

योऽपि मन्यते लोके क्रियाकार्ये व्युत्पन्नशब्दः फलपदसमभिव्याहारबलप्रतिलब्धतत्साधनभावभङ्गुरयागादिधात्वर्थोत्तीर्णापूर्वकार्याभिधानशक्तिर्वेदे मोदते, लोके

तु सं*मुग्धेनापि व्यवहारोपपत्तेर्न शब्दार्थतत्त्वावधारणमाद्रियते इति।

तस्यापीदं मनोरथमात्रं, न हि क्रियाकार्ये व्युत्पन्नस्यायिकार्यं प्रतिपादयति अतिप्रसङ्गात्।

यदि वृद्धव्यवहारे समधिगतपदसामर्थ्येऽनुरुध्यमानेऽन्वयावगतिर्नोपपद्यते, मोपपादि न तु तदनुपपत्त्या कॢप्तशक्तिपरित्यागेन शब्दशक्त्यन्तरं भजते कामं लक्षणाऽऽश्रीयताम्।

न हि विरुद्धार्थपदसमभिव्याहारे पदानामभिधानमेवान्यथा नीयते, सर्वशब्दार्थेष्वनाश्वासप्रसङ्गात्।

किञ्च मानान्तरापूर्वकार्यबोधनशक्तता।
न कर्मफलसम्बन्धसिद्धौ तावदुपेयते॥
नैयोगिकस्य सम्बन्धो न पुनर्वैनियोगिकः।
धात्वर्थात्तीर्णकार्यात्मा न कर्मफलसङ्गमात्॥
ऋते सिध्यति संबन्धस्य च तस्मादृते न हि।

ततश्च दुरुत्तरमितरेतराश्रयणम्।

साध्यस्वर्गविशिष्टस्य पुरुषस्य प्रवर्तकः।
न स्यादिति तदिष्टार्थसाधनं न भवेद्विधिः॥
भङ्गुरो न च धात्वर्थः करणत्वेन कल्पते।
इति तद्भिन्नकार्यार्थबोधकत्वं यदुच्यते॥
तदसन्न हि साध्येन स्वर्गेणायं विशेष्यते।
स्वर्गं कामयमानो हि पुरुषोऽत्र नियुज्यते॥

न हि स्वर्गोऽधिकारिविशेषणं साध्यत्वात्।

सिद्धमेव हि सर्वस्य नियोज्यस्य विशेषणम्।
जीवनादि तथैवेह कामनैव विशेषणम्॥

अपि च नियोज्यविशेषणतामनुभवतः स्वर्गादे कीदृशं साध्यत्वम्।

* समसुग्धेनेति पा॰।

यदि साधनसंबन्धयोग्यत्वं नैव तावता ।
स्वर्गेण सिध्यता भाव्यं यावद्योगमजन्मतः ॥
सिद्धिपर्यन्तता तस्य नियोगैकप्रमाणिका ।
नियोगस्तत्प्रमाणश्चेत्त्यन्योन्याश्रयणं ध्रुवम् ॥
यदि स्वर्गस्य साध्यत्वं न नियोगस्य साध्यता ।
साध्यद्वयञ्च नैकस्मिन् वाक्ये सम्बन्धमर्हति ॥

स्वतन्त्रं हि साध्यद्वयमेकवाक्यतां निरुणद्धि नानुगुणम्, अनुगुणञ्चैतत्साध्यद्वयं नियोगसिद्धिनान्तरीयकत्वात् स्वर्गसिद्धेः, यदाह नियोगसिद्धौ सर्वं तदनुगुणम् इति केन नेष्यते नियोगसिध्यर्था फलसिद्धिरिति च, तस्मादविरोध इति चेत्तन्न ।

स्वर्गसिद्धिं विना किन्तु नियोगस्य न सिध्यति ।
नाधिकारो न विषयो न चान्यद्धिध्यपेक्षितम् ॥
न हि नित्याधिकारेषु नियोगस्तामपेक्षते ।
न चान्यदिच्छतोऽन्यत्र नियुक्तिर्नोपपद्यते ॥
नियोगस्यैव माहात्म्यं नित्येष्विव नियुज्यते ।

नियोगो हि प्रधानतयाऽधिगम्यमानस्वर्गमभिलषन्तमप्यात्मन्याकर्षति यथा अनिच्छन्तमपि नित्ये कर्मणि निष्फले प्रवर्तयति ॥

किञ्च ।

स्वर्गं कामयमानो हि निमिषत्युन्मिषत्यपि ।
न च ते स्वर्गसिद्ध्यर्था यागः किन्नैवमिष्यते ॥
तत्साधनतया नैके गृह्यन्त इति चेन्मतम् ।
यागादयः किं तद्बुद्धिग्राह्या विधिबहिष्कृताः ॥

तत्र च ।

साध्यसाधनसंबन्धप्रतिपादनतत्पराः ।
यावन्न विधयस्तावन्नैष्फल्यं सर्वकर्मणाम् ॥

तस्माल्लिङादिभ्यः प्रथममिष्टसाधनताऽवगमः, ततो रागतः प्रवृत्तिरित्येव युक्तं, तदपूर्वकार्याभिधान एव मुख्या शक्तिः इतरत्र लाक्षणिकीत्यनुपपन्नम्, अत एव यथार्थं लौकिकशब्देभ्यस्तत्सिद्धार्थगोचरा बुद्धयोजायन्ते ।

ननु न ताः शब्दमहिमभुवः आनुमानिक्यो हि ताः, तथा हि व्युत्पत्तिसमयसंविदितार्थप्रतिपादनसामर्थ्यान्यपि पदानि क्वचिद् व्यभिचारदर्शनजनितसंशयप्रतिबद्धानि न श्रुतमात्राण्यर्थं निश्चाययन्ति न चानिश्चितोऽर्थोज्ञातो भवति अनिश्चयात्मनोज्ञानस्याभावात् ॥

तत्राज्ञातेऽपि वाक्यार्थे श्रोतैवं विचिकित्सते ।
ब्रवीत्यन्योन्यसंबन्धयोग्यार्थानि पदान्ययम् ॥
न चाविज्ञातसंबन्धान् शब्दानाप्ताः प्रयुञ्जते ।
तेनेदृशान्वयज्ञानमस्यास्तीत्यवगच्छति ॥

एवमन्वयज्ञाने अनुमिते तदुपदर्शितोऽर्थो न शब्दमाकाङ्क्षति अतो लौकिकस्य वचसो वक्त्रनुभवपरतन्त्रतया तत्रैव पर्यवसानमिति ।

तदसत्, न हि स्वभावतोऽर्थमवगमयन् शब्दः क्वचिद्वक्त्राशयदोषवशीकाराद्वितथ इत्यन्यत्रापि तत्संभावनया स्वारसिकीमर्थावबोधकतामुज्झितुमर्हति, न हि मन्त्रप्रतिहत*दशायां हुतवहो न दहतीत्यन्यत्रापि तादृशदशाशङ्कया न दहति, नापि शुक्तिरजतधियमर्थव्यभिचारिणीमिन्द्रियं दोषवशादुपलब्धमिति घटादिकमपि नावगमयति, अतो विदितपदपदार्थसङ्गतेः श्रोतुस्सहसैव शब्दोऽर्थमवबोधयति मूलज्ञानं न प्रतीक्षते ।

* अत्र मन्त्रप्रतिहतिदशायामिति युक्तः पाठोऽथवा हतशब्दे भावे क्तप्रत्यय इत्यनुसंधेयम् ।

मूलज्ञानपरिज्ञानादर्वागर्थेऽपि चोदिते ।
कथमेवमयं वेदेत्यनुमानं प्रवर्तते ॥
किमज्ञासीदयं वक्ता किञ्चिदित्यनुमित्ससे ।
विशिष्टार्थान्वयज्ञानमनुमातुमथेच्छसि ॥
न तावदयमज्ञासीद् वक्ता किञ्चिदितीयता ।
व्याहारव्यवहारौ वा स्यातां वाक्यार्थगोचरौ ॥

विशिष्टार्थान्वयगोचरचेतोऽनुमानन्तु प्रथमतरप्रवृत्त-तद्विषयशेमुषीमन्तरेणानुपपन्नमिति प्रागेव शब्दार्थोऽवगन्तव्यः, न ह्यनासादितविषयविशेषसंसर्गाः संविदः परस्परतो व्यतिभिद्यन्ते ।

न च तथाऽनुमिताभिरर्थविशेषः सिध्यति यादृशान्वयप्रतिपादनयोग्या पदरचना सा तदन्वयज्ञानमापादयतीति चेत्, अवगतस्तर्हि प्रागेवार्थानामन्वयः, न हि बुद्धावनारोपित एवान्वयः प्रयोगं व्यवच्छिनत्ति,

तस्मादस्ति नदीतीरे फलमित्येवमादिषु ।
या सिद्धविषया बुद्धिः सा शाब्दी नानुमानिकी ॥
ततश्च अपूर्वकार्यगोचर एव शब्दः प्रमाणमिति ।
स्वसिन्धान्तचिराभ्यासव्या*मुग्धबलबुद्धिभिः ॥
उक्तमुक्तेन मार्गेण युक्ताऽन्यत्रापि शक्तता ॥

ततश्च यान्येतानि विलक्षणपुरुषप्रतिपादकानि वेदान्तवचांसि स एष सर्वाधिपतिः सर्वस्येशानः सर्वमिदं प्रशास्ति तस्याध्यक्षमिदं सर्वम् इत्यादीनि तान्यपि तत्र प्रमाणं तद्विषयासंदिग्धाविपर्ययज्ञानहेतुत्वात् ।

न च परिनिष्ठितवस्तुनि साधकबाधकयोरन्यतरोपनिपातसंभावनाभावितानुवादविपर्ययपर्यालोचनया त-

* व्यामुग्धाबलबुद्धिभिरिति पाठस्तु न युक्त इति मन्यामहे ।

ङ्गोचरवचसां प्रामाण्यप्रच्युतिः, कार्यगोचराणामपि तत्प्रसङ्गात्, कार्यमपि मानान्तरवेद्यमेव समिदाहरणादि, तच्च मानान्तरेणापि वेद्यमोदनपाकवदित्यभ्युपगमात् ।

अथ विलक्षणाग्निहोत्रादिविषयकार्यस्यासंभावितमानान्तरतया तत्प्रतिपादयद्वचः प्रमाणं, हन्त तर्हि निरतिशयावबोधैश्वर्यमहानन्दसंदोहवपुषि भगवति न मानान्तरसंबन्धगन्ध इति सर्वं समानमन्यत्राभिनिवेशात् ।

अपि च ।

प्रमाणान्तरदृष्टार्थविषयिण्यपि शेमुषी ।
प्रमाणमेव तत्पूर्वं न चेत्स्वार्थं विगाहते ॥

तस्य संभावनामात्रादप्रामाण्यमलौकिकम् ।

तस्मात्परिनिष्ठितानुष्ठेयादिभेदशून्यमसन्दिग्धाविपर्यस्तविज्ञानं प्रमाणमेष्टव्यम्, अत इदमपास्तम् ।

प्रसिद्धैः करणैरेव सार्वज्ञ्यं नान्यथेति यत् । यतः श्रुतिरेव तत्र परिपन्थिनी पश्यत्यचक्षुस्स शृणोत्यकर्णः यश्चक्षुषा न पश्यति यश्चक्षूंषि पश्यति । न तस्य कार्यं करणं च विद्यते । स्वाभाविकी ज्ञानबलक्रिया च इत्यादिका ।

न चासां गुणवादत्वं प्रमाणाभावात् ।

अलब्धमुख्यवृत्तीनां गुणवादसमाश्रयः ।
लभ्यते चेह मुख्योऽर्थ इति तत्कल्पना मृषा ॥

नन्विहापि मुख्यार्थभङ्गकारणमस्ति प्रमाणान्तरविरोधः ।

कुतः प्रमाणान्तरात्, न तावत्प्रत्यक्षात्, न हि प्रत्यक्षमुदीरितपुरुषाभावावभासकमुदीयमानं दृष्टं, योग्यानुपलम्भादभावनिश्चय इति चेन्न प्रमाणगोष्ठीज्येष्ठेन शास्त्रेणैवोपलम्भनात्, नाप्यनुमानात् तद्धि शीघ्रजन्मागम-

मिकप्रत्ययप्रक्षिप्तप्रतिबन्धं कथमिव मन्थरप्रवृत्ति प्रादुर्भवति ।

किञ्चैवं सति यागादेः स्वर्गापूर्वादिसङ्गतिः ।
क्रियात्वेन विरुध्येत शास्त्रं चेत्तन्न बाधते ॥
यूपादित्यादितादात्म्यं प्रत्यक्षेणैव बाधितम् ।
विस्पष्टदृष्टभेदत्वात् काष्ठसावित्रबिम्बयोः ॥

अपि च तत्र सन्निहितयूपाञ्जनविध्येकवाक्यतया अर्थवादत्वाद्युक्तं गुणवादत्वाश्रयणं, न चेह तथा विध्यन्तरमस्ति यच्छेषतया अर्थवादः स्यात् ।

अथ विध्यन्वयाभावे पुरुषार्थत्वहानतः ।
अध्याहृत्य विधिं तत्र शेषत्वं परिकल्प्यते ॥

यदाहुः ।

यावत् खलु प्रमातॄणां प्रवर्तननिवर्तने ।
शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनम्॥ इति, तन्न
ऋतेऽपि विधिसंबन्धाद् दृष्टैव हि पुमर्थता ।
पुत्रस्ते जात इत्यादौ तथेहापि भविष्यति ॥

न च तत्र विध्यध्याहारः, अन्तरेणापि विधिं पुत्रजननावगमादेव हर्षोत्पत्तेः ।

तथा का क्रिया पाक इत्यादिप्रश्नोत्तरव्यवहारेषु प्रष्टृजनजिज्ञासितक्रियाविशेषप्रतिपादनमात्रनिराकाङ्क्षशब्दोन विध्यध्याहारमपेक्षते ।

इह तु ब्रह्मविज्ञानं महानन्दफलं श्रुतम् ॥
ब्रह्मविद् ब्रह्म भवति प्राप्नोति ब्रह्मवित् परम् ।
अश्नुते ब्रह्मणा सार्द्धं सर्वान् कामान् स सामगः ॥
इदमादित्रयीवाक्यैर्व्यक्ता तस्य पुमर्थता ।

तदेवमुदीरितश्रुतिशतसमधिगतावितथसहजसर्वसाक्षात्कारकारुण्यादिकल्याणगुणैकराशौ भगवति सिध्यति, सिध्यत्येव तदनुभवमूलतया तन्त्रप्रामाण्यम् ।

ननु विरचितनीत्या कश्चिदाम्नायमूर्द्धप्रमितसहजसर्वज्ञानवानस्तु नाम । स च हरिरिति यावन्नावगम्येत सम्यक् न खलु भवति तावत्पञ्चरात्रं प्रमाणम् ॥

अत्यल्पमेतत् न ह्यत्र त्रयीविदो विवदन्ते यद्वासुदेवः परमात्मा अखिलजगत्कारणमिति ।

श्रूयते हि स वेदान्तेष्वात्मा नारायणः परः ।
सत्यं ज्ञानमनन्तञ्च तद्विष्णोः परमं पदम् ॥
परा प्रकृतिरध्यक्षो वासुदेवस्तथा परः ।

एकः परस्ताद्य इदं बभूव यस्मात् परं नापरमस्ति किञ्चित्
इत्युक्तवाच्यानुगुणं यतो वा इमानि भूतानि सदेव सौम्य ।
इत्यादिवाक्यञ्च ततस्स विष्णुस्त्रयीशिरःसिद्धविशुद्धबोधः

न चान्यस्माज्जगज्जन्मस्थितिध्वंसाश्श्रुतौ श्रुताः ।
यतश्चैते स सर्वज्ञः परमात्मेति सम्मतम् ॥

अमुमेव परमात्मानं द्वैपायन–पराशर–नारदप्रभृतिमहर्षिवचनेभ्यः प्रतिपद्यामहे तथा हि ।

विष्णौ जगत्स्थितं सर्वमिति विद्धि परन्तप ।
सृजत्येष महाविष्णुर्भूतग्रामं चराचरम् ॥
एष चाक्षिपते काले काले विसृजते पुनः ।
अस्मिन् गच्छन्ति विलयमस्माच्च प्रभवन्त्युत ॥
अनादिनिधनः श्रीमान् मुनिर्नारायणः प्रभुः ।
स वै सृजति भूतानि स्थावराणि चराणि च ।
स ब्रह्म परमं चेति तथाऽन्यत्रापि पठ्यते ॥

केशवो भरतश्रेष्ठ ! भगवानीश्वरः परः ।
पुरुषः सर्वमित्येतच्छ्रूयते बहुधा श्रुतौ ॥

इति,

तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतो मुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ॥ इति,

तथा दानधर्मे ।

परमात्मा परः शान्तः पद्मनाभः परायणः ।
इति वेदरहस्यन्तु किन्न वेत्सि पुरन्दर ॥
तत्प्रसादाद्वयं सर्वे लोकानां स्थितिहेतवः ।
आशाश्चामरमुख्याश्च देवाश्च स्थानिनो मताः ॥
यदि विष्णुरुदासीनो नास्माकं विद्यते शुभम् ।
इति रुद्रस्य वचनं तथा भारतमात्स्ययोः ॥
तत्र यः परमात्मा हि स नित्यो निर्गुणश्शुभः ।
स वै नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥ इति,

तथा वाराहे ।

यस्य देवस्य चरितं व्रतं समभवद्भुवि ।
कोऽन्यस्तस्मादभ्यधिको मुक्त्वा नारायणं प्रभुम् ॥

इति,

नारायणात्परो देवो न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानां च सत्तमाः ॥ इति ।

तथा लैङ्गे ।

स एकः पुरुषः श्रेष्ठः परमात्मा जनार्दनः ।
यस्माद् ब्रह्मा ततो रुद्रः ततश्चैवाखिलं जगत् ॥

तथा ।

विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्त्ताऽसाविति पाराशरं वचः ॥

तथा मानवे ।

नारायणः परो ऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥

तस्मादीदृशश्रुतिस्मृतितिहासपुराणपर्यालोचनया अखिलजगत्कारणं परमात्मा वासुदेव इति निश्चीयते ।

न चैव परमात्मत्वं रुद्रादेः श्रुतिषूदितम् ।
प्रत्युतोत्पत्तिमेवाहुस्तस्यैकायनशाखिनः ॥
तमो वा इदमित्यादौ तथा वेदेऽपि दृश्यते ।
यतो हि रुद्रस्सञ्जज्ञे तच्छ्रेष्ठं भुवनेष्विति ॥
तद्दिदास भुवनेषु ज्येष्ठमिति ।
तथा रौद्रं पदं स्पष्टं कर्मजन्यं प्रतीयते ॥
महिमानं निजं लेभे विष्णोरभ्यर्चनादिति । अस्य देवस्येति ललाटाद्भवद्विन्दुस्तस्माद्रुद्रोऽभ्यजायत ।
इत्यादिकाश्च श्रुतयो रुद्रोत्पत्तिं वदन्ति वै ।
एवञ्च सति रुद्रादिमहिमावेदिका इव ॥
या वाचस्तास्स्तुतिपराः श्रोत्रं ब्रह्मेति गीरिव ।

एतेन रुद्रादीनां परमात्मत्वप्रतिपादकपुराणवादाः प्रत्यक्षश्रुतिविरोधान्न मुख्यार्थाः ।

यद्वा त्याज्यतया तन्त्रसिद्धान्तप्रतिपादकाः ।
अवैदिकेषु तन्त्रेषु तन्माहात्म्यं हि कथ्यते ॥
वेदसिद्धान्तमार्गेषु विष्णुरेव परः स्मृतः ।

तद्यथा वैष्णवे ।

परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥

वाराहे ।

विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः ॥

नारायणात्परो देवो न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानाञ्च सत्तमाः ॥ इति, ।

तथा मात्स्ये ।

सात्त्विकेषु तु कल्पेषु विष्णोर्माहात्म्यमुच्यते ।
अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ॥ इति, ।

तथा लैङ्गे ।

न हि विष्णुमृते काचिद् गतिरन्या विधीयते ।
इत्येवं सततं वेदा गायन्ते नात्र संशयः ॥

इति, तथा वायवीये ।

सहस्रबाहुः परमः प्रजापतिः ।
त्रयीपथेयः पुरुषो निरुच्यते ॥

इति, तथा भविष्यति ।

वेदसिद्धान्तमार्गेषु विष्णुरेव परः स्मृतः ।
विष्णुरेव नरश्रेष्ठो महिष्ठः पुरुषोत्तमः ॥

इति, सर्वं चैतत्पुरुष*निर्णये निपुणतरमुपपादितमिति नेह प्रपञ्च्यते ।

ततश्च ।

श्रुतिमूर्ध्नि प्रसिद्धेन वासुदेवेन भाषितम् ।
तन्त्रं मिथ्येति वक्तुन्नः कथं जिह्वा प्रवर्तते ॥

न हि सहजसंवेदनसाक्षात्कृतदीक्षाराधनादिधर्मस्वर्गपुत्रादिवैषयिकसुखमनेकदुःखसंभिन्नं, न चातिचिरमनुवर्तत इति तदपि दुःखपक्ष एव निक्षिप्य मोक्षाय गृहेभ्यः प्रव्रजद्भ्यः शाण्डिल्यनारदादिपरमर्षिभ्यस्तदभिलषितनिरतिशयनिश्श्रेयसैकसाधनस्वावगमाराधनावबोधिनीं पञ्चरात्रसंहितां निरममीतेति निश्चीयते ।

* पुरुषनिर्णयनामा भगवन्महिमप्रतिपादनपुरःसरोदेवतान्तरव्यावर्तनमुखेन विष्णुपरतत्त्वत्वप्रतिपादनपरोग्रन्थः परमाचार्यप्रणीतः ।

न च तन्त्रान्तरेष्वेष न्यायः प्रसरमर्हति ।
यतस्तत्तन्निबन्धॄणां विभ्रमाद्यपि संभवि ॥
प्रत्यक्षादिप्रमाणानां न हि मूलत्वसम्भवः ।
तन्त्रान्तरेषु शास्त्रन्तु मूलं तैरेव नेष्यते ॥
अन्यच्च वेदसिद्धान्तविरुद्धार्थाभिधानतः ।
प्रत्यक्षश्रुतिमूलत्वकल्पना तेषु बाध्यते ॥
यथा माहेश्वरे तन्त्रे विरुद्धं बहु जल्पितम् ।
चतुर्विधा हि तत्सिद्धचर्यामार्गानुसारिणः ॥
यथा कापालिकाः कालामुखाः पाशुपतास्तथा ।
शैवास्तत्र च कापालं मतमेवं प्रचक्षते ॥
मुद्रिकाषट्कविज्ञानात् पुनस्तस्यैव धारणात् ।
अपवर्गफलप्राप्तिर्न ब्रह्मावगमादिति ॥

तथाऽऽहुः ।

मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ॥

तथा ।

कर्णिका रुचकञ्चैव कुण्डलञ्च शिखामणिम् ।
भस्म यज्ञोपवीतञ्च मुद्राषट्कं प्रचक्षते ॥
कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्त्तिते ।
आभिर्मुद्रितदेहस्तु न भूय इह जायते ॥

न चेदृशमुद्रिकाषट्कपरिज्ञान-तद्धारण-निन्दितभगासनस्थदेहध्यानस्यापवर्गसाधनत्वं श्रुतयो मृष्यन्ति, ता हि क ... ष्मिकसकलविषयाभिलाषविमुखस्य अखिलजगत्कारणवासुदे ... आत्मभावनैकलभ्यं मोक्षमाचक्षते । तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था अयनाय विद्यते इत्याद्याः, एवं कालामुख ... अपि समस्तशास्त्रप्रतिषिद्धकपा-

लपात्रभोजन-शवभस्मस्नान तत्प्राशन-लगुडधारण सुराकुम्भस्थापन-तत्स्थदेवतार्चनादेरेव दृष्टादृष्टाभीष्टसिद्धिमभिदधानाः श्रुतिबहिष्कृता एव ।

यदपि पाशुपतशैवाभ्यां विरुद्धाविरुद्धसममुग्धं किञ्चिदभिहितं तदपि श्रुतिबहिष्कृतमेव ।

तत्रैषा पाशुपतप्रक्रिया ।

जीवाः पशव उच्यन्ते तेषामधिपतिश्शिवः ।
स तेषामुपकाराय पञ्चाध्यायीमचीक्लृपत् ॥
तत्र पञ्च पदार्थास्तु व्याख्याताः कारणादयः ।
कारणं कार्यं विधिर्योगो दुःखान्तः ॥ इति,
उपादानं निमित्तञ्च व्याख्यातं कारणं द्विधा ।
निमित्तकारणं रुद्रस्तत्कला कारणान्तरम् ॥
मह्यन्तं महदादिकार्यमुदितं तद्वद्विधिर्गीयते ।
गूढाचारमुखश्मशानभसितस्नानावसानः परः ॥
योगो धारणमुच्यते हृदि धियामोङ्कारपूर्वन्तथा ।
दुःखान्तो हि मतोऽपवर्ग इति ते पञ्चापि संकीर्तिताः ॥

आत्यन्तिकी दुःखनिवृत्तिर्दुःखान्तशब्देनोक्ता तामेव निश्शेषवैशेषिकात्मगुणोच्छेदलक्षणां मुक्तिं मन्यन्ते इयमेव चेश्वरकल्पना शैवानामन्येषां च ।

सेयं सर्वा श्रुतिविरुद्धा कल्पना यतः ।
जगन्निमित्तोपादानं परं ब्रह्म श्रुतौ श्रुतम् ।
महानन्दात्मको मोक्षस्तत्रतत्रासकृच्छ्रुतः ॥
परस्परविरोधेन व्याहतैषां प्रमाणता ।
त्रयीदण्डप्रतिक्षेपं किञ्चिन्नैव प्रतीक्षते ॥
किञ्च शैवादयोवेदसिद्धवर्णाश्रमाद्बहिः ।
कल्पयन्त्याश्रमादीनि ततोऽपि श्रुतिबाह्यता ॥

यदाहुः ।

दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात् ।
कापालं व्रतमास्थाय यतिर्भवति मानवः ॥

इति, ।

न च वाच्यम् अप्रमाणभूतमियन्तं ग्रन्थराशिं कथं प्रत्ययिततरो रुद्रः प्रणयतीति ।

न च समाननामनिर्मातृस्मरणनिबन्धनमिति युक्तम् अतिप्रसङ्गादिति, यतः-

नामैकत्वकृतभ्रान्तिकल्पना ऽप्युपपद्यते ।
वेदबाधान्न चान्यत्र तावताऽतिप्रसज्यते ॥
प्रमादोऽपि च नात्यन्तं रुद्रादिषु न सम्भवी ।

यद्वा रुद्रस्य मोहशास्त्रप्रणेतृतयाऽवगतत्वाद् व्यामोहयितुमेव हीदृशशास्त्रप्रणयनमुपपद्यत इति नावश्यं प्रमाद एवाश्रयितव्यः, तथा च वाराहे ।

त्वं हि रुद्र ? महाबाहो ? मोहशास्त्राणि कारय ।
कुहकादीन्द्रजालानि विरुद्धाचरणानि च ॥
दर्शयित्वाऽल्पमायासं फलं शीघ्रं प्रदर्शय ।
दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर ? ॥

इति ।

तथा तत्रैव भगवान् रुद्रः प्रस्तुतशैवाद्यागमानां स्वयमेव वेदबाह्यत्वं वेदमार्गापभ्रष्टजनाधिकारित्वं तद्व्यामोहैकप्रयोजनतां च दर्शयति ।

ये वेदमार्गनिर्मुक्तास्तेषाम्मोहार्थमेव च ।
नयसिद्धान्तमार्गेण मया शास्त्रं प्रदर्शितम् ॥
तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तमाः ॥
शास्त्रेष्वभिरतो लोको न वेदान् बहु मन्यते ।
तथा पाशुपतादीनि प्रवर्तन्ते कलौ युगे ॥

तथा च भगवत्परिवारत्वव्यतिरेकेण स्वप्रधानपूजां पाशुपतादितन्त्रसिद्धां वेदबाह्यां दर्शयति ।

तद्वेदबाह्यं कर्मोक्तं मामुद्दिश्योपसेव्यते ।
तद्वै पाशुपतं नाम कनिष्ठम्मोहनं नृणाम् ॥
मां विष्णुव्यतिरेकेण पूजयन्ति नराधमाः ।
इत्यादिवाक्यजातानि न लिख्यन्तेऽतिगौरवात् ॥
व्यक्तश्च वेदबाह्यत्वमेतच्छास्त्रानुगामिनाम् ।

यथा तत्रैव ।

शशाप ताञ्जटाभस्मकपालव्रतधारिणः ।
भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः ॥
कलौ तद्रूपिणस्सर्वे जटालगुडधारिणः ।
स्वच्छन्दव्रतवेषाश्च मिथ्यालिङ्गधरास्तथा ।
ब्रह्मशापाग्निनिर्दग्धा रुद्रभक्ता जटाधराः ॥ इति,
प्रसिद्धश्चैतच्छैवागमेषु ।
रुद्राक्षं कङ्कणं हस्ते जटा चैका च मस्तके ।
कपालं भस्मना स्नानम् इत्यादि ।

तथा चैतेषामादित्यपुराणेऽपि भगवत्त्यागेन समं वेदत्यागं कथयति ।

अन्ये भस्मजटोपेता यथोक्ता गौतमात् पुरा ।
शापात्सन्त्याजिता वेदं देवं नारायणं तथा ॥

इति ।

किञ्चैते वासुदेवस्य मन्दा निन्दां वितन्वते ।
ते च पाषण्डिनो ज्ञेया यथा लैङ्गे समीरितम् ॥
ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् ।
ते वै पाषण्डिनो ज्ञेया वेदमार्गबहिष्कृताः ॥

इति, ततश्च ।

एत एव च ते एषां वाङ्मात्रेणापि नार्चनम् ।
पाषण्डिनोविकर्मस्थानित्यादिस्मृतिषूदितम् ॥
या वेदबाह्या इत्त्येतदपि चेदृशगोचरम् ।
तस्मान्न वेदमूलत्वं नापि प्रत्यक्षमूलता ॥
तन्त्रान्तराणां युक्तेति कल्प्यते कारणान्तरम् ।
ननु मूलान्तरापेक्षा यदि स्यादस्तु दूषणम् ॥
स्वतःप्रमाणं विज्ञानं भवतां ननु दर्शने ।
सत्यं तदेव विज्ञानप्रामाण्यमपनीयते ॥
बाधकारणदोषाभ्यां तावपि द्वाविह स्फुटौ ।
एवं श्रुतिविरुद्धस्य स्फुटमूलान्तरस्य यत् ॥
पञ्चरात्रेण साधर्म्यं तन्त्रत्वेनाभिधित्सितम् ।
क्रियात्वेन तु साधर्म्यं ब्रह्महत्याऽश्वमेधयोः ॥
श्रुतिप्रत्यक्षयोस्तत्र यतोमूलत्वनिश्चयः ।
ननु च श्रुतिमूलत्वे वेदादेवार्थसिद्धितः ॥
तत्प्रणेतृस्वतन्त्रत्वकल्पना नेत्यचूचुदम् ।
नैवं न कल्प्यते पुंसि स्वातन्त्र्यं श्रूयते हि तत् ॥
तस्याध्यक्षमिदं सर्वं भीषाऽस्मादिदमादिषु ।

ननु वेदमूला एव चेदेताः पञ्चरात्रस्मृतयः किं तर्हि तदर्थस्मरणवत्तन्मूलभूतवेदवाक्यस्मरणं नानुवर्तते पाञ्चरात्रिकाणाम् । न चार्थस्मरणस्य प्रयोजनवत्त्वात् तस्य विफलत्वात् तदनादरणीयमिति युक्तं, न हि यतः प्रामाण्यं तदेव विस्मर्तुं युक्तम् ।

अथ विस्मरणोपपत्तये प्रलीननित्यानुमेयशाखामूलता आश्रीयते तदा यदेव येन प्रमाणतया परिगृहीतं स तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात् नित्यानुमेयप्रलीनशाखयोस्तु स्वरूपसिद्धिरेव दुर्लभा ।

अथ विद्यमानशाखामूला एव ताः स्मृतयः तदा तत्प्रणेतृवदन्येऽपि तत एवोपलभेरन् इति ग्रन्थप्रणयनप्रयासवैयर्थ्यम् ।

अत्रोच्यते स खलु भगवान् अमोघसहजसंवेदनसाक्षाद्भवदखिलवेदराशिविप्रकीर्णविविधविध्यर्थवादमन्त्रात्मकानेकशाखाध्ययनधारणादिष्वधीरधियो भक्तानवलोक्य तदनुकम्पया लघुनोपायेन तदर्थं संक्षिप्योपदिदेशेति न किञ्चिदनुपपन्नम् ।

यथाऽऽहुः ।

वेदान्तेषु यथासारं सङ्गृह्य भगवान् हरिः ।
भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम् ॥

इति, एते च मन्वादिसमस्तस्मरणसाधारणाः पर्यनुयोगास्तट्टीकाकृतपरिश्रमाणामनायासपरिहार्या इति नेह प्रपञ्च्यते ।

ननु चेदं वेदमूलत्वं पञ्चरात्रतन्त्राणामनुपपन्नं वेदनिन्दादर्शनात्, उक्तं हि चतुर्षु वेदेषु पुरुषार्थमलभमानः शाण्डिल्य इदं शास्त्रमधीतवान् इति, अनवगतवचनव्यक्तेरयं पर्यनुयोगः, न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु

निन्दितादितरत्प्रशंसितुं यथैतरेयकब्राह्मणे प्रातः प्रातरनृतं ते वदन्ति इत्यनुदितहोमनिन्दा उदितहोमप्रशंसार्थेति गम्यते यथा मानवे ।

ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः ।
सामवेदस्तु पित्र्यः स्यात् तस्मात्तस्याशुचिर्ध्वनिः ॥

इति सामवेदनिन्दा इतरवेदप्रशंसार्था, यथा वा भारते ।

चत्वार एकतो वेदा भारतं चैकमेकतः ।
समागतैस्तु ऋषिभिस्तुलयाऽऽरोपितं पुरा ॥

महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् ।
महत्त्वाच्च गुरुत्वाच्च महाभारतमुच्यते ॥

इति महाभारतप्रशंसार्थेति गृह्यते न वेदनिन्देति । एवं पञ्चरात्रप्रशंसेति गम्यते ।

अथानुदितहोमादेरजन्यत्र स्तुतिदर्शनात् ।
अतत्परत्वं निन्दायास्तथात्रापि भविष्यति ॥
वेदप्रशंसा बहुशः पञ्चरात्रेऽपि दृश्यते ।

न हि तेभ्यः परं किञ्चिद् वाङ्मयं कमलासन ? । वेदान्तैरिदमेवोक्तं तत्त्वज्ञानोपपादकैः ॥ इत्यादौ ।

अपि च चतुर्षु वेदेषु इति नायमर्थः वेदेषु पुरुषार्थो नास्तीति किन्तु यस्तेषु पुरुषार्थस्तमलभमान इति ।

ननु पुरुषार्थमलभमान इत्यन्वयो न वेदेषु पुरुषार्थमिति, मैवं व्यावर्त्त्याभावात्, न हि वेदेष्वेवायं पुरुषार्थो न लभ्यते अतो वेदेषु यः पुरुषार्थस्तमलभमानः तदभिलाषी पञ्चरात्रशास्त्रमधीतवानिति पञ्चरात्रश्रुत्योरैकार्थ्यमेव प्रतीयते ।

यत्पुनरुक्तमुपनयनादिसंस्कृतानां भगवदाराधनार्थतया दीक्षालक्षणसंस्कारविधानादवैदिकत्वमिति तदयुक्तं न ह्युपनयनादिसंस्कृतानां ज्योतिष्टोमादिकर्माङ्गतया दीक्षादिसंस्कारविधायकम् आग्नावैष्णवम् इत्यादिवाक्यमवैदिकं भवति ।

अथ वैदिकसंस्कारात् संस्कारान्तरविधानं हेतुः, तदनुपपन्नं सिद्धे हि पञ्चरात्रशास्त्रस्य अवैदिकत्वे तस्य संस्कारान्तरत्वसिद्धिः तत्सिद्धौ च तस्यावैदिकत्वसिद्धिरित्यन्योन्याश्रयणात् ।

किञ्च समस्तवैदिकसंस्कारेभ्यः संस्कारान्तरत्वं वा हेतुः, उत कतिपयेभ्यः संस्कारेभ्यः, न तावदनन्तरः कल्पः उपनयनादिसंस्कारस्यापि चौलादिसंस्कारात् संस्कारान्तरत्वेनावैदिकत्वप्रसङ्गात्, न चान्त्यः कल्पः, उक्तदोषानतिवृत्तेः, न ह्युपनयनं समस्तवैदिकसंस्कारेभ्यः संस्कारान्तरमसिद्धश्च समस्तवैदिकसंस्कारव्यतिरेकः पञ्चरात्रशास्त्रस्यापि वैदिकत्वादित्युक्तमेव ।

यदपि धर्मप्रमाणत्वाभिमतचतुर्दशविद्यास्थानेष्वपरिगणितत्वात् पाशुपतादितन्त्रवत् त्रयीबाह्यत्वमिति तदपि द्वैपायन-वाल्मीकि-प्रणीतभारतरामायणादिग्रन्थैरनैकान्तिकम् ।

यत्तु भगवता बादरायणेन निरस्तत्वादिति तदसत्, कथं हि भगवान् द्वैपायनः सकललोकादर्शभूतपरमभागवतो भागवतं शास्त्रं निरस्यतीत्युत्प्रेक्ष्येत ।

य एवमाह ।

इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥
भविष्यति प्रमाणं वै एतदेवानुशासनम् ।

इति, भीष्मपर्वण्यपि ।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ॥

सात्वतं विधिमास्थाय गीतस्संकर्षणेन यः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥

इति ।

तथा शान्तिपर्वण्यपि ।

अवश्यं वैष्णवो दीक्षां प्रविशेत् सर्वयत्नतः ।
दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ॥
वसन्ते दीक्षयेद्विप्रं ग्रीष्मे राजन्यमेव च ।
शरदः समये वैश्यं हेमन्ते शूद्रमेव च ॥
स्त्रियं च वर्षाकाले तु पञ्चरात्रविधानतः ॥

तथा ।

वेदैश्चतुर्भिस्सः*मितं कृतं मेरौ महागिरौ ।
एवमादिवचोभङ्गीशतैस्सादरमीरितैः ॥
वेदान्तसारसर्वस्वमात्मीयं परमं मतम् ।
पञ्चरात्रं निराकुर्यात् कथं द्वैपायनः स्वयम् ॥

कथं तर्हीदं सूत्रम् उत्पत्त्यसंभवात् इति किं वाऽस्य सूत्रस्य हृदयम् इदमस्य सूत्रस्य, भागवतशास्त्रे जीवोत्पत्तेः प्रतिपाद्यमानत्वात् तस्याश्च श्रुतिन्यायविरोधेनासम्भवाद्समीचीनं शास्त्रमिति, यद्येष सूत्रार्थस्तर्हि पञ्चरात्रशास्त्रनिराकरणपरं सूत्रं, न हि पञ्चरात्रशास्त्रेषु जीवोत्पत्तिरङ्गीकृता येनैवमुच्यते ।

नन्वस्तीदं वचनं वासुदेवः परा प्रकृतिः परमात्मा ततस्संकर्षणो नाम जीवो जायते सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते ततोऽनिरुद्धनामा अहङ्कारो जायते । इति,

अपि तु व्यूहरूपेण व्यक्तिर्देवस्य कीर्त्यते ।
तत्र संव्यवहारार्थं जीव-शब्दः प्रयुज्यते ॥

* सम-शब्दात्ताद्धितेन इतच्प्रत्ययेन व्युत्पन्नः समितशब्दो भवति तुल्यार्थः ।

वर्णानामानुलोम्येन पूज्यभेदप्रसिद्धये ।

यथाऽऽहुः ।

वर्णैश्चतुर्भिश्चत्वारः पूजनीया यथाक्रमम् । इति, अपि च जीवमनोऽहङ्कारशब्दा न तन्मात्रवचना अपि तु तत्तदधिष्ठानाधिकृतविलक्षणविग्रहवत्पुरुषाभिधाना इति ।

विचित्रदेहसंपत्तिर्जन्मेति व्यपदिश्यते ।
तोयेन जीवान्नित्येतद्यजुर्मूर्द्धि यथा वचः ॥

अपि च जीवोत्पत्तिप्रलयादिगोचराः श्रुतिस्मृतिलोकवादाः चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वादित्यत्रैव सूत्रकारेण कृतनिर्वाहाः ॥

किञ्च नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः इत्यत्रैव ब्रह्मणो जीवोत्पत्तिः श्रुतिस्मृतिन्यायविरोधेन निरस्ता सती न पुनरुपन्यासं प्रयोजयतीति अनधिकरणीयमधिकरणमापद्येत, एतेन न च कर्त्तुः करणम् इति सूत्रं व्याख्यातं, न ह्यत्र कर्त्तुःसङ्कर्षणात् करणस्य मनस उत्पत्तिरुच्यते, उक्तं हि विलक्षणपुरुषवचना एते शब्दा इति,

किमिति वा कर्त्तुः करणन्नोत्पद्यते देवदत्तादेः कर्त्तुः परशुप्रभृतिकरणोत्पत्त्यदर्शनादिति चेत्, हन्त हतस्तर्हि अपगतसकलकरणकलापस्वमहिमप्रतिष्ठब्रह्मणः प्राणमनःप्रभृतिनिखिलकरणोत्पत्त्यभ्युपगमः, एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च इति,

अथ श्रुतिप्रसिद्धत्वात्तत्तथैवाभ्युपेयते ।
पञ्चरात्रप्रसिद्धत्वादिदं किन्नाभ्युपैषि भोः ॥
न हि स्मृतिप्रसिद्धार्थपरित्यागोऽतिशोभनः ।
निर्दोषज्ञानजन्मत्वात् प्रामाण्यं हि समं द्वयोः ॥

यत्तु चत्वार एते किं समानैश्वर्यभागिनः ।
स्वतन्त्राः किमुतैकस्य स्वेच्छामूर्तिचतुष्टयी ॥

इति विकल्प्य ।

समानैश्वर्यभागित्वे तुल्यत्वान्नैव कार्यता ।
एकस्य मूर्तिभेदश्चेत् किं भेदेन प्रयोजनम् ॥

इति दूषयतीति व्याख्यातं विज्ञानादिभावे वा तदप्रतिषेध इति ।

तदयुक्तम् असम्भावनीयत्वाद्विकल्पस्य, न हि केनचिदीश्वरवादिना अनेकेश्वरं जगदभ्युपगतं विशेषतश्च पाञ्चरात्रिकैः वासुदेव एवैकः परा प्रकृतिरिति वदद्भिः, किन्तु स एव भगवान् लीलाविरचितचतुर्भेदः सकलमपि जगत्संरक्षतीति ।

न चेदमनुपपन्नं बल-भरतावरजाग्रजादिप्रादुर्भाववदुपपत्तेः, यथैव हि भगवतः स्वलीलाविरचितगगन-पवन-हर-विरिञ्च्यादिप्रपञ्चस्य अचिन्त्यमहिमलीलैकप्रयोजनस्य राम-लक्ष्मण-भरत-शत्रुघ्नादिस्वच्छन्दाविग्रहा न विरोत्स्यन्ते एवं सङ्कर्षणप्रद्युम्नादिभेदा इति ।

यत्परं विप्रतिषेधात् इति चतुर्षु वेदेषु इति श्रुतिविप्रतिषेधात् तन्त्राणां परस्परविप्रतिषेधाद्वा । अप्रमाणमिति तत्र श्रुतिविप्रतिषेधस्तु प्रागेव प्रत्युक्तः, परस्परविप्रतिषेधस्तु प्रधानगुणसामान्यविशेषादिन्यायसंपादितवचनव्यक्तीनां तन्त्राणां नास्त्येव न्यायानुग्रहरहितानान्तु वचसां न क्वचिदपि परिनिश्चायकत्वं, यथाऽऽह न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् इति, तस्मात्सूत्रकारेण इदं महोपनिषदम् इत्यादिवचनैर्वेदेभ्योविशेषेणाभिमततरप्रामाण्येषु पञ्चरात्रतन्त्रेष्वविद्यमानजीवो-

त्पत्तिप्रतिपादनाध्यारोपेण तन्निराकरणपरतया सूत्रं व्याख्यायमानं व्याख्यातॄणामेवाख्यातिं ख्यापयतीत्यलं प्रबन्धेन।

तत्रैष सूत्रार्थः पूर्वं स्वाभिप्रेतसमयपरिपन्थिकपिल-काश्यप-सुगत जिन-पशुपतिमतानां श्रुतिन्यायविरोधादसामञ्जस्यं प्रतिपाद्य अधुना स्वाभिप्रेतपञ्चरात्रतन्त्राणामपि इतरसमयसमानपरिगणनाद् बुद्धौ सन्निहितानामितरसमयवदसामञ्जस्यमाशङ्क्य प्रामाण्यं *व्युत्पाद्यते।

तत्राद्येन सूत्रद्वयेन पूर्वपक्ष उपक्षिप्यते तथा हि पञ्चरात्रशास्त्रमप्रमाणम् उत्पत्त्यसंभवात् प्रतिपाद्यमानायाः संकर्षणाद्युत्पत्तेरसंभवात्, कथमसंभवः, उभयथाऽप्यनुपपत्तेः तथा हि।

किन्तु चत्वार एवैते समानैश्वर्यभागिनः।
एको वा स्याच्चतुर्भेदे द्वेधा व्युत्पत्त्यसंभवः॥
समानैश्वर्यभागित्वे तुल्यत्वान्नैव सृज्यते।
एकात्मत्वेऽभ्युपेतेऽपि तथोत्पत्तेरसंभवः॥
स्रष्टृसृज्यविभागो हि नैकस्मिन्नवकल्पते।

तथा न च कर्त्तुः करणम् इतश्च अप्रमाणं कर्त्तुः सङ्कर्षणसंज्ञाज्जीवात् करणस्य प्रद्युम्नसंज्ञस्य मनस उत्पत्त्यसंभवात्, न हि देवदत्तात्परशुरुत्पद्यत इति।

एवं वा न च कर्त्तुः करणम् इतश्च कर्त्तुःसंकर्षणात् न करणमुत्पद्यते ब्रह्मण एव समस्तकरणोत्पत्तिश्रुतेः, एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च इति, विज्ञानादिभावे वा तदप्रतिषेध इति, वा-शब्दात्पक्षो विपरिवर्त्तते।

* स्थूणानिखननन्यायेनेत्यर्थः यथा हि स्थूणां द्रढयितुमिच्छवस्तां स्वयमेव हस्तेन परिचाल्य परीक्षन्ते।

यदुक्तमुभयथाऽपि संकर्षणाद्युत्पत्तेरसंभवादप्रामाण्यमिति नैतदस्ति तस्यास्सङ्कर्षणाद्युत्पत्तेरप्रतिषेधः ।

यदि हि विज्ञानादय एते न भवेयुः स्यादुत्पत्तिप्रतिषेधः ।

विज्ञानञ्चादि*चेति विज्ञानादि ब्रह्म तद्भावे ब्रह्मभावे उत्पत्तेरप्रतिषेधः ।

---

* आदीयते–उपादीयते उपयुज्यते सर्वकार्यार्थमित्यादि सर्वजगद्विदानं ब्रह्म, अत्र यद्यपि उपसर्गे घोः किरिति पाणिनीयेन किप्रत्ययान्तादि–शब्दस्य नित्यपुँस्त्वं प्राप्नोति तथापीह औणादिकप्रत्ययेन साधुभावोऽवगन्तव्यः शिष्टप्रयोगे संज्ञासु धातुरूपाणीत्यादिना तथैवानुशिष्टत्वेन शिष्टाशिष्टैरेव च प्रयोगमूलतया अनौणादिकस्यैव पुँस्त्वकल्पनात् ॥

अथवा विज्ञानं चादिश्चेत्येव पाठः । ततश्च विज्ञानं चादिश्च विज्ञानादि इति समाहारद्वन्द्वः, विज्ञानादीतिकृतसमाहारद्वन्द्वके विज्ञानादिपदे निर्विसर्गकपाठावलोकनभ्रान्तित एव प्राचीनकोशेष्वपि विज्ञानं चादिश्चेति विवक्षणीये विज्ञानं चादि चेति लिलिखुरिति केचिन्मन्यन्ते । इत एवास्वरसेन कल्पान्तरमवलम्बिरे ग्रन्थाचार्याः । एवमेव च विज्ञानादिसूत्रे श्रीभाष्येऽपि शङ्कासमाध्यभ्यूहनमिति कृतं कुसृष्ट्या वाचामिति चापरे । वस्तुतस्तु श्रीभाष्यकोशेषु आगमप्रामाण्यकोशेषु च प्रायशो देशविशेषनैरपेक्ष्येण विज्ञानादिसूत्रे (विज्ञानं चादि च विज्ञानादि–ब्रह्म तद्भावे) इत्येव प्रामाणिकः पाठ इत्यवश्यं तात्पर्यविशेषेण स प्रयोगो वक्तव्यो न तु यथाश्रुतार्थकादि–पदेनाचरमार्थेन अब्रह्मसाधारणेन । अत्रैवमाचक्ष्महे आ–समन्तात्तु शीलमस्येत्यादिन् परमं ब्रह्म सुप्यजातौ णिनिस्ताच्छील्ये । इति पाणिनीयेन ताच्छील्येऽर्थे णिनिः, आङा चासाधारण्यं विवक्ष्यते तच्च अत्ता चराचरग्रहणादित्यधिकरणोक्तरीत्या ब्रह्मासाधारणं कर्मेति तादृशार्थकादिपदेन निखिलजगददनकर्तृ परं ब्रह्माभिहितं भवति तच्च साङ्ख्याद्युक्तदिशा प्रधानधर्मो माभूदिति विज्ञानपदेन विशेष्यते । एवं च जन्माद्यस्य यत इति सूत्रे आदिपदेन जगत्स्थितिप्रणाशहेतुताया लक्षणत्वेनाभिमततया लक्षणेनेतरभेदसाधने जन्मादित्रितयस्य संहत्य हेतुतायां व्याप्यत्वासिद्ध्या प्रत्येकमेव हेतुताया वाच्यत्वेन स्वासाधारणरूपेणादिन् पदेन ब्रह्मोपस्थापितं भवतीति । सति चैवं (विज्ञानं चादि च विज्ञानादि ब्रह्म) इति श्रीभाष्याचार्याणां परमाचार्याणां श्री ६ यामुनमुनीनां चाभिधानमञ्जसा समञ्जसमिति यथाश्रुतार्थग्राहिणां केषांचिदमीषामाचार्यतात्पर्यानवबोधनिबन्धनमेवानुपपत्त्यभिधानम् । परे तु संपदादित्वात् क्विपं कृत्वा तस्मात्स्वार्थे अणं विधाय आद इति प्रसाध्य ततो मत्वर्थीयेनिना आदिन्पदं सिषाधयिषन्ति । तदिदमपि प्रक्रियागौरवपराहतमिति नातितृप्तये विदुषाम् । किं च अच्छब्दस्य संपदादिक्विबन्तस्य नित्यस्त्रीत्वे ततोऽणि जाते अणन्तत्वेन ङीपोऽवश्यं भावेन आदी इति स्यादिति ततोऽपि नेष्टसिद्धिसंभावना । यदपि अदनमाद इति भावे इति सूत्रेण भावे घञं कृत्वा भावघञन्ताच्च मत्वर्थीयेनिना आदिन्पदप्रसाधनं तदिदं घञपोश्चेति पाणिनीयानुशासनविस्मरणनिबन्धनं घञि घस्लादेशविधानात् ।

एतदुक्तं भवति एकस्यैव परमात्मनो वासुदेवस्याप-रिच्छिन्नशक्तेः स्वमायावेशवशात् कार्यकारणभावोपपत्तिरिति।

यत्तु न सङ्कर्षणान्मन उत्पद्यते ब्रह्मण एव उत्पत्तिश्रुतेरिति तदपि तस्य विज्ञानादित्वेन परिहृतम्।

अपि च न च कर्त्तुः करणम् इति किमुक्तं भवति किं यस्याः क्रियाया यत्करणं तत्क्रियाकर्त्तुर्नोत्पद्यते, उत यद् यत्र कापि करणं तत् कुतश्चिदपि कर्त्तुर्नोत्पद्यत इति वा।

तत्राद्ये कल्पे सिद्धसाधनतया अनुमानस्य विप्रतिषेधः, न ह्यत्र सङ्कर्षणात्कर्त्तुरुत्पद्यमानं मनः स्वोत्पादने करणं कर्मत्वात्, नापि स्वोत्पत्तौ कर्तृत्वात्।

अपरेऽपि कल्पे प्रत्यक्षविप्रतिषेधः उदकाहरणादौ करणभूतानामपि घटादीनां कर्त्तुः कुलालादेरुत्पत्तिदर्शनात्।

तदिदमाह विप्रतिषेधादिति।

यद्वा सूत्रद्वयस्यास्य व्याख्यानान्तरमुच्यते।
विज्ञानादेः प्रमाणत्वहेतोर्भावेन युज्यते॥
पञ्चरात्रप्रमाणत्वनिषेधोऽतिप्रसङ्गतः।
तत्रानुवादसंदेहज्ञानानुत्पत्तिलक्षणम्॥
निरस्तमप्रमाणत्वं विज्ञानग्रहणादिह।
वञ्चाशयवशप्राप्तमिथ्याशङ्काऽपनुत्तये॥
आदिशब्देन तन्त्राणामाप्तोक्तत्वं विवक्षितम्।

तथा हि।

यस्साक्षात् कुरुते सदा सहजया बुद्ध्या समस्तं जगत्।
यः पुंसामभिवाञ्छितानि दिशति ध्यानैकसंतर्पितः॥

नित्यावाप्तसमस्तकाम इति यं प्राहुस्त्रयीपारगाः ।
तस्मिन् विभ्रमविप्रलम्भनमुखा दोषा भवेयुः कथम् ॥
उत्पत्त्यसम्भवो यश्च पूर्वसूत्रद्वयोदितः ।
सङ्कर्षणादिमूर्तीनां तत्र प्रतिविधीयते ॥

विप्रतिषेधात् इति पञ्चरात्रस्मरणानुमितभगवत्प्रत्यक्षविप्रतिषेधात् तदनुमितश्रुतिविप्रतिषेधाद्वेति ।

यद्वा सूत्राणां न्यायप्रदर्शनपरत्वात् पञ्चरात्रश्रुत्योरसन्तमपि विरोधं कृत्वाऽत्र चित्यन्ते तथा हि ।

सति वेदविरुद्धत्वे किन्नु मन्वादिवाक्यवत् ।
अप्रमाणमिदं शास्त्रं प्रमाणं वेति संशये ॥
अप्रमाणं विरुद्धार्थप्रमित्युत्पत्त्यसम्भवात् ।
असम्भवश्च सापेक्षनिरपेक्षत्वहेतुकः ॥

यावद्धि सापेक्षं पञ्चरात्रस्मरणं न मूलप्रमाणोपस्थापनमुखेन स्वार्थं प्रमातुमुपक्रमते तावन्निरपेक्षापौरुषेयागमभुवा प्रत्ययेन तदर्थस्यान्यथा परिच्छेदात्तद्विरुद्धायाः प्रमितेरुत्पत्त्यसम्भवात् ।

तावद्धि पञ्चरात्रस्य मूलश्रुत्यवबोधनम् ।
प्रत्यक्षशास्त्रशस्त्रेण यावन्मूलं न लूयते ॥

ननु कथं वेदा वा निरपेक्षा यावता तेषामपि भगवदनुभवसापेक्षमेव प्रमाणत्वं तत्कारणत्वात्, यथैव हि पञ्चरात्रस्मृतयः तदनुभवसापेक्षाः एवं वेदा अपीति तत्रोच्यते न च कर्त्तुः करणं न कर्त्तुरीश्वरस्य करणं वेदाः क्रियन्त इति करणं, कर्मणि ल्युट्, अपौरुषेया वेदा इति यावत् ।

विज्ञानादिभावे वा तदप्रतिषेधः, न चैदस्ति पञ्चरात्रशास्त्रमप्रमाणमिति किन्तर्हि तदप्रतिषेधः प्रमित्युत्पत्ते-

रप्रतिषेधः, विरुद्धार्थमपि विकल्पेन प्रमाणमित्यर्थः असम्भवद्भ्रमविप्रलम्भगवदनुभवमूलत्वाद्, विज्ञानादिभावे विज्ञानं-विशिष्टं ज्ञानम् असम्भवत्स्खलनमिति यावत्, अन्येषां हि सर्वधर्मशास्त्रनिबन्धॄणां सांसारिकत्वेनासार्वज्ञ्यात् अनवाप्तकामत्वाच्च सम्भाव्यमानविविधविप्लवं ज्ञानं, भगवतस्तु स्वाभाविकनिरङ्कुशैश्वर्यस्य श्रुतिशतसमधिगतावितथसहजसमस्तधर्माधर्मादिसाक्षात्कारं ज्ञानमिति विज्ञानमित्युक्तं, तादृशस्य*तस्यादिभावे मूलत्वे सति तदप्रतिषेधः प्रमाणमेवेति ।

ननु कथं श्रुतिविरुद्धस्य तन्त्रस्य प्रामाण्याभ्युपगमः त्प्रामाण्ये हि श्रुत्या सह विकल्पः प्राप्नोति, विकल्पश्च अष्टदोषदुष्टः, स च क्वचिदन्यतरपरित्यागकारणाभावादगत्याऽभ्यनुज्ञायते, यथा व्रीहिभिर्यजेत यवैर्यजेत इति, न हि तत्रान्यतरदपहर्त्तुं शक्यम् उभयोरप्यनपेक्षत्वाविशिष्टत्वात्

न चैवमपि पञ्चरात्रश्रुत्योर्विकल्पेन भवितव्यम् अतुल्यत्वात्, निरपेक्षं हि वैदिकं वचनम् अपौरुषेयत्वात्, सापेक्षं च पञ्चरात्रवचनमिति कथमनयोर्विकल्पः ।

श्रूयतां पञ्चरात्रशास्त्रस्यापि निरपेक्षत्वादेव ।
कथन्नु पौरुषेयस्य वचसो निरपेक्षता ।
इति चेदिदमाचष्टां पृष्टस्सन्नेष तार्किकः ॥
किमस्य बोधकत्वाय परापेक्षाऽभ्युपेयते ।
किं वा निश्चायकत्वाय यथार्थज्ञापनाय वा ॥
पुमर्थत्वाय वा तत्र चतुर्णामप्यसम्भवः ।

न खलु चक्रवर्त्युपचारेण भगवन्तं समर्चयेदितीदं वचनं श्रूयमाणं बोधकत्वाय किञ्चिदपेक्षते अन्यत्र व्युत्प-

* अस्मिन्नर्थे विज्ञानस्यादिभावोविज्ञानादिभाव इति षष्ठीतत्पुरुषोज्ञेयः ।

त्तिग्रहणात्, न च तावता सापेक्षत्वेन दौर्बल्यं श्रुतावपि दौर्बल्यप्रसङ्गात् ।

नापि निश्चयजननाय, न हि अर्चयेदित्येतत् अर्चयेन्न वेति संशयितं प्रत्ययमुत्पादयति व्युत्पत्तिप्रतिपत्तिव्याकोपप्रसङ्गात् ।

नापि यथार्थत्वाय, न ह्युत्पन्नं ज्ञानं स्वकारणव्यतिरेकेण यथार्थत्वाय अपरमपेक्षते गुणतः प्रामाण्यस्यायुक्तत्वात् अनभ्युपगमाच्च ।

न च पुरुषार्थत्वाय परापेक्षा शास्त्रशरीरपर्यालोचनादेव तत्सिद्धेः, इह हि यथोक्तसंस्कारवतां शास्त्रश्रवणात् तदर्थज्ञानं ततस्तदर्थपाञ्चकालिकानुष्ठानं, ततो निरतिशयसंपत्प्राप्तिरिति शास्त्रादेवावगम्यते ।

अथोच्येत सत्यपि पञ्चरात्रतन्त्राणां स्वतःप्रामाण्ये यावत्तद्वक्तुराप्तिनिश्चयपुरस्सरं दोषाभावो नावधार्यते न तावत्प्रामाण्यं निष्पाद्यत इति तदसत्, न हि दोषाभावज्ञानं प्रामाण्यं निष्पादयति निर्दोषज्ञानकारणादेव तदुत्पत्तेः ।

न च निर्दोषत्वायाप्तत्वादिगुणनिश्चयः सत्तामात्रेण तत्सिद्धेः, यथाह वार्त्तिककारः । तदा न व्याप्रियन्ते तु ज्ञायमानतया गुणाः । इति, दोषाभावज्ञानेऽपि गुणानां सत्तयोपयोगो दर्शितः, दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः । इति, न चोत्पन्नमपि प्रमाणं हानोपादानादिव्यवहारायापरमपेक्षते स्मरणाभिलाषाभ्यामेव तत्सिद्धेः, यथाहुः स्मरणादभिलाषाच्च व्यवहारः प्रवर्तते इति ।

अपि च स्वतःप्राप्तप्रामाण्यानां वेदानामपि यावत्कर्तृभावनिश्चयपुरस्सरं दोषाभावो नावधार्यते न तावत्प्रामाण्यं प्रतितिष्ठतीति समानं सापेक्षत्वम् ।

अथ योग्यानुपलम्भादेवानायाससिद्धे वक्तृभावे निराश्रयदोषाणामसम्भवादप्रामाण्यशङ्कैव वेदे नास्ति इति चेत् यथाहुः ।

तत्रापवादनिर्मुक्तिर्वक्तृभावाल्लघीयसी ।
वेदे तेनाप्रमाणत्वं न शङ्कामधिगच्छति ॥

इति ।

हन्त तर्हि पञ्चरात्रतन्त्रेऽपि सर्वज्ञसर्वेश्वरवक्तृभावादेव अयत्नसिद्धे दोषाभावे अप्रामाण्यशङ्का नावतरतीति समानश्चर्चः ।

एतदुक्तं भवति उभयोरपि स्वतःप्रामाण्ययोरेकत्र दोषाभावनिश्चयः तदाश्रयपुरुषाभावनिश्चयात्, अन्यत्र तद्विरुद्धगुणवक्तृकत्वनिश्चयादिति ।

यथा औष्ण्याभावनिश्चयो नभसि तदाधाराभावनिश्चयाज्जले तु तद्विरुद्धशैत्योपलम्भादिति ।

किञ्च ।

सापेक्षनिरपेक्षत्वे न हि बाधस्य कारणम् ।
शुक्तौ रजतबोधस्य निरपेक्षस्य बाधकम् ॥
नेदं रजतविज्ञानं तत्सापेक्षमपीष्यते ।
सेयं ज्वालेति संवित्तिस्तैलवर्तिविनाशजा ॥
अनुमा बाधिका दृष्टा सापेक्षाऽप्यक्षजन्मनः ।
अतो निरवकाशेन सावकाशं निषिध्यते ॥
न चेह सावकाशत्वं भगवच्छास्त्रवेदयोः ।
अथ श्रुतिविरुद्धस्य तन्त्रभागस्य दुश्शकम् ॥
वासुदेवप्रणीतत्वं निश्चेतुमिति मन्यसे ।
पञ्चरात्रविरुद्धस्य वेदभागस्य वा कथम् ॥
अपौरुषेयताज्ञानमाविर्भवति बाधितम् ।
तस्यापि वेदभागत्वात् तथाभावोऽभ्युपेयते ॥

अस्यापि पञ्चरात्रत्वात् तत्प्रणीतत्वमिष्यताम् ।
कर्तुरस्मरणात्तत्र यदि चापौरुषेयता ॥
तत्कर्तृकत्वस्मृत्याऽत्र किन्न स्यात्तत्प्रणीतता ।
अस्ति ह्याश्रीकुमारं सा दृढा स्मृतिपरम्परा ॥
पञ्चरात्रस्य निर्माता केशवो भगवानिति ।
तत्प्रणीतत्वविश्वासाद् गजानश्वान् धनं बहु ॥
*दक्षिणां विविधां दत्त्वा प्रतिष्ठादीनि कुर्वते ।
साङ्ख्यस्य कपिलो वक्ता पञ्चरात्रस्य केशवः ॥
इति स्कन्दपुराणेऽपि पठ्यते भारते तथा ।
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
नारायणमुखोद्गीतं नारदोऽश्रावयन्मुनीन् ।
ब्रह्मणस्सदने तात ? यथादृष्टं यथाश्रुतम् ॥
एवमादिपुराणोक्तैः सहस्रैर्न्यायबृंहितैः ।
वासुदेवप्रणीतत्वं पञ्चरात्रस्य निर्व्यथम् ॥
किन्तु वेदस्य नित्यत्वे विवदन्ते विपश्चितः ।
तेन निर्दोषविज्ञानकारणत्वाद् द्वयोरपि ॥
निर्विशङ्कं प्रमाणत्वं भगवच्छास्त्रवेदयोः ।
ततश्च तुल्यशिष्टत्वाद् विकल्पेन प्रमाणता ॥
इति मत्वैतदाचष्टे सूत्रकारो महामनाः ।
विज्ञानादिभावे वा तदप्रतिषेध इति ।

ननु च भगवतस्सर्वज्ञत्वेनासंभाव्यमानायामपि भ्रान्तौ सर्वशक्तित्वेन विप्रलब्धमपि भवतीति किमिदमपि शास्त्रं व्यामोहयितुमभिहितम् उत वस्तुतोऽवहितबुद्ध्या निबद्ध-मित्यन्यतरपक्षावलम्बनविक्लबमनसां क इव निर्णयोपायः, प्रत्युत वेदविरोधादेव विप्लवनफलमित्यध्यवस्याम इति ।

तत्रोच्यते विप्रतिषेधात् इति, समस्तश्रुतीतिहास-पुराणलोकविप्रतिषेधाद् यदि विना कारणेन भगवतः सर्वशक्तित्वमात्राद् विप्लावनशङ्का ।

हन्त्यैवं सर्वशक्तित्वान्नरके धार्मिकानपि ।
पातयेन्नेति सन्देहान्निश्शेषं जगदापतेत् ॥

अपि चायं सर्वशक्तित्वेन विप्रलिप्समानः किमतीन्द्रियासत्यार्थान् वेदानादौ निर्माय स्वनिर्माणस्मरणशक्तिमपि हिरण्यगर्भादेरपहृत्य तत्प्रभृति स्वाध्यायपरम्परामिमां प्रवर्तितवान्न वेति संशयानाः कथं विश्वसिमः । अथास्य सत्यपि सर्वशक्तित्वे यावच्छक्ति करणे प्रमाणाभावात् अनवस्थानाद् भगवतश्च स्वभावावाप्तकामतया विप्रलम्भप्रयोजनविरहाद् वैषम्यनैर्घृण्यादिदोषैर्मात्रयापि चासंस्पृष्टत्वात् सर्वप्राणिजातस्य स्वभावसौहृदेन व्यवस्थानाद् विप्रलब्धुं प्रणीतत्वे च विदुषामद्य यावत् स्वाध्यायाध्ययन--तदर्थानुष्ठानवतां तत्कर्तृदोषविस्मरणानुपपत्तेस्तादृशाशङ्का नास्तीति चेत्तदेतत्सर्वमन्यत्रापि समानम् ।

तथा हि ।

किमस्यावाप्तकामस्य सर्वज्ञस्य दयानिधेः ।
अल्पसत्त्वैरलब्धार्थैर्विप्रलब्धैः प्रयोजनम् ॥
विप्रलब्धुं कृतं तन्त्रं कथं वा परमर्षयः ।
इतस्ततः प्रशंसन्ति तुल्यवच्छ्रुतिमूर्धभिः ॥

तथा हि वेदैस्सह निर्विशेषं वाराह-रामायण--भारतादौ ।
अमुष्य तन्त्रस्य रहस्यभावं व*दन्ति सन्तस्तमिमं वदामः ॥

* पठन्तीति द्रविडपाठः ।

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ? ।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षशतैरपि ॥
पञ्चरात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यति ।
कर्मक्षये च मद्भक्तो यदि कश्चिद् भविष्यति ॥
तस्य वेदाः पञ्चरात्रं नित्यं हृदि व*त्स्यति ।
यदिदं पञ्चरात्रम्मे शास्त्रं परमदुर्लभम् ॥
तद् भवान् वेत्स्यते सर्वं मत्प्रसादादसंशयम् ।
पुराणैश्चैव वेदैश्च पञ्चरात्रैस्तथैव च ॥
ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तम् ।
एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रञ्च सत्तम ! ॥
वेदेन पञ्चरात्रेण यः पश्यति स पश्यति ।
इदम्महोपनिषदं चतुर्वेदसमन्वितम् ॥
वचसामेवमादीनामानन्त्याद्रुपरम्यते ।
इत्थंभूतस्य तन्त्रस्य विप्लवं यदि शङ्कसे ॥
सर्वत्र स्यादनाश्वास इत्येतदुपदिश्यते ।
विप्रतिषेधात् । इति,

एवञ्च ।

विरोधेऽपि विकल्पः स्याद् भगवच्छास्त्रवेदयोः ।
विरोध एव नास्तीति प्रागेव प्रत्यपादयम् ॥

नन्वत्र भवतां भाष्यकाराणां† विरुद्धांशाप्रामाण्याभिधानं कथमिव, यद्यपि विरोधः कृत्वा चिन्तया परिहृतस्तदपि गम्भीरन्यायसागरमवगाढुमपरिवृढानां कोमल-

* वत्स्यतीति प्राप्ते वसिष्यतीत्यार्षम् ।

† भाष्यकारपदेनेह द्रमिडाचार्योऽभिधित्सितः । श्रीभाष्यकाराः श्रीमद्रामानुजाचार्यास्तु श्रीमद्यामुनमुनीनां शिष्यशिष्या इति श्रीभाष्यस्य श्रीमद्यामुनमुन्युत्तरकालप्रणीतत्वेन तदिह भाष्यं न विवक्षितुं शक्यम् ।

मनसां वेदानादरो माभूदित्येवम्परम्, यथैव हि भगवतो जैमिनेः कर्मफलोपन्यासः कर्मश्रद्धासंवर्द्धनायेति।

वेदबाह्यगृहीतत्त्वादप्रामाण्यमवादि यत्।
एतद्बाह्यगृहीतत्वाद् वेदानां वा कुतो न तत्॥

अपि च।

किं चेदं वेदबाह्यत्वं का वा स्यात्तद्गृहीतता।
किमङ्ग वेदादन्यत्वं वेदबाह्यत्वमुच्यते॥
तन्निषिद्धार्थकारित्वमाहो तद्द्वेषशीलता।

तथा।

गृहीतत्वमधीतत्वं ज्ञातत्वं वा विचार्यताम्।
क्रियमाणार्थता वा स्याद्धेतुः सर्वत्र दुष्यति॥

तत्र तावद्।

यदि वेदाद्विभिन्नत्वं बाह्यत्वं साऽप्यधीतता।
वेदादन्यैस्त्रिभिर्वर्णैरधीतं वैदिकं वचः।
प्रमाणमित्यनैकान्त्यं हेतोस्तत्र प्रसज्यते॥
ज्ञातत्वेऽपि गृहीतत्वे दोषादस्मान्न मुच्यसे।
पूर्वोक्तं वेदबाह्यत्वं क्रियमाणार्थता यदि॥
गृहीतताऽपि वेदैः स्यात्तथैव व्यभिचारिता।
प्रतिषिद्धार्थकर्तृत्वे वेदबाह्यत्वलक्षणे॥
व्यभिचारस्त्रयीवाक्यैः प्रायश्चित्तविधायकैः।

प्रायश्चित्तविधायकानि वाक्यानि कूष्माण्डैर्जुहुयात् इत्यादीनि प्रतिषिद्धकारिभिरधीतगृहीतानुष्ठीयमानार्थान्येव प्रमाणानीति तादृशवेदबाह्यगृहीतत्वमनैकान्तिकम्।

नापि वेदद्वेषिजनपरिगृहीतत्वादप्रामाण्यं पञ्चरात्रतन्त्राणां, हेतोरसिद्धत्वात्, अपि च न वेदद्वेषिजनपरिग्रहः प्रामाण्यं प्रतिहन्ति, यदि हि प्रतिहन्यान्निरर्गलस्तर्हि ना-

स्तिकानां पन्थाः, ते हि वेदप्रामाण्यप्रोत्सादनाय प्रयस्यन्तः ।

कथञ्चिद्वेदवाक्यानि गृहीत्त्वा विप्रलम्भनात् ।
अनायासेन मिथ्यार्थान् वेदान् कुर्युर्दिगम्बराः ॥

अथ तत्रानधिकारिणामध्येतॄणामेव न चाभिव्याहरेद् ब्रह्म स्वधानिनयादृते । इत्यादिवचनपर्यालोचनया दोषो न निर्दोषवेदवाक्यानामिति चेत् तत्प्रस्तुततन्त्रेष्वप्यनधिकारिश्रोतृजनानामेष दोषः, न निर्दोषतन्त्राणामिति सर्वं समानमन्यत्राभिनिवेशात् । अथ मतं वेदबाह्यत्वं नाम वैदिककर्मानधिकारित्वं तदनधिकारिभिर्वेदबाह्यैर्गृहीतत्वात् चैत्यवन्दनवाक्यवत् अप्रमाणमिति तत्रापि किमखिलवैदिककर्मानधिकारिजनपरिगृहीतत्वं हेतुः, उत कतिपयवैदिककर्मानधिकारिगृहीतत्वमिति विविच्य व्याचक्षाम् ।

न तावदग्रिमः कल्पः कल्पते हेत्वसिद्धितः ।
न हि सोऽस्ति मनुष्येषु यः श्रौते क्वापि कर्मणि ॥
नाधिकुर्यादहिंसादौ नृमात्रस्याधिकारतः ।

अन्यथा हि ब्राह्मणहनन-तद्धनापहरण-वर्णाङ्गनासंगम-वेदाध्ययनादि कुर्वाणाश्चण्डालादयो न दुष्येयुः । तदनधिकारित्वाद्, यस्य हि यन्न कर्त्तव्यं तस्य हि तत्करणं प्रत्यवायाय, अतः सर्वेषामीदृशवैदिककर्मणि अधिकारो विद्यत एवेत्यसिद्धो हेतुः, साधनविकलश्च दृष्टान्तः ।

नापि कतिपयवैदिककर्मानधिकारिभिर्गृहीतत्वादप्रामाण्यं समस्तवेदवाक्यानामप्रामाण्यप्रसङ्गात्, अस्ति हि सर्वेषां कतिपयवैदिककर्मानधिकारः, ब्राह्मणस्येव राजसूये, राजन्यस्येव सोमपाने, अतो व्यवस्थितवर्णाधिकारिगृहीतवेदवचनैरनैकान्तिको हेतुः, अप्रयोजकश्च ।

चैत्यवन्दनतः स्वर्गो भवतीतीदृशी मतिः ।
न तत्परिग्रहान्मिथ्या किन्तु कारणदोषतः ॥

उक्तश्च वैदिकसमस्तास्तिकप्रवरभृगु-भरद्वाज-द्वैपायनप्रभृतिमहर्षिजनपरिग्रहः, अद्यत्वेऽपि हि पञ्चरात्रतन्त्रविहितमार्गेण प्रासादकरण-प्रतिमाप्रतिष्ठापन-प्रणाम-प्रदक्षिणोत्सवादीनि प्रत्यक्षश्रुतिविहिताग्निहोत्रादिवत् श्रेयस्करतरबुद्ध्याऽनुतिष्ठतः शिष्टान् पश्यामः, न चैतदाचरणं निर्मूलमिति युक्तं सन्ध्यावन्दनाष्टकाचरणादेरपि निर्मूलत्वप्रसङ्गात्, उक्तं च शिष्टाचारस्य प्रामाण्यम् अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति ।

अथ भागवतजनपरीगृहीतत्वादिति हेतुः, हन्त तर्हि तत्परिगृहीतत्वाद् वाजसनेयकैकायनशाखावचसां प्रत्यक्षादीनां चाप्रामाण्यप्रसङ्गः ।

अथ तैरेव परिगृहीतत्वादिति हेतुः तदसाधारणानैकान्तिकम्, असिद्धश्च ।

किमिति वा तत्परिग्रहादप्रामाण्यम् अत्रैवर्णिकत्वादिति चेत् किं भोः त्रैवर्णिकेतरसवर्णरथकारनिषादादिपरिगृहीतानुष्ठीयमानार्थानामाथर्वणवचसां रथकार आदधीत एतया निषादस्थपतिं याजयेत् इत्यादिवचसां प्रामाण्यं नास्ति ।

अस्तुवा ऽत्रैवर्णिकपरिग्रहोऽप्रामाण्यहेतुः, एतेषां तु भगवच्छास्त्रानुगामिनां भागवतानामुत्कृष्टब्राह्मण्यं सर्वप्रमाणसमवगतमिति तत्परिग्रहः प्रामाण्यमेव द्रढयति । आह केन पुनः प्रमाणेनैषां ब्राह्मण्यमवगतं, केन वाऽन्येषाम् ।

ननु चक्षुर्विस्फारणसमनन्तरं शिखा-यज्ञोपवीत-पालाशदण्ड-मौञ्जीयुजो द्विजकुमारकान् पश्यन्तो ब्राह्मणा

इत्यवगच्छन्ति इह वा किमहरहरधीयमानवाजसनेयकैकायनशाखान् विलसदुपवीतोत्तरीयशिखाशालिनोऽध्यापयतो याजयतः प्रतिगृह्णतो विदुषः पश्यन्तो ब्राह्मणा इति नावयन्ति।

अथ याजन--प्रवचन-पालाशदण्डादीनां दुष्टशूद्रादिषु व्यभिचारसंभवाद् ब्राह्मण्यसिद्धवत्कारेण प्रवृत्तेश्च न तेभ्यो ब्राह्मण्यनिर्णयः, तद्भागवतेतरविप्राणामपि समानम्।

अथ सत्यपि तेषां क्वचिद्व्यभिचारे तत्सामान्यादन्यत्र व्यभिचारशङ्कायां शुक्तौ रजतधियो व्यभिचारात् रजते रजतधियां व्यभिचारशङ्कावत् प्रत्यक्षविरोधात् अनवस्थानाच्च अनुपलभ्यमानव्यभिचारोदाहरणेषु तथात्वनिश्चयस्तदन्यत्रापि समानम्।

अथ मतम् अन्येषां ब्राह्मण्यं तदसाधारणगोत्रस्मरणादिति, तद् भागवतानामपि समानम्, स्मरन्ति हि भागवताः। वयं भारद्वाजाः वयं काश्यपाः वयं गौतमाः वयमौपगवा इति।

न चेदं गोत्रस्मरणं निर्मूलं साम*यिकं वा सर्वगोत्रस्मरणानां तथाभावप्रसङ्गात्,।

संभाव्यमानदोषत्वाद् वंशानां यदि संशयः।
तद्ब्राह्मण्ये ततो लोकं सर्वं व्याकुलयेदयम्॥

तथा हि।

जननीजारसन्देहजातश्चण्डालसंशयः।
निर्विशङ्कः कथं वेदमधीषे साधु सत्तम?॥

---

* आधुनिकम्।

तेन भागवतानामविच्छिन्नपरम्पराप्राप्तविचित्रगोत्रस्मरणपर्यवस्थापितं ब्राह्मण्यमनपोदितमास्ते इति न भावगतानामन्येषाञ्च ब्राह्मण्ये कश्चिद्विशेषः ।

यदि परं ते परमपुरुषमेवाश्रिता एकान्तिनः, अन्ये क्षुद्रदैवतिका*स्साधारणा इति, किं पुनरेतेषां ब्राह्मण्ये प्रमाणमभिहितं यदेवान्येषां, केन वा तेषां ब्राह्मण्यमवगतम् किन्न एतेन, यदि च कौतूहलम् ।

श्रूयतामुभयत्रापि ब्राह्मण्यस्यावधारकम् ।
प्रत्यक्षं वा ऽनुमानं वा यद्वाऽर्थापत्तिरेव वा ॥

ननु कथं प्रत्यक्षं ब्राह्मण्यमवगमयति, न हि प्रथमाक्षसन्निपातसमनन्तरमदृष्टपूर्वविप्र--क्षत्रसमानवयोवेषपिण्डद्वयसन्निधावजगजमहिषादिविशेषवदयं ब्राह्मणः अयं क्षत्रिय इति विभागेन प्रतिपद्यामहे ।

न च तत्पित्रादिब्राह्मण्यस्मरणसापेक्षमक्षमेव सन्निहितव्यक्तिवर्ति ब्राह्मण्यमवगमयतीति साम्प्रतं, तत्स्मरस्यैव पूर्वानुभवविरहेण वन्ध्यासुतस्मरणवदनुपपत्तेः ।

न चानुमानात्तत्प्रतिबद्धलिङ्गादर्शनात् ।

न च शम दम तपश्शौचादयो ब्राह्मण्ये लिङ्गं, तेषां ब्राह्मणेन सता संपाद्यत्वाद् व्यभिचाराच्च ।

न चार्थापत्त्या ब्राह्मण्यनिर्णयः, अनुपपत्त्यभावात्, न च वसन्ते ब्राह्मणोऽग्नीनादधीत इत्यादिवाक्यार्थानुपपत्त्या ब्राह्मण्यनिर्णयः, ब्राह्मण्यादिपदार्थावगमपूर्वकत्वात् तद्वाक्यार्थावगमस्य, नायं दोषः, न हि प्रथमाक्षसंप्रयोग-

---

* ताँस्तु भगवानेव तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमिति विनिनिन्द ।

+ न केवलं ममैव ब्राह्मण्यनिरूपणभार आवयोरुभयोरेव तस्य निरूपणीयत्वेन समत्वादिति भावः ।

समय एव भासमानं प्रत्यक्षं नान्यदित्यस्ति नियमः, यदेवेन्द्रियव्यापारानुवृत्तौ सत्यामपरोक्षमवभासते तत्प्रत्यक्षं तथा च ब्राह्मण्यमिति तदपि प्रत्यक्षं, प्रतीमो हि वयमुन्मीलितलोचनाः तत्सन्ततिविशेषानुसंधानसमनन्तरं वासिष्ठ--काश्यपीय--शठमर्षणप्रभृतिविचित्रगोत्रकुलशालिषु समाचारशुचिषु विलसदुपवीतोत्तरीयशिखामौञ्जीबन्धेषु स्फुटतरमनुसंदधद् ब्राह्मण्यम् ।

न चैतदलौकिकं यत्सन्ततिविशेषानुसंधानसापेक्षमक्षं ब्राह्मण्यं ग्राहयतीति, सर्वत्र देशकालसंस्थानादीतिकर्तव्यतानुगृहीतमेवेन्द्रियं स्वगोचरपरिच्छेदोत्पादे कारणम्भवति करणमात्रस्यायं स्वभावो यदितिकर्तव्यतापेक्षणम् ।

यथाह ।

न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ इति,
ततश्च सन्ततिस्मृत्यानुगृहीतेन चक्षुषा ।
विज्ञायमानं ब्राह्मण्यं प्रत्यक्षत्वं न मुञ्चति ॥
तथा च दृश्यते नाना सहकारिव्यपेक्षया ।
चक्षुषोजातिविज्ञानकरणत्वं यथोदितम् ॥
सुवर्णे व्यज्यते रूपात् ताम्रत्वादेरसंशयम् ।
तैलाद् घृतं विलीनञ्च गन्धेन तु रसेन वा ॥
भस्मप्रच्छादितो वन्हिः स्पर्शनेनोपलभ्यते ।
अश्वत्वादौ च दूरस्थे निश्चयो जायते ध्वनेः ॥
संस्थानेन घटत्वादि ब्राह्मणत्वादियोनितः ।
क्वचिदाचारतश्चापि सम्यग्राज्यानुपालितात् ॥
इति ॥

यत्समानवयोवेषपिण्डद्वयविलोकने ।
तत्क्षणादक्षतो भेदो नावभातीति भाषितम् ॥
नैतावता विभागस्य प्रत्यक्षत्वं निवर्तते ।
सादृश्यदोषात्तत्र स्याद् विभागस्यानवग्रहः ॥
समानरूपसंस्थानशुक्तिका-कलधौतयोः ।
विवेकःसहसा नाभादिति कालान्तरेऽपि किम् ॥
प्रत्यक्षो न भवेदेवं विप्रक्षत्रविशां भिदा ।

यद्वा संततिविशेषप्रभवत्वमेव ब्राह्मण्यं, तच्चान्वयव्यतिरेकाभ्यां यथालोकं कार्यान्तरवदवगन्तव्यमेव, के पुनः सन्ति विशेषा येषु ब्राह्मणशब्दं प्रयुञ्जते वृद्धाः केषु वा प्रयुञ्जते, ।

उक्तं गोत्रार्षेयादिस्मृतिमत्स्वित्यनेकशः ।
आस्तामप्रस्तुता चिन्ता प्राची प्रस्तूयते कथा ॥
सिद्धं गोत्रादियुक्तत्वाद् विप्रा भागवता इति ।
वैश्यव्रात्यान्वये जन्म यदेषामुपवर्णितम् ॥
पञ्चमस्सात्वतो नाम विष्णोरायतनानि सः ।
पूजयेदाज्ञया राज्ञः स तु भागवतः स्मृतः ॥
वैश्यात्तु जायते व्रात्यादिति वाक्यद्वयेक्षणात् ।
अत्र ब्रूमः किमेताभ्यां वचनाभ्यां प्रतीयते ॥
अभिधानान्वयो वा स्यान्नियमो वाऽभिधीयताम् ।

न तावत् सात्वत-भागवत-शब्दौ वैश्यव्रात्याभिधायकावेवेति नियन्तुं शक्यौ अप्रतीतेः, अतिप्रसङ्गाच्च, न हि पञ्चमः सात्वत इत्यत्र सात्वत--भागवत--शब्दयोरर्थान्तराभिधानप्रतिषेधः प्रतीयते श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् इह हि व्रात्यवैश्यान्वयजन्मा यः पञ्चमः सात्वत

इति तस्य सात्वतसंज्ञान्वयोऽवगम्यते पञ्चम शब्दस्य प्रथमनिर्दिष्टत्वेनोद्देश*कत्वात् ।

न च पञ्चमस्य सात्वतत्वे सात्वतेनापि वैश्यव्रात्यपञ्चमेन भवितव्यं, न हि उद्दिश्यमानस्याग्निमत्त्वे उपादीयमानस्याग्नेः धूमवत्त्वेन भवितव्यम् अतो नेदृशस्मृतिपर्यालोचनया सात्वत–भागवत–शब्दितानां व्रात्यत्वनिश्चयः ।

यदि पुनरनयोर्जात्यन्तरेऽपि प्रयोगो दृष्ट इति एतावता तच्छब्दाभिधेयतया भगवच्छास्त्रानुगामिनामपि विप्राणां तज्जातीयत्वनिश्चयः, ततस्तत्रैव सहपठिताचार्यशब्दस्यापि निकृष्टव्रात्यापत्ये प्रयोगदर्शनात् साङ्गसरहस्यवेददातुर्द्विजपरस्यापि व्रात्यत्वं स्यात् ।

अथ तस्य व्रात्यवाचकाचार्य--शब्दाभिधेयत्वेऽपि प्रमाणान्तरेणाप्लुतब्राह्मण्यनिश्चयात् आचार्य--शब्दस्य आचिनोत्यस्य बुद्धिम् इत्यादिगुणयोगेनापि वृत्तिसंभवान्न व्रात्यत्वशङ्का तदत्रापि जात्यन्तरवाचकसात्वत-भागवत--शब्दाभिधेयत्वेऽपि भगवच्छास्त्रानुगामिनाममीषामतिस्पष्टविशिष्टगोत्रार्षेयादिस्मरणदृढावगतत्वाद् ब्राह्मण्यस्य सात्वत-भागवत-शब्दयोश्च सत्त्ववति भगवति भक्तियोगेनैव वृत्तिसम्भवान्न व्रात्यत्वशङ्कावतारः, एतदुक्तं भवति ।

न चैकशब्दवाच्यत्वादेकजातीयता भवेत् ।
मा भूदाचार्यशब्दत्वाद् ब्राह्मणस्य निकृष्टता ॥
तथा च हरि–शब्दस्य दृष्टा मण्डूकवाचिता ।
इति तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम् ॥
तथा गो–शब्दवाच्यत्वाच्छब्दश्चापि विषाणवान् ।

* उल्लेख्यसमर्पकत्वादित्यर्थः ।

ततश्च ।

सुधन्वाचार्य इत्याद्या यथाऽर्थान्तरवाचकाः ।
व्रात्यान्वये प्रयुज्यन्ते तथैवैतौ भविष्यतः ॥

यदुक्तं योगरूढिशक्तिद्वयोपनिपाते सात्वत-भागवत-शब्दयोरूढिशक्तिरेवाश्रयितुमुचितेति ।

तदयुक्तं क्लृप्तावयवशक्त्यैवाभिधानोपपत्तौ सत्यामक्लृप्ताखण्डशक्तिकल्पनाऽनुपपत्तेः ।

योऽपि हि सात्वत-भागवत-शब्दयोर्वैश्यव्रात्यान्वयजन्मनि रूढिशक्तिमभ्युपगच्छति अभ्युपगच्छत्येव असावन्यत्र सत्त्ववद्भगवच्छब्दयोः प्रकृतिभूतयोस्तदुत्पन्नस्य च तद्धितप्रत्ययस्यार्थान्तराभिधानसामर्थ्यं सात्त्वतं विधिमास्थाय, जन्मान्तरकृतैः पुण्यैर्नरो भागवतो भवेदित्यादौ तदिहापि तद्योगेनैव व्रात्यान्वयजन्मनि वृत्तिसम्भवेन शक्त्यन्तरकल्पनायां प्रमाणं क्रमते, संभवति चैनेषामपि साक्षाद्भगवदाराधनाभावेऽपि वासुदेवस्यायतनशोधन-बलिनिर्हरण-प्रतिमासंरक्षणादिक्रियायोगेनैव सात्त्वत-भागवत-शब्दाभिधेयत्वं, तस्येदम् इति संबन्धमात्रेऽपि चाण्प्रत्ययस्मरणात्, उक्तश्च वैश्यव्रात्यान्वयजन्मनोऽपि भगवदायतनादिशोधनादिक्रियायोगः, सात्वतानाञ्च देवायतनशोधनं नैवेद्यभोजनं प्रतिमासंरक्षणम् इति, तथा विष्णोरायतनानि संपूजयेदिति ।

एतेन इदमप्यपास्तं यदेषामपि वृत्तिसाम्याद् व्रात्यत्वमिति अन्यदेव हि देवायतनशोधनबलिनिर्हरणप्रतिमासंरक्षणादिकम् । अन्ये चाभिगमनोपादानेज्या-स्वाध्याय-योगा भागवतैरहरहरनुष्ठीयमानाः क्रियाकलापा इति ज्योतिष्टोमादाविव तथैव ज्योतिष्टोमे ग्रहचमसजुह्वादिपात्र-

करणतक्षणादिषु तद्दणा व्यापारः, ऋत्विजस्तु विशिष्टमन्त्रोच्चारणदेवताभिध्यानाऽभिष्टवप्रभृतिषु ।

न च तावता तेषां तद्दणाञ्चैकजातित्वसंशयः, एवमिहापि भगवच्छास्त्रसिद्धपाञ्चकालिकानुष्ठातॄणामन्येषामायतनशोधनादि कुर्वतां प्रासादपालकावरनाम्नामन्त्यानां चेति ।

यत्पुनरुक्तं सात्वत-भागवत-शब्दयोर्यौगिकत्वे रथकार आदधीत इत्यत्रापि रथकार-शब्दस्य रथकरणयोगेन त्रैवर्णिकवृत्तिप्रसङ्ग इति तदनुपपन्नं, युक्तं हि तत्राधानोत्पत्तिवाक्यावगतवसन्तादिकालबाधप्रसङ्गात्, सौधन्वना ऋभवः सूरचक्षस इति मन्त्रवर्णावगतजात्यन्तरवृत्तिबाधप्रसङ्गाच्च ।

माहिष्येण करिण्यां तु रथकारः प्रजायते ।

इति स्मृत्यवगतजात्यन्तरत्वेऽपि क्षत्रियवैश्यानुलोमोत्पन्नो रथकारस्तस्येज्याधानोपनयनक्रियाश्चाप्रतिषिद्धा इति शङ्खवचनाद् विद्यासाध्येऽपि कर्मणि अधिकाराविरोधात्, त्रैवर्णिकानाञ्च शिल्पोपजीवित्वस्य प्रतिषिद्धत्वेन तेषु रथकारशब्दस्यानुचितत्वाच्च जात्यन्तरवाचित्वाध्यवसानं, न चेह तथा विरोधोऽस्ति ।

अपि च ।

क्लृप्तावयवशक्त्यैव लब्धे स्वार्थावबोधने ।
नष्टावयवमानत्वं प्रत्याचष्ट च सूत्रकृत् ॥

प्रोक्षणीष्वर्थसंयोगात् इति ।

ततश्च सत्त्वाद्भगवान् भज्यते यैः परः पुमान् ।
ते सात्वता भागवता इत्युच्यन्ते द्विजोत्तमाः ॥

स्मृत्यन्तराणि च भागवतानामुत्कृष्टब्राह्मण्यप्रतिपादकानीति परस्तात् प्रदर्शयिष्यन्ते ।

यत् पुनरुक्तं समाने ब्राह्मण्ये किमिति सात्वत--भागवतैकान्तिक-शब्दैरेवैतेषां निमेन व्यपदेश इति तत्परिव्राजकनिगदादिवदित्यदोषः ।

यथैव हि समाने ब्राह्मण्ये यजुष्ट्वे च केचिदेव ब्राह्मणाः कानिचिदेव यजूंषि परिव्राजकनिगदशब्दाभ्यामधीयन्ते तिष्ठन्तु ब्राह्मणाः परिव्राजका आनीयन्तां, यजूंषि वर्त्तन्ते न निगदाः, निगदा वर्तन्ते न युजूंषि इति च तथेहापि भविष्यति, निगदाश्चतुर्थस्मन्त्रजातं यजूंषि वा तद्रूपत्वात् इति न्यायाभिधानात् ।

वृत्त्यर्थं देवतापूजानैवेद्यप्राशनादिभिः ।
दौर्ब्राह्मण्यं यदप्युक्तं तत्र प्रतिविधीयते ॥
न हि भागवतैस्सर्वैर्वृत्तयेऽभ्यर्चितो हरिः ।
दृष्टा हि बहवो धर्मार्थं पूजयन्तोऽपि सात्वताः ॥
केचिदेवाभिलष्यन्तः सात्त्वता वृत्तिकर्शिताः ।
कुर्वन्त्ययमानाया भागवैर्ण्णवैर्वृत्तिकारणात् ॥
न तावनिवेद्यब्रह्मण्यं शक्यं नास्तीति भाषितुम् ।
न खल्वाध्वर्यवं कुर्वन् ज्योतिष्टोमे पतिष्यति ॥
यदि न प्रतिगृह्णीयुः पूजैव विफला भवेत् ।
पूजासादृगुण्यसिद्ध्यर्थमतस्ते प्रतिगृह्णते ॥
अर्चनान्ते हिरण्यञ्च तस्मै देयं स्वशक्तितः ।
अन्यथा पूजकस्यैव तत्र पूजाफलं भवेत् ॥
हन्त्यल्पदक्षिणो यज्ञ इत्यादिस्मृतिदर्शनात् ।
ऋत्विजा द्रव्यलुब्धेन स्वयं याच्ञापुरस्सरम् ॥
यदार्त्विज्यं कृतं कर्म तदेव हि निषिध्यते ।

तद्यथा यदाशंसमानमार्त्विज्यं कारयन्ति उत वा मे दद्यात् उत वा मा वृणीत इति तच्च तत्परागेव यथा जग्धं न हैवं त्यज्यमानं भुनक्ति । इति,

श्रद्धापूतदक्षिणादानं उभयोरपि श्रेयस्करमेव ।
योऽर्चितं प्रतिगृह्णाति दद्यादर्चितमेव च ॥
ता उभौ गच्छतः स्वर्गमित्यादिस्मृतिदर्शनात् ।

यदपि वृत्त्यर्थं देवपूजनाद् देवकोशोपजीवित्वाच्च देवलकत्त्वप्राप्तिरिति तदपि देवतान्तरवृत्त्यर्थाराधन--तत्कोशोपजीवनविषयमिति द्रष्टव्यम् ।

तथा च भगवान् व्यासः ।

भवेद्देवलको यो वै रुद्रकाद्युपजीवकः । इति,

अपि भवति शाण्डिल्यवचनम् ।

वृत्त्यर्थं याजिनस्सर्वे दीक्षाहीनाश्च केवलम् ।
कर्मदेवलका एते स्मृता ह्यत्र पुरा मुने ॥
तांश्च संवत्सरादूर्ध्वं न स्पृशेन्न च संविशेत् ।

तथा ।

कल्पदेवलकाः केचित् कर्मदेव[illegible]पि त्रि[illegible]
[illegible]धनक्रियाश्चा[illegible]
अथ त्रिवर्षादूर्ध्वमयोग्या देव[illegible]ऽपि कर्म[illegible]
ये कल्पोक्तं प्रकुर्वन्ति दीक्षाहीना द्विजातयः ।
वृत्त्यर्थं वा यशोऽर्थं वा कल्पदेवलकास्तु ते ॥
वृत्तिं कृत्वा तु विप्रेण दीक्षितेन विधानतः ।
अन्येन पूजयेद्देवमशक्तः स्वयमर्चने ॥
यजनं मुख्यमेवैतद् गौणमेवान्यथा भवेत् ।

अन्यथा इति—अदीक्षितेनेत्यर्थः, तदेव स्पष्टयति

अदीक्षितेन विप्रेण येनकेन विधानतः ।
वृत्त्यर्थं यत्कृतं कर्म तज्जघन्यमुदाहृतम् ॥

इत्यादिस्मृतिशतपर्यालोचनात् पञ्चरात्रसिद्धदीक्षासंस्कारविरहितानां ब्राह्मणानां देवकोशोपजीवनवृत्त्यर्थं पूजनादिकमुपब्राह्मणत्वदेवलकत्वावहमिति निश्चीयते

यत्पुनः शिष्टविगर्हितनिर्माल्यनिवेद्योपयोगाद् भागवतानामशिष्टत्वमिति ।

तत्र ब्रूमः किमिदं निर्माल्यं निवेद्यं चाभिप्रेतं श्रोत्रियस्य ।

पुष्पौदनादिमात्रं चेत् सर्वलोकाविरुद्धता ।
पुष्पौदनपरित्यागं न हि लोकोऽनुमन्यते ॥
विशिष्टप्रतिषेधोऽपि न युक्तस्तदसिद्धितः ।

अपि ।
॥

न ह्यनिरूपितविशेषणा विशिष्टबुद्धिराविरस्ति, न चेह विशेषणं निरूपयितुं शक्यते, किमिति न शक्यते यावता देवोद्देशेन परित्यागो विशेषणं, किमिदानीं पञ्चरात्रशास्त्रमपि प्रमाणमङ्गीकृतं भवता येन पञ्चरात्रतन्त्रविहितमन्त्रप्रतिष्ठापितप्रतिमासु देवतामभ्युपेत्य तदुद्देशेन त्यागो विशेषणमभिलष्यते, कथं हि तत्प्रामाण्यानभ्युपगमे तत्प्रतिपाद्यमानाया देवतात्वं, कथन्तराञ्च तदुद्देशेन त्यक्तस्य निर्माल्यनिवेद्यभावः, न हि काचिज्जात्या देवता नामास्ति, यैव हि हविःप्रतियोगितया प्रमाणभूताच्छब्दादवगम्यते सा तत्र देवता इति हि वः सिद्धान्तः ।

अथ पाञ्चरात्रिकैर्देवतोद्देशेन परित्यक्तत्वाभ्युपगमान्निर्माल्यनिवेद्यभावः, हन्त तर्हि, तैरेव परमपावनतयाऽपि निर्माल्यनिवेद्योपयोगस्याङ्गीकृतत्वात् तद्वदेव पावनत्वमङ्गीक्रियताम् ।

अथापावनमेव तैः पावनबुद्ध्या परिगृहीतमि त न तत्प्राशस्त्यमङ्गीक्रियते, हन्त तर्ह्यदेवतैव देवताबु [illegible]रोपेण तैः परिगृहीतेति न तदुद्देशेन त्यक्तस्य निर्माल्यनिवेद्यभावोऽङ्गीक्रियताम् ।

एतदुक्तं भवति पुष्पौदनादिस्वरूपमात्रत्यागस्यानिवृत्वात् स्वदर्शनानुसारेण च विशेषणासंभवात् परदर्शनानुसारेण विशेषणनिरूपणे तस्यैव परमपावनत्वापातात् तत्र प्रामाण्यमभ्युपगच्छद्भिरन्यैश्च निर्माल्यनिवेद्योपयोगोऽवश्याङ्गीकरणीय इति ।

आह कथं पुनस्तत्र प्रामाण्यमङ्गीकुर्वता
निर्माल्यं निवेद्यञ्च न परिहरणीयम् ।
निषिध्यते हि तन्त्रेषु निर्माल्यप्राशनादिकम् ।

यथा सनत्कुमारीयसंहितायामुदीरितम् ।
निवेदितं तु यद्द्रव्यं पुष्पं फलमथापि वा ।
तन्निर्माल्यमिति प्रोक्तं तत्प्रयत्नेन वर्जयेत् ॥

तथा प्रदेशान्तरे ।

निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि ।
मासं पयोव्रतो भूत्वा जपन्नष्टाक्षरं सदा ॥
ब्रह्मकूर्चं ततः पीत्वा पूतोभवति मानवः ।

इति, तथेन्द्ररात्रे ।

न चोपजीवेद्देवेशं न निर्माल्यानि भक्षयेत् ।

तथा ।

न चोपयो*गयोग्यानि निर्माल्यानि कदाचन ।

इति, तथा संहितान्तरे ।

निर्माल्यानि न चाश्नीयान्न जिघ्रेन्न च लङ्घयेत् ।

इति, तदेवमनेकसंहितासमधिगतनिषेधस्योपभोगस्य कथमिव पावनत्वाङ्गीकारः, । दीक्षा- ...स्यर्थ- ...यते,

* न चोपभोगयोग्यानीति पा० ।

अत्राह देवमुद्दिश्य त्यक्तस्यापि च वस्तुनः ।
नाडिकादशकादर्वागुपयोगो न निन्द्यते ॥

तथैन्द्ररात्र एव ।

दशनाडयधिकं पूरं स्थापयेत्तु विचक्षणः ।
कालयोगस्समुद्दिष्टो रात्रावहनि चैव हि ॥
कालयोगातिरिक्तं तु निर्माल्यं परिचक्षते ।
ततस्तदप्सु चैवाग्नौ क्षिपेद्भूमौ खनेत्तु वा ॥

इति ।

उच्यते नात्र निर्माल्यप्राशनादि प्रशस्यते ।
किन्तु पूरणपूजायां विनियुक्तस्य वस्तुनः ॥
नाडिकादशके पूर्णे पश्चात्त्यागो विधीयते ।

सामान्येन निवेदितस्य पुष्पौदनादेः कृतकार्यतया निर्माल्यत्वेनापनये प्राप्ते नाडिकादशपूरणं पूजाङ्गतया स्थापनंविधीयते दशनाडयधिकं पूरं स्थापयेदिति ।

ततश्च तन्त्रसिद्धान्तपर्यालोचनयापि वः ।
हरिद्राचूर्ण-नैवेद्य-पादाम्बुस्पर्शनादिकम् ॥
न सिध्येत् तन्त्रसिद्धान्तः क नु यूयं क चाल्पकाः ।
अहो विद्यालवोल्लासिजिह्वाग्रस्तविचेतसः ॥
सितासितं वचो भाति सकलङ्केन्दुबिम्बवत् ।
ये हि युष्मद्विधा मूर्खास्तेषामेव निषेधगीः ॥
सेव्यमानं हि तत्सर्वं वैष्णवैरधिकारिभिः ।
अघौघध्वंसनायालं सोमपानमिवाध्वरे ॥
…येषां हि तदस्पृश्यं पुरोडाशः शुनामिव ।

अथ

तत्प्राशस्त… …श्वरसंहितायाम् ।

तैः परि… …भो भगवद्भक्तो लोकेऽस्मिन् पुरुषः स्तुत ? ।
वोऽङ्गी… …तत्रापि दुर्लभतरो भावो वै यस्य तत्त्वतः ॥

पादोदके प्रति शुभस्सिद्धान्ने* च निवेदिते ।
स्रगादिके चोपभुक्ते ह्युपभोगार्थमेव च ॥
अतश्च भावहीनानामभक्तानां च षण्मुख† ।
निषिद्धं भगवन्मन्त्रदकपूतमखिलं हि यत् ॥ इति,

तथा प्रदेशान्तरे ।

कुङ्कुमं चन्दनञ्चैतत् कर्पूरमनुलेपनम् ।
विष्णुदेहपरामृष्टं तद्वै पावनपावनम् ॥

इति, तथा पाद्मोद्भवे ।

विष्णुदेहपरामृष्टं यश्चूर्णं शिरसा वहेत् ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥

तथेश्वरसंहितायाम् ।

उपभुक्तस्य सर्वस्य गन्धपुष्पादिकस्य च ।
स्नानादावुपयुक्तस्य दधिक्षीरादिकस्य च ॥
दूषणं न प्रयोक्तव्यं शब्दैरप्रातिपत्तिजैः ।
निर्माल्यबुद्ध्या देवीयं पावनं दूषयन्ति ये ॥
ते यान्ति नरकं मूढास्तत्प्रभावापलापिनः । इति,

यानि पुनर्दीक्षितमेवाधिकृत्य समयानुशासनसमये निर्माल्योपयोगनिषेधपराणि वचनानि तानि पारिषदेशोपयोगोत्तरकालाभिप्रायेण द्रष्टव्यानि ‡ ।

यतो भगवदर्थेन त्यक्तं स्रक्चन्दनादिकम् ।
पश्चाद्भोग्यतां याति विष्वक्सेननिवेदनात् ॥

---

* श्रीमद्भागवते यथाऽऽह भगवन्तं श्रीकृष्णमुद्धवः—त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः । उच्छिष्टभुजो दासास्तव मायां जयेमहि इति ।

† निन्दाऽसूयाद्याविष्कारकारकैरित्यर्थः ।

‡ भगवत्पारिषदानामीशोविष्वक्सेनस्तदुपयोगानन्तरकाले निषेधपराणि द्रष्टव्यानि ।

अत एव निवेद्यादि ततोऽर्वागेव सात्त्वतैः ।
सेव्यते तेन तत्तेषामुत्कर्षस्यैव कारणम् ॥

अपि च ।

देवतान्तरनिर्माल्यं शिष्टैरिष्टं विगर्हितम् ।
इदन्तु वैदिकत्वेन सोमपानवदिष्यते ॥
ये नाम भगवच्छास्त्रप्रामाण्यं नानुजानते ।
न निरूपयितुं शक्यं तैर्निर्माल्यमितीरितम् ॥
निरूपणेऽपि भगवन्निर्माल्यमतिपावनम् ।
समस्तवैदिकाचार्यवचनैरवसीयते ॥
शब्दप्रमाणके ह्यर्थे यथाशब्दं व्यवस्थितिः ।
न चात्र शब्दो नास्तीति वक्तव्यं बधिरेतरैः ॥

यथा ब्रह्मपुराणे च पठ्यते ।

विष्णोर्नैवेद्यकं शुद्धं मुनिभिर्भोज्यमुच्यते ।
अन्यन्निवेद्य निर्माल्यं भुक्त्वा चान्द्रायणञ्चरेत् ॥
विष्णुदेहपरामृष्टम्माल्यं पापहरं शुभम् ।
यो नरश्शिरसा धत्ते स याति परमाङ्गतिम् ॥

एतेन ।

निर्माल्यञ्च निवेद्यञ्च भुक्त्वा चान्द्रायणञ्चरेत् ।

इति स्मरणमपि रुद्रकाल्यादिविषयमित्यावेदितव्यं, तथा महाभारते ।

हृदि ध्यायन् हरिं तस्मै निवेद्यान्नं समाहितः ।
मध्यमाऽनामिकाङ्गुष्ठैर्गृहीत्वान्नमितं पुनः ॥
प्राणाय चेत्यपानाय व्यानाय च ततः परम् ।
उदानाय समानाय स्वाहेति जुहुयात् क्रमात् ॥

इति, तथा प्रदेशान्तरे ।

निवेदितन्तु यद्देवे तद्दद्याद् ब्रह्मचारिणे ।

इति ।

तथा महाभारते ।

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।
प्रापणं भगवद्भुक्तं भुञ्जते चाग्रभोजनम् ॥

इति, तथा च भगवान् शौनकः नैवेद्यं स्वयमश्नीयात् इति, ।

इत्यादिस्मृतिशतसिद्धशुद्धि विष्णोर्नैवेद्यं भवभयभेदि योऽविनिन्देत् । नास्तिक्यात् स्मृतिवचनान्युपेक्षमाणस्तज्जिह्वाविशसनमेव युक्तमत्र ॥

ननु प्राणाग्निहोत्रस्य नैवेद्यं साधनं कथम् ।
निरिष्टकं न शिष्टानामिष्टं होमादिसाधनम् ॥
न च द्रव्यान्तराक्षेपो होमायेत्यवकल्पते ।
रागतः प्राप्तमेवान्नं यतस्तेनोपजीव्यते ॥
नापि भुक्त्यन्तराक्षेपो नैवेद्यायोपपाद्यते ।
सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ॥
नान्तरा भोजनं कुर्यादिति तत्प्रतिषेधनात् ।
नैष दोषो यतः प्राणप्रभृतिर्देवतागणः ॥
गुणभूतः श्रुतो विष्णोर्विष्णुपारिषदेशवत् ।
यथैव हि भगवन्निवेदितमपि पुष्पौदना-
दिविष्वक्सेनाय दीयमानं नानौचित्यमावहति ।
यथा वा होतुरुच्छिष्ट एव सोमरसोऽध्वरे ।
अध्वर्य्वादेर्विशुद्ध्यै स्यादेवमत्र भविष्यति ॥

अपि च ।

भोज्याभोज्यव्यवस्थायाः शास्त्रमेव निबन्धनम् ।
तच्चेद्भोज्यमिदं ब्रूते किं वयं विदधीमहि ॥
यथाऽनुष्ठानतन्त्रत्वं नित्यकाम्याग्निहोत्रयोः ।
एवं प्राणाग्निहोत्रेऽपि नैवेद्याशनतन्त्रता ॥

यदप्युक्तं गर्भाधानादिदाहान्तसंस्कारान्तरसेवनाद् भागवतानामब्राह्मण्यमिति तत्राप्यज्ञानमेवापराध्यति, न पुनरायुष्मतो दोषः, यदेते वंशपरम्परया वाजसनेयशाखामधीयानाः कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते ।

ये पुनः सावित्र्यनुवचनप्रभृतित्रयीधर्मत्यागेन एकायनश्रुतिविहितानेव चत्वारिंशत् संस्कारान् कुर्वते तेऽपि स्वशाखागृह्योक्तमर्थं यथावदनुतिष्ठमानाः* न शाखान्तरीयकर्माननुष्ठानाद् ब्राह्मण्यात् प्रच्यवन्ते, अन्येषामपि परशाखाविहितकर्माननुष्ठाननिमित्ताब्राह्मण्यप्रसङ्गात् सर्वत्र हि जाति--चरण--गोत्राधिकारादिव्यवस्थिता एव समाचारा उपलभ्यन्ते । यद्यपि सर्वशाखाप्रत्ययमेकं कर्म तथाऽपि न परस्परविलक्षणाधिकारिसंबद्धा धर्माः क्वचित्समुच्चीयन्ते, विलक्षणाश्च त्रयीविहितस्वर्गपुत्रादिविषयोपभोगसाधनैन्द्राग्नेयादिकर्माधिकारिभ्यो द्विजेभ्यस्त्रय्यन्तैकायनश्रुतिविहितविज्ञानाभिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्येकोपायककर्माधिकारिणोमुमुक्षवो ब्राह्मणा इति नोभयेषामप्यन्योन्यशाखाविहितकर्माननुष्ठानमब्राह्मण्यमापादयति, यथा चैकायनशाखाया अपौरुषेयत्वं तथा काश्मीरा†गम-

* यद्यपि अनूपसृष्टात्तिष्ठतेर्नात्मनेपदं प्राप्नोतीति अनुतिष्ठन्त इत्येव स्यात्तथापि अनुष्ठानशीला अनुष्ठानपरायणा इत्यर्थस्य प्रतिपिपादयिषितत्वेन ताच्छील्यवयोवचनशक्तिषु चानश् इति पाणिनीयेन चानश्प्रत्ययो न तु शानच्प्रत्यय इत्यवधारयन्तु निपुणाः ।

† काश्मीरागमपदेन किं विवक्षितमिति न विशिष्य जानीमः काश्मीरागमप्रामाण्यनिरूपणपरोग्रन्थोऽपि चास्मद्दृष्टेरगोचर इति न किंचिद्दीश्महे वक्तुम् । यत्नेन तु तत्सर्वमासाद्य समये प्रकाशयिष्यते ।

प्रामाण्ये प्रपञ्चितमिति नेह प्रस्तूयते । प्रकृ*तानां तु भागवतानां सावित्र्यनुवचनादित्रयीधर्मसंबन्धस्य स्फुटतरमुपलब्धेर्न तत्त्यागनिमित्तव्रात्यत्वादिसंदेहं सहते ॥

---

* एतेनैते श्रीसंप्रदाये सर्ववेदरहस्यार्थानुयायिनि केनाप्यज्ञातमुक्तेन समुत्पद्यापि शिष्यसंजिघृक्षया वा, शिष्यान् व्यामोह्यार्थलिप्सया वा, शास्त्रतत्त्वार्थानभिज्ञानेन वा, दुरभिमानगरिम्णा वा, लोकधन्धनार्थं वा, पूर्वाचार्यवचस्स्वश्रद्धया वा, तदीयचरमतात्पर्यज्ञानाशक्ततया वा, कलिकल्मषकलुषतया वा, स्वीयदुरदृष्टाकृष्टतया वा, वाटिनिगूढातिप्रौढभावार्थानभिज्ञतया वा लोके स्वप्रौढिमख्यापनाय वादिनि मुधैव संतिष्ठत्सया वा, अथवा संभूयैतैः सर्वैर्हेतुभिरेव ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति भगवदुक्तरीत्या ब्रह्मासाधारण-तदादिपदघटिते परब्रह्मासाधारणश्रीरामायणारम्भणरूपे गायत्रीमन्त्रे सर्ववाद्यविप्रतिपन्नपरदेवताप्रसादके देवतान्तरार्थकत्वं बलादध्यारोप्य साधारणमन्त्रताप्रसाधनेन तस्य क्षुद्रदेवाराधनपरत्व वा द्विजानामनावश्यकत्वख्यापनं वा क्षुद्रमन्त्रसाम्यसंभावनं वा कुर्वन्तः परास्ताः । प्रकृतानां भागवतानां तदत्यागबोधनेन त्यजतां च व्रात्यताबोधनेन पूर्वाचार्याणां गायत्रीमन्त्रे द्विजत्वप्रसाधकतायाः स्पष्टमनुमतत्वेन तन्निन्यत्वे विवदमानानामाचार्यार्थवैमुख्यस्य बालेनापि सुज्ञानत्वात् । यदपि क्वचित् स्मृतिषु गायत्र्या रविदेवताकत्वं सवितृदेवताकत्वं वा श्रूयते इति न तस्या भगवन्मन्त्रत्वमिति समुत्थानं तत्तु "रविः सुलोचनः सूर्यः सविता रविलोचनः" इति श्लोकस्थभगवन्नामानभिज्ञाननिबन्धनमेव । यत्र ब्रह्मासाधारणलिङ्गदर्शनेन भौतिकाकाशादिवाचकाकाशादिपदानामाकाशस्तल्लिङ्गादिति परब्रह्मोपस्थापकत्वमास्थितवाचार्याः किमु तत्र भगवन्नामगणान्तःपातिनो रविसवितृपदयोर्भगवद्वाचकत्वविप्रतिपत्तिसमुत्थानशङ्काऽपि विदुषाम् । न च यानि नामानि गौणानि विख्यातानि महात्मनः । इत्यादिना सहस्रनामाचार्य एव गौणनामतामवोचदिति न तयोर्भगवद्रूढत्वं किन्तु रवि-सवितृपदयोः कोशादिना दिवाकर एव रूढिरिति कथं भगवदसाधारण्यसंभावनापीति वाच्यम् । न ह्यत्र गौणानीत्युक्त्या गुणवृत्त्या भगवदभिनिर्देशकत्वमभिधित्सितं किन्तु अवयवशक्त्या भगवदभिधायकत्वेन डित्थकपित्थादिशब्दानामिव भगवन्नामगणान्तःपातिशब्दानां न यदृच्छाशब्दत्वं, किन्तु लोकवेदयोस्तेषां शब्दानां तदर्थं शक्तिभ्रमविधुरैर्लक्षणाव्यवहाररहितैश्च ऋषिभिर्भृशं परस्मिन् ब्रह्मणि वासुदेवेऽभिहितत्वात्तद्वाचका एव ते शब्दा इत्ययमर्थः । अत एव तु प्रयोगभूयस्त्वाभिधित्सया "विख्यातानी"त्युक्तम् । परिगीतानीत्यत्र परिपदमपि सहस्रनाम्नां रूढत्वमुपोद्बलयति । किंच सर्वधीप्रेरयितृत्वलक्षणान्तर्यामिकृत्यलिङ्गोपलम्भसामर्थ्येनापि तस्या ब्रह्मासाधारण्यसिद्धिः । किंच प्रिय एव हि सर्वथा वरणीयो भवति नाप्रिय इति वरणीयत्वलिङ्गलिङ्गितत्वेनापि निरतिशयप्रियतमत्वेन ब्रह्मासाधारण्यसिद्धिरिति प्रव्यक्तम् । तत्प्रवर्णितां लक्षणाव्यवहाराजन्यभूयःप्रयोगयोगेन नाम्नां रूढत्वसिद्ध्या सवित्रादिदेवताकत्वं परब्रह्मासाधारणदेवताकत्वसाधकमिति सुपुष्कलमवशिष्टं चास्मच्छिष्यैः सुनिरूपितमन्यत्रेति कृतमनभिज्ञनिग्रहमंनहनेन वैदिकमार्गनिष्कपटीकरणप्रवृत्तानां सुदूरदृशाम् ॥

तत्तत्कल्पितयुक्तिभिश्शकलशः कृत्वा तदीयं मतं ।
यच्छिष्यैरुदमर्दि सात्वतमतस्पर्द्धावतामुद्धतिः ॥
यच्चेतस्सततं मुकुन्दचरणद्वन्द्वास्पदं वर्तते ।
ीयान्नाथमुनिस्स्वयोगमहिमप्रत्यक्षतत्त्वत्रयः ॥
ाकल्पं विलसन्तु सात्वतमतप्रस्पर्द्धिदुष्पद्धति-
व्यामुग्धोद्धतदुर्विदग्धपरिषद्दैदग्ध्यविध्वंसिनः ।
श्रीमन्नाथमुनीन्द्रवर्द्धितधियो निर्धूतविश्वाशिवाः
सन्तस्सन्ततगद्यपद्यपदवीहृद्यानवद्योक्तयः ॥

इति श्रीयामुनमुनिविरचितमागमप्रामाण्यम् ॥
श्रावणकृष्णप्रतिपदि शुक्रे संवत् १९५७ ॥

